श्रीराघवेन्द्रगुरुसार्वभौमाणां षट्चत्वारिंशदुत्तर-
त्रिशतमानोत्सव(३४६)आराधनासन्दर्भे प्रकटितम्

# श्रीविजयीन्द्रसम्पुटम् - ३

१.अद्वैतशिक्षा
२.प्रमाणपद्धतिटीका
३.तुरीयशिवखण्डनम्
४.परतत्त्वप्रकाशिका
५.मध्वतन्त्रमुखभूषणम्



प्रधानसम्पादकाः
राष्ट्रपतिप्रशस्तिपुरस्कृताः पण्डितकेसरी श्री राजा एस्. गिरि आचार्याः

॥ श्रीमन्मूलरामो विजयते ॥ ॥ श्रीगुरुराजो विजयते ॥

श्रीमद्राघवेन्द्रतीर्थआराधनामहोत्सवे प्रकटितम्

# श्रीविजयीन्द्रसम्पुटम् - ३




*प्रधानसम्पादकाः*

राष्ट्रपतिप्रशस्तिपुरस्कृताः पण्डितकेसरी

श्री राजा एस्. गिरि आचार्याः



*प्रकाशकः*



**श्रीगुरुसार्वभौमसंशोधनमन्दिरम्**

**श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्**

जगद्गुरु श्रीगुरुसार्वभौमसंशोधनमन्दिरम्

श्रीगुरुसार्वभौमसंस्कृतविद्यापीठम्

## Śrī VijayīndraSamputạm - 3

1. *Adwaitśikśa*
2. *Pramāṇapaddhatiṭīkā*
3. *Turīyaśivakhaṇḍanam*
4. *Paratattwaprakāśikā*
5. *Madhwatantramukhabhūṣaṇam*

ISBN No. 978-81-928761-2-2



*Published By :*

**Śrī Gurusārvabhouma Samśodhana Mandiram**
Jagadguru Śrīman Madhvācharya Mūla Mahāsamsthānam
Śrī Rāghavendra Swāmi Maṭha, Mantralayam - 518345 (A.P)

*Printed By :*
**Dhananjay Warkhedkar**
at : **Sudhā Mudraṇa**
Śankarpuram, Bangalore - 560 004.
*Phone* 080-65602836 *Mobile* : 9243074414

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमत्परमहंसपरिव्राजकाचार्य-पदवाक्यप्रमाणपारावारपारङ्गत-सर्वतन्त्रस्वतन्त्र-
श्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य-श्रीमन्मूलरघुपतिवेदव्यासदेवदिव्यश्रीपादपद्माराधक-
**जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थानाधीश्वराणां**
श्रीराघवेन्द्रस्वामिमठीयवेदान्तसाम्राज्यदिग्विजयविद्यासिंहासनाधीश्वराणां
**श्रीमत्सुशमीन्द्रतीर्थश्रीचरणकरकमलसञ्जात-**
**श्रीमत्सुयतीन्द्रतीर्थवरकुमारकाणां**

# श्रीमत्सुबुधेन्द्रतीर्थश्रीपादानां

## अनुग्रहसन्देशः

महदिदं प्रमोदस्थानं यत् चतुरधिकशतग्रन्थकर्तृणां अनितरसाधारणमहिमानां वाक्ये पदे पादविलोचने, व्यासीयशास्त्रे चारचितप्रबन्धानां, चतुःषष्टिकलापारावारपारीणानां प्रथितयशसां महानुभावानां ग्रन्थनामोच्चारणमात्रेण पण्डितत्वेन परिगण्यते इति ।

वादिमत्तेभकण्ठीरवाणामेतेषां ग्रन्थराशिषु केचन अस्मन्मठेन, अन्याभिः संस्थाभिश्च मुद्रिताः वर्तन्ते । अन्ये केचन मुद्रणमलभमानाः हस्तलिखितरूपेण संरक्षिताः वर्तन्ते । प्रकृते उपलभ्यमानग्रन्थान् एकत्र सङ्गृह्य सम्पुटरूपेण (एकस्मिन् सम्पुटे पञ्चषाः ग्रन्थाः) सम्पाद्य प्रकाशनीयमिति हरिवायुगुरूणां प्रेरणानुसारेण आयोजितम् । तेष्वन्यतमेऽस्मिन् तृतीयसम्पुटे १) अद्वैतशिक्षा, २) प्रमाणपद्धतिटीका, ३) तुरीयशिवखण्डनम्, ४) परतत्त्वप्रकाशिका, तथा ५) मध्वतन्त्रमुखभूषणम्, एते ग्रन्थाः अस्मद्विद्यापीठीयविद्वांसः, अन्ये केचन विद्वांसश्च बहुपरिश्रमेण तालपत्राद्यवलोकनेन सम्पादनमकुर्वन् । एतेषां इतोऽप्यतिशय-ग्रन्थसम्पादन-अनुवादादिकार्येषु बुद्धिशक्तिं प्रददत्विति अस्मदुपास्य श्रीमद्राघवेन्द्रतीर्थ-गुर्वन्तर्गत-भारतीरमणमुख्यप्राणान्तर्गत-श्रीमन्मूलरघुपति-वेदव्यासदेवं प्रार्थयामः ।

*इति नारायणस्मरणानि ।*

॥ श्रीः ॥

# सम्पादकीयम्

प्रथितमेवेदं अचिन्त्याद्भुतशक्तिसम्पन्नः सृष्ट्याद्यष्टकर्ता भगवान्नारायणः समग्रस्य जगतः कल्याणाभ्युदयश्रेयःप्रेयसां तथा सुखशान्त्यादीनां प्रदाता इति । समेषां देशानां तत्त्व-धर्म-संस्कृतीनां हृदयमेव उपर्युक्तं चिन्तनम् । एतादृशोत्तमतत्त्वसारोपदेशदात्री खल्वियं धात्री । अतः कीर्तिरियं सर्वात्मना भारतस्यैव युज्यते । देशस्यास्य प्रभावेणैवेतरदेशेष्वपीदृशं तत्त्वचिन्तनम् प्रारभत । नैक-तत्त्वविद्या-धर्म-संस्कृतेः विविधकलानाञ्च मातृस्थानीयोऽयं भारतदेशः ।

देवानां हार्दं ज्ञातुमुपदेष्टुं सर्वाणि शास्त्राणि प्रवृत्तानि । एतेषां सदागमानां सारसर्वस्वमेव भगवान् बादरायणः "वेदशास्त्रात्परं नास्ति न दैवं केशवात्परम्" इत्यादि सुवचनैः उपदिदेश । किञ्च आधि-कारिकवाण्या "आलोड्य सर्वशास्त्राणि विचार्य च पुनः पुनः । इदमेकं सुनिष्पन्नं ध्येयो नारायणस्सदा" इति सुस्पष्टमवादीत् बादरायणः । ध्यानविषयो नारायणः कीदृशः ? किं तस्य लक्षणम् ? इत्याशङ्कायां "ॐ जन्माद्यस्य यतः" इत्यादिसूत्रैः परिहारः कृतः सूत्रकारेण । जन्माद्यष्टकर्ता सर्वोत्तमः अनन्त-कल्याणगुणपरिपूर्णः सर्वदोषदूरः रमाब्रह्मादिसर्वदेवोपास्य इत्यादि सूत्रोक्तं परब्रह्मलक्षणं श्रीमन्नारा-यणस्यैव नान्येषाम् इति वेदतदनुसारिपुराणादिप्रमाणोदाहरणपूर्वकं जीवोत्तमाः श्रीवाय्ववतारिणः श्रीमदानन्दतीर्थभगवत्पादाचार्याः स्वीयद्वैतसिद्धान्ते निरणीनयन् । वेदार्थनिर्णयकन्यायग्रथनात्मक-ब्रह्ममीमांसाशास्त्रे बादरायणेन निरूपितानि तत्त्वानि श्रीमदानन्दतीर्थीयभाष्य एव सम्यङ् निरूपितानि ।

अन्ये मूलं विवृण्वानाः, पण्डितश्रेष्ठाः, मेधाविनः प्रखरपाण्डित्यपूर्णाः भवन्तु नाम, परन्तु विवरणेन मूलस्याविरोधिना भाव्यम् । यत्किमपि तत्त्वं सुष्ठु निरूपयितुं मूलकाराणां भावः अवगतश्चेत् तदा तद्विवरणं सुशकं भवति । अत्र गुर्वनुग्रह आवश्यकः । अन्यथा मूलकाराणामाशयस्य असमञ्जस-विवरणसन्दर्भा एव अधिकाः अनुभूयन्ते । परन्तु श्रीमन्मध्वाचार्याणां भाष्यं तु सर्वसज्जनलक्ष्यभूतस्य स्वस्वरूपानन्दाविर्भावरूपमोक्षस्य साधकं सत्, जगति सतां कल्याणोद्धरणयोः प्रधानं निदानम् । एतादृशानां महाशयानामुपदेशाः सर्वेषां सच्चेतनानामुद्धरणकारणीभूताः भवन्ति । अत एव श्रीमदा-चार्याणां सद्वैष्णवसिद्धान्तः विश्वजनीनप्राणिमात्रस्य कृते मङ्गलानि दातुं नितरां दक्ष इति तु सर्व-विद्वत्तल्लजैः परममान्यतामध्यगमत् ।

श्रीमदाचार्याणामुत्कृष्टानीमानि तत्त्वानि, आचार्याणां साक्षात् शिष्यैः श्रीपद्मनाभ-नरहरि-माधव-अक्षोभ्यतीर्थैः महाज्ञानिभिः यतिवरेण्यैश्च प्रसारितानि ।

इन्द्रांशसम्भूताः श्रीमज्जयतीर्थाः द्वैतभाष्यस्य टीकां विरचय्य द्वैतसिद्धान्तं सुदृढं अकार्षुः । अत एव श्रीमट्टीकाकृत्पादा इति प्रथिताः । श्रीमज्जयतीर्थश्रीचरणानां सत्परम्परायां समागतानां श्रीकवीन्द्र-राजेन्द्रतीर्थानां परम्परायां समागताः श्रीरामचन्द्र-श्रीविबुधेन्द्र-श्रीश्रीपादराज-श्रीव्यासराजतीर्थश्रीपादाः असदृशाः नैकग्रन्थरचनेन, प्रचारेण च द्वैतसिद्धान्तं प्रकाश्य, सज्जनानां महान्तमुपकारं व्यदधुः । षोडश (१६) सप्तदश (१७) तम शतमानीयाः परमतीयाः सत्सिद्धान्तस्योपरि दोषानारोपयितुं प्रायतन्त । तदा श्रीमद्विजयीन्द्र-श्रीवादिराज-श्रीसुधीन्द्रतीर्थाः श्रीमद्राघवेन्द्रतीर्थाश्च नैकान् प्रौढग्रन्थान् विरचय्य परकीयमतं शतशः निरस्य, द्वैतसिद्धान्तं परिपोष्य, आचन्द्रार्कं सुस्थापितं व्यदधुः । एतेषां महानु-भावानामिममुपकारं स्मृत्वा माध्वाः कृतार्थान् मन्यन्ते ।

ईदृशानां महानुभावानां मध्ये श्रीमद्विजयीन्द्रतीर्थश्रीचरणाः अग्रगण्याः कुम्भकोणक्षेत्रस्था विराजन्ते ।

**श्रीविजयीन्द्रतीर्थश्रीचरणाः—**

श्रीविजयीन्द्रतीर्थश्रीचरणैः तत्त्वशास्त्रप्रपञ्चाय, श्रीमध्वसिद्धान्ताय, मध्वप्रजाभ्यः प्राधान्येन आस्तिकमतानुयायिभ्यः सत्तत्त्वाध्ययनशीलेभ्यः सज्जनेभ्यश्च कृतोपकारः कदाऽप्यविस्मरणीयः, वर्णयितुं अशक्यश्च । एषां वैशिष्ट्यं च स्वकीयग्रन्थेषु प्रत्यक्षरं व्यक्तं भवति । श्रीविजयीन्द्रतीर्थ-श्रीचरणैरेव सिद्धान्तोऽयं दृढीभवन् वर्धमानंस्तिष्ठतीति निश्चप्रचं ब्रूमः ।

चतुःषष्टिकलापारावारपारीणशेखरान् श्रीविजयीन्द्रतीर्थश्रीचरणान् 'सूर्यसुगुणार्या' इति ज्ञानिनो-ऽरनुवन् । इदमक्षरशः तथ्यमिति ब्रूमः । यथा सूर्येणैव जगदिदं प्रकाशितं तथा एतैरेव महाशयैः श्रीमध्व-सिद्धान्तरूपं जगत् प्रकाशितम् । सूर्यः यथा स्वसहस्रकिरणैः लोकं प्रकाश्य रक्षति, तथा एते यतिवर्याः स्वरचितैः चतुरधिकशतग्रन्थरूपैः मयूखैः वैदिकप्रपञ्चं पुपुषुः । सूर्यस्य गतिः यथा युगान्तपर्यन्तं स्थिरा, तथा श्रीविजयीन्द्रतीर्थग्रन्थानां महिमोपदेशाश्च सुस्थिराः शोभन्ते ।

श्रीविजयीन्द्राणां काले निर्णेतव्ये नैके विषया अवधेयाः । श्रीविजयीन्द्राणां देशं कालं च, बहुधा विमृश्य तेषां कालः क्रिस्तशक १५१७ तः आरभ्य १६१४ पर्यन्तमस्तीति निर्णीतवन्तः । प्रायः (९७) सप्तनवतिवर्षात्मकं सुदीर्घकालं जीवन्तोऽवर्तन्तेति सुस्पष्टं व्यक्तीभवति ।

पीठाधिपतीनां कालं त्रिधा निर्णेतुं शक्यते । (१) जन्मतः वृन्दावनगमनपर्यन्तम्, (२) परम-हंसाश्रमस्वीकारादारभ्य वृन्दावनस्थत्वपर्यन्तम्, (३) महासंस्थानाधिपत्यनिर्वहणकालादारभ्य वृन्दावन-स्थत्वपर्यन्तम् इति च । वयमत्र जननादारभ्य वृन्दावनस्थितिपर्यन्तं क्रि.शकः १५१७ आरभ्य १६१४

पर्यन्तं काल इति सूचयामः । निर्णयस्यास्य बलवन्ति ताम्रशासनानि, ग्रन्थाः श्रीसुधीन्द्रतीर्थाना-माश्रमप्रसङ्गः तथा कालश्च साधाराणि प्रमाणानि वर्तन्ते ।

**ताम्रशासनानां परिचयः—**

(१) क्रि. श. १५७५ तमेऽब्दे श्रीरङ्गराजभूपतिना विजयीन्द्रसहितेभ्यः श्रीसुरेन्द्रतीर्थेभ्यः दत्त-ग्रामदानताम्रशासनम् ।

(२) क्रि. श. १५७६ तमेऽब्दे श्रीरङ्गराजभूपतिना श्रीसुधीन्द्रतीर्थेभ्यः दत्तग्रामदानताम्रशासनम् ।

(३) क्रि. श. १५७७ तमेऽब्दे श्रीरङ्गराजभूपतिना श्रीविजयीन्द्रेभ्यः दृढीकृत्य दत्तस्य 'अविलि-मङ्गल'ग्रामस्य दानसूचकं ताम्रशासनम् ।

(४) क्रि. श. १५८० तमेऽब्दे 'तञ्जावूर'स्य शिवप्प (चेव्वप्प) नायकेन श्रीविजयीन्द्रतीर्थेभ्यः दत्तग्रामदानताम्रशासनम् ।

(५) क्रि. श. १६१४ तमेऽब्दे चेव्वप्पनायकस्य सोदरेण, मन्नारुगुडिप्रान्तस्य भूपतिना चिन्न-चेव्वप्पनायकेन श्रीविजयीन्द्रेभ्यः दानरूपतया समर्पितग्रामद्वयस्य द्वे ताम्रशासने ।

(६) श्रीशाके १४१७ तमेऽब्दे युवसंवत्सरे आषाढशुक्लप्रथमद्वादश्यामिन्दुवासरे, (दिनाङ्के २०-६-१५७५) (Mysore Arch. Report - 1944 Inscription No. 21) पेनगोण्डग्रामे श्रीरङ्गराजभूपतिना श्रीविजयीन्द्रशिष्यसहितेभ्यः श्रीसुरेन्द्रतीर्थेभ्यः 'नावलूरु' अथवा 'रामचन्द्रापुर' इत्याख्यो ग्रामः दत्तः, यं ग्रामं श्रीसुरेन्द्रतीर्थाः २० सङ्ख्याकप्रसिद्ध-पण्डितेभ्यः अग्रहारं कृत्वा दानरूपेण ददुः । अयमेव विषयः ताम्रशासन एव उल्लिखितः । एतेन श्री सुरेन्द्रतीर्थाः १५७५ तमाब्दपर्यन्तमपि जीविता अवर्तन्तेति ज्ञायते ।

(७) श्रीशाके १४९७ तमेऽब्दे युवसंवत्सरे माघकृष्णत्रयोदश्यां (२८-०१-१५७६ तमे दिनाङ्के) श्रीरङ्गराजभूपतिः विजयनगरे (हम्पि) ग्रामे श्रीसुरेन्द्रतीर्थकरकमलसञ्जातेभ्यः श्रीसुधीन्द्र-तीर्थेभ्यः पञ्च (५) ग्रामान् दत्वा ताम्रशासनं ददौ । तदिदमुट्ङ्कितम्– (Mysore Arch. Report - 1-1944-139 Note No. 22) ते ग्रामाः अद्यापि श्रीमठाधिकारे एव वर्तन्ते । एतेन श्रीसुधीन्द्रतीर्थाः १५७५ तमे संवत्सरे परमहंसाश्रमिण आसन्निति स्पष्टं ज्ञायते । श्रीशाके १५७५ तमेऽब्दे श्रीसुरेन्द्रतीर्थाः श्रीसुधीन्द्रतीर्थेभ्यः परमहंसाश्रमं दत्वा, तान्, श्रीविजयीन्द्रतीर्थेभ्यः शिष्यत्वेन समार्पयन्निति च सुस्पष्टं ज्ञायते ।

(८) शिष्यत्वेन स्वीकरणानन्तरं अविच्छिन्नतया सम्प्राप्ताश्रमप्रदानसम्प्रदायो विच्छिन्नो मा भूदिति श्रीविजयीन्द्रेषु सत्स्वपि श्रीसुरेन्द्रतीर्थाः स्वयमेव मुहुः श्रीसुधीन्द्रतीर्थेभ्यः परमहंसाश्रमं प्रदाय, तान् शिष्यत्वेन श्रीविजयीन्द्रेभ्यः प्रादुः । विषयोऽयं स्वीये 'श्रीराघवेन्द्रमठगतार्चाऽऽगतिक्रम'नामकग्रन्थे श्रीवादीन्द्रतीर्थैरिव समुपवर्णितः ।

"सुरेन्द्रः सम्प्रदायाप्तन्यासविच्छेदभीरुकः ।
सुधीन्द्रं न्यासयित्वा तं विजयीन्द्रकरे ददौ" इति ।

उपर्युक्तप्रबलप्रमाणेन, "श्रीसुरेन्द्रतीर्थाः श्रीसुधीन्द्रेभ्यः आश्रमं दत्वा श्री विजयीन्द्रेभ्यः तान् प्रददुः" इति सिद्ध्यति १५७६ तमाब्दीयताम्रशासनेन ।

(९) श्रीशके १४९९ तमेऽब्दे धातुसंवत्सरस्य आषाढद्वादश्यां क्रिस्तशके १५७७ तमेऽब्दे सम्राट् श्रीरङ्गराजभूपतिः तञ्जावूरुनगरस्य चेव्वप्पनायकस्य पुत्रेण राजकुमाराच्युतप्प-नायकेन श्रीविजयीन्द्रेभ्यः 'अरविलिमङ्गलम्' अथवा 'अच्युतप्पसमुद्रम्' चेव्वप्पनायक-सङ्केतानुसारं प्रादात् तदिदमुदन्तजातं संवर्ण्य ताम्रशासनेन संशासितम् । (तच्च Mysore Arch. Report - 1944 and Epigraphika India) डॉ. शर्मभिः लिखितः निर्णयोऽङ्गीकृतश्चेत् श्रीसुरेन्द्रतीर्थेभ्यः श्रीरङ्गनायकेन दत्तस्य ताम्रशासनस्य अभिप्राया-न्तरं भवति । (यथा डॉ. शर्माभिप्रायः) श्रीसुरेन्द्रतीर्थाः १५३९ तमेऽब्दे वृन्दावनस्था अभविष्यन्, तर्हि १५७५ तमेऽब्दे तेभ्यः ग्रामं दत्वा ताम्रशासनं दातुं श्रीरङ्गनायकः न अशक्ष्यत । श्रीरङ्गरायस्य कालः १५३९ इति प्राक् नीयत इति चेत्, इतिहासप्रसिद्धस्य, तस्य कालनिर्णयस्य बाधो भवति ।

(१०) श्रीशके १५३६ तमे आनन्दनामसंवत्सरे चैत्रशुक्लश्रीरामनवम्यां (९-३-१६१४ तमे दिनाङ्के) महाभिषेकसमये चिन्नचेव्वप्पनायकः श्रीविजयीन्द्रतीर्थेभ्यः व्रीहिसमृद्धिदायकमेकं भूक्षेत्रं, तथा श्रीविजयीन्द्रसन्निधौ पार्श्वस्थमेकमुद्यानं च दत्वा, ताम्रशासनद्वयं समर्पयत् (Mysore Arch. Report - 1944 Inscription No. 27 & 28 ) ते अद्यापि श्रीमठस्वाम्ये वर्तेते ।

एवं विमर्शनेन श्रीविजयीन्द्रतीर्थानां जीवनस्य प्रसङ्गाः तर्कितुं शक्यन्ते । श्रीविजयीन्द्रतीर्थाः क्रि.श. १५१७ तमाब्दात्, १६१४ तमाब्दपर्यन्तं सप्तोत्तरनवति वर्षाणि जीविताः श्रीसुरेन्द्राणां शिष्याः

अवर्तन्त। ततस्ते १५३० तमाब्दात् १५७५ तमाब्दपर्यन्तं पञ्चचत्वारिंशद्वर्षाणि गुरुशुश्रूषरता आसन्। ततः श्रीसुरेन्द्रगुरूणां वैकुण्ठयात्रानन्तरं १५७५ तमाब्दात् प्रभृति १६१४ तमाब्दपर्यन्तं श्रीसुधीन्द्रैः संसेवितैः महासंस्थानाधिपतिभिः श्रीविजयीन्द्रतीर्थैः एकोनचत्वारिंशद्वर्षाणि (३९) १६१४ तमे वत्सरे श्रीसुधीन्द्रतीर्थेभ्यः महासंस्थानं समर्प्य स्वीये सप्तोत्तरनवतितमे (९७) वयसि वृन्दावनमध्यासितम्।

**श्रीविजयीन्द्रतीर्थानां श्रीअप्पय्यदीक्षितानां समकालिकत्वम्—**

श्रीविजयीन्द्रतीर्थेभ्यः पूर्वकाल एव शैवाग्रगण्यानां श्री अप्पय्यदीक्षितानां स्थितिः श्रीअप्पय्य-दीक्षित-श्रीविजयीन्द्रतीर्थानां परस्परं वाक्यार्थविचारश्च काले काले नाभूदिति, श्री एम्. महालिङ्गशास्त्रिणः (एतद्वारा IOR Madras - 1929 P.P. 140-60) श्रीअनन्तकृष्णशास्त्रिणः न्यायामृताद्वैतसिद्धि-ग्रन्थस्योपोद्घाते च समसूचयन्। तदसत्। कुत इति चेत् शिवप्पनायकस्य आस्थाने, श्रीविजयीन्द्राः श्रीवैष्णव-ताताचार्याः शैवाद्वैतिनः अप्पय्यदीक्षिताश्च त्रेताग्नय इव एकत्र मिलिताः सन्तः "यत्सभायां स्वस्वमतं सभायां स्थापयन्ति स्म" इति लिखितम्। वेलूरु प्रान्तस्य निकटे आडेयप्रान्ते एकेन शासनेन 'श्री अप्पय्यदीक्षिता १५८७ तमे संवत्सरे जीवन्ति स्मे'ति ज्ञायते। १५९६ तमे शासने एकस्मिन् (MER 1905 P. 60) उल्लिखितं दीक्षितर् अय्यगळ् महोदयेन, 'अप्पय्यदीक्षिता एव स्युरि'ति।

श्रीदीक्षिताः श्रीविजयीन्द्रेभ्यः प्रागेव निधनं गताः इति किं वदन्ती दन्तकथाश्च जाग्रति। दीक्षितै रचितस्य 'आत्मार्पणस्तुति'ग्रन्थस्य व्याख्याने शिवानन्दयतयः कलियुगस्य ४६ तः ५४ तमे वर्षे दीक्षिताः जज्ञिरे इति, ते ७२ वर्षात्मकायुष्यपर्यन्तं जीवन्त आसन्निति चाकथयन्। यद्येषः निर्णयः अङ्गीकृतश्चेत् तेषां जननं क्रि. श. १५५३ तमे वर्षे मरणं क्रि. श. १६२५ तमे वर्षे इति च भवेत्। एतस्य च उपरितनेतिहासस्य परम्परायाश्च विरोधः सम्भावितः। श्रीविजयीन्द्रतीर्थाः क्रि. श. १६१४ तम वर्षादनन्तरं परमपदमगमन्निति निर्णयेन दीक्षिताः इतःपूर्वमेव निधनं गता इति तर्क्यते। एतैरुक्तप्रमाणैः श्रीविबुधेन्द्रतीर्थानां क्रि.श. १४७०, श्रीसुरेन्द्रविजयीन्द्राणां ९८-९७ वर्षा आयुर्मानम् श्रीसुधीन्द्राणां तु ६२ वर्षात्मकदीर्घकालं (दातुं) निर्णेतु ऐतिहासिकप्रमाणविरोधो न भवेदिति निश्शङ्कं कथयितुं मोमुद्यते मे चेतः।

**अतिमानुषशक्तिसम्पन्नाः श्रीविजयीन्द्रतीर्थाः—**

श्रीविजयीन्द्रचरिते बहूनि अतिमानवमाहात्म्यानि संवर्णितानि। एतदधिकृत्य ईषदुल्लेखनं योग्यं भाति।

सर्वेषु देशेषु कालेषु च नैके साधवः महात्मानश्च समभवन् गताश्च । तेषां जीवनं अनेकैर्माहात्म्यैरतिमानुषव्यापारैश्च परिपूर्णम् । अचिन्त्याद्भुतशक्तिसम्पन्नस्य भगवतः विशिष्टानुग्रहपात्रभूतानां महात्मनाम् अतिमानुषव्यापाराणां महिम्नां प्रदर्शनं भगवतः अस्तित्वस्थापने, अतीन्द्रियवस्तूनां विषये जनानां विश्वासोत्पादने च निदानं भवति । एतत्तु स्वाभाविकम् । लब्धाष्टसिद्धिमन्त्रसिद्धियोगसिद्धीनां महतामेतत् साधारणं कार्यम् । भौतिकविज्ञानप्रचुरे युगेऽस्मिन् अस्मत्पूर्वजानां महत्त्वं भारतदेशस्य संस्कृतिं च विस्मृत्य परदेशीयानां धर्मसंस्कृतिभिः आकृष्टमनसोऽभवन् भारतीयाः । एषामस्मत्पूर्वजानाम् अपूर्वशक्तिमहिमासाधनेषु विश्वासाभावेऽपि, 'एतत्सर्वं तथ्यम्' इत्ययं विषयः अविस्मरणीयः । विज्ञानबलेन मानवः चन्द्रमण्डले पदं निक्षिप्तवान् इति विषयं स्वतः अदृष्ट्वापि सर्वे जनाः विश्वसन्ति । प्रतिरथ्यं मान्त्रिकाः यक्षिणीविद्याप्रवीणाः सर्पदर्शकाश्च स्वीयमन्त्रबलेनाल्पेनाद्भुतकार्यकरणं विश्वसन्ति जनाः । एवं मनस्तत्त्वज्ञा अपि वशीकरणशक्त्या अन्येषां मानसिकं वृत्तं विज्ञाय, तैः बहूनि कार्याणि कारयन्ति ।

एतेषु सर्वेषु बद्धविश्वासैः आधुनिकैः, अस्मत्पूर्वजैः, तपस्विभिः सिद्धमन्त्रैश्च कृतेषु अमानुषकार्येषु, महिमसु च ध्रुवं विश्वासः करणीय एव । इमे श्रीविजयीन्द्रतीर्थाः असकृत्, चतुःषष्टिकलासु अनुपमं पाण्डित्यं प्रकटयन्ति स्म । शिल्पकलायां, सङ्गीतकलायां, चर्मकारादिवृत्तिकाराणां तत्तत्कलासु स्वपाण्डित्यं प्रदर्शयन्तः जगद्विख्याताः अभवन् ।

**श्रीविजयीन्द्रतीर्थानां ग्रन्थाः—**

द्वैतसिद्धान्तस्य आधारस्तम्भीभूताः ग्रन्थरचयितारः पाठप्रवचनादिभिर्लब्धयशसः प्रख्याताः पण्डिता एव, श्रीविजयीन्द्रतीर्थश्रीपादानां ग्रन्थरचनासामर्थ्यं शैलीं यथायथं वर्णयितुं वयमसमर्थाः इति कथयन्ति । एवं सति अल्पमतयो वयं तान् ग्रन्थान् विमर्शयितुम् असमर्था एव । महात्मनां गुणवर्णनप्रयत्नः न वृथा । श्रीविजयीन्द्रतीर्थानां ज्ञानं, तपः, वादक्रमः, प्रतिभा च यथा अनितरसाधारणः, तथैव तेषां ग्रन्थरचनानैपुण्यं, प्रौढिमा, चातुर्यादीन्यनितरसाधारणानीति विद्वद्बृन्दमान्यानि च सन्तीत्यवश्यं ध्रुवं वक्तव्यमेव ।

श्रीविजयीन्द्रतीर्थाः न केवलं द्वैतसिद्धान्तमधिकृत्य ग्रन्थान् व्यरचन्, किन्तु न्याय-मीमांसा-व्याकरण-ज्योतिःशास्त्रेष्वपि बहून् ग्रन्थान् विरच्य जगन्मान्यतामापुः पुण्यशालिनः । नैकशास्त्रग्रन्थानपि रचयित्वा परमतीयैरपि स्तुत्याः अभवन् । एवं सति तेषां ग्रन्थरचनाचातुर्यमधिकृत्य वर्णनमत्यन्ता-

वश्यकमिति मन्ये । 'श्रीराघवेन्द्रविजय'रचयितारः श्रीनारायणाचार्याः श्रीविजयीन्द्रतीर्थानां ग्रन्थ-प्रणयनचातुर्यं बहुमनोहारितया एवमवर्णयन्—

"वाक्ये पदे पादविलोचनोक्तौ व्यासीयशास्त्रे च कृतान् प्रबन्धान् ।
आस्तां बुधः श्रोतुमशेषमेषां आख्याः समाख्याद्यदि पण्डितोऽसौ ॥"

इति मीमांसा-व्याकरण-न्यायशास्त्रेषु श्रीबादरायणीयवेदान्तशास्त्रे च (भारत-पुराणादिषु च) श्रीविजयीन्द्रयतिवर्याः शताधिकान् ग्रन्थान् व्यरचयन् । न कोऽपि मानवः स्वीये शते आयुषि श्री-विजयीन्द्राणां ग्रन्थानां साकल्येन पाठप्रवचनादिकं कर्तुं प्रभवति, यतः एतेषां ग्रन्थाः तावदगाधाः अनल्पाश्च । श्रीविजयीन्द्रतीर्थैः रचितानां ग्रन्थानां नामानि यथासङ्ख्यं साकल्येन गणयितुं वक्तुं च समर्थाः सन्ति चेत्, तादृशानेव श्रेष्ठपण्डितानिति सधैर्यं वक्तुं शक्नुमः ।

केवलं श्रीविजयीन्द्रग्रन्थानामाख्याः वक्तुं शक्ता ते एव उत्तमपण्डितत्वेन गणयन्ते, चेत् किमु वक्तव्यं तेषां ग्रन्थानामध्ययने । ईदृशानां महाग्रन्थानां रचयितॄणां महाशयानां पाण्डित्यस्य परिमितिः निर्णेतुं वयमसमर्थाः स्याम ।

श्रीविजयीन्द्राः न केवलं द्वैतसिद्धान्तमधिकृत्य चतुरधिकशतग्रन्थरत्नानि (१०४) प्रणीतवन्तः, अपितु, श्रीमदाचार्याणां समेषां ग्रन्थानां टीकाः अधिकृत्य व्याचख्युः । महानुभावा एते श्रीचन्द्रिका-चार्याणां सर्वासां कृतीनां टिप्पणीः, तासां मण्डनपराश्च कृतीः, न्याय-व्याकरण-मीमांसाशास्त्रेष्वपि, उत्कृष्टान् ग्रन्थान्, अद्वैत-विशिष्टाद्वैतमतीयग्रन्थान्, काव्य-नाटक-अलङ्कार-शास्त्रेषु च उत्तमान् ग्रन्थान् तथा मन्त्र-स्तोत्राणि च रचयित्वा भारतदेशीयसारस्वतभण्डारमत्यन्तं सुष्ठु अलङ्कृतं व्यदधुः । तेषा-मेकैकोऽपि ग्रन्थः उत्कृष्टकृतिः, तेषां प्रौढप्रबन्धास्तु द्वैतसिद्धान्तस्थापनायाः सीमाश्मायिताः रारा-जन्ते । तेषां प्रौढग्रन्थाः द्वैतसिद्धान्तस्य अभेद्यदुर्गायिताः । किञ्च श्रीमदानन्दतीर्थ-श्रीटीकाकृत्पाद-श्रीव्यासमुनीनां पश्चादुपलभ्यमानान्नग्रन्थेषु श्रीविजयीन्द्रमुनीनां ग्रन्थाः अधिकतराः । द्वैतसिद्धान्त-पीठाधिपतिषु यतिवर्येषु ग्रन्थरचयितृषु न केऽपि विजयीन्द्रसदृशाः तावद्ग्रन्थरचयितारः दृश्यन्ते इति सघण्टाघोषं वदेम । एते महाभागाः अपूर्वाः कृती रचयित्वा मध्वसिद्धान्तकण्टकान्युद्धृत्य सिद्धान्तं संरक्ष्य पोषयित्वा च श्रीद्वैतमतम् आचन्द्रार्कस्थायि व्यदधन् । एषां महोपकारः माध्वैः कदाऽपि न विस्मरणीयः ।

ग्रन्थकर्तृभिः रचितचतुरधिकशतग्रन्थेषु एकोनशतग्रन्थाः समुपलब्धाः । इतोऽप्यधिकग्रन्थानां कृते संशोधनमावश्यकमस्ति ।

**उपलब्धग्रन्थानां नामसूची–**

(१) ॐकारवादार्थः
(२) अणुभाष्यव्याख्या
(३) अद्वैतशिक्षा
(४) अधिकरणमाला
(५) अधिकरणरत्नमाला
(६) अनुव्याख्यानटिप्पणी
(७) अप्पय्यकपोलचपेटिका
(८) आनन्दतारतम्यवादार्थः
(९) ईशावास्योपनिषद्भाष्यटीकाटिप्पणी
(१०) उपसंहारविजयः
(११) उपाधिखण्डनव्याख्या
(१२) उभयग्रहराहूदयः
(१३) ऐतरेयोपनिषद्भाष्यटीकाटिप्पणी
(१४) कथालक्षणटीकाव्याख्या
(१५) कर्मनिर्णयटीकाव्याख्या
(१६) काठकोपनिषद्भाष्यटीकाटिप्पणी
(१७) कुचोद्यकुठारः
(१८) केनोपनिषद्भाष्यटीकाटिप्पणी
(१९) गीताक्षरार्थः
(२०) गीतातात्पर्यार्थः
(२१) गीतातात्पर्यन्यायदीपिकाटिप्पणी
(२२) गीताभाष्यप्रमेयदीपिकाव्याख्या
(२३) गीताव्याख्यानम्
(२४) चक्रमीमांसा
(२५) चन्द्रिकोदाहृतन्यायविवरणम्
(२६) चक्रमीमांसाखण्डनम्
(२७) छान्दोग्योपनिषद्भाष्यटीकाटिप्पणी
(२८) तत्त्वमाणिक्यपेटिका
(ब्रह्मसूत्रभाष्यटीकाव्याख्या)
(२९) तत्त्वविवेकटीकाव्याख्या
(३०) तत्त्वसङ्ख्यानटीकाव्याख्या
(३१) तत्त्वोद्योतटीकाव्याख्या
(३२) तात्पर्यचन्द्रिकाव्याख्या
(३३) तात्पर्यचन्द्रिकाभूषणम्
(३४) तुरीयशिवखण्डनम्
(३५) तैत्तिरीयोपनिषद्भाष्यटीकाटिप्पणी
(३६) द्वासुपर्णा इत्यादीनां भेदपरत्वसमर्थनम्
(३७) दुरितापहारस्तोत्रम्
(३८) नयपञ्चकमाला
(३९) नयमञ्जरी
(४०) नयमुकुरः
(४१) नारायणशब्दार्थनिर्वचनम्
(४२) न्यायदीपिकाटिप्पणी
(४३) न्यायमाला
(४४) न्यायमौक्तिकमाला
(४५) न्यायसुधाव्याख्या - बिन्दुः
(४६) न्यायाध्वदीपिका
(४७) न्यायामृतामोदः
(४८) न्यायामृतगुर्वामोदः
(४९) न्यायामृतजैमिनीयन्यायमाला

(५०) न्यायामृतन्यायमाला
(५१) न्यायामृतलघ्वामोदः
(५२) न्यायामृतकण्टकोद्धारः
(५३) पञ्चसंस्कारदीपिका
(५४) पदार्थसङ्ग्रहः
(५५) परतत्त्वप्रकाशिका
(५६) प्रणवदर्पणखण्डनम्
(५७) प्रमाणपद्धतिव्याख्या
(५८) प्रमाणलक्षणटीकाव्याख्या
(५९) पिष्टपशुमीमांसा
(६०) बृहदारण्यकोपनिषद्भाष्यटीकाटिप्पणी
(६१) ब्रह्मसूत्राधिकरणमाला
(६२) ब्रह्मसूत्रन्यायसङ्ग्रहः
(६३) भगवद्गीताव्याख्या
(६४) भेदचिन्तामणिः
(६५) भेदप्रभा
(६६) भेदविद्याविलासः
(६७) भेदसञ्जीविनी
(६८) भेदागमसुधाकरः
(६९) भट्टोजीकुट्टनम्
(७०) भेदकुसुमाञ्जलिः
(७१) मण्डूकोपनिषद्भाष्यटीकाटिप्पणी
(७२) मध्वतन्त्रमुखभूषणम्
(७३) मध्वसिद्धान्तसारोद्धारः
(७४) मध्वाध्वकण्टकोद्धारः
(७५) माण्डूक्योपनिषद्भाष्यटीकाटिप्पणी
(७६) मायावादखण्डनटीकाव्याख्या
(७७) मिथ्यात्वानुमानखण्डनटीकाव्याख्या
(७८) मीमांसानयकौमुदी
(७९) लिङ्गमूलान्वेषणविचारः
(८०) वाग्वैखरी
(८१) वादमालिका
(८२) विरोधोद्धारः
(८३) विष्णुतत्त्वनिर्णयटीकाव्याख्या
(८४) विष्णुपारम्यम्
(८५) शैवसर्वस्वखण्डनम्
(८६) श्रवणविधिविलासः
(८७) श्रीनृसिंहाष्टकम्
(८८) श्रीरामानुजमतरीत्या सूत्रार्थः
(शारीरिकमीमांसा)
(८९) श्रीव्यासराजविजयः
(९०) श्रुतितत्त्वप्रकाशिका
(९१) श्रुत्यर्थसारः
(९२) श्रुतितात्पर्यकौमुदी
(९३) षट्प्रश्नोपनिषद्भाष्यटीकाटिप्पणी
(९४) सद्युक्तिरत्नाकरः
(तर्कताण्डवव्याख्या)
(९५) सन्मार्गदीपिका
(९६) सर्वसिद्धान्तसारासारविवेकः
(९७) सिद्धान्तसारासारविवेचनम्
(९८) सुभद्राधनञ्जयः
(९९) सूत्रार्थसङ्ग्रहः

# श्रीविजयीन्द्रप्रपत्तिः

**श्रीवादीन्द्रतीर्थाः—**

चातुर्यैकाकृतिर्यश्चतुरधिकशतग्रन्थरत्नप्रणेता
धूतारातिप्रबन्धस्फुटविदितचतुःषष्टिविद्याविशेषः ।
सोऽयं नः श्रीसुरेन्द्रव्रतिवरतनयोऽद्वैतशैवासहिष्णुः
पुष्णातु श्रीजयीन्द्रस्त्रिभुवनविदितः सर्वतन्त्रस्वतन्त्रः ॥

**महाकवि नारायणाचार्याः—**

चतुःषष्टिकलाविद्याजुषे विद्वन्महोमुषे ।
जयीन्द्रज्योतिषे कुर्यां वन्दनानि यशोजुषे ॥

—*श्रीराघवेन्द्रविजयमहाकाव्यम्*

**विद्वन्मणि सेतुमाधवसूरिः—**

जित्वा वादे वीरशैवं गुरुं विस्तृततन्मठम् ।
अपहृत्येह संवासं कृतवन्तं सतां हि तम् ॥
दुर्वाद्यप्पय्यरचितग्रन्थारण्यविनष्टने ।
चतुरस्सङ्ख्याधिकशतग्रन्थादीनां प्रचोदकम् ॥
चतुःषष्टिकलाविद्यापूर्णोऽयमिति वन्दिभिः ।
राजमार्गे घोष्यमाणं श्रीमध्वमतवर्धनम् ॥

**श्री विद्वत्कुलतिलक राजपुरोहित मध्वाचार्याः—**

चचार पृथिवीं सर्वां सिंहः क्षुद्रमृगेष्विव ।
शास्त्रज्ञा मूकतां प्राप्ताः जयीन्द्रपुरतस्तदा ॥
ब्राह्मणानजययन् तर्कमीमांसवादकान् ।
दैवज्ञा भिषजो भट्टान् मायिनश्शास्त्रपारगान् ॥
ये ये जनाः वेद्यविद्यास्ते ते तेन निराकृताः ।
सर्वान् विजित्य सर्वत्र चचार पवनो यथा ॥

—*श्रीविजयीन्द्रविजयकाव्यम्*

श्रीसुमतीन्द्रतीर्थाः—

स्तौमि श्रीविजयीन्द्रसंयमिमणेः प्रौढिं तवाढौकित
प्रज्ञागन्धवहप्रभञ्जनभरोदर्कैकभास्वद्घ्राम् ।
याति स्फूर्तिमिह व्रजत्यभिदधत्यानन्दमाच्छादय-
त्याशाचक्रमहो विभाति रुचिराकाराचिरं द्योतते ॥

श्रीमधुधाराकाराः—

जनुर्जतुरनारतं जगति चातुरी चातुरी
मतिर्मतिरखण्डिता सदसि मौखरी मौखरी ।
कृतिः कृतिरितो जना शृणुत पण्डितीं पाण्डितीं
जयीन्द्र विजयीन्द्र सच्चरितवन्दिकर्मन्दिना ॥

—अलङ्कारमञ्जरीव्याख्या

श्रीसुधीन्द्रतीर्थाः—

स जयति यतिचन्द्रः साहितीशास्त्रसान्द्रः ।
सततगलिततन्द्रः सद्यशाश्श्रीजयीन्द्रः ॥
जहि हि निजजयाशा जाग्रदायासलेशा-
जड ! यदधिनिदेशाज्जातहर्षा दिगीशाः ॥

—अलङ्कारमञ्जरी

विजयीन्द्रसभास्तारे त्वय्यर्के प्रतिपद्यते ।
तारत्वं प्रसभास्तारे विमतोऽप्रतिपद्यते ॥

—अलङ्कारमञ्जरी

सुभद्रापरिणयकाराः—

इन्द्रो गोत्रभिदिन्दुराश्रितकलानाशः शिवो विश्रुतः
स्थाणुर्लोकविलोकनः कुवलयद्वेषी विषोन्मिश्रितः ।
शेषो नीरिधिरेष दारदजनिः धाता सुरासेवितः
त्रैलोक्ये विजयीन्द्रयोगिसदृशं तस्मान्न मन्यामहे ॥

★ ★ ★



श्रीमन्मध्वकरार्चित-श्रीदिग्विजयरामदेवः चतुर्युगमूर्तिब्रह्मकरार्चित-श्रीमन्मूलरामदेवः श्रीजयतीर्थकरार्चित-श्रीजयरामदेवः

# ॥ श्रीमदानन्दतीर्थभगवत्पादाचार्याः ॥



व्यासिर्यस्य निजे निजेन महसा पक्षे सपक्षे स्थिति-
व्यावृत्तिश्च विपक्षतोऽथ विषये सक्तिर्न वै बाधिते ।
नैवास्ति प्रतिपक्षयुक्तिरतुलं शुद्धं प्रमाणं स मे
भूयात्तत्त्वविनिर्णयाय भगवानानन्दतीर्थो मुनिः ॥

## ॥ श्रीमज्जयतीर्थाः ॥



सत्पद्मबन्धवो यस्य गावो विध्वतमोनुदः ।
स स्यात् तत्त्वप्रकाशाय जयतीर्थरविर्मम ॥

# ॥ श्रीविजयीन्द्रतीर्थाः ॥



धर्मः सत्ये च धीमानहिरिव वचसा भूसुराणां सभायां
जेता भीमैव वादे पवन इव गतौ सम्पदि श्रीरिवाढ्यः ।
धाता ज्ञाता च सर्वानहिपतिशयनं पूजयंस्तोषयंश्च
लोकैः सर्वैश्च पूज्यो भुवि मनुजवरैर्मानितोऽभून्मुनीन्द्रः ॥

# ॥ श्रीराघवेन्द्रतीर्थाः ॥



चित्ते चेन्मृदुता शिरीषसदृशे हय्यङ्गवीनं शिला
गाम्भीर्यं यदि यस्य सोऽन्धुरुदधिः शास्त्रेषु चेत्पाण्डिती ।
आचार्यो विबुधेशितुः कलयते विद्यार्थितामादरात्
औदार्यं यदि कल्पपादपमुखाः सम्भावयन्तेऽर्थिताम् ॥



प्राक्तनपीठाधिपतयः

**परमपूज्याः श्री श्री १००८ श्रीसुजयीन्द्रतीर्थश्रीपादाः**



प्राक्तनपीठाधिपतयः

**परमपूज्याः श्री श्री १००८ सुयतीन्द्रतीर्थाः**



प्रस्तुतपीठाधिपतयः
परमपूज्याः श्री श्री १००८ श्री सुबुधेन्द्रतीर्थाः

## कृतज्ञतावचनम्

श्रीविजयीन्द्रतीर्थग्रन्थप्रकाशनकार्येऽस्मिन् बद्धादराणां जगद्गुरुश्रीमन्मध्वाचार्यमूलमहासंस्थान-श्रीराघवेन्द्रमठीय-दिग्विजयविद्यासिंहासनाधीश्वराणां परमपूज्य श्रीसुबुधेन्द्रतीर्थश्रीपादानां आदेशानुसारेण, मुद्रितामुद्रितग्रन्थाः सम्पुटरूपेण प्रकाशनीयाः इति निश्चित्य कार्येऽस्मिन् अस्माभिः प्रवृत्तम्। शोधकार्येऽस्मिन् बहूनि मातृकाणि उपयुज्य संशोधितम्। तेषु बहूनि मातृकाणि मन्त्रालयस्थानां विदुषां अस्मद्गुरुवराणां राजा एस्. गिरि आचार्याणां आध्यात्मिककेन्द्रात् स्वीकृतानि। श्रीमठीयहस्तलिखित-भाण्डागारात् कानिचन लब्धानि। विदुषां व्यासनकेरे प्रभञ्जनाचार्याणां सङ्ग्रहात् द्वित्राणि लब्धानि।

श्रीविजयीन्द्रसम्पुटस्य तृतीयभागे अधोनिर्दिष्टाः ग्रन्थाः संशोध्य प्रकाशिताः वर्तन्ते—

१. अद्वैतशिक्षा
२. प्रमाणपद्धतिटीका
३. तुरीयशिवखण्डनम्
४. परतत्त्वप्रकाशिका
५. मध्वतन्त्रमुखभूषणम्

हरिवायुगुरूणामनुग्रहबलात् चतुरधिकशतग्रन्थरत्नप्रणेतृणां श्रीविजयीन्द्रतीर्थगुरुसार्वभौमानां एते ग्रन्थाः प्रकाश्यमानाः वर्तन्तेति महानानन्दः समजनि।

मातृकाप्रदानेन मार्गदर्शनेन च प्रेरितवतां विद्वद्वरेण्यानां ग्रन्थप्रकाशनबद्धदीक्षाणां परमपूज्यानां श्रीसुबुधेन्द्रतीर्थश्रीपादानां कृपाबलेनैव कार्येऽस्मिन् निरताश्च। अतः तान् प्रणतिततिसहस्रैः प्रणम्य, एवमुत्तरत्रापि कार्यप्रवृत्तये वारं वारं साञ्जलिबन्धं प्रार्थयामः।

ग्रन्थसम्पादनकार्ये तत्तत्कालीनशास्त्रीयविषयेषु सम्प्राप्तसन्देहान् परिहार्य शोधकर्म यथा पूर्णं भवति तथा मार्गदर्शनकर्तॄणां, सम्पुटस्यास्य प्रधानसम्पादकानां पण्डितकेसरि श्री राजा एस्. गिरि आचार्याणां चरणयोः गणशः प्रणामान् समर्पयामः। आंग्लावतरणिकां प्रदत्तवतां अस्मद्विद्यापीठीय-कुलाधिपानां, संशोधनमन्दिरस्य प्रधाननिदेशकानां डॉ. श्री वादिराजाचार्य रा. पञ्चमुखि महाभागानां सविधे कृतज्ञतां समर्प्य तान् प्रणमामः।

मुद्रणशुद्धाशुद्धपरामर्शकार्ये सहकृतवतां विदुषां श्री एन्. राघवेन्द्राचार्याणां तथा श्री डि. आर्. माधवाचार्याणां तथा श्री द्वैपायनाचार्य वरखेडकराणां कार्यदक्षतां स्मारं स्मारं तान् अभिनन्दामः।

सम्पुटस्यास्य मुद्रणशुद्धाशुद्धकार्ये सहयोगं तथा मुद्रणकार्यमपि सुष्ठु बहुपरिश्रमेण निर्दिष्टसमये एव कृतवतां सुधामुद्रणाधिकारिणां श्री धनञ्जयाचार्य वरखेडकराणां सादरं कार्तज्ञं निवेदयामः ।

परमपूज्यैः श्रीसुबुधेन्द्रतीर्थश्रीपादैः समनुष्ठीयमान-श्रीराघवेन्द्रगुरुसार्वभौमानां षट्चत्वारिंशदुत्तर-त्रिशतमानोत्सव(३४६)आराधनासन्दर्भे सम्पुटमिदं लोकार्पणं कर्तुं मोमुद्यतेऽस्मच्चेतः विदां कुर्वन्तु विद्वज्जनाः ।

इति शम् ।

*सम्पादकाः*

*9.8.2017* — *विद्वान् डॉ. एन्. वादिराजाचार्यः*

*मन्त्रालयः* — *तथा सम्पादकमण्डली*



॥ श्रीः ॥

# श्रीमद्विजयीन्द्रतीर्थविरचिता

# अद्वैतशिक्षा

॥ श्रीवेदव्यासाय नमः ॥

श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

मङ्गलाचरणम्—

सर्वज्ञं सर्वकर्तारं सर्वजीवजडात्मकात् ।
प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्नं श्रीनृहरिं भजे ॥ १ ॥

तं पाणिपल्लवं बाहुशाखं सद्द्विजसेवितम् ।
विद्याहासलतापुष्पं मध्वकल्पद्रुमं भजे ॥ २ ॥

ब्रह्मविन्मुखरङ्गस्थां मध्व ते वाङ्नटीं परान् ।
विचित्रपदविन्यासैर्मोहयन्तीं भजेऽन्वहम् ॥ ३ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा ॥ ४ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता [1]सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ५ ॥

---

१. सदा - इ पाठः ।

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालि[1]सेविते ॥ ६ ॥

धीरश्रीविजयीन्द्रमस्करिमणिः श्रीशाद्वहां शासिता
तद्दास्यैकबलान्वितो विदितषट्तन्त्रार्थजातः सुधीः ।
प्रत्यक्षश्रुतियुक्तिनिश्चितमपि श्रीशात्मभेदं वृथा
धिक्कृत्यात्मनि तद्धियं विदधतः शिक्षां विधास्येऽसा ॥ ७ ॥

## जीवेश्वरचैतन्ययोः वस्तुतः न भेद इति विप्रतिपत्तिप्रदर्शनम्—

नन्वीश्वरचैतन्याज्जीवचैतन्यं जडं वा वस्तुतो न भिद्यत एव । तथाहि— तत्र विप्रतिपत्तयः — ब्रह्मावृत्यप्रकारकान्याबाध्यत्वे सति असद्विलक्षणो भेदः ब्रह्मप्रतियोगिको जीवचैतन्यधर्मिको जडधर्मिको वा भेदो वा मिथ्या न वा । यद्वा सप्रकारकज्ञानाबाध्यत्वे सत्यसद्विलक्षणो भेदः वेदान्तमुख्यतात्पर्यगोचरचैतन्यप्रतियोगिकः संसारिचैतन्यधर्मिको जडधर्मिको वा भेदः पारमार्थिकसत्यो न वा । अथवा । [2]"यतो वा इमानि भूतानि जायन्ते" । [3]"सत्यं ज्ञानमनन्तं ब्रह्म" । [4]"यः सर्वज्ञः सर्ववित् सत्यकामः सत्यसङ्कल्पः" इत्यादिवेदान्तजन्येश्वरज्ञानवतो नाहमेतादृश इत्यपरोक्षानुभवगोचरतत्प्रतियोगिकाहमर्थधर्मिको भेद औपाधिको न वा । अथवा अजामेकाम् इत्यादिश्रुतिप्रतिपन्नाजापदार्थस्य अजशब्दार्थः । तदजाशब्दार्थात्परमार्थतो न भिद्यते भिद्यते वेत्यादयः । एवं पूर्वोत्तरपक्षप्रतिज्ञे सङ्कल्प्यापेक्षितस्थले विप्रतिपत्तिरूहनीया ॥

## अथ विप्रतिपत्तिसमर्थननिरूपणम्—

नन्वेवं विरुद्धार्थप्रतिपादकं वचनद्वयीरूपविप्रतिपत्तिप्रदर्शनं न कथायां कर्तुमर्हमुपयोगादर्शनात् । [5]तथाहि— न तावत्कथायां तस्य पक्षपरिग्रहार्थत्वेनोपयोगः । वादिप्रतिवादिनोः कथाबाह्येन अत एव निग्रहानापादकेन लौकिकरीत्यनुसारिणा संस्कृतरूपेण भाषारूपेण वा वाक्येन मया जीवेश्वरभेदः साध्यते । जडेश्वरभेदो वेति वादिवाक्येन वा त्वया जीवेश्वरभेदः साध्यो जडेश्वरभेदो वेति मध्यस्थोक्तविषयस्वीकारेण वा पक्षपरिग्रहसिद्ध्या उक्तरीत्या विप्रतिपत्तिप्रदर्शनस्यानन्यथासिद्ध-फलाभावेन कथायामावश्यकत्वानुपपत्तेः । न चैवं भङ्ग्यन्तरेण विप्रतिपत्तेरेव प्रदर्शनं स्वीकृतमिति

१. शोभिते - आ, इ पाठः । २. तै.उ.प्र.३.प. ३. तै.उ.प्र.२प.
४. मु.खं. मं.१ ५. 'तथाहि' इति 'अ' पाठे अधिकं दृश्यते ।

वाच्यम् । विप्रतिपत्तिवाक्यस्य कथायां जय-पराजयप्राप्तिपरिहारप्रयोजकत्वेन विशेषनियमादियुक्तत्वेन लौकिकरीत्यनुसारिणेत्यादिनोक्तवाक्यस्य तथात्वेनैतत्प्रदर्शनस्वीकारेऽपि तथाविधविप्रतिपत्तिवाक्य-प्रदर्शनस्यास्वीकारात् । नापि तस्य साध्योपस्थित्यर्थत्वेन तत्रोपयोगः । प्रतिज्ञयैव तत्सिद्धया तत्र तदनावश्यकत्वात् विशेषहेत्वभावेन तादृशविप्रतिपत्तिवाक्यजन्यसाध्योपस्थितेरेवानादर्तव्यत्वात् । नापि पक्षत्वप्रयोजकसंशयार्थत्वेन तत्र तस्यावश्यकत्वं युक्तम् । वादिप्रतिवादिनोः प्राश्निकानां च तत्तदर्थनिर्णयसत्त्वेन विप्रतिपत्तिवाक्यतः स्वारसिकसंशयासम्भवात् स्वारसिकसंशयस्यैव पक्षत्व-प्रयोजकत्वादनुमानवद्वाक्यस्यापि निश्चयैकफलकत्वेन तद्विशेषभूतविप्रतिपत्तेः संशयजनकताया एवायोगाच्च । कथञ्चिद्योगे वा वादिप्रतिवादिनोः प्राश्निकेषु च तत्तदर्थनिर्णयवत्सु विप्रतिपत्ति-प्रयोज्यसंशयस्य विशेषदर्शनकालीनतया [1]आहार्यस्यानुमितित्वरूपसिद्ध्यनन्तरमपि सम्भवेन आहार्यानाहार्यसाधारणसंशयमात्रस्य अतिप्रसक्तत्वेन पक्षत्वप्रयोजकत्वयोगात् । न च सिद्धिवि-रहसहितः संशयः पक्षत्वप्रयोजकः सत्यामपि सिद्धावनुमित्साकालेऽनुमितिदर्शनेन व्यभिचारात् ।

न च सिषाधयिषाविरहसहकृतसिद्ध्यभावसहितः संशयस्तथा । तथाप्यनुमित्साप्रयोज्यानुमिति-स्थले संशयं विनाप्यनुमितिदर्शनेन व्यभिचारतादवस्थ्यात् । आहार्यसंशयस्य चासार्वत्रिकत्वात् ।

किञ्चैवमावश्यकत्वादनुमितिमात्रानुगतत्वाल्लघुत्वाच्च, सिषाधयिषाविरहसहकृतसिद्ध्यभाव एव पक्षता पक्षप्रदप्रवृत्तिनिमित्तं च । न च तादृशसिद्ध्यभावसहितस्संशयः अतथात्वात् । न चानुमाना-तिरिक्तसाधकमानसत्वे सिषाधयिषाविरहसहकृतसिद्ध्यभावसत्त्वेऽप्यनुमित्यनुदयाद्व्यभिचारेण तादृश-सिद्ध्यभावोऽपि न पक्षत्वप्रयोजक इति वाच्यम् । अनुमानातिरिक्तसाधकमानस्य प्रतिबन्धकतया तदभावस्यापि तत्र प्रयोजकत्वात् । न हि परामर्शसत्त्वेऽनुमानातिरिक्तसाधकमानरूपप्रतिबन्धका-भावसत्त्वे च तादृशसंशयं विनैव सिषाधयिषाविरहसहकृतसिद्ध्यभावं विनाऽनुमितिर्दृष्टा । येन पक्षद्वयेऽपि दोषसाम्यमित्युच्येत । किञ्चाहार्यसंशयस्य विप्रतिपत्तिवाक्यं विनापि सम्भवेन तदर्थं कथायां नियमेन तत्प्रदर्शनं सर्वथानुपपन्नमेव । एतेन विप्रतिपत्तेर्विचाराङ्गभूतसंशयहेतुकोटिधर्म्युप-स्थित्योपयोगः । न च ताभ्यां विना संशयः सम्भवतीति निरस्तम् । वादिप्रतिवादिनोः स्वस्वपक्ष-निश्चयवत्त्वेन तयोरनाहार्यसंशयासम्भवस्योक्तत्वात् । विप्रतिपत्तेराहार्यसंशयं प्रति कथञ्चिदुपयोगेऽपि तस्य युक्त्यनुसन्धानात्मकविचारफलभूतनिर्णयानिवर्त्यत्वेन तदुपायभूतविचाराङ्गत्वायोगाच्च । न हि विचारात्प्रागेव विद्यमानेन विचारसाध्यनिर्णयसजातीयेन निर्णयेनानिवर्त्यस्य संशयस्य विचारसाध्य-निर्णयनिवर्त्यत्वं सम्भवति । येन निर्णयफलकविचारप्रवृत्तिहेतुत्वेन विचाराङ्गत्वमुपपद्यते ।

१. आहार्य = बाधकालीन इच्छाजन्यं ज्ञानम् ।

न च वादिप्रतिवादिनोः कथायां तत्कर्तव्यविचारात् प्राक् स्वपक्षनिर्णय इति नियमोऽस्ति । येन कथायां वादिप्रतिवादिकर्तव्यविचारप्रवृत्तिहेतुसंशयप्रयोजकविप्रतिपत्तिवाक्यप्रदर्शननियम इति स्यादिति चेत् ।

अत्रोच्यते । सत्यम् । तथापि वादिनोऽयं पक्षः । अयं तु पक्षः प्रतिवादिन इति तयोर्विरुद्धविषय-स्वीकारप्रदर्शनमुखेन श्रोतृबुद्धिसमाधानप्रयोजकतया *रुद्धे विप्रतिपत्तिवाक्यप्रदर्शनमावश्यकम् । तत्प्रदर्शनमपि ज्ञानप्रामाण्यं स्वत इति मीमांसकाः नेति नैयायिकाः इत्यादिप्रकारेणैव कर्तव्यम् । अन्यथा ज्ञानप्रामाण्यं स्वतो न वेति धर्मिकोटिद्वयोपस्थापकविप्रतिपत्तिवाक्यप्रदर्शनेऽपि श्रोतृबुद्धिसमा-धानाभावतादवस्थ्यात् । अत एव ग्रन्थे क्वचित् क्वचिद्वादिपदानां जातावेव शक्तिरिति सौत्रान्तिकाः, नेति वैशेषिकादय इत्याद्युक्तिः यद् गुरुचरणैर्न्यायामृते । इदं च विप्रतिपत्तिप्रदर्शनं तार्किकरीत्यैव न तु वस्तुतो न तु कथाङ्गत्वेन तत्प्रदर्शननिराकरणं कृतम् । तत्प्रयोजनाभावेन कथायामेव विप्रतिपत्ति-वाक्यप्रदर्शननिराकरणपरमिति न विरोधः । अन्यथा तस्य कथायामेव नियमेन प्रदर्शननिराकरण-परत्वाभावेन तत्रैव न्यायामृते कथाबाधेन निग्रहानर्हेणेत्यग्रिमग्रन्थानुपपत्तिरिति । केचित्तु कथायां प्रवृत्तायां प्रतिवादिनां च सर्वेषां पक्षे सर्वत्र स्वसिषाधयिषितसाध्यनिर्णयवत्त्वनियमाभावपक्षे येषामेव तदनिर्णयः कथायां कक्ष्यावालनसामर्थ्यवतानेव प्रतिविप्रतिपत्तिवाक्यप्रयोज्यसंशयस्य विचारप्रवृत्तं हेतुतया कथाङ्गत्वोपपत्तेर्विचारप्रयोज्यफलीभूतनिर्णयनिवर्त्यसंशयवत्त्वेन तादृशवादिकर्तृकि कथाविरोधे प्रतिपत्तिवाक्यप्रदर्शननियमो व्याहतप्रसर इति तत्प्रदर्शनकथायामावश्यकमिति तान्त्रिकाणां तदाव-श्यकत्वोक्तिरित्याहुः ।

अन्ये तु वादिप्रतिवादिनोः प्राश्निकानां च न विप्रतिपत्तिप्रयोज्यस्वारसिकसंशयः निर्णयत्वात् । किन्तु सभापतेस्तत्कल्पस्यैव वा कस्यचित्तस्य पक्षद्वयेऽपि तदा निर्णायकप्रमाणानवतारेण विप्रति-पत्तिप्रयोज्यस्वारसिकसंशयवत्त्वसम्भवात् । तथा च कथायां न तत्प्रदर्शनतत्प्रदर्शननियमहानिः । न चैवं वादिप्रतिवादिनोरन्यतरेणान्यतरं प्रति स्थापनदूषणयोरकरणप्रसङ्गः । तयोस्तन्निरस्यस्वारसिकसंशया-भावादिति भाव्यम् । तदुभयकर्तृकसाधनानुमानदूषणानुमानयोर्विप्रतिपत्तिप्रयोज्यसभापतिगततादृश-संशयनिवर्तकत्वेन प्रवृत्तयेष्टापादानात् । अत एव यद्वाद्युक्तदूषणेन भूषणेनैव वा सभापतिगततादृश-संशयो निवर्तते । स एव कथायां जयी तत्प्रसादहेतुतन्निर्णयप्रयोजकन्यायाभिधानात् । अन्यस्तु पराजितोऽतथात्वादिति कथकसम्प्रदायः । तत्त्वनिर्णिनीषु कथायामपि गुरोरिव शिष्यस्य तत्त्वनिर्ण-याभावेन कथमपि शिष्यप्रतिपादनार्थमेव प्रवृत्तस्य स्वीकृतमध्यस्थभावसम्भवेन मध्यस्थकर्तव्य-विप्रतिपत्तिकरणसम्भवात् । ततस्तस्य स्वारसिकसंशयोऽविरुद्ध एव । एवं च जल्पे वादे च विप्रतिपत्तिप्रदर्शनं कथं नावश्यकमित्याहुः ।

अपरे तु कथायां वादिकर्तव्यमिदं इदं च प्रतिवादिकर्तव्यमिदं तु मध्यस्थादिकर्तव्यमित्य¹नादिकथकसम्प्रदायानुसारेण विप्रतिपत्तिवाक्यस्य कथायां वादिप्रतिवादिनौ प्रति पक्षपरिग्रहार्थत्वेन मध्यस्थमात्रकर्तव्यतया नियमेन प्राप्तस्य सहसैव क्वचित्त्यागे तादृशसम्प्रदायविरोधापातो दोष इत्याहुः। वयं तु ग्रन्थेऽपि ज्ञानप्रामाण्यं स्वतो न वा ? ज्ञानं व्यधिकरणप्रकारकं न वा ? वर्णात्मकः शब्दो नित्यो न वा ? अन्धकारत्वं भाववृत्ति न वा ? इत्यादिप्रदर्शनं न विप्रतिपत्तिवाक्याकारप्रदर्शनम्। किन्तु प्रकृतविचारसाध्यनिर्णयनिवर्त्यस्वारसिकसंशयाकारप्रदर्शनात्मकं तदपि प्रकृतविचारप्रवृत्तिप्रयोजकतया तद्विचाराङ्गत्वज्ञापनमुखेन तत्तदाकारस्वारसिकसंशयवतां तन्निवृत्तिप्रयोजकप्रकृतविचारेऽधिकारज्ञापनमुखेन प्रवृत्तिफलकमिति तदेव सप्रयोजनं नान्यत्। अत एव पूर्वोत्तरमीमांसयोरपि प्रत्यधिकरणं तत्तदधिकरणीयन्यायनिवर्त्यसंशयाकारप्रदर्शनमुपपद्यते। स्वारसिकसंशयं विना कुत्रापि विचारो न प्रवर्तत एव। विषयसंशयादिपञ्चाङ्गोपेतन्याय एव विचारशब्दस्य मुख्योऽर्थः। जल्पवितण्डयोस्तु स्वारसिकसंशयादिरूपाङ्गवैकल्यात्तत्र न्यायमात्रे प्रयुज्यमानविचारशब्दस्य लक्षणैव। तस्माद्विप्रतिपत्तिवाक्यप्रदर्शनं क्वापि कथायामुपयुक्तमित्येव तत्त्वमित्यालोचयामः॥

॥ इति विप्रतिपत्तिनिरूपणसमर्थनम् ॥

## भेदमिथ्यात्वसाधकानुमाननिराकरणप्रकरणम्—

प्रमाणं तत्रानुमानम्। विमतो भेदो मिथ्या भेदत्वाच्चन्द्रभेदवदित्यद्वैतिवृद्धोक्तेः। अन्तःकरणातिरिक्तोऽहमिति प्रतीयमानो जीवः न परस्माद्भिद्यते चेतनत्वात्पदार्थत्वाद्वा परमात्मवदिति भेदधिक्कारकृन्नवीनोक्तेः।

यद्यपि प्रथमानुमाने विमतिरपि स्वनियतविषयत्वलाभायावच्छेदकसापेक्षा। तथापि वस्तुतोऽवच्छेदकाधीननियतविषयताकया अखण्डव्यक्त्यात्मिकया लघ्व्या विमत्या पक्षतावच्छेदो न विरुद्धः। यद्यपि विमतिः समयबन्धादिना व्यवहितत्वान्नानुमानावतारकालेऽस्ति। तथापि सैवोपलक्षणतया तज्ज्ञानं वा विशेषणतया पक्षतावच्छेदकमस्तु। न चैवं तज्ज्ञानस्य विशेषणतया पक्षतावच्छेदकत्वपक्षे विमतत्वेन ज्ञातमिति पक्षनिर्देशापत्तिः विमतेः पक्षतावच्छेदकप्रकारकत्वनियमादिति वाच्यम्। इष्टापादनात्। न च उपलक्षणत्वपक्षे विमतेः पक्षव्यावृत्तिप्रयोजकत्वहानिः। व्यावृत्तिकालेऽसतः काकादेर्व्यावृत्तिप्रयोजनकत्व²दर्शनात्। अत एव विमतमित्येव प्राचां प्रयोगः तत्र तत्रेति। अन्ये तु ब्रह्मावृत्यप्रकारकान्याबाध्यत्वे सत्यसद्विलक्षणो भेदः ब्रह्मप्रतियोगिकजीवचैतन्यधर्मिको भेदो वा

१. ग्रन्थे - 'आ' पाठे, प्रतिरूद्धे - 'इ' पाठे। २. अनु. प्रयोजकत्वादत एव।

सप्रकारकज्ञानाबाध्यत्वे सत्यसद्विलक्षणो भेदो वेदान्तमुख्यतात्पर्यगोचरचैतन्यप्रतियोगिकसंसारि-चैतन्यधर्मिकभेदो वा मिथ्या न पारमार्थिकसत्यो वा भेदत्वाच्चन्द्रभेदवत् ।

अथवा "यतो वा इमानि भूतानि जायन्ते ।" "सत्यं ज्ञानमनन्तं ब्रह्म ।" "यः सर्वज्ञः सर्ववित् ।" "सत्यकामः[1] सत्यसङ्कल्पो[2] निरनिष्ठ" इत्यादि वेदान्तजन्येश्वरज्ञानवतो नाहमेतादृश इत्यपरोक्षानुभवगोचरतत्प्रतियोगिकाहमर्थचैतन्यधर्मिको भेद औपाधिकः औपाधिकत्वेन प्रमाण-सिद्धत्वात् । घटाकाशे मठाकाशभेदवत्सूचीरन्ध्रे दर्भेण रन्ध्रभेदवद्वा ।

यद्वोक्तभेदज्ञानं भ्रमः । भेदविषयकत्वात् । वर्णानां नित्यविभुद्रव्यत्वपक्षे शुकगकारे शारिकागकारभेदज्ञानवदित्यनुमानं तत्र मानम् । एवं जडेश्वरभेदेऽप्यनुमानं प्रयोक्तव्यमित्याहुः ।

अपरे तु जीवधर्मिकेश्वरप्रतियोगिको भेदः औपाधिकः बिम्बप्रतियोगिकप्रतिबिम्बनिष्ठभेदत्वा-दर्पणोपाधिकमुखप्रतियोगिकप्रतिमुखनिष्ठभेदवदिति जीवेश्वरभेदस्यौपाधिकत्वेऽनुमानं मानम् । [3]मिथ्यात्वेऽपि स एव हेतुः । यद्वा संसाराधारचैतन्यं तदनाधारचैतन्यप्रतियोगिकतज्ज्ञानाबाध्याभेदवत्, चेतनत्वात्संसारानाधारचैतन्यवदित्याद्यनुमानं जीवेश्वराभेदे मानम् ।

तथा जडेश्वरभेदमिथ्यात्वे ईश्वरप्रतियोगिकजडधर्मिको भेदः मिथ्या भेदत्वादारोपितभेदवदित्यनु-मानं मानम् । कार्यं जडं ब्रह्माव्यतिरेकेणासत्तदुपादानकत्वात् । यद्यदुपादानकं तत्तदुपादानव्यतिरेके-णासत् । यथा मृदुपादानममत्रं मृद्व्यतिरेकेण असदित्यनुमानं वा तत्र मानमित्याहुः ।

यद्यपि पूर्वपक्षसिद्धान्तयोर्भेदाभेदवादो वा सगुणनिर्गुणवादो वा बिम्बप्रतिबिम्बवादो वा न जग-न्मिथ्यात्वसत्यत्ववादाभ्यामतिरिच्यते । पक्षद्वयेऽपि जीवेश्वरादिभेदस्येश्वरसगुणत्वस्य जीवेश्वरबिम्ब-प्रतिबिम्बभावस्य चाभ्युपगमेन विवादाभावात् । तथापि तत्तत्प्रातिस्विकरूपेणापि स एव विचारः (शास्त्रेऽपि कृतः) क्रियत इत्यदोषः । न चोक्तहेतुषु चेतनत्वस्य पदार्थत्वस्य च हेतोः परमात्मनि निर्धर्मकेऽसत्त्वेन तद्धेतुकानुमाने दृष्टान्तस्य साधनवैकल्यम् औपाधिकत्वेन प्रमाणसिद्धत्वरूपहेतोः स्वरूपासिद्धत्वं चेति वाच्यम् ।

धर्मिसमसत्ताकधर्मानङ्गीकारेऽपि परमात्मनो व्यावहारिकधर्माङ्गीकारात् । 'यथा ह्ययं ज्योति-रात्मे'त्यादिवक्ष्यमाणश्रुत्या जीवेश्वरभेदस्यौपाधिकत्वावसायाच्च । न च जडेश्वराभेदानुमानेषु ब्रह्मा-पादनकत्वहेतुरसिद्धः ब्रह्मणः कुलालवत्कर्तृत्वेनानुपादानत्वादिति वाच्यम् । कर्तृत्वेऽपि तस्योपादान-

---

१. छां. अध्या. ४ खं. ४. मं. १ २. छां. ८-७-३ ३. तन्मिथ्यात्वेऽपि इति 'आ' पाठः

तयाऽप्यग्रे समर्थनात् । न चोक्तहेतूनामप्रयोजकता । जीवेश्वरभेदग्राहकप्रमाणाभावस्य भेदमात्रग्राहकप्रमाणाभावस्य 'तत्त्वमसि', 'अहं ब्रह्मास्मि', 'अयमात्मा ब्रह्मे'त्यादिजीवेश्वराभेदपरश्रुत्यप्रामाण्यप्रसङ्गस्य, 'नान्योतोऽस्ति द्रष्टा', [1]'नान्यदतोऽस्ति द्रष्टा' इत्यादिजीवेश्वरभेदनिषेधपरश्रुत्यप्रामाण्यप्रसङ्गस्य, इदं सर्वं 'यदयमात्मा', [2]'ऐतदात्म्यमिदं सर्वं', [3]'सर्वं खल्विदं ब्रह्मे'त्यादिजडेश्वराभेदपरश्रुत्यप्रामाण्यप्रसङ्गस्य, [4]'नेति नेति', [5]'नेह नानास्ति किञ्चन', [6]'एकमेवाद्वितीयमि'त्यादिजडेश्वरभेदनिषेधभेदमात्रनिषेधपरश्रुत्यप्रामाण्यप्रसङ्गस्य च विपक्षबाधकत्वात् । यद्वा विमतो भेदः आरोपितोऽधिष्ठानान्यत्वे सति बाध्यत्वात् शुक्तिरूप्यवदिति भेदमात्रस्यारोपितत्वेऽनुमानं मानम् । न च अयं हेतुरसिद्धः । प्रत्यक्षादिना सत्त्वेनान्यथाप्रतिपन्नस्य नेह नानास्ति किञ्चनेत्यादिना नास्तित्वेन सम्यग्विज्ञायमानत्वात् । न हि बाधो नामाऽन्यथा विज्ञातस्य सम्यग्विज्ञातत्वादतिरिच्यते ।

ननु जीवेश्वरभेदग्राहकप्रमाणाभावस्तावदसिद्धः । नाहमीश्वरः नाहं सर्वज्ञः नाहं सर्वदृक् सत्यकामः सत्यसङ्कल्पः सर्वकर्ता चेत्यादि तद्भेदग्राहकप्रत्यक्षस्य सत्त्वात् । न च विमतो भेदो मिथ्या वा आरोपितो वा औपाधिको वा न पारमार्थिकसत्यो वा इति । न तद्भेदस्य वेदान्तमुख्यतात्पर्यगोचरादितिप्रतीतिविशेष्यत्वात् । वेदान्तमुख्यतात्पर्यगोचरपरमात्मवदिति तद्भेदमिथ्यात्वाभावादिग्राहकानुमानस्य सत्त्वात् । '[7]द्वा सुपर्णा, तयोरन्यः, [8]'जुष्टं यदा पश्यत्यन्यमीशमि'त्यादि तद्भेदपरश्रुतेश्च । न चैतच्छ्रुतेस्तद्भेदपरत्वे मानाभावः । 'अस्य महिमानमि'ति वीतशोक इत्यादि तद्भेदज्ञानफलार्थवादादेः सत्त्वात् । तथा वेदान्तमुख्यतात्पर्यगोचरचैतन्यप्रतियोगिकजन्यजडधर्मिको भेदः, पारमार्थिकः, तद्भेदस्य वेदान्तमुख्यतात्पर्यगोचरप्रतीतिविशेष्यत्वात्, वेदान्तमुख्यतात्पर्यगोचरपरमात्मवदिति अनुमानात् । अन्योऽन्तर आत्मा प्राणमयः, "[9]अन्योऽन्तर आत्मा मनोमयः, [10]"अन्योऽन्तर आत्मा विज्ञानमय' इत्यादि जडात्मभेदावेदकश्रुतेः, देहात्मकभेदावेदकश्रुत्यन्तराच्च । स्तम्भः पिशाचो नेति स्तम्भे पिशाचभेदप्रत्यक्षवत् । योग्यघटादौ घटादिरीश्वरो नेति जडेश्वरभेदग्राहकप्रत्यक्षसत्त्वाच्च, जडेश्वरभेदग्राहकप्रमाणाभावोऽप्यसिद्धः । न चाभावप्रत्यक्षे अधिकरणयोग्यत्ववत् प्रतियोगियोग्यत्वं तन्त्रम् । अन्योन्याभावप्रत्यक्षे लाघवेनाधिकरणयोग्यत्वमात्रस्यैव तन्त्रत्वात् । प्रपञ्चयिष्यते चैतद्योग्यानुपलब्धिस्वरूपनिरूपणप्रस्तावे ।

---

१. बृह.अध्या.५ कां. ८. मं. २५   २. छां. ६-८-७   ३. बृह. २-३-६
४. छां.अ.३ खं.१४,मं.१   ५. कठ.अ.२ व.१ मं.११   ६. छां. ६-२-१
७. श्वे.अ.४.खं.१.मं.६   ८. मुं. ३-१-२   ९. तै.उ.प्र.२ प्र.२   १०. तै.उ.प्र.२ प्र.४

न च जीवेश्वरजडेश्वरभेदसाधकहेतूनामप्रयोजकता । तदभेदग्राहकप्रमाणाभावस्य तद्भेदपर-श्रुत्यप्रामाण्यप्रसङ्गस्य च विपक्षबाधकत्वात् । न च श्रुतीनां भेदपरत्वे मानाभावः । [1]पृथगात्मानं प्रेरितारं च मत्वा, जुष्टस्ततस्तेनामृतत्वमेति, इति भेदज्ञानस्य फलश्रुतेः । यः पृथिव्यान्तरः, [2]योऽद्भ्योऽन्तरः, य आत्मनोऽन्तरः, [3]यो विज्ञानादन्तर इत्याद्यन्तर्यामिब्राह्मणे, भेदस्याभ्यासाच्च । [4]क्षेत्रक्षेत्रज्ञयोरेवमन्तरं ज्ञानचक्षुषेत्यादावन्तरशब्दस्य भेदवाचित्वदर्शनेन, कोशसिद्धत्वेन च तस्य विवादानास्पदत्वात् । [5]यः पृथिवीमन्तरो यमयति, [6]योऽपोन्तरः, यः आत्मानमन्तरः, [7]यो विज्ञानमन्तर इत्यादिर्वा । तत्राभ्यासः । एतच्छ्रुतिप्रतिपन्ननियम्यनियामकभावस्य विना भेदानुपपत्तिरित्युपपत्तेश्च । तत एव च जीवेश्वरादिभेदेऽर्थापत्तिप्रमाणस्य सत्त्वाच्च ।

न च तद्भेदपरश्रुत्यादिना तद्भेदमात्रसिद्धावपि न तत्पारमार्थिकत्वसिद्धिरिति युक्तम् । प्रामाण्य-स्वतस्त्वस्यौत्सर्गिकत्वेन तत एव तद्घटकविषयपारमार्थिकत्वस्यापि सिद्धेः । न हि ज्ञानविषयबाधे विषयघटितमूर्तिज्ञानप्रामाण्यं सम्भवादृष्टचरम् । अन्यथा जीवेश्वराभेदपरश्रुत्या तव तदभेदपारमार्थिक-त्वासिद्धिप्रसङ्गात् । श्रुत्याभेदस्येव प्रत्यक्षादिना तदभेदस्यापि निषेधात् । भेदाभेदयोः परस्पर-विरहात्मकत्वात् । शब्दे क्लृप्तदोषाभावस्येव प्रत्यक्षादौ क्लृप्तदोषाभावस्यैव प्रामाण्यप्रयोजकताया उपेयत्वात् । अन्यथा प्रत्यक्षादेरेवमेवाप्रामाण्येऽभेदतात्पर्यलिङ्गोपक्रमादिप्रत्यक्षादेरप्रामाण्यापत्त्याऽभेद-तात्पर्यासिद्धिप्रसङ्गात् ।

किञ्चाप्रामाण्यं न निषेधबुद्धिमात्रकल्प्यम् [1]'नो सदासीत्, [2]अदृष्टमव्यवहार्यमग्राह्यमलक्षणमि'त्या-दिश्रुत्या ब्रह्मचैतन्यस्वरूपलक्षणभूततत्स्वरूपस्यापि निषेधात् । ब्रह्म सद्बुद्धेरप्यप्रामाण्यापात्याऽति-प्रसङ्गात् । किन्तु निश्चितप्रामाण्यबाधककल्प्यम् । न च प्रत्यक्षादिप्रामाण्यं विना श्रुतिजन्यनिषेधबुद्धे-र्बाधत्वनिश्चयो युज्यते । अपि चैवं प्रत्यक्षाद्यप्रामाण्ये तद्गोचरबाधबुद्ध्यैक्यबुद्ध्यादेरसिद्ध्यापत्त्या तद्विषयभूतनिषेधैक्यरूपविषयासिद्धिप्रसङ्गः । तद्भेदपरश्रुत्यैव तथाविधाभेदसिद्ध्यङ्गीकारे च तद्भेदपर-श्रुत्यैव परमार्थभूतभेदसिद्धिरिति साम्यात् । उक्तरीत्याऽभेदपरश्रुत्याद्यसिद्धिप्रसङ्गस्य तथानुद्धाराच्च । न हि जीवेश्वरभेदः पारमार्थिक इत्यपि श्रुत्यन्तरमस्ति जीवो वा पारमार्थिक इति । येन श्रुत्यन्तरेणैव जीवेश्वराभेदयोः पारमार्थिकत्वसिद्धिरित्युच्येत । जीवेश्वराभेदस्य ब्रह्मस्वरूपरूपत्वेन तत्सत्यत्वावेदक-श्रुत्यैव तत्सत्यत्वस्यापि सिद्ध्यङ्गीकारे जीवेश्वरपरस्परभेदस्यापि जीवब्रह्मचैतन्यस्वरूपरूपत्वेन तत्स-त्यत्वावेदकश्रुत्यैव तद्भेदसत्यत्वस्यापि सिद्धिरिति साम्यात् ।

---

१. श्वे. १.६  २. बृह. ५-७-४  ३. बृह. ५-७-२२  ४ भ.गी. १३-३५
५. तै.ब्रा.अ.२ प्र.८. प.७३  ६. मां. ७

ननु जीवेश्वरपरस्परभेदो न जीवेश्वरस्वरूपरूपः मानाभावादिति चेत् । न । जीवेश्वरपरस्पराभेदो न जीवेश्वरस्वरूपरूपः मानाभावादिति साम्यात् । न हि जीवेश्वरपरस्पराभेदो जीवेश्वरस्वरूपरूप इत्यपि श्रुतिरस्ति । न च जीवप्रतियोगिकेश्वरानुयोगिकभेदस्य सत्येश्वरस्वरूपरूपत्वेन सत्यत्वेऽपि ईश्वर-प्रतियोगिकजीवानुयोगिकभेदस्य न पारमार्थिकत्वसिद्धिः । तस्य जीवस्वरूपरूपत्वेऽपि जीवस्वरूपस्यैव सत्यत्वे मानाभावादिति वाच्यम् । जीवनिरूपितेश्वरानुयोगिकाभेदस्य सत्येश्वरस्वरूपरूपत्वेन सत्यत्वे-ऽपीश्वरनिरूपितजीवचैतन्यानुयोगिकाभेदस्य जीवस्वरूपरूपत्वेऽपि न सत्यत्वसिद्धिः । तस्य जीव-स्वरूपरूपत्वेऽपि जीवस्वरूपस्यैव सत्यत्वे मानाभावादिति साम्यात् ।

ननु यथा द्रव्याभिन्नस्य घटस्य द्रव्यत्वं तथा सत्येश्वराभिन्नस्य जीवस्य सत्यत्वं युक्तम् । दर्शनात्, न तु तद्भिन्नस्य जीवस्य तत्त्वं युक्तम् । तदवच्छिन्नभिन्नस्य तत्त्वादर्शनादिति चेत् न । तथा सति पारमार्थिकेश्वराभिन्नत्वेन जडस्यापि तत्त्वापत्तेः । तत्त्वमसीत्यादि जीवेश्वराभेदावेदकश्रुतिवदिदं "सर्वं यदयमात्मा, ऐतदात्म्यमिदं सर्वं, सर्वं खल्विदं ब्रह्मे'त्यादिजडेश्वराभेदावेदकश्रुतेरप्यविशेषात् । न चेयं श्रुतिर्बाधायां सामानाधिकरण्यरूपाभेदावेदिका । विशेषहेत्वभावेन तत्त्वमसीत्यादिश्रुतेरपि तथा-त्वापत्तेः । द्वितीयत्वेन प्रसक्तजडस्येव तत्त्वेन प्रसक्तजीवात्मनोऽपि एकमेवाद्वितीयं, नेह नानास्ति किञ्चन इत्यादिश्रुतिनिषिद्धत्वाविशेषात् । न च सैव श्रुतिः जडांशाभेदविशिष्टनिषेधिका जीवचैतन्यांशे भेदमात्रनिषेधिका, न तद्विशिष्टजीवचैतन्यस्वरूपनिषेधिकेत्यत्र नियामकमस्ति । नियामकं विनापि तथाश्रयणे वैपरीत्येनैव तथा किन्नाश्रीयते । किञ्च द्रव्यं घट इत्यबाधितप्रत्यक्षादिप्रमाणबलात् घटस्य द्रव्याभिन्नतया द्रव्यत्वाङ्गीकारो युज्यते । न च जीवात्मनः पारमार्थिकेश्वराभिन्नत्वे बाधितप्रत्यक्षा-दिप्रमाणमुपलभामहे येन जीवात्मनः पारमार्थिकेश्वराभिन्नतया पारमार्थिकत्वाङ्गीकारो युज्येत । न च श्रुत्यैव जीवेश्वराभेदस्य सिद्धिः । नाहमीश्वर इति तद्भेदग्राहिप्रत्यक्षादिविरोधेन श्रुतेस्तदभेदप्रत्यायकत्वा-सम्भवात् न हि योग्यताव्यतिरेकनिश्चये सति शब्दोऽर्थप्रत्यायनस्येष्ट इति दृष्टचरम् । न चैवमलब्धा-त्मिका श्रुतिः प्रत्यक्षाद्यप्रामाण्यज्ञापनाय क्षमते । तथा च जीवेश्वराभेदग्राहकप्रमाणाभावोऽसिद्धः ।

## द्वासुपर्णेत्यादिश्रुतेः जीवे प्रत्यक्षादिसिद्धेश्वरप्रतियोगिकाभेदानुवादित्वशङ्का, तन्निराकरणं च—

ननु द्वासुपर्णेत्यादि श्रुतिः जीवे प्रत्यक्षादिसिद्धेश्वरप्रतियोगिकभेदानुवादितया न तत्परेति चेन्न । न ह्यपूर्वत्वमेकमेव तात्पर्यलिङ्गं, येन प्रमाणान्तरसिद्धानुवादिन्यां श्रुतावपूर्वतारूपप्रमाणाभावेन तात्पर्यं

१. नृसिंहो. ५-१

न सिद्ध्येत् । किन्तु फलाधिकमपि तल्लिङ्गम् । तथा च द्वासुपर्णेत्यादि श्रुतिः प्रत्यक्षादिसिद्धजीवेश्वर-भेदानुवादिन्यपि तद्भेदपरा सेत्स्यति । फलाधिकं चोक्तम् । किञ्चन तुल्यविषयत्वमात्रेणानुवादित्वं शक्याभ्युपगमम् । तथा सत्येकविषयकभिन्नकर्तृकयुगपत्प्रवृत्तापूर्वार्थकवाक्ययोरप्यन्योन्यानुवादित्व-प्रसङ्गात् । किन्तु श्रोतृगत[१]समानविषयकज्ञानसापेक्षत्वेनैव । यद्यपि लौकिकवाक्यं, वक्तृगतप्रमाणान्तर-सापेक्षं; वाक्यार्थज्ञानं विना वक्तुर्वाक्यप्रयोगादर्शनात्, तथापि श्रोतृगतप्रमाणान्तरानपेक्षं तदिति न तस्यानुवादित्वप्रसङ्गः । एवं च द्वासुपर्णेत्यादिवाक्यं जीवेश्वरभेदप्रत्यक्षेण तुल्यविषयमपि न तत्सिद्धानु-वादकम्, तत्र श्रोतृगतप्रमाणान्तरप्रवृत्तिं विनापि स्वार्थप्रत्यायनसमर्थत्वात् अननुवादकत्वेन सम्प्रति-पन्नलौकिकवाक्यवत् ।

किञ्च यत्तदिति लोकसिद्धानुवादलिङ्गाभावादपि न तदनुवादत्वसिद्धिः । ईश्वरप्रतियोगिकजीवनिष्ठ-भेदस्य प्रत्यक्षादिप्राप्तत्वेऽपि जीवचैतन्यप्रतियोगिकेश्वरानुयोगिकभेदस्य तदप्राप्ततया 'उत्तमः पुरुष-स्त्वन्यः' इति स्मृतेरिव भेदश्रुतेरपि तद्भेदपरत्वेनाननुवादकत्वोपपत्तेश्च । त्वन्मते मुक्तेश्वरयोः कल्पका-ज्ञानाभावे न जीवप्रतियोगिकतदनुयोगिकभेदासम्भवेन व्यभिचारेण नियमेनापि तदप्राप्तेश्च । अस्तु वाऽनुवादित्वं तथापि न दोषः, न हि प्रमाणान्तरविरुद्धार्थत्ववत् प्रमाणान्तरप्राप्तार्थत्वमप्रामाण्यापादकम् । तथा सति सजातीयक्रमिकसंवादस्याप्यप्रामाण्यप्रसङ्गात् । प्रत्युत प्रामाण्यदार्ढ्यहेतुः । न च तत्त्वमसी-त्यादिश्रुत्या जीवेश्वराभेदे प्रतिपादनीये प्रत्यक्षादिविरोधवद् द्वासुपर्णेत्यादिश्रुत्या तद्भेदे प्रतिपादनीये मानान्तरविरोधोऽस्ति । किन्तु मानान्तरानुकूल्यमेव । अपि च तत्त्वमस्यादिश्रुतिस्तव प्रत्यक्षादिविरुद्धा-र्थाऽपि यथाऽद्वैतपरा, तथा प्रमाणान्तरसिद्धार्थापि द्वासुपर्णेत्यादिश्रुतिर्मम द्वैतपराऽस्तु । न च लौकिक-भ्रान्तवाक्यस्येव नित्यनिर्दोषश्रुतिवाक्यस्यापूर्वत्वादिलिङ्गसत्त्वमात्रेण प्रत्यक्षादिप्रमाणविरुद्धार्थे तात्पर्यं शक्याभ्युपगमम् । तथा सति तत्त्वंपदमुख्यार्थत्यागेनैव तदभेदपरत्वप्रसङ्गात् । [२]''यजमानः प्रस्तरः'' [३]''सोमेन यजेत'' इत्यादिश्रुतेरपि प्रस्तरयजमानाद्यभेदपरत्वप्रसङ्गाच्च । तात्पर्यलिङ्गत्वेन स्वीकृतस्य अपूर्वत्वस्य तत्त्वमसीत्यादिवाक्यवदत्राप्यविशेषात् । किञ्च लौकिके प्रमाणवाक्ये त्वं सिंहोऽसीत्यादौ प्रत्यक्षादिप्रमाणविरुद्धार्थे, कुत्रापि तात्पर्यादर्शनेन तत्त्वमसीत्यादौ वैदिकप्रमाणवाक्येऽपि न प्रत्यक्षादि-प्रमाणविरुद्धार्थेऽद्वैते तात्पर्यकल्पनं युक्तम् । क्लृप्तहानाक्लृप्तकल्पनाप्रसङ्गात् ।

किञ्च क्वचिद्बाधितार्थकभ्रान्तवाक्ये प्रमाणविरुद्धार्थे तात्पर्यं दृष्टमित्येतावता वेदेऽपि तथाविधा-र्थतात्पर्यकल्पने तद्वदेवात्रापि भ्रमादिदोषमूलकत्वकल्पनापत्तिः । तादृशलौकिकवाक्य इव

१. ज्ञानेति 'आ' पाठे अधिकः । २. जै.सू.अ.१ पा.२. अधि.१ सू.८

३. जै.सू.अ.१ पा.४ अधि.१३ सू.२३

नादृशवेदभागेऽपि अभेदकत्वकल्पनापत्तिर्वा । किञ्च [1]"तुल्यं च (चा)साम्प्रदायकमि"ति न्यायेन तद्भागस्यापि वेदत्वेनापौरुषेयत्वे तस्माद्धूम एवाग्नेर्दिवा ददृशे नार्चिरित्यादाविव तत्त्वमसीत्यादावपि दृष्टविरोधपरिहारः [2]"तत्सिद्धयादि"न्यायेन, यजमानः प्रस्तर इत्यादाविव गौणार्थत्वस्वीकारश्च दुर्वारः । न ह्यनयोर्लौकिकवैदिकवाक्ययोर्वैदिकस्य लौकिकाद्वैदिकवाक्यान्तराद्वा कमपि विशेषं पश्यामः । न च तत्त्वमसीत्यादिकं पारमार्थिकाभेदविषयं प्रत्यक्षादिकं तु मिथ्याभेदविषयमित्यद्यापि सिद्धम् । येन भिन्नविषयतया श्रुतिप्रत्यक्षयोरविरोध इत्युच्येत । किञ्चैवं यजमानः प्रस्तरः, सोमेन यजेतेत्यादिकमपि पारमार्थिकप्रस्तरयजमानाद्यभेदविषयम् । प्रत्यक्षादिकं तु मिथ्याभूततद्भेदविषयमिति स्यात् । तस्मान्न तत्त्वमसीत्यादिश्रुतिर्जीवेश्वराभेदपरा । अत एव [3]"इदं सर्वं यदयमात्मे"त्यादि जडेश्वराभेदश्रुतिरपि न तत्परा, किञ्च प्रत्यक्षादिप्रमाणस्य सम्भावितदोषतया तद्विरोधस्यानादरे तत्त्वमसीत्यादेरिदं सर्वं यदयमात्मेत्यादेश्च विशिष्टाभेदपरत्वमुपहिताभेदपरत्वमेव वाऽङ्गीकार्यम् । न तु लक्ष्यार्थाभेदपरत्वमिति स्यात् ।

## अर्थवादानां स्वार्थपरत्वसमर्थनम्—

ननु यजमानः प्रस्तर इत्यादेरन्यशेषतया न स्वार्थपरत्वं, तथा सत्युभयपरत्वेन वाक्यभेदप्रसङ्गादिति चेत्, तथाप्यनन्यशेषस्य "सोमेन यजेत" इत्यादेः सोमलतायागक्रियाद्यभेदपरत्वप्रसङ्गापरिहारात् । तत्त्वमसीत्यादेर्विशिष्टाभेदपरत्वप्रसङ्गापरिहाराच्च । प्रत्यक्षे क्वचिदुष्टत्वदर्शनमात्रेण योग्यानुपलब्धिनिर्णीतं क्लृप्तदोषाभाववत्यन्यत्र संवादिप्रत्यक्षादौ दोषसम्भावनायां वाक्ये क्वचिदुष्टत्वदर्शनमात्रेण योग्यानुपलब्धिनिर्णीतक्लृप्तदोषाभाववत्यन्यत्रापि संवादिलौकिकशब्दे वैदिकशब्दे च दोषसम्भावनापत्तेश्च । यजमानः प्रस्तरः इत्याद्यर्थवादस्य विधिशेषतया विधेयार्थप्राशस्त्ये महातात्पर्यसत्त्वेऽपि तस्यावान्तरतात्पर्याविरोधाच्च । अन्यथा अपूर्वतादेः तात्पर्यलिङ्गत्वाभावप्रसङ्गात् । न च प्रस्तरयजमानयोरभेदो मानान्तरप्राप्तः, येन तस्यापूर्वता त्यज्येत । न च तस्यास्तात्पर्यव्यभिचारित्वे तल्लिङ्गमभ्युपगमार्हम् । किञ्चार्थवादस्यान्यशेषत्वापराधेनावान्तरतात्पर्यमनङ्गीकुर्वता कथमर्थवादतो देवताविग्रहवत्त्वादिकं स्वीकृतम् । न च अप्रामाणिकार्थः स्वीकारार्हः ।

नन्वर्थवादतो मानान्तराविरुद्धदेवताविग्रहवत्त्वादिविषयकं जायमानं ज्ञानमर्थवादस्य विग्रहवत्त्वादौ तात्पर्याभावेऽपि प्रमितिरेव पर्यवस्यतीति कथं तस्याप्रामाणिकत्वम् ? तत्प्रमाकरणस्यार्थवादस्यैव नित्यनिर्दोषस्याकाङ्क्षादिमतस्तत्र प्रमाणत्वादिति चेन्न । एवं हि विधेयार्थप्राशस्त्यनिर्वाहाभावप्रसङ्गात् ।

---

१. अदृष्टेऽपि इति 'इति' पाठे अधिकः २. तै.सं.कां.२ प्र.१ प.१ ३. जै.सू.अ.३ पा.३ अधि.१ सू.२

न चार्थवादस्य स्वार्थीभूतगुणपरत्वं विना तद्द्वारा विधेयार्थप्राशस्त्यपरत्वनिर्वाह उपपद्यते। अपौरुषेये वेदे लौकिकवाक्य इवेच्छागर्भतात्पर्यासम्भवेन तत्प्रतीतिप्रयोजनकत्वरूपस्यैव तात्पर्यस्य वक्तव्यतया प्राशस्त्यप्रतीतिप्रयोजकगुणप्रतीतिजनकत्वेनार्थवादस्यावान्तरतात्पर्यवत्तायाः दुर्निवारत्वाच्च । किञ्च प्रमाणान्तरविरोधाभावस्यैवावश्यकतया तत एव शाब्दबोधोपपत्तौ न क्वचिदपि शाब्दबोधे तात्पर्यनिश्चयो हेतुः स्यात् । किञ्चैवं तव प्रत्यक्षविरोधसत्वेन तत्त्वमस्यादिवाक्यजन्यजीवेश्वराभेदज्ञानं न प्रमितिः स्यात् । व्यभिचारेणापूर्वतादेरतात्पर्यलिङ्गतापत्तिश्च स्यात् ।

ननु विधिरनुष्ठापकत्वेन पुरुषार्थपर्यवसायीति यावता विना तस्यानुष्ठापकत्वानिर्वाहः तत्रैवार्थवादादेस्तात्पर्यकल्पनमयुक्तम् । न त्वर्थवादोपस्थितमात्रे गुणादावपि, तथा च प्राशस्त्यपरत्वं विनाऽनुष्ठापकत्वानिर्वाहात् तत्परत्वमेवार्थवादस्य न्याय्यमिति मीमांसकानां रहस्यमिति चेत् किं तावता ? तथापि गुणादिपरत्वं दुर्वारं, तथाहि— अर्थवादस्याध्ययनविधिबलायातपुरुषार्थपर्यवसायित्वनिर्वाहाय हि प्राशस्त्यपरत्वमुच्यते मीमांसकैः, न तु कुलधर्मतया, तच्च बाधकाभावे, प्रयाजादिवाक्यवत् वाक्यैकवाक्यत्वमाश्रित्यैव आश्रयितुं युक्तं, न तु पदैकवाक्यत्वमाश्रित्य । विध्यतिरिक्तस्य सर्वस्यापि वेदभागस्यार्थवादन्यायेन बाधकाभावेऽपि प्रतीयमानार्थपरत्वाभावे 'यन्न दुःखेन सम्भिन्नमि'त्यादेरपि प्रतीयमानार्थपरत्वाभावप्रसङ्गात् । "स्वर्गकामो यजेत" इत्यादिविधौ श्रुतस्वर्गपदस्य सूक्ष्मं वासः स्वर्गः, चन्दनं स्वर्ग इत्यादि लोकव्यवहारसिद्धसूक्ष्मवासाद्युत्कृष्टवस्तुपरत्वेनैव स्वर्गपदयुक्त विध्यनुष्ठापकत्वात्पुरुषार्थत्वोपपत्तेः । आकाशाद्यतीन्द्रियपदार्थेषु वेदं विना प्रमाणान्तराप्रवृत्त्या [1]"आत्मन आकाशः सम्भूतः" "आकाशवत्सर्वगतश्च नित्यः" इत्यादेरतत्परत्वेन तदसिद्ध्यापत्तेश्च । [2]"अविनाशी वा अरेऽयमात्मे"त्यादेः आत्मविनाशित्वादिपरत्वाभावेन यन्न दुःखेन सम्भिन्नमित्यादिशब्दप्रतिपन्नसुखविशेषस्य तत्कारणत्वेन विधिप्रतिपन्नयागाद्यनुष्ठानानन्तरमुपलम्भेन देशान्तरकालान्तरभावितादृशस्वर्गसम्बन्धयोग्यतासिद्धयेऽवश्यं स्वीकार्यस्यात्मा विनाशित्वस्य मानाभावेनासिद्ध्यापत्तेश्च । न च "स्वर्गकामो यजेते"त्यादि विध्यन्यथानुपपत्तेरेवाविनाशीत्यादेरात्माऽविनाशित्वादिपरत्वसिद्धिरिति चेत् । हन्तैवं यागादिविद्ध्यन्यथानुपपत्तिरेव अर्थवादाद्युपस्थितद्रव्यदेवताफलादितादूप्ये अर्थवादादेः तात्पर्यमस्तीत्यत्र मानमिति घट्टकुट्टिप्रभातवृत्तान्तः स्यादिति किमधिकमाचरितम् । न च द्रव्यदेवताफलं वा अर्थवादाद्युपस्थिताकारव्यतिरेकेणाग्रहणार्हम् । उपस्थितपरित्यागानुपस्थितस्वीकारप्रसङ्गात् । न च द्रव्यदेवते विना यागस्यान्यद्रूपमस्ति । एवं च कथमर्थवादादेर्देवताविग्रहवत्त्वाद्यसिद्धिः ।

१. तै.उ.प्र.२ पं.१ २. बृह. ४-४-५

किञ्चार्थवादेषु पदैकवाक्येऽपि तद्गतस्य प्रथमोपस्थितस्यैव पदस्य प्राशस्त्यलक्षणया विध्येकवाक्यत्वमस्तु, न तु पदान्तराणाम् । तथात्वे प्रथमोपस्थितेरेव विनिगमकत्वात् । न चैवमध्ययनविध्यवतारितपुरुषार्थत्वमितरेषां न स्यादिति वाच्यम् । प्रथमोपस्थितपदस्य विधेयप्राशस्त्यपरत्वकल्पनानुकूलगुणोपस्थितिजनकत्वेनैव पुरुषार्थपर्यवसायित्वसम्भवात् । तन्मते गुणप्रतिपादनपरत्वाभावेऽपीतरपदानां तदुपस्थापकत्वेन विधिकृत्यनिर्वाहकत्वाक्षतेः । किञ्च गुण(त्व)दे: अर्थवादतात्पर्याविषयत्वेऽर्थवादपदानां विध्यपेक्षितप्राशस्त्यपरत्वकल्पकत्वमेव न सिद्ध्येत् । न हि धूमोऽस्तीत्युदासीनवाक्योपस्थितधूमस्य वह्निमनुमाय प्रवर्ततामित्यर्थकल्पकत्वं दृष्टचरम् । अपि चार्थवादस्य प्रथमं स्वोपस्थितगुणरूपवाक्यार्थमादायैव प्रतीतविध्येकवाक्यत्वस्य तदुपजीव्यजाताप्राशस्त्योपस्थितिः कथं तत्परत्वं विहन्यात् । न च प्राग्वाक्यैकवाक्यत्वस्य प्रतीतेः पदैकवाक्यत्वप्रतीतिरनुभवसिद्धा । एवं चार्थवादपदेष्वस्मत्पक्षे प्रथमोपस्थितपदस्यैव प्राशस्त्यलक्ष्यकत्वं, न सर्वस्येति कल्पनालाघवम् । मीमांसकमते तु न तथेति कल्पनागौरवमिति । तथा चैवं गुणकं प्रशस्तं कर्म कर्तव्यमिति महावाक्यार्थो, वाक्यैकवाक्यतापक्षे, शब्दप्रतीतिगोचर इति किमनुपपन्नम् ? न चैवं [1]"वायुर्वै क्षेपिष्ठा देवता" इत्यादौ प्रथमोपस्थितस्य वाय्वादिपदस्य वायुप्राशस्त्योभयप्रतिपादकत्वे वृत्तिद्वयाङ्गीकारापत्तिः इष्टापादनात् । न चैवं पदैकवाक्यत्वापत्तिः । पदैकवाक्यत्वपक्षे एकपदमात्रोपस्थापितप्राशस्त्यमात्रस्यैव विध्यर्थेऽन्वयाङ्गीकारेणोक्तरीत्या विशिष्टवैशिष्ट्यबोधानङ्गीकारादिति दिक् ।

एतेन प्रस्तरादिवाक्ये अपूर्वतामात्रसद्भावेऽपि तत्त्वमसीत्यादाविवोपक्रमादेरभावेन न तदभेदपरत्वमिति निरस्तम् । सर्वत्रोपक्रमादिषट्कस्य मिलितस्य असम्भवात् । [2]"वेदो वा प्रायदर्शनात्", [3]"विधिस्तु धारणे पूर्वत्वात्", [4]"ज्योतिरुपक्रमात्", [5]"आनन्दमयोऽभ्यासात्" इत्यादावेकैकस्यैव तात्पर्यलिङ्गत्वेन सूत्रणाच्च उपक्रमादिष्वेकैकस्यैव बाधकं विना वैदिकतात्पर्यस्य प्रमापकत्वसम्भवे आलोकविशेषादेरिव लिङ्गान्तरसाहित्यानपेक्षणाच्च । किञ्च तात्पर्यलिङ्गत्वेन सम्प्रतिपन्नेषु अन्यतमसत्त्वेऽपि उपक्रमादिषट्काभावापराधेन यजमानः प्रस्तर इत्यादेस्तदभेदपरत्वानभ्युपगमे तदभावापराधेनैव प्राशस्त्यपरत्वस्याप्यनभ्युपगमप्रसङ्गः ।

किञ्च प्रत्यक्षादिप्रमाणान्तरविरोधस्याकिञ्चित्करत्वे यजमानः प्रस्तर इत्यादिप्रत्यक्षादिप्रमाणान्तरविरुद्धार्थकार्थवादगतयजमानादिपदानां प्रस्तरादिषु प्रवृत्तिनिमित्तत्वेन तत्सिद्धिजातिसारूप्यादिगौणार्थत्वाश्रयणाभावप्रसङ्गः । न हि यथाश्रुततदभेदादिपरत्वत्यागे गौणार्थत्वाश्रयणे च प्रत्यक्षादि-

---

१. तै.सं.कां.२ प्र.१ प.१ २. जै.सू.अ.३ पा.३ अधि.१ सू.२ ३. जै.सू.अ.३ पा.४ अधि.५ सू.१५
४. ब्र.सू. १-४-२-१० ५. ब्र.सू. १-१-६-१२

प्रमाणान्तरविरोधादन्यत्कारणमस्ति । तस्मादुपक्रमादीनां तत्त्वमस्यादिवाक्येषु सत्त्वेऽपि तत्प्रामाण्य-निर्वाहकतात्पर्यप्रमापकलिङ्गत्वनिर्वाहाय प्रमाणान्तराविरोधस्य विशेषणतयाऽवश्यापेक्षणीयत्वेन प्रत्य-क्षादिप्रमाणान्तरविरुद्धजीवेश्वराभेदादिपरत्वप्रमापकत्वानुपपत्तेः । तत्त्वमस्यादिश्रुतेस्तदभेदपरत्वमनुपप-न्नमिति तदभेदपरश्रुतीनामेवाभावेन न तदप्रामाण्यप्रसङ्गोऽपि उपलब्धावसरः । एवमभेदनिषेधपरश्रुत्य-प्रामाण्यप्रसङ्गोऽपि न लब्धावसरः । तासामपि प्रत्यक्षादिप्रमाणसिद्धतद्भेदविरुद्धतन्निषेधपरत्वायोगात् । तथाच विपक्षबाधकशून्यतया चेतनत्वादिहेतूनामप्रयोजकता । उक्तरीत्या जीवेश्वरादिभेदग्राहिप्रत्य-क्षादिप्रमाणैर्बाधितविषयत्वं चेति चेत्, मैवम्, जीवे ईश्वरभेदप्रत्यक्षस्य घटाकाशे महाकाशभेदप्रत्यक्षवत् सूचीरन्ध्रे दर्पणरन्ध्रभेदप्रत्यक्षवत् वर्णानां नित्यविभुत्वपक्षे गकारादीनामेकैकव्यक्तित्वेन शुकगकारे शारिकागकारभेदप्रत्यक्षवच्च विशिष्टभेदविषयत्वेनोपहितभेदविषयत्वेनारोपितभेदविषयत्वेन वाऽन्यथा-सिद्धतया वास्तवजीवेश्वरभेदग्राहकमानत्वासम्भवात् । तथा च श्रुतयः

"यथा ह्ययं ज्योतिरात्मा विवस्वानपोभिन्ना बहुधैकोनुगच्छन् ।
उपाधिना क्रियते भेदरूपः देवः क्षेत्रेष्वेवमजोऽयमात्मा",
[1]"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः ।
कार्यकारणानां हित्वा पूर्णबोधो विशिष्यते ।",
[2]"इन्द्रो मायाभिः पुरुरूप ईयते"
एक एव हि भूतात्मा भूते भूते व्यवस्थितः ।
एकधा बहुधा चैव दृश्यते जलचन्द्रवदिति ॥"
[3]"विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।
आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥"

—इत्यादिस्मृतयश्च ।

तथाच श्रुत्यादिभिरेव जीवेश्वरभेदग्राहिप्रत्यक्षस्य द्वासुपर्णेत्यादि तद्भेदावेदकश्रुतीनाञ्च औपाधिक-भेदविषयत्वव्यवस्थापनात् । भिन्नविषयतया विरोधस्यैवाप्रसारान्न तद्विरोधेन तत्त्वमसीत्यादिश्रुतीनां वास्तवजीवेश्वराभेदपरत्वहानिः । किञ्च द्वासुपर्णेत्यादिश्रुतीनां "नान्योऽतोऽस्ति द्रष्टे"त्यादिश्रुत्या निषेधाय प्रत्यक्षप्राप्तभेदानुवादितया कथं जीवेश्वरभेदपरत्वम् । अपि च अस्याः श्रुतेर्जीवेश्वरभेद-प्रतिपादकतया व्याख्याने पैङ्गिरहस्यब्राह्मणविरोधः । तेन सत्त्वक्षेत्रज्ञभेदप्रतिपादकत्वेन व्याख्यात-

---

१. त्रि.म.ना. ४-८    २. बृह. २-५-१५    ३. जा.द. ४-६३

त्वात् । अपि चैतच्छ्रुत्या भेदः किं पदार्थविधया व्याख्यायते[1] वाक्यार्थविधया वा नोभयथाऽपि । भेदस्यापदार्थत्वादवाक्यार्थत्वाच्च । तयोरन्य इत्यन्यशब्दस्य तयोर्मध्ये एक इत्यन्यतरार्थत्वावश्यकत्वेन प्रकृते भिन्नार्थत्वपरत्वासम्भवात् । तथात्वाङ्गीकारे तयोरन्य इत्यादेर्यथाश्रुतान्वयासम्भवेन ताभ्यां भिन्न इत्यन्वयाश्रयणापत्त्या विवक्षितार्थासिद्धेश्च । एतेन द्वासुपर्णेत्यादि जीवेश्वरभेदपरश्रुतिविरोधात् तद्भेदगोचर निर्विचिकित्सपरीक्षितप्रत्यक्षविरोधात्, संसाराधारचैतन्यं संसारानाधारचैतन्यप्रति-योगिकतज्ज्ञानाबाध्यभेदवन्न, सर्वदृक्त्वरहितत्वात्, घटादिवदित्यादिजीवेश्वरभेदानुमानविरोधाच्च । तत्त्वमसीत्यादिश्रुतीनां स सिंहोऽसि त्वं माणवकेत्यादिवद्गौणार्थत्वमेवाश्रयणीयम् ।

## जीवेश्वरभेदपरत्वे मानाभावशङ्कानिरसनम्—

न च द्वासुपर्णेत्यादेर्जीवेश्वरभेदपरत्वे मानाभावः ।

[2]"समाने वृक्षे पुरुषो निषण्णोऽनीशया शोचति मुह्यमानः । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ॥",

[3]"आत्माप्यनीशः सुखदुःखहेतोः",

"पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति"

इत्यादिश्रुत्या भेदज्ञानस्य फलवत्वप्रतिपादनात् । अन्तर्यामिब्राह्मणे "यः पृथिव्यामन्तरो योऽद्भ्योऽन्तरः, य आत्मनोऽन्तरः यो विज्ञानादन्तरः, यः पृथिवीमन्तरो यमयति योऽपोऽन्तरः यो विज्ञानमन्तर" इत्यादिना भेदपर्यायेणान्तरशब्देन तद्भेदस्याभ्यासाच्च । किञ्च सति प्रमाणान्तरविरोधेन श्रुतित्वगौरवे न मुख्यार्थभेदपरत्वाश्रयणं युक्तम् । तथा सति मृद्घट इतिवत् द्रव्यं घट इतिवत् त्वद्रीत्या तत्त्वमसीत्यादिवच्च यजमानः प्रस्तर इत्यादेरपि मुख्यार्थाभेदपरत्वाश्रयणप्रसङ्गात् । यज-मानः प्रस्तर इत्यादिषु यजमानादिशब्दानां प्रस्तरादौ प्रवृत्तिनिमित्तत्वेन जैमिनिना तत्सिद्धिजाति-सारूप्यादिगौणार्थस्यानुक्तिप्रसङ्गाच्च ।

अत एव नान्यतोऽस्ति द्रष्टेत्यादि श्रुतिरपि न मुख्यार्थभूतदृष्टभेदनिषेधपरा । किन्तु धूम एवाग्ने-र्दिवा ददृशे नार्चिरित्यादिवदमुख्यार्थपरैव स्वीकार्या । अन्यथा प्रत्यक्षादिप्रमाणविरोधस्याकिञ्चि-त्करत्वे श्रुतित्वगौरवस्याविशेषात् । नान्योऽतोऽस्ति द्रष्टेत्यादिवत् धूम एवेत्यादेरपि मुख्यार्थत्वा-श्रयणप्रसङ्गात् । जैमिनिना शास्त्रदृष्टविरोधाच्चेति मुख्यार्थस्वीकारे दृष्टविरोधमुद्भाव्य दूरभूयस्त्वादिति

१. प्रतिपाद्यते - पा० २. अथ. उ.भा.पृ. २८८ ३. श्वेत. १-२

नार्चिरित्यादेरविरुद्धार्थत्वानुक्तिप्रसङ्गाच्चेति निरस्तम् । भेदश्रुतिप्रत्यक्षयोरुक्तरीत्यौपाधिकभेदविषयत्वव्यवस्थापनात् । द्वा सुपर्णेत्यादिश्रुतेर्जीवेश्वरभेदश्रुतित्वस्यैवाभावात् कथञ्चिद्भावे वा नान्योऽतोऽस्ति द्रष्टेति निषेधायोक्तप्रत्यक्षप्राप्तजीवेश्वरभेदानुवादितया तत्परत्वानुपपत्तेश्च । यः पृथिव्या अन्तरो योऽद्भ्योऽन्तरः यः पृथिवीमन्तरो यमयति, योऽपोऽन्तर इत्यादावन्तरशब्दस्यान्तरस्थत्वपरत्वेन भेदवाचित्वेऽपि तत्र तत्परत्वासम्भवाच्च । एतेन 'जुष्टं यदा पश्यत्यन्यमीशं, पृथगात्मानं प्रेरितारं च मत्वे'त्यादि भेदज्ञानफलवत्त्वश्रुतेर्जीवेश्वरभेदस्य श्रुतितात्पर्यविषयत्वमिति निरस्तम् । जुष्टं यदा पश्यतीत्यादिना जडात्मभेदज्ञानस्य फलवत्त्वप्रतिपादनेन ततो जीवेश्वरभेदपरत्वानिश्चयात् । अत एव श्रुत्यन्तरे [1]कस्माद्ध्यभैष्यत्, [2]यन्मदन्यन्नास्ति, द्वितीयाद्वै भयं भवति, यस्मिन् सर्वाणि भूतान्यात्मैवाभूद्विजानतः । तत्र [3]को मोहः कः शोकः एकत्वमनुपश्यतः इत्यैक्यज्ञानस्य सफलत्वप्रतिपादनमुपपद्यते । किञ्च प्रमाणान्तरसिद्धजीवेश्वरभेदप्रतिपादनपरत्वे श्रुतेर्वैयर्थ्यप्रसङ्गः । अत एवाप्राप्ते शास्त्रमर्थवदिति घण्टाघोषः ।

यदपि सर्वदृक्त्वरहितत्वादित्यनुमानेन जीवेशभिदाभावसाधनं तदपि विपक्षबाधकशून्यत्वेनाप्रयोजकम् । एवमुक्तमन्यदपि तद्भेदसाधकमनुमानम् । एतेनैव प्रत्यक्षादिप्रमाणविरोधस्याकिञ्चित्करत्वे श्रुतित्वगौरवाविशेषात् तत्त्वमसीत्यादेर्जीवेशाभेदतद्भेदनिषेधपरत्ववत् यजमानः प्रस्तरः सोमेन यजेत इत्यादेरपि प्रस्तरयजमानाद्यभेदपरत्वापत्तिः । तत्त्वमसीत्यादेरमुख्यार्थभेदपरत्वाश्रयणानुपपत्तिश्चेति निरस्तम् । प्रस्तरयजमानादिभेदप्रत्यक्षस्य जीवेश्वरभेदप्रत्यक्षादिवत् विषयभेदव्यवस्थापकमानाभावेन समानविषयत्वे च विरोधाच्छ्रुतिप्रत्यक्षयोरुभयोस्तुल्यवत्प्रामाण्यस्यासम्भवेन सिंहो माणवक इत्याद्यासवाक्यवत्परीक्षितप्रत्यक्षगृहीतभेदानुपमर्दनेनैव वृत्त्यन्तरेणान्यार्थपरत्वस्वीकारेणापि यजमानः प्रस्तर इत्यादेः प्रामाण्यसम्भवात् । सति कथञ्चित्प्रामाण्येऽप्रामाण्याश्रयणायोगात् । शब्दवत्प्रत्यक्षादेर्वृत्त्यन्तराश्रयणेनान्यथा वा प्रामाण्योपपादनायोगाच्च ।

किञ्च प्रस्तरयजमानयोः सोमयागोपचारभेदे यजमानः प्रस्तरः सोमेन यजेतेति श्रुत्योः तात्पर्याभावेन तद्भेदग्राहिप्रत्यक्षादिविरोधात् । येनोक्तप्रतिबन्द्यवसरः स्यात् । किन्तु प्रहरणशास्त्रेण प्रस्तराभिन्नत्वे यजमानस्य प्रस्तरवत्प्रहरणे यजमानस्यैवाभावेन साङ्गप्रधानकर्मणोपरि समास्यापत्त्या तत्कर्तव्यतावोधकशास्त्रस्य क्वाप्यनुष्ठापकत्वासम्भवेन अप्रामाण्यप्रसङ्गरूपबाधकात् सोमान्यश्रुतद्रव्यकल्पनागौरवप्रसङ्गाच्च । तस्माज्जीवेश्वरभेदग्राहकप्रमाणाभावस्य वक्ष्यमाणरीत्या भेदमात्रग्राहकप्रमाणाभावस्य च सुस्थत्वात् । उक्तरीत्या तत्त्वमसीत्यादिश्रुतेर्नान्योऽतोऽस्ति द्रष्टेत्यादिश्रुतेश्च

१. बृह. १-४-२ २. बृह. १-४-२ ३. ना.प. ९-१२

तदभेदपरत्वस्य (तद्भेदनिषेधपरत्वस्य च) सुस्थत्वात् । तदप्रामाण्यप्रसङ्गस्य च विपक्षबाधकत्व-सम्भवेन नोक्तजीवेश्वराभेदसाधकहेतूनामप्रयोजकता । न चोक्तजीवेश्वरभेदग्राहिप्रत्यक्षादिभिर्बाधित-विषयत्वम् ।

## अद्वैतमतरीत्या ब्रह्मणः विवर्तोपादानत्वे पूर्वपक्षनिरूपणम्—

ननु जडेश्वराभेदसाधकानुमानेषु तदुपादानकत्वहेतुरसिद्धः । ब्रह्मणः कर्तृत्वेन वियदादिद्रव्योपादा-नत्वासम्भवात् । न ह्युपादानगोचरापरोक्षज्ञानादिमति क्वचिद्द्रव्योपादानत्वं दृष्टम् । किञ्चोपादानत्वं विकारिकारणत्वं ब्रह्मणो नाभ्युपगन्तुमर्हम् । निर्विकारत्वश्रुतिविरोधात् । नापि विवर्ताधिष्ठानत्वम् । तस्य वियदाद्यतात्त्विकत्वसिद्ध्यधीनत्वेन ब्रह्मव्यतिरेकेणासत्त्वरूपसाध्याविशेषापत्तेरिति चेन्न, कार्या-द्भिन्नत्वे सति तत्सत्ताव्यवहारप्रयोजकसत्ताकत्वस्यैवोपादानत्वात् । न च ब्रह्मणस्तथाविधोपादानत्वे मानाभावः । वियदादेः "आत्मन आकाशः सम्भूतः" इत्यादिश्रुत्या ब्रह्मकार्यत्वे सिद्धे [1]"सदेव सोम्येदमग्र आसीत्", [2]"आत्मा वा इदमेक एव अग्र आसीत्" इत्यादिश्रौतसामानाधिकरण्य-व्यवहारबलेन तत्सत्ताव्यवहारप्रयोजकसत्तावत्त्वस्य स्वीकारात् । न च मृदो घटं प्रत्युपादानत्वेऽपि घटोऽयमग्रे मृदेवासीत्, मृदोऽयं घटो जात इति प्रतीतिव्यवहारौ विनाऽन्यन्मानमस्ति । न च घटाभावदशायां मृदोऽस्तित्वप्रतीतिव्यवहारवत् मृदभावदशायां केवलघटस्यास्तित्वप्रतीतिव्यवहारौ पश्यामः येन मृत्सत्तातो घटसत्ताऽन्या स्यात् ।

किञ्च कारणसत्तातिरेकेण कार्यस्य सत्ताङ्गीकारे तत्र सत्ताभावप्रतिपादकमृत्तिकेत्येव सत्यमिति श्रुतिविरोधः । किञ्च वियदादेरात्मानुपादानत्वे तस्यात्मसत्त्वव्यतिरेकेण सत्त्वकल्पनागौरवप्रसङ्गः । तदुपादानकत्वे च तस्य सत्त्वं पृथङ् न कल्प्यम् । तस्य सदाकारप्रतीतिव्यवहारयोः स्वोपादान-भूतात्मसत्त्वेनैवोपपत्तेः । अन्यथेदं रजतमिति प्रतीतिव्यवहारान्यथानुपपत्त्या शुक्तिरजतेऽपि पृथगिद-न्त्वकल्पनाप्रसङ्गात् ।

किञ्च "आत्मन आकाशः सम्भूतः", "यतो वा इमानि भूतानि जायन्त" इत्यादौ पञ्चम्यात्मनो वियदाद्युपादानत्वे मानम् । तस्याः [3]"जनिकर्तुः प्रकृतिरि"ति सूत्रेण जायमानस्य या प्रकृतिरुपादानं तस्यैवापादनसंज्ञायां [4]"अपादाने पञ्चमी"ति स्मरणात् प्रकृतिशब्दस्योपादान एव रूढत्वात् । न चात्मन

१. छां.अध्या.६ खं.२. मं. २. ऐ.अ.१ खं.१ मं.१
३. पा.सू. १-४-३० ४. पा.सू. २-३-२८

इत्यादौ पञ्चमी हेतौ सम्भवति । अननुशासनात् । अपि चात्मनः कुलालवन्निमित्तमात्रत्वेनानुपादानत्वे प्रकृत्यधिकरणोक्तन्यायविरोधः । तथाहि— न केवलमात्मा निमित्तकारणम् । किन्तु प्रकृतिश्चोपादानञ्च । कुतः प्रतिज्ञादृष्टान्तानुपरोधात् । [1]कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीत्यादि प्रतिज्ञानुगुण्यात्, 'यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं स्यादि'ति दृष्टान्तानुगुण्याच्चेत्यर्थकेन [2]"प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्" इति सूत्रेण प्रतिज्ञानबद्धौ यौ प्रतिज्ञादृष्टान्तौ तयोरानुगुण्यायापि जगदुपादानत्वमप्यात्मन एषितव्यम् । अन्यथा प्रतिज्ञादृष्टान्तरूपन्यायविरोधः स्यात् । न ह्यात्मनो जगत्प्रत्यनुपादानत्वे तत्सत्ताप्रतीतिव्यवहारप्रयोजकसत्ताकत्वाभावे तस्य ततो भिन्नत्वेन तज्ज्ञाने जगज्ज्ञानमनुपचरितं सम्भवति । न चैकमृत्पिण्डविज्ञानेन सर्वमृण्मयस्य विज्ञातत्वेन दृष्टान्तीकरणं सम्भवति च । आत्मनो वियदादिप्रपञ्चोपादानत्वे तज्ज्ञानेन तज्ज्ञानप्रतिज्ञानादिकमुपादेयस्य पृथक् सत्ताशून्यत्वेऽप्युपादानसत्त्वनिबन्धनसत्त्वप्रतीतिव्यवहारभाक्त्वस्य शुक्तिरूप्ये दर्शनेनोपादानज्ञानत्वसम्भवात् ।

अपि चात्मनो जगत्प्रत्युपादानत्वे 'सोऽकामयत, बहुस्यां प्रजायेये'त्यनागतेच्छालक्षणाभिध्यानेन स्वातन्त्र्यलक्षणकर्तृत्वमिव स्वविषयबहुभवनेनोपादानत्वं नोच्येत । अपि च "[3]सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ती'ति सावधारणश्रुत्या आत्मन एव जगदुपादानत्वप्रतिपादनात् कथं तत्त्यागः । यद्धि यस्मात्प्रभवति यस्मिंश्च प्रलीयते तत्तस्यैवोपादानमिति नियमः । सर्वाणि ह वै इति श्रुतौ च प्रभवप्रलयावुभावपि स्फुटमाम्नातौ । आकाशश्चात्र परमात्मैवेत्याकाशाधिकरणे स्थितम् । किञ्च [4]"तदात्मानं स्वयमकुरुत" इति श्रुतावात्मानमित्यात्मनः कर्मत्वेनोपादानात् । मृदादिवदुपादानत्वमकुरुतेति कर्तृत्वेनोपादानान्निमित्तत्वं स्वयमिति च विशेषणादनन्यापेक्षत्वं च स्वीकार्यम् ।

ननु सदा सिद्धवस्तुन्यात्मनि कथं साध्यत्वसमावेशः । विरोधादिति चेन्न । साध्यत्वस्य अवास्तव्यत्वेन समावेशाविरोधात् । किञ्चात्मनोऽनुपादानत्वे [5]"सच्चत्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च" इत्यादिना तस्य रूपं निर्दिश्यते । कथं तदात्मनो रूपं स्यात् । तस्मात् तस्य नोपादानं स्यात् । तस्मात्सदादिरूपेण परिणामादप्यात्मा भूतानामुपादानात् । न चैवं निर्विकारत्वश्रुतिविरोधः विकारस्यावास्तव्यत्वेन वस्तुतो निर्विकारत्वसम्भवात् । अथ एव जगद् ब्रह्मणो विवर्त इति सिद्धान्तः ।

---

१. अथ.मं. १ २. ब्र.सू. १-४-६-२४ ३. शौनको. १-५
४. तै.उ.प्र.२ प.१ ५. तै.उ.प्र.२ प.६

किञ्च 'यद्भूतयोनिं परिपश्यन्ति धीरा इत्यादि वेदान्तेष्वात्मा भूतयोनिर्गीयत इत्यतोऽपि तस्य भूतोपादानत्वम् । योनिशब्दस्य पृथिवीयोनिरोषधिवनस्पतीनामित्यादावुपाधिवनस्पत्युपादानभूत-पृथिव्यां प्रयोगदर्शनेन तत्प्रयोगविषयस्यात्मनोऽपि विना बाधकमुपादानत्वत्यागायोगादिति ।

यत्तु कार्याभिन्नकारणत्वमेवोपादानत्वम् । न च कार्यकारणयोरभेदे मानाभावः । द्रव्यं घट इतिवत् मृद्घट इति सामानाधिकरण्यप्रतीतेरेव तत्र मानत्वादिति : तन्न, उपादानोपादेययोः भेदस्यैव न्याय्यत्वात् । तथाहि— प्रागसत् पश्चाच्च सत्कार्यम् । प्राक् सदेव च कारणं भवति । न चैकमेव स्वापेक्षया पूर्वभावित्वेन कारणम् । पूर्वमसत् पश्चाच्च सत्त्वेन कार्यं चेति युज्यते । प्राक्सत्त्वा-सत्त्वयोर्विरोधात् । किञ्च कार्यकारणयोरभेदे कारणवत्कार्यस्यापि प्राक्सत्त्वापत्त्या सामग्रीसम्पादन-वैयर्थ्यप्रसङ्गः । मृदवस्थायामपि घटधीव्यवहारतदुचितार्थक्रियाप्रसङ्गश्च । सामग्र्यां घटाद्यभिव्यञ्जकत्वे चाभिव्यक्तेरुत्पत्त्यात्मकत्वे प्रागसत आद्यक्षणसम्बद्धस्यैवोत्पत्तित्वेन विवादपर्यवसानात् ।

न च मङ्गलेन विघ्नसामग्र्या वा प्रायश्चित्तेन दुःखसामग्र्या वा यत्र विघटनं क्रियते तत्र विघ्नप्रागभावे मङ्गलजन्यत्वप्रतीतिव्यवहारौ वा दुःखप्रागभावे प्रायश्चित्तजन्यत्वप्रतीतिव्यवहारौ वा पश्यामः । किन्तु तत्स्थापितत्वप्रतीतिव्यवहारावेव परिपालनापरनामकप्रागभावस्थापनस्य स्वसामग्रीजन्यप्रागभावाग्रिमा-ग्रिमक्षणसम्बन्धरूपतया तदविनाभूततत्प्रयोजकविघ्नोत्पादकसामग्रीविघटनस्यैव मङ्गलप्रायश्चित्ताभ्यां सम्पादनात् ।

न चैवमुपादानोपादेययोर्भेदे मृद्घटः आतानवितानात्मकाः तन्तवः एव पटः 'सदेव सोम्येदमग्र आसीत्, आत्मा वा इदमेक एवाग्र आसीदि'ति लोकवेदसिद्धसामानाधिकरण्यधीव्यवहारानुपपत्तिरिति वाच्यम् । तदभेदेऽपि एतदनुपपत्तेस्तौल्यात् । अन्यथा घटो घट इति एकस्मिन्नेव घटे सामानाधि-करण्यधीव्यवहारप्रसङ्गात् । अत एव भेदोऽपि तदुपपत्तये स्वीक्रियत इति चेन्न, विरोधात् । मृद्घटयो-र्भेदेऽपि मृद्घट इति सामानाधिकरण्यधीव्यवहारयोर्मृत्वघटत्वरूपधर्मद्वयाश्रयैक्यविषयत्वेन घटत्वा-श्रयस्यैव मृत्वाश्रयत्वेनान्यथासिद्धतया घटतदुपादानभूतकपालयोर्भेदे प्रमाणत्वायोगात् । एतन्मृदेव घट इत्यादिधीव्यवहारयोरपि इदं रजतमुष्णं जलं कठिनो हस्त इत्यादि धीव्यवहारवदन्यथासिद्धत्वाच्च । अभिव्यक्तेर्ज्ञस्यात्मकत्वे च किं घटंज्ञस्यात्मिकाभिव्यक्तिः मृद्दण्डचक्रादिसामग्रीसमवधानात् प्रागसत्त्वेन तत्समवधानादुत्पद्यते । किञ्च घटादिवत् प्राक्सत्येव स्वाभिव्यञ्जकसमवधानादभिव्यज्यते । नाद्यः । तुल्यन्यायतया घटादेरपि दण्डचक्रादिसमवधानात् प्राक्सत्त्वासिद्धेः ।

---

१. अथ.मं.६ २. दृष्यात्म - पा०

इत्यादौ पञ्चमी हेतौ सम्भवति । अननुशासनात् । अपि चात्मनः कुलालवन्निमित्तमात्रत्वेनानुपादानत्वे प्रकृत्यधिकरणोक्तन्यायविरोधः । तथाहि— न केवलमात्मा निमित्तकारणम् । किन्तु प्रकृतिश्चोपादानञ्च । कुतः प्रतिज्ञादृष्टान्तानुपरोधात् । [1]कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीत्यादि प्रतिज्ञानुगुण्यात्, 'यथा सोम्यैकेन मृत्पिण्डेन विज्ञातेन सर्वं मृण्मयं विज्ञातं स्यादि'ति दृष्टान्तानुगुण्याच्चेत्यर्थकेन [2]''प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात्'' इति सूत्रेण प्रतिज्ञानबद्धौ यौ प्रतिज्ञादृष्टान्तौ तयोरानुगुण्यायापि जगदुपादानत्वमप्यात्मन एषितव्यम् । अन्यथा प्रतिज्ञादृष्टान्तरूपन्यायविरोधः स्यात् । न ह्यात्मनो जगत्प्रत्यनुपादानत्वे तत्सत्ताप्रतीतिव्यवहारप्रयोजकसत्ताकत्वाभावे तस्य ततो भिन्नत्वेन तज्ज्ञाने जगज्ज्ञानमनुपचरितं सम्भवति । न चैकमृत्पिण्डविज्ञानेन सर्वमृण्मयस्य विज्ञातत्वेन दृष्टान्तीकरणं सम्भवति च । आत्मनो वियदादिप्रपञ्चोपादानत्वे तज्ज्ञानेन तज्ज्ञानप्रतिज्ञानादिकमुपादेयस्य पृथक् सत्ताशून्यत्वेऽप्युपादानसत्त्वनिबन्धनसत्त्वप्रतीतिव्यवहारभाक्त्वस्य शुक्तिरूप्ये दर्शनेनोपादानज्ञानत्वसम्भवात् ।

अपि चात्मनो जगत्प्रत्युपादानत्वे 'सोऽकामयत, बहुस्यां प्रजायेये'त्यनागतेच्छालक्षणाभिध्यानेन स्वातन्त्र्यलक्षणकर्तृत्वमिव स्वविषयबहुभवनेनोपादानत्वं नोच्येत । अपि च ''[3]सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ती'ति सावधारणश्रुत्या आत्मन एव जगदुपादानत्वप्रतिपादनात् कथं तत्त्यागः । यद्धि यस्मात्प्रभवति यस्मिंश्च प्रलीयते तत्तस्यैवोपादानमिति नियमः । सर्वाणि ह वै इति श्रुतौ च प्रभवप्रलयावुभावपि स्फुटमाम्नातौ । आकाशश्चात्र परमात्मैवेत्याकाशाधिकरणे स्थितम् । किञ्च [4]''तदात्मानं स्वयमकुरुत'' इति श्रुतावात्मानमित्यात्मनः कर्मत्वेनोपादानात् । मृदादिवदुपादानत्वमकुरुतेति कर्तृत्वेनोपादानान्निमित्तत्वं स्वयमिति च विशेषणादनन्यापेक्षत्वं च स्वीकार्यम् ।

ननु सदा सिद्धवस्तुन्यात्मनि कथं साध्यत्वसमावेशः । विरोधादिति चेन्न । साध्यत्वस्य अवास्तव्यत्वेन समावेशाविरोधात् । किञ्चात्मनोऽनुपादानत्वे [5]''सच्चत्यच्चाभवत् निरुक्तञ्चानिरुक्तञ्च'' इत्यादिना तस्य रूपं निर्दिश्यते । कथं तदात्मनो रूपं स्यात् । तस्मात् तस्य नोपादानं स्यात् । तस्मात्सदादिरूपेण परिणामादप्यात्मा भूतानामुपादानात् । न चैवं निर्विकारत्वश्रुतिविरोधः विकारस्यावास्तव्यत्वेन वस्तुतो निर्विकारत्वसम्भवात् । अथ एव जगद् ब्रह्मणो विवर्त इति सिद्धान्तः ।

---

१. अथ.मं. १ २. ब्र.सू. १-४-६-२४ ३. शौनको. १-५
४. तै.उ.प्र.२ प.१ ५. तै.उ.प्र.२ प.६

किञ्च [1]'यद्भूतयोनिं परिपश्यन्ति धीरा इत्यादि वेदान्तेष्वात्मा भूतयोनिर्गीयत इत्यतोऽपि तस्य भूतोपादानत्वम् । योनिशब्दस्य पृथिवीयोनिरोषधिवनस्पतीनामित्यादावुपाधिवनस्पत्युपादानभूत-पृथिव्यां प्रयोगदर्शनेन तत्प्रयोगविषयस्यात्मनोऽपि विना बाधकमुपादानत्वत्यागायोगादिति ।

यत्तु कार्याभिन्नकारणत्वमेवोपादानत्वम् । न च कार्यकारणयोरभेदे मानाभावः । द्रव्यं घट इतिवत् मृद्घट इति सामानाधिकरण्यप्रतीतेरेव तत्र मानत्वादिति । तन्न, उपादानोपादेययोः भेदस्यैव न्याय्यत्वात् । तथाहि— प्रागसत् पश्चाच्च सत्कार्यम् । प्राक् सदेव च कारणं भवति । न चैकमेव स्वापेक्षया पूर्वभावित्वेन कारणम् । पूर्वमसत् पश्चाच्च सत्त्वेन कार्यं चेति युज्यते । प्राक्सत्त्वा-सत्त्वयोर्विरोधात् । किञ्च कार्यकारणयोरभेदे कारणवत्कार्यस्यापि प्राक्सत्त्वापत्त्या सामग्रीसम्पादन-वैयर्थ्यप्रसङ्गः । मृदवस्थायामपि घटधीव्यवहारतदुचितार्थक्रियाप्रसङ्गश्च । सामग्र्यां घटाद्यभिव्यञ्जकत्वे चाभिव्यक्तेरुत्पत्त्यात्मकत्वे प्रागसत आद्यक्षणसम्बद्धस्यैवोत्पत्तित्वेन विवादपर्यवसानात् ।

न च मङ्गलेन विघ्नसामग्र्या वा प्रायश्चित्तेन दुःखसामग्र्या वा यत्र विघटनं क्रियते तत्र विघ्नप्रागभावे मङ्गलजन्यत्वप्रतीतिव्यवहारौ वा दुःखप्रागभावे प्रायश्चित्तजन्यत्वप्रतीतिव्यवहारौ वा पश्यामः । किन्तु तत्स्थापितत्वप्रतीतिव्यवहारावेव परिपालनापरनामकप्रागभावस्थापनस्य स्वसामग्रीजन्यप्रागभावाग्रिमा-ग्रिमक्षणसम्बन्धरूपतया तदविनाभूततत्प्रयोजकविघ्नोत्पादकसामग्रीविघटनस्यैव मङ्गलप्रायश्चित्ताभ्यां सम्पादनात् ।

न चैवमुपादानोपादेययोर्भेदे मृद्घटः आतानवितानात्मकाः तन्तवः एव पटः 'सदेव सोम्येदमग्र आसीत्, आत्मा वा इदमेक एवाग्र आसीदि'ति लोकवेदसिद्धसामानाधिकरण्यधीव्यवहारानुपपत्तिरिति वाच्यम् । तदभेदेऽपि एतदनुपपत्तेस्तौल्यात् । अन्यथा घटो घट इति एकस्मिन्नेव घटे सामानाधि-करण्यधीव्यवहारप्रसङ्गात् । अत एव भेदोऽपि तदुपपत्तये स्वीक्रियत इति चेन्न, विरोधात् । मृद्घटयो-र्भेदेऽपि मृद्घट इति सामानाधिकरण्यधीव्यवहारयोर्मृत्त्वघटत्वरूपधर्मद्वयाश्रयैक्यविषयत्वेन घटत्वा-श्रयस्यैव मृत्त्वाश्रयत्वेनान्यथासिद्धतया घटतदुपादानभूतकपालयोरभेदे प्रमाणत्वायोगात् । एतन्मृदेव घट इत्यादिधीव्यवहारयोरपि इदं रजतमुष्णं जलं कठिनो हस्त इत्यादि धीव्यवहारवदन्यथासिद्धत्वाच्च । अभिव्यक्ते[2]र्ज्ञस्यात्मकत्वे च किं घटज्ञस्यात्मिकाभिव्यक्तिः मृद्दण्डचक्रादिसामग्रीसमवधानात् प्रागसत्त्वेन तत्समवधानादुत्पद्यते । किञ्च घटादिवत् प्राक्सत्येव स्वाभिव्यञ्जकसमवधानादभिव्यज्यते । नाद्यः । तुल्यन्यायतया घटादेरपि दण्डचक्रादिसमवधानात् प्राक्सत्त्वासिद्धेः ।

---

१. अथ.मं.६ २. दृष्यात्म - पा०

किञ्चैवं कुलालव्यापारादिघटितदण्डचक्रादिसमवधानक्षण एव घटाभिव्यक्तिः स्यात् । नान्यदा । न द्वितीयः । घटवत्तदभिव्यक्तेः तत्तदभिव्यक्तिधारायाश्च सत्त्वेन दण्डचक्रादिसामग्रीसमवधानस्य वैय्यर्थ्यतादवस्थ्यात् । तस्मात्तदुपादानकत्वहेतावुपादानत्वं न कार्या ब्रह्म तेन उपादानत्वं न कार्या-भिन्नकारणत्वं रूपम् । असिद्धेः । दृष्टान्ते घटे साधनवैकल्याच्च । किन्तु कार्याद्भिन्नत्वे सति तत्सत्ता-व्यवहारप्रयोजकसत्ताकत्वरूपमेवोपादानत्वम् । एवं चाकाशादेः घटादेश्च सद्विलक्षणत्वरूपाभ्युपगमेन तत्सम्पादने सामग्रीसम्पादनस्यावश्यकतया न तद्वैयर्थ्यमिति नासिद्धिः । न वा दृष्टान्तस्य साधन-वैकल्यम् । एवं जीवेश्वराभेदे जडेश्वराभेदे तद्भेदमिथ्यात्वे च 'तत्त्वमसि [1]अयमात्मा ब्रह्म । अहं ब्रह्मास्मि । [2]अहं विजानामि, विविक्तरूपो न चास्ति वेत्ता, मम चित्सदाहं, वेदैरनेकैरहमेव वेद्यो वेदान्त-कृद्वेदविदेव चाहम्, [3]जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते । मध्ये च सकलं जातं मयि सर्वं प्रतिष्ठितं, मयि सर्वं लयं याति तद्ब्रह्माद्वयमस्म्यहम् । सदेव सोम्येदमग्र आसीत्, आत्मा वा इदमेक एवाग्र आसीत्, [4]इदं सर्वं यदयमात्मा, ऐतदात्म्यमिदं सर्वं, [5]सर्वं खल्विदं ब्रह्म, [6]ब्रह्मैवेदं सर्वं नान्योऽतोऽस्ति द्रष्टा, नान्यदतोऽस्ति द्रष्टृ, नेह नानास्ति किञ्चन, अतोन्यदार्त-मित्यादिश्रुतयोऽपि मानमिति पूर्वपक्षसङ्क्षेपः ।

## जीवेश्वरयोः अभेदनिराकरणम्—

अत्रोच्यते । 'तुरीयं तत्सर्वदृक्सदा, यः सर्वज्ञः सर्ववित्, सत्यकामः सत्यसङ्कल्पः, [7]परास्य शक्तिर्विविधैव श्रूयते, स्वाभाविकी, विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशा स्युः । यतो वा इमानि भूतानि जायन्ते, 'तद्ब्रह्मे'त्यादिश्रुतिभ्यः सर्वदृत्त्वादिरूपेणेश्वरत्वाभिमतं चैतन्यं निश्चिन्वतो 'नाहं सर्वदृक् नाहं सर्वज्ञ' इत्यादि तत्प्रतियोगिकपारमार्थिकानौपाधिकमहमर्थचैतन्यधर्मिक-भेदगोचरनित्यनिर्दोषस्वतःप्रमाणभूतसाक्षिप्रत्यक्षेण भेदत्वादिहेतूनां बाधितविषयतया न जीवेश्वरा-भेदसाधकत्वं युज्यते । न चैतत्प्रत्यक्षस्य मिथ्यौपाधिकभेदविषयतया विरोधाभावात् भिन्नविषयत्वा-द्भेदमिथ्यात्वौपाधिकत्वपारमार्थिकानौपाधिकजीवेश्वराभेदविषयकोक्तानुमानाबाधकत्वमिति वाच्यम् । उक्तभेदप्रत्यक्षस्य मिथ्यात्वविरुद्धतत्सत्यत्वविषयतया तन्मिथ्यात्वसाधकानुमानविरोधस्य दुर्निवार-त्वात् । तद्भेदौपाधिकत्वे मानाभावेन प्रत्यक्षस्य स्वाभाविकतद्भेदमात्रविषयत्वाच्च । अन्यथा तेजस्तिमिरं न, वह्निरुष्णो न, अन्नं पाषाणो नेत्यादि परीक्षितकृप्तदोषाजन्यप्रत्यक्षस्यापि मिथ्यौपाधिकभेदविषय-त्वोक्तिसम्भवेन तेजस्तिमिरं वह्निरनुष्णः अन्नं पाषाणः वस्तुत्वात् इत्याद्यनुमानानामपि तदबाध्यत्वस्य

१. तै.उ.प्र.२ प.१ २. कैवल्य. १७ ३. कैवल्य १७ ४. बृह. २-४-६ ५. बृह. २-४-६
६. विष्णु.त.नि.उदा.श्रु.पृष्ठ ८९ ७. नृसिंहो. ७-३ ८. श्वेत.अध्या. ६मं.८ ९. तै.उ.प्र.४.प.८९

वक्तुं शक्यत्वेन तद्भेदमिथ्यात्वादिसिद्धिप्रसङ्गात् । न च तेजस्तिमिरादिभेदस्यापि जीवेश्वरभेदतुल्ययोगक्षेमत्वेन तन्मिथ्यात्वे नानिष्टमिति वाच्यम् । तन्मिथ्यात्वस्येष्टत्वेऽपि तेजस्तिमिराद्यभेदस्य तद्भेदोपाधिकत्वस्य चानिष्टत्वात् । न हि जीवेश्वरयोरिव तेजस्तिमिरयोः वह्न्यनुष्णयोरन्नानन्नयोर्वा व्यावहारिकः पारमार्थिको वाऽभेदः, तद्भेदो वा औपाधिक इति पराङ्गीकारः ।

किञ्च तेजस्तिमिरादिपरस्परभेदस्य मिथ्यात्वं न परस्परनिष्ठात्यन्ताभावप्रतियोगित्वं, अत्यन्ताभावस्य व्यावहारिकस्य विरोधेन तत्रानभ्युपगमात् । प्रातिभासिकस्य मिथ्यात्वानौपाधिकत्वात् । पारमार्थिकत्वे तस्यापारमार्थिकतेजस्तिमिरादिरुपाधिकरणात्मकत्वायोगात् । तदतिरिक्तत्वेऽद्वैतहान्यापत्तेः । न च शुक्तिरूप्यस्य शुक्त्यवच्छिन्नचैतन्यरूपाधिकरणात्मकनिषेधप्रतियोगिकत्ववत्तेजस्तिमिराद्यवच्छिन्न चैतन्यरूपाधिकरणात्मकनिषेधप्रतियोगित्वमेव तदन्योन्यभेदमिथ्यात्वम् । स च निषेधः पारमार्थिक एवेति नोक्तदोष इति वाच्यम् । 'नेह नानास्ति किञ्चने'ति जगन्मिथ्यात्वशरीरप्रविष्टनिषेधस्य ब्रह्मचैतन्यनिष्ठत्वेनावगततया तच्चैतन्यरूपत्वायोगात् । अन्यथा ब्रह्मचैतन्यस्यापि स्वनिष्ठत्वापत्तेः । चैतन्यरूपनिषेधस्य स्वनिष्ठत्वं कल्पितमिति चेन्न । तथा सति प्रातिभासिकेतरस्य कल्पितस्य व्यावहारिकत्वनियमेन व्यावहारिकतन्निष्ठत्वविशिष्टचैतन्यात्मकनिषेधस्यापि व्यावहारिकत्वेन व्यावहारिकप्रपञ्चसादृश्यानुपपत्तेः । प्रपञ्चनिषेधतन्निष्ठत्वयोरपि ब्रह्मचैतन्यरूपत्वे तन्निष्ठपदार्थमात्रस्यापि ब्रह्मचैतन्यरूपत्वापत्तिः । न हि ब्रह्मचैतन्यनिष्ठत्वेन सुप्रतिपन्नयोः पदार्थमात्रतन्निषेधयोर्निषेधतन्निष्ठत्वयोरेव पारमार्थिकचैतन्यरूपत्वं न तु पदार्थमात्रस्येत्यत्र विशेषहेतुरस्ति ।

किञ्च ब्रह्मचैतन्यस्य स्वनिष्ठत्वे स्वस्यैव स्वं प्रति प्रतिपन्नोपाधितया नेह नानास्ति किञ्चनेति श्रुत्याऽविशेषेण ब्रह्मनिष्ठसर्वनिषेधाद्ब्रह्मचैतन्यस्यापि स्वस्वरूपभूतप्रतिपन्नोपाधिनिष्ठनिषेधप्रतियोगित्वेन मिथ्यात्वप्रसङ्गः । न च नानात्वविशेषणादेव ब्रह्मव्यावृत्तिः । नानाशब्दस्य भिन्नार्थकत्वे ब्रह्मणोऽपि कुतश्चिद्भिन्नत्वेन व्यावर्तकत्वात्तेभ्यो विलक्षणः साक्षीत्यादिना ब्रह्मणोऽपि भोक्त्रादितो भिन्नत्वावेदनात् । न च किञ्चनश्रुतेर्ब्रह्मव्यतिरिक्तपरत्वेन सङ्कोचकमस्ति । न च यस्मिन्द्यौरित्यादिना ब्रह्मणि वियदादिकमिव ब्रह्मचैतन्यं क्वचिदप्युपाधौ न केनापि प्रतीतमिति वाच्यम् । 'य आत्मनि तिष्ठन्स्वे महिम्नि प्रतिष्ठितः', 'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुत्या ब्रह्मचैतन्यस्यैव स्वोपाधित्वेन प्रतिपन्नत्वात् । न च 'आकाशवत्सर्वगतश्चे'त्यत्र सर्वशब्दस्य ब्रह्मव्यतिरिक्तपरत्वेन सङ्कोचे मानमस्ति । निषेधश्रुतेः प्रबलत्वेन यस्मिन्द्यौरित्यादिश्रुतेर्निषेध्यसमर्पकत्ववत् तत्सत्यमित्यादिश्रुतेरपि निषेध्यसमर्पकत्वेन निषेधशेषतया दुर्बलत्वेन असङ्कोचकत्वात् । अविद्यादेरनादित्वेऽपि तादृशनिषेधप्रतियोगित्वेन मिथ्यात्ववदनाद्यनन्तत्वेऽपि ब्रह्मचैतन्यस्यापि तादृशनिषेधप्रतियोगित्वेन मिथ्यात्वसंभवेनानादित्व-

श्रुतिवदनन्तत्वश्रुतेरप्यसंकोचकत्वाच्च । न च निषेधरूपबाधावधित्वेन ब्रह्मणः सत्यत्वावश्यकतया निषेधश्रुतिस्थकिञ्चनश्रुतेः सङ्कोच इति वाच्यम् । त्वत्पक्षे ब्रह्मण्यतिरिक्तस्य सर्वस्य मिथ्यात्वेन भूतले घटो न, शुक्तिरूप्ये घटो नेत्यादिप्रतीत्या मिथ्याभूतस्यैव निषेधावधित्वदर्शनेन निषेधावधेः सत्यत्वनियमासिद्धेः । प्रत्युत निषेधावधेरसत्यत्वनियमेन निषेधावधिभूतब्रह्मचैतन्यासत्यताया एव न्याय्यत्वात् । ब्रह्मचैतन्यस्यैव घटे घटो नास्तीति प्रतीत्या घटस्येव स्वनिषेधावधित्वसम्भवेन निषेधावध्यनवस्थाऽनवकाशात् ।

ननु भूतले घटो न शुक्तौ रूप्यं न घटे घटभेदो नेत्यादिनिषेधप्रतीतिष्वपि घटाद्यवच्छिन्नचैतन्यानामेव तत्तन्निषेधावधित्वेन विषयतया न निषेधावधिसत्यत्वनियमासिद्धिः । न वा विपरीतनियमापत्तिरिति चेन्न । भूतलादीनामेव योग्यतया प्रत्यक्षादिना निषेधावधित्वावगत्या तत्तदवच्छिन्नचैतन्यानां तथात्वे मानाभावात् । न हि वेदैकसमधिगम्यं ब्रह्मचैतन्यं योग्यसम्बन्धमात्रेण प्रत्यक्षादिविषय इति शक्यमभ्युपगन्तुम् । तथा सति विशेषाभावेन योग्यसम्बन्ध्यतीन्द्रियमात्रस्यापि प्रत्यक्षत्वापत्तेः । किञ्चैवं भूतलाद्यवच्छिन्नचैतन्यस्यैव निषेधावधित्ववत् घटाद्यवच्छिन्नचैतन्यस्येव निषेधप्रतियोगित्वापत्तिरविशेषात् । अपि चैवं ब्रह्मचैतन्यनिष्ठतद्रूपनिषेधप्रतियोगित्वेन मिथ्यात्वे जीवचैतन्यतदैक्ययोरपि नेह नानास्ति किञ्चनेत्यादिश्रुत्या वियदादिप्रपञ्चसाधारण्येनैव ब्रह्मचैतन्यनिष्ठतद्रूपनिषेधप्रतियोगित्वावेदनेन मिथ्यात्वप्रसङ्गः ।

किञ्च किञ्चनश्रुतेर्जीवतदैक्यभिन्नपरत्वेन सङ्कोचकल्पने मानाभावात् । [१]'अहमस्मि' इत्यादि जीवचैतन्यसत्ताग्राहिप्रत्यक्षानुमानयोर्घटरसन्नित्यादि प्रपञ्चसत्ताग्राहिप्रत्यक्षानुमानयोरिवासङ्कोचकत्वात् । जीवसत्यत्वग्राहिश्रुतेश्चाभावात् । प्रत्युत [२]'विश्वं सत्यमि'त्यादिश्रुत्या विशेषेण जीवतदितरप्रपञ्चयोः सत्यत्वावेदनेन तदुभयान्यपरत्वकल्पनस्यैव न्याय्यत्वात् । ननु जीवस्य तत्त्वमसीत्यादि सत्यब्रह्माभेदावेदकश्रुतिरेव जीवसत्यत्वावेदकेति सैव सङ्कोचिकेति चेन्न । यस्मिन्द्यौरित्यादिश्रुतेः सत्यब्रह्मणि वियदादिप्रपञ्चतत्सम्बन्धावेदकत्वेऽपि तत्र तत्त्वावेदनलक्षणप्रामाण्याभाववत्सर्वं खल्विदं ब्रह्मेत्यादिश्रुतेः प्रपञ्चे सत्यब्रह्माभेदावेदकत्वेऽपि तदंशे तत्त्वावेदनलक्षणप्रामाण्याभाववच्च तत्त्वमसीत्यादिश्रुतेरपि जीवे सत्यब्रह्माभेदावेदकत्वेऽपि तत्र तत्त्वावेदनलक्षणप्रामाण्याभावसम्भवेनासङ्कोचकत्वात् ।

न चैवं तत्त्वमसीत्यादेस्तत्त्वावेदकत्वानुपपत्तिः । यस्मिन् द्यौरित्यादिवदखण्डब्रह्ममात्रपरत्वेनैव तदुपपत्तेः । अन्यथा यस्मिन् द्यौः सर्वं खल्विदं ब्रह्मेत्यादिश्रुत्या जीवस्येव प्रपञ्चस्यापि सत्यब्रह्मा-

१. त.  २. त

भेदतत्सम्बन्धयोरावेदने न तत्र तन्निषेधासम्भवेन नेह नानास्तीति श्रुतेः प्रपञ्चनिषेधपरत्वाभावप्रसङ्गः तात्पर्यलिङ्गस्यापूर्वतादेः तत्त्वमसीत्यादाविव यस्मिन्द्यौरित्यादावप्यविशेषात् तत्परत्वेऽपि प्रपञ्च-तत्सम्बन्धयोर्मिथ्यात्वे तद्वदेव जीवतद्गतब्रह्माभेदयोरपि मिथ्यात्वापत्तेः । यस्मिन्द्यौरित्यादेरखण्ड-ब्रह्ममात्रपरत्वेन प्रपञ्चतत्सम्बन्धपरत्वाभावेन सर्वं खल्विदं ब्रह्मेत्यादेश्चिन्मात्रपरत्वेन जडाजडयोरैक्या-सम्भवेन तदभेदपरत्वाभावेन च प्रपञ्चनिषेधश्रुत्यविरोधित्वे तत्त्वमसीत्यादिश्रुतेरपि चिन्मात्रपरत्वेन सर्वज्ञत्वासर्वज्ञत्वादिविरुद्धधर्मकजीवब्रह्मणोरभेदासम्भवेन तदभेदपरत्वाभावेन च तन्निषेधश्रुत्यविरोधेन असङ्कोचकत्वोपपत्तेः । वेदान्तमात्रस्य अखण्डचिन्मात्रपरतया सृष्ट्यादिवाक्यात् तत्सृष्ट्याद्यसिद्धि-प्रसङ्गात् । प्रपञ्चनिषेधवाक्यतस्तन्निषेधासिद्ध्यापत्त्या प्रपञ्चमिथ्यात्वासिद्धिप्रसङ्गाच्च । देवताविग्रह-न्यायेनाखण्डचिन्मात्रपरादपि वेदान्तवाक्यात् सृष्ट्यादिसिद्धिरविकलेति चेन्न । देवताविग्रहस्य माना-न्तराविरुद्धत्वेन न श्रुतिप्रतिपन्नस्य स्वीकारवत् ब्रह्मणि प्रपञ्चविधिनिषेधयोः परस्परविरुद्धत्वेन तत्र द्वयोः स्वीकारायोगेन वैषम्यात् । अन्यतरस्वीकारे नियामकाभावात् । नित्यनिर्दोषश्रुतिमात्रसिद्धत्वस्य प्रपञ्च-निषेधयोः तुल्यत्वात् । प्रपञ्चतन्निषेधयोर्द्वयोरपि त्वदभ्युपगतत्वेनान्यतराभ्युपगमेऽपसिद्धान्ताच्च ।

## प्रपञ्चविधिनिषेधयोः परस्परं विरोधाभावनिरूपणम्—

ननु वेदान्तेषु ब्रह्मणि प्रपञ्चविधिनिषेधयोरुभयोरपि अवगमात्प्रपञ्चतदभावयोस्तुल्यवत्सत्त्वे तत्प्रतिपादकश्रुत्योर्विरुद्धार्थत्वेनाप्रामाण्यप्राप्तौ तन्निरसनपूर्वकं प्रामाण्यनिर्वाहाय मिथ्यात्वप्रपञ्चसत्य-तन्निषेधविषयतया भिन्नविषयत्वाङ्गीकारात् । प्रपञ्चविधिनिषेधयोर्न परस्परविरोध इति चेत्तर्हि तेनैव न्यायेन मिथ्याभूतजीवब्रह्मैक्यसत्यतन्निषेधविषयत्वेनैव तदैक्यतन्निषेधश्रुत्योरप्यविरोधेनैव प्रामाण्य-स्याभ्युपगन्तव्यत्वात् । न च तत्त्वमसीत्यादितदैक्यश्रुतिवत् तदैक्यनिषेधश्रुतिरेव नेति वाच्यम् । भेदस्यैक्यनिषेधरूपत्वेन तेभ्यो विलक्षणः "साक्षी चिन्मात्रः" जुष्टं यदा पश्यत्यन्यमीशं, [1]"ज्ञाज्ञौ द्वावजावीशानीशानौ", [2]"अतोऽन्यदार्तमि"त्यादिश्रुतीनामेव तदैक्यनिषेधश्रुतित्वात् अन्ततो नेह नानास्ति किञ्चनेत्यादिश्रुतेरेवाविशेषेण चेतनाचेतनात्मकसकलप्रपञ्चनिषेधकतया ब्रह्मणि प्रतिपन्न-जीवैक्यनिषेधश्रुतित्वाच्च जीवब्रह्मभेदग्राहिप्रत्यक्षादिबहुप्रमाणानुग्रहाय तदैक्यश्रुतेरपारमार्थिकतदैक्य-विषयत्वस्य तद्भेदश्रुतेश्च पारमार्थिकतद्भेदविषयत्वस्यैव कल्पयितुमुचितत्वात् ।

एवं ब्रह्मणि प्रपञ्चश्रुतेरपि प्रपञ्चसत्त्वग्राहिप्रत्यक्षादिबहुप्रमाणानुग्रहाय पारमार्थिकप्रपञ्चविषयत्वस्य तन्निषेधश्रुतेश्चापारमार्थिकतन्निषेधविषयत्वस्यैव कल्पयितुमुचितत्वाच्च । अन्यथा प्रत्यक्षादीनां श्रुत्या

---

१. श्वेत.अध्या.१ मं.९ २. बृह. ३-४-२

बाधे प्रत्यक्षादिसिद्धश्रुतितज्जन्यज्ञानतत्प्रामाण्यादीनामपि बाधापत्त्या त्वदभिमताद्वैतप्रपञ्चनिषेधब्रह्म-सद्रूपत्वादेरप्यसिद्धिप्रसङ्गः । न ह्यर्थबाधं विना प्रामाण्यबाधोऽन्योऽस्ति । प्रत्यक्षादीनां श्रुतिव्यतिरिक्त-प्रमाणविरोधाभावेन बाधितार्थकत्वलक्षणान्ध्यादेरप्रसिद्धौ शतमप्यन्धानां न पश्यतीति न्यायस्याप्यनव-तारात् । तस्माद्यस्मिन् द्यौरित्यादेस्सर्वं खल्विदं ब्रह्मेत्यादेश्चाखण्डचिन्मात्रपरत्वेन मिथ्यार्थविषयकत्वेन वा ब्रह्मणि प्रपञ्चनिषेधावेदकनेहनानेत्यादिश्रुत्यविरोधित्ववत् ब्रह्मणः प्रपञ्चवैलक्षण्यावेदक "तेभ्यो लक्षणः साक्षी" "नेति नेती"त्यादिश्रुत्यविरोधित्ववच्च तत्त्वमसीत्यादेरप्यखण्डचिन्मात्रपरत्वेन मिथ्या-भूतजीवब्रह्मैक्यपरत्वेन वा ब्रह्मणि जीवस्वरूपनिषेधावेदक नेह नानेत्यादिश्रुत्यविरोधित्वं जीवब्रह्मणोः परस्परवैलक्षण्यावेदक भोक्ता भोगश्च यद्भवेत् तेभ्यो विलक्षणः साक्षी अतोऽन्यदार्तमुत्तमः पुरुषस्त्वन्य इत्यादिश्रुतिस्मृत्यविरोधित्वं चेति ।

नन्वतोऽन्यदार्तमिति श्रुतिः जीवब्रह्मभेदापरनामकवैलक्षण्यावेदिका न किन्वात्मव्यतिरिक्तस्येष-त्सत्यत्वरूपमिथ्यात्वावेदिकैवेति चेन्न । आर्तशब्दस्यार्तो जिज्ञासुरित्यादौ बहुलप्रयोगदर्शनेन दुःखिनि रूढत्वेन ईषत्सत्ये च यौगिकतया रूढ्युपस्थितं दुःखिजीवजातमुद्दिश्य परमात्मान्यत्वविधायिन्ये-वेत्यङ्गीकर्तव्यत्वात् ।

किञ्च आ ऋतं आर्तमीषत्सत्यमिति विगृह्य समासे गुणे *(नार्तमित्यापत्तिः । न चोपसर्गादृति धाताविति वृद्धिरत्र गुणबाधिका सम्भवति । ऋतशब्दस्य सत्ये रूढत्वेनाखण्डतया ऋधातुजत्वे मानाभावात् । अत एवार्तमुद्दिश्य परमात्मान्यत्वविधाने) नात्मान्यत्वविधाने यद्वृत्तयोगप्राथम्यलक्षणो-द्देश्यलक्षणभङ्गप्रसङ्ग इति निरस्तम् । तस्यौत्सर्गिकत्वेनातल्लक्षणत्वात् । [६५A]"वायव्यं श्वेतमालभेत भूतिकाम" इत्यादौ भूतिकामस्योद्देश्यत्वेऽप्यप्राथम्यात् । न चैवं जीवे ब्रह्मभेदस्य प्रत्यक्षादिप्राप्ततया तद्विधानानुपपत्तिः । प्रत्यक्षादिना जीवत्वावच्छिन्ने परमात्मभेदस्याप्राप्तत्वात् । अन्यथा घटस्सन् घटो-ऽस्ति, घटः प्रकाशते घटप्रिय इत्यादि प्रतीत्या आत्मनः परप्रेमास्पदत्वादियुक्त्या कार्यत्वाद्युपपत्त्या आत्मनः सद्रूपत्वादेश्च दृश्यत्वाद्यनुमानेन विश्वमिथ्यात्वस्यानुभूतित्वादिना आत्मनः स्वप्रकाशत्वादेश्च सिद्धतया (सत्यतया) सत्यं ज्ञानं विज्ञानमानन्दं ब्रह्म, यतो वा इमानि भूतानि जायन्ते, एकमेवाद्वितीयं, नेह नानास्ति किञ्चन, अत्रायं पुरुषः स्वयं ज्योतिरित्यादि श्रुतीनामनुवादित्वप्रसङ्गात् ।

न च प्रत्यक्षादिना विशिष्टस्योपहितस्य ब्रह्मचैतन्यस्वरूपस्य प्राप्तत्वेऽपि शुद्धब्रह्मस्वरूप-मप्राप्तमेवेति वाच्यम् । दण्डी पुरुष इति प्रत्यक्षे दण्डविशिष्टस्य दण्डोपहितस्य पुरुषस्य भानेऽपि पुरुषभानस्यावश्यकत्वेन दण्डी पुरुषोऽस्तीति प्रत्यक्षेण पुरुषोऽस्तीति वाक्यस्यानुवादकत्ववत्

---

* 'इ' मातृके अधिकपाठः    ६५A तै.सं.कां.२प्र.१ प.

प्रत्यक्षादावहङ्कारादिविशिष्टस्य तदुपहितस्यात्मस्वरूपस्य भानेऽपि वेदान्तवेद्यात्मस्वरूपभानस्यावश्यकत्वेन केवलात्मपरोक्तश्रुत्यनुवादकत्वस्य दुर्निवारत्वात् । किञ्चेश्वरप्रतियोगिकजीवधर्मिकभेदस्य प्रत्यक्षसिद्धत्वेऽपि जीवप्रतियोगिकेश्वरानुयोगिकभेदस्य प्रत्यक्षाप्राप्ततया तेभ्यो विलक्षण "अन्यदेव तद्विदितादथो अविदितादधि" उत्तमः पुरुषस्त्वन्य इत्यादेस्तादृशभेदपरत्वे न किञ्चिद्वाधकं पश्यामः ।

ननु अहमस्मीत्याद्यात्मसद्रूपत्वादिग्राहिप्रत्यक्षस्य सम्भावितदोषतया परप्रेमास्पदत्वाद्यनुमानस्य निर्दोषप्रमाणमूलत्वाभावेनाप्रयोजकतया स्वार्थसत्तानिश्चयप्रयोजकत्वाभावेन तदुपस्थितार्थप्रत्यायकत्वेऽपि न श्रुतीनामनुवादकत्वमिति चेन्न । जीवब्रह्मभेदावेदकश्रुतीनामप्युक्तन्यायेनानुवादकत्वस्यापि तुल्यत्वादिति । तस्मात्तत्त्वमसीत्यादिश्रुतीनां नोक्तजीवब्रह्मभेदपरश्रुतिविरोधित्वम् । जीवब्रह्मैक्यस्य ब्रह्मप्रपञ्चसम्बन्धस्येव मिथ्यात्वेन स्वनिषेधाविरोधित्वात् ।

नन्वेवं मुमुक्षुं तत्त्वजिज्ञासुं श्वेतकेतुं प्रति तत्त्वम्पदार्थयोर्जीवब्रह्मणोर्मिथ्याभूतमैक्यमुपदिशतः कथमाप्तत्वनिर्वाहः । कथं वा तज्ज्ञानस्य मोक्षसाधनत्वमिति चेन्न । तत्तेजोऽसृजतेत्यादिना मिथ्यासृष्ट्याद्युपदेशेऽप्युपदेष्टुराप्तत्ववत्तादृशैक्यस्योपदेशेऽपि तस्याबाधितब्रह्मतत्स्वरूपप्रतिपत्त्यर्थत्वेनोपदेष्टुस्तथात्वोपपत्तेः । सृष्ट्याद्युपलक्षितब्रह्मस्वरूपज्ञानवत् स्थूलारुन्धतीन्यायेन ऐक्यस्योपलक्षितजीवसन्निहितब्रह्मप्रतिपत्त्यर्थत्वसम्भवात् ।

किञ्च धर्मस्य मिथ्यात्वेऽपि धर्मभूतो वा दृष्टो वेत्यादेः तज्ज्ञानस्य स्वर्गादिश्रेयःसाधनत्ववत् जीवब्रह्मैक्यस्य मिथ्यात्वेऽपि न ज्ञानस्य मोक्षसाधनरूपश्रेयःसाधनत्वमपि विरुद्धं तत्प्रामाण्यवत् । प्रामाण्यञ्च अविरुद्धम् (प्रामाण्यं वा विरुद्धम्) । न हि कर्मब्रह्मकाण्डयोर्लेशतोऽपि विशेषोऽस्ति । येन मिथ्यासत्यवस्तुविषयत्वेन वैलक्षण्यं स्यात् । न च जीवस्य तद्गतब्रह्मात्मैक्यस्य च मिथ्यात्वे ब्रह्मभावलक्षणमोक्षस्य नित्यपुरुषार्थत्वानुपपत्तिरिति वाच्यम् । स्वर्गादेरिव मिथ्यात्वेऽपि पुरुषार्थत्वसम्भवात् । अविद्याया मिथ्यात्वेऽपि अनादित्ववत् ब्रह्मभावस्य मिथ्यात्वेऽपि नित्यत्वोपपत्तेश्च । न च मिथ्याभूतस्य ज्ञाननिवर्त्यत्वनियमोऽस्ति, मानाभावात् । सहचारमात्रदर्शनस्याप्रयोजकत्वात् । प्रतिपन्नोपाधौ निषेधप्रतियोगित्वस्यैव सत्यत्वविरोधि दृष्टभूतमिथ्यात्वरूपत्वेन ज्ञाननिवर्त्यत्वस्य मिथ्यात्वस्वरूपत्वे मानाभावात् । तस्मान्नित्यत्वमात्रपर्यवसायितया सत्यत्वाविरोधित्वात् अन्यथा मिथ्यात्वस्य पारिभाषिकत्वापत्तेः । तस्माद् ब्रह्मस्वरूपस्य जीवस्वरूपस्य तदैक्यस्य ब्रह्मचैतन्यनिष्ठतद्रूपनिषेधप्रतियोगित्वेन मिथ्यात्वापत्त्या तेजस्तिमिरादिभेदस्यापि तेजस्तिमिराद्यवच्छिन्नचैतन्यनिष्ठतद्रूपनिषेधप्रतियोगित्वं न मिथ्यात्वम् । तथाच तेजस्तिमिरादिपरस्परभेदप्रत्यक्षस्य तदैक्यानुमानबाधकत्ववत् जीवेश्वरभेदप्रत्यक्षस्य जीवब्रह्मैक्यानुमानबाधकत्वं दुर्वारमिति ।

## भेदधिक्कारकृदाक्षेपस्य समाधानम्—

किञ्च भेदधिक्कारकृदुक्तेऽन्तःकरणातिरिक्तोऽहमिति प्रतीयमानो जीवो न परस्माद्भिद्यते चेतनत्वात् पदार्थत्वाद्वा ब्रह्मवदित्यनुमाने पक्षे जीवशब्देन संसाराधारचैतन्योक्तौ साध्ये परशब्देन तदनाधार-चैतन्योक्तौ संसाराधारचैतन्यं संसारानाधारचैतन्यप्रतियोगिकभेदाभाववदिति प्रतिज्ञार्थः सम्पद्यते । स चायुक्तः परेण एतयोर्व्यावहारिकौपाधिकभेदस्वीकारात् । एकस्मिन्नेव संसाराधारत्वतदनाधारत्वयोर्विना तद्भेदस्यावश्यकत्वाच्च । तदनाधारशब्देन तदाधारभिन्नोक्तौ प्रतिज्ञाविरोधश्च । उभयत्रापि अविवक्षित-विशेषचैतन्यमात्रोक्तौ च सिद्धसाधनं पक्षसाध्ययोर्विशेषणं विनापि तत्सिद्ध्या तद्विशेषणवैयर्थ्यं च । किञ्च जीवशब्दमुख्यार्थस्योपहिततया साध्यगतपरशब्दलक्ष्यस्य वा अनुपहिततया तयोरभेदसाधने नाहमनुपहितः किन्त्वहङ्काराद्युपहित एवेत्यनन्यथासिद्धभेदप्रत्यक्षेण बाधः । पक्षेऽपि जीवशब्देन लक्षणयानुपहितचैतन्यस्यैव ग्रहणे सिद्धसाधनतादवस्थ्यं च । अपि चैवमुपहितस्य उपाधिनिवृत्त्य-वश्यम्भावेन पराभिमतजीवेश्वराभेदासिद्ध्या कथं नार्थान्तरता ।

"किञ्चान्तःकरणस्य जीवपदप्रवृत्तिनिमित्तत्वपक्षे तदतिरिक्तस्यैव जीवपदजन्यप्रतीतिविषयत्व-लाभात् तत्रैव स्वातन्त्र्येणोपस्थिते परप्रतियोगिकभेदाभावान्वयसम्भवेन शेषवैयर्थ्यम् । तद्विशिष्टस्यैव जीवशब्दार्थत्वपक्षे तस्यान्तःकरणातिरिक्तत्वाभावेन प्रतिज्ञाविरोधः" अन्तःकरणाद्युपहितस्यैव जीव-पदार्थत्वपक्षे तूपाधिभूते अन्तःकरणादौ जीवशब्दार्थत्वप्रसक्तेरेवाभावेन अन्तःकरणातिरिक्तत्वविशेषेण-वैयर्थ्यम् । "चिदचित्संवलनस्यैव जीवपदार्थत्वपक्षे चेतनत्वहेतोः स्वरूपासिद्धिः । द्वित्वादिवत् जीवत्वं चिदचिदंशयोर्व्यासज्य वर्तते इति पक्षेऽपि प्रतिज्ञाविरोधः" । अन्तःकरणातिरिक्तस्यैव जीवपदेनोक्तौ पक्षे प्रथमविशेषणवैयर्थ्यम् । जीवपदत्यागेनान्तःकरणातिरिक्तोऽहमिति प्रतीयमान इत्येव पक्षनिर्देशेऽपि आत्मान्तःकरणसम्बन्धादीनामपि पक्षत्वावारणेन तदंशे बाधः "अहमिति प्रतीयमानत्वमत्र अहम् इति प्रतीतिविशेष्यत्वं विवक्षितमिति चेत्, तथापि इतरेतरतद्धर्माध्यासे देहादेरपि तादृशप्रतीतिविशेष्यत्वेन दोषतादवस्थ्यात्" । अन्तःकरणं जडमात्रो लक्षणमिति चेत्, तथापि जडत्वावच्छिन्नं न परस्माद्भिद्यते इति प्रतिज्ञार्थः सम्बध्यते । *तत्र च जडभिन्नतया साध्यगतपरशब्दार्थस्यापि पक्षत्वापत्त्या तदंशे सिद्धसाधनात् । अनुस्यूतचैतन्यतया तस्याप्यहमिति प्रतीयमानत्वात् । किञ्च किं चेतनत्वं यद्धेतूक्रियते, न तावज्जातिः व्यक्तिभेदं विना जातित्वानुपपत्त्या विरुद्धत्वापत्तेः । नाप्युपाधिः अनिर्वचनात् । ज्ञान-समवायित्वं तदिति चेत् समवायानभ्युपगमात् । ज्ञानरूपत्वमपि तन्न । नैयायिकादीनाम् आत्मनो

---

* सम्पद्यते इति 'ड' पाठः

ज्ञानरूपत्वानभ्युपगमादन्यतरासिद्धेः । न परस्माद्भिद्यत इति साध्येऽपि आरोपिताभेदमादायार्थान्तरं पारमार्थिकत्वेन भेदाभावविशेषणेऽपि सिद्धसाधनताऽनिस्तारः । साध्यगतपरशब्दार्थस्यापि पक्षताव-च्छेदकेन सङ्ग्रहात् । सर्वा पृथिवी इतरभिन्नेतिवत् सर्वं जडभिन्नं न परस्माद्भिन्नमित्युद्देश्यप्रतीतेरसिद्ध्या सिद्धसाधनताऽवकाश इति चेत्तथाप्युक्तप्रत्यक्षबाधाद्यनिरासात् । प्रत्यक्षस्यारोपितौपाधिकभेदविषय-त्वेनानुमानस्य च तात्त्विकानौपाधिकजीवेश्वराभेदविषयतया भिन्नविषयत्वेन तयोर्बाध्यबाधकभाव एव नेति चेन्न । प्रत्यक्षस्य भिन्नविषयत्वकल्पनाया जीवेश्वरतात्त्विकानौपाधिकाभेदसिद्ध्यधीनत्वेनान्यो-न्याश्रयात् । अन्यथा यजमानः प्रस्तरान्न भिद्यते सोमो यागान्न भिद्यते पदार्थत्वात् यजमानादिवदि-त्यनुमानेन प्रस्तरयजमानाद्यभेदस्तात्त्विकोऽनौपाधिको वा सिध्येत् । यजमानः प्रस्तरो न, सोमो यागो नेति प्रत्यक्षस्यापि आरोपितौपाधिकतद्भेदविषयत्वेन भिन्नविषयतायाः सुवचत्वात् । पदार्थत्वमपि न, पदशक्यत्वं यद्वेत् क्रियते । अत्र घटादिना व्यभिचारात् । न हि जीवस्येव घटादेरपीश्वरेण पारमा-र्थिकाभेदः परेणाङ्गीकृतः भेदाभावो वा ।

किञ्च भेदाभावो यद्यात्मातिरिक्तः पारमार्थिकः तदाऽद्वैतहानिः । यद्यात्माऽनतिरिक्तः तदा सिद्ध-साधनम् । अपारमार्थिकश्चेत् तदाऽपि सिद्धसाधनमेव । किञ्चैवं दृष्टान्तस्य साधनवैकल्यं परमते ईश्वरा-त्मनः वाच्यत्वाभावात् । पदलक्ष्यत्वं चेत्पदार्थत्वं हेतुः । तदाप्यन्यतरासिद्धिश्च घटादावनैकान्त्यञ्च ।

किञ्च शक्यसम्बन्धस्यैव लक्षणात्वेन आत्मनोऽसङ्गैकस्वभावतया साधनवैकल्यापत्तिः । न च असङ्गश्रुतेः शक्तिरूपसम्बन्धविषयत्वम् । सङ्कोचकाभावात् अत एव पदवृत्तिविषयत्वं तदिति प्रत्यु-क्तम् । पदजन्यप्रतीतिविषयत्वमात्रस्य तत्त्वे शशविषाणादेरपि तथात्वेन व्यभिचारापत्तिः । एतेन अविद्याप्रतिबिम्बितं तदवच्छिन्नं वा अन्तःकरणप्रतिबिम्बितं तदवच्छिन्नं चैतन्यं वा जीव इत्यङ्गी-कारात् । अन्तःकरणातिरिक्तोऽहमिति प्रतीयमान इति वा जीव इति वा पक्षनिर्देशोऽत्राभिप्रेतः । न च प्रथमपक्षनिर्देशे विशेषणवैयर्थ्यम् । तस्योपरञ्जकत्वात् । अतो नोक्तरीत्या पक्षविशेषणवैयर्थ्यमिति निरस्तम् । तथाप्युक्तरीत्या बाधाद्यनिस्तारात् । अहमिति प्रतीयमानत्वमहमाकारप्रतीतिविषयमात्रं चेत् अन्तःकरणातिरिक्तेषु आत्मान्तःकरणसम्बन्धाकरणत्वतत्सम्बन्धेषु तदस्तीति कथं तदभेदसाधने कथं वा बाधानिस्तारः । अहन्त्वादिधर्माध्यासेऽहमाकारप्रतीतिविशेष्यत्वस्यापि देहादौ सत्त्वेन तत्राभेद-साधनेऽपि कथं बाधानिस्तारः ।

किञ्चाहमाकारप्रतीतेः साक्षित्वेन साक्षिणश्चैतन्यरूपतया चैतन्ये चैतन्यविषयत्वादेः कर्तृकर्म-भावविरोधेन परेणानभ्युपगमात् आश्रयासिद्धिः । अहमाकारवृत्तिरहमिति प्रतीतिः साक्षिचैतन्यातिरि-क्तेति पक्षेऽपि किं सा प्रमा उत भ्रमः । आद्येऽपि मनःकरणिकोत बहिरिन्द्रियकरणिका । नाद्यः । न प्रमाणं

मनोऽस्माकमिति वदता तदनभ्युपगमात् । न द्वितीयः । बहिरिन्द्रियस्य चैतन्यविशेष्यकप्रमितिजनकत्वाऽसम्भवात् । नाद्यद्वितीयौ । बाधकाभावेनाश्रयासिद्धिप्रसङ्गात् । अविवक्षितविशेषप्रतीतिसामान्यस्यैवावच्छेदकत्वेन प्रवेशाददोष इति चेन्न यावद्विशेषबाधेन प्रतीतिविषयत्वस्यैव दुर्लभतया तथाप्याश्रयासिद्ध्यनिस्तारात् । उक्तदोषानिस्ताराच्च । एतेनैवाहमिति प्रतीयमान इति वा जीव इति वा पक्षनिर्देशोऽत्राभिप्रेतः । अन्तःकरणातिरिक्त इति उभयत्राप्यावृत्या तन्त्रन्यायेन वा पक्षविशेषणमन्तःकरणातिरिक्तत्वं चेह जडातिरिक्तत्वं विवक्षितम् । अतो न जडांशमादाय बाधः । न च जडातिरिक्तत्वे सत्यहमिति प्रतीयमानत्वेन पक्षतावच्छेदकत्वेन साध्यगतपरशब्दार्थस्यापि क्रोडीकरणात् तदंशे सिद्धसाधनमिति वाच्यम् । पक्षतावच्छेदकनानात्व एवांशतो बाधांशतः सिद्धसाधनयोर्दोषत्वात् । प्रकृते च तदैक्येन तदनवकाशात् । किञ्च पक्षतावच्छेदकसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे सिद्धसाधनमेव नांशतः सिद्धसाधनम् । तथापीदमनुमानं सिद्धसाधनदोषदुष्टमिति चेत् । न । पक्षतावच्छेदकावच्छेदेन साध्यसिद्धेरुद्देश्यतया तदनवकाशादिति प्रत्युक्तम् । उक्तरीत्या बाधाश्रयासिद्ध्यादिदोषानिस्तारादिति ।

## जीवेश्वरयोरभेदप्रतिपादकमतान्तरनिरासः—

एतेनैवाहमिति प्रतीयमान अहमिति वर्तमानव्यवहारहेतुप्रतीतिगोचरः । जीवपदाभिधेयो जीवः परस्मान्न भिद्यते "अव्यक्तात्परो यः" असंसार्यात्मा तत्प्रतियोगिकभेदात्यन्ताभाववानित्यर्थः । एतच्च स्वरूपेणैव संसृज्यमानाधिकरणनिष्ठात्यन्ताभावप्रतियोगित्वं मिथ्यात्वमिति मतेनोक्तम् । अत्र कर्तृत्वादिधर्मिवाचकजीवपदवाच्यत्वमहमिति प्रतीयमानत्वं चास्ति सिद्धान्तेऽहङ्कारेऽपीति तस्य पक्षत्वे बाधः स्यात् । तस्यानात्मत्वेन कल्पितस्य कल्पितभेदाधिष्ठानत्वाभावेन तत्र तदत्यन्ताभावाभावात् । तद्वारणाय अन्तःकरणातिरिक्तेत्युक्तम् । अन्तःकरणातिरिक्तो जीव इत्येतावत्युक्ते "आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः" इति मते मुक्तजीवे सिद्धसाधनं परस्मिन्स्तत्प्रतियोगिकभेदाभावेन तदभिन्नजीवेऽपि तदभावात्, तन्निरासाय अहमिति प्रतीयमान इत्युक्तम् । तदपीश्वरे परमतेऽस्तीति तत्र सिद्धसाधनतावारणाय जीव इत्युक्तम् ।

स्वमते त्वन्तःकरणातिरिक्तोऽहमिति प्रतीयमान इत्येकः पक्षनिर्देशः । अन्तःकरणातिरिक्तो जीव इति चापरोऽभिप्रेतः । अत्रोक्तसाध्ये चेतनत्वादित्येव हेतुः । परप्रतियोगिकभेदाश्रयस्यानात्मवर्गस्य कल्पितस्य कल्पितभेदाधिष्ठानत्वाभावेन तत्र तदत्यन्ताभावाभावात् पदार्थत्वादित्यस्य व्यभिचारेणाहेतुत्वात् । तत्त्वमसीतिवाक्यस्थपदार्थत्वादिति वाऽयं हेतुर्विवक्षितः । ततश्चोक्तव्यभिचाराभावादयमपि हेतुर्भवत्येव । यन्मते सत्त्वावच्छिन्नत्वेनैवारोपितात्यन्ताभावो न स्वरूपेण । यन्मते चाधिष्ठा-

नमेवारोपितात्यन्ताभावस्तत्र मतद्वयेऽपि परप्रतियोगिकस्वानधिकरण वृत्त्यत्यन्ताभावप्रतियोगित्व-विशिष्टभेदवान्न भवतीति साध्यं विवक्षितम्। तत्र जीव इत्येव पक्षनिर्देशः यथाश्रुतः पदार्थत्वादित्यपि हेतुः घटादेरपि पक्षसमत्वेन व्यभिचाराभावात्। परप्रतियोगिकभेदवति जीवे स्वानधिकरणवृत्त्यत्य-न्ताभावप्रतियोगित्वरूपविशेषणाभावे पर्यवस्यति। अत्यन्ताभावप्रतियोगिनि भेदे स्वानधिकरण-वृत्त्यत्यन्ताभावप्रतियोगित्वरूपविशेषणाभावः अत्यन्ताभावे स्वानधिकरणवृत्तित्वरूपविशेषणाभावे पर्यवस्यति। परप्रतियोगिकजीवनिष्ठभेदात्यन्ताभावस्य च स्वानधिकरणवृत्तित्वाभावः स्वाधिकरण-मात्रवृत्तित्वेन वा स्ववैय्यधिकरण्यानधिकरणवृत्त्यधिष्ठानचैतन्यरूपत्वेन वा पर्यवस्यतीति मतद्वयाभि-मतमिथ्यात्वसिद्धिः। न चाधिष्ठानातिरिक्ताभाववादे जीवनिष्ठपरप्रतियोगिकभेदे स्वानधिकरणपरवृत्त्य-त्यन्ताभावप्रतियोगित्वरूपविशेषणसत्त्वेन तद्विशिष्टभेदाभावो बाधित इति वाच्यम्। तन्मते एकस्यैव भेदस्य विभागादिवद्धर्मिप्रतियोगिनिष्ठत्वेन परस्परप्रतियोगिकभेदानधिकरणत्वाभावात्। न चोक्तविशे-षणविशिष्टभेदस्योक्तमतद्वयाप्रसिद्धत्वेन तन्निषेधायोग इति वाच्यम्। भेदस्य प्रतियोग्यवृत्तित्वमते परप्रतियोगिकभेदस्य स्वानधिकरणपरवृत्त्यत्यन्ताभावप्रतियोगित्वविशिष्टस्य जीवजडप्रपञ्चयोः प्रसिद्ध-तया परप्रसिद्ध्या परो बोधनीय इति न्यायेन जीवे तन्निषेधोपपत्तेः। 'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्यादिना शून्यवादिमात्रसिद्धस्य असत्कारणत्वस्य निषेधात् वेदवदेव वेदविदां व्यवहारस्यापि पर-भ्रान्तिनिवृत्तिमात्रप्रयोजकत्वादित्यपि निरस्तम्।

मुक्तस्य ब्रह्ममात्रत्वेन जीवपदाभिधेयत्वरूपविशेषणाभावेन जीवपदेनैव मुक्तव्यावृत्तिसम्भवेन अहमिति प्रतीयमानत्वरूपपक्षविशेषणवैय्यर्थ्यात् जीवपदाभिधेयत्वस्योपलक्षणत्वमङ्गीकृत्याहमिति प्रतीयमानविशेषणसार्थक्योपपादनानौचित्यात्। अहमिति व्यवहारहेतुप्रतीतेः साक्षिरूपत्वेनाहमर्थस्य कर्तृकर्मत्वविरोधेन जीवचैतन्यस्य तद्विषयत्वरूपतद्गोचरत्वाभावेनाश्रयासिद्धेश्च। तेन तादृशप्रतीत्य-भिन्नत्वविवक्षायां मुक्तचैतन्यस्यापि तथात्वेन पक्षत्वापत्त्या सिद्धसाधनतादवस्थ्यात्। न च मुक्त-चैतन्यस्य तादृशव्यवहारहेतुत्वरूपविशेषणाभावेन विशिष्टाभावसत्त्वान्नोक्तदोष इति वाच्यम्। तथा सति सुषुप्तिप्रलयमूर्च्छाकालीनजीवस्यापक्षत्वापत्त्या तदा तत्र परभेदाभावासिद्धिप्रसङ्गात्।

किञ्च जीवशब्दाभिधेयस्य कर्तृत्वभोक्तृत्वादिविशिष्टस्य तदुपहितस्य वा विशिष्टानुपहितचैतन्या-द्भिन्नत्वेन तदभावसाधने बाधः। शुद्धचैतन्यस्य पराभिन्नत्वेनाभिमतस्य पक्षत्वे च तस्य जीवशब्दाभि-धेयत्वाभावेनाश्रयासिद्धिः। अपि चैवं चिन्मात्रस्य चिन्मात्राभिन्नसाधनपर्यवसानेन सिद्धसाधनताद-वस्थ्यम्।

किञ्च पक्षनिर्देशद्वयमविवक्षितमिति पक्षे पक्षैक्ये चान्तःकरणसम्बद्धात्मत्वं तच्चैतन्यसम्बद्धादेरपि पक्षत्वेन बाधतादवस्थ्यम् ।

अपि च किं साध्ये किं स्वरूपेण भेदनिषेधः साध्यते किं वा पारमार्थिकत्वाकारेण । नाद्यः, भेदस्वरूपस्य परीक्षितनिर्दोषसाक्षिप्रत्यक्षादिसिद्धत्वेन तत्स्वरूपनिषेधे बाधात् । निषेधस्य भेदस्वरूप-सहिष्णुत्वे चेदानीमिव मोक्षकालेऽपि भेदस्वरूपानुवृत्त्यापत्त्या विवादपर्यवसानात् । ब्रह्मवत् ब्रह्मजीव-भेदस्यापि अनन्ततायास्त्वयाऽनङ्गीकारात् । न च मोक्षकाले प्रत्यग्ब्रह्मैक्यज्ञानेन भेदनिवृत्तेर्नैवमिति वाच्यम् । इदानीमिव तदाऽपि भेदनिवृत्तेः ब्रह्ममात्रत्वेन तस्यैक्यज्ञानेनाऽपि घटादिवद्भेदविरोधित्वा-सम्पादनात् । सम्पादने वा तस्य विरुद्धत्वस्य ब्रह्मवत्पारमार्थिकत्वेऽद्वैतश्रुतिविरोधात् । ब्रह्ममात्रत्वे त्वस्यैक्यज्ञानसम्पाद्यत्वानुपपत्तेः । आरोपितस्यैक्यज्ञानसम्पाद्यत्वस्य मोक्षदशायां चैतन्यस्वरूपे-ऽनुपपत्तेः । तदारोपहेतोरविद्यादेर्दोषस्याभावादिति सङ्क्षेपः । न द्वितीयः । नेह नानास्ति किञ्चनेत्यादि-श्रुत्या स्वरूपेणैव भेदनिषेधेन पारमार्थिकत्वाकारेण तन्निषेधकल्पने मानाभावात् । भेदस्य स्वरूपे-णानिषेध्यत्वे ब्रह्मवत् तत्पारमार्थिकत्वस्य दुर्वारत्वात् । ब्रह्मण्यपि स्वरूपेणाऽनिषेध्यत्वातिरिक्तस्य पारमार्थिकत्वस्य असम्भवात् । नेह नानास्ति किञ्चनेत्यादिश्रुत्या किञ्चनशब्दोपात्तप्रपञ्चवत् तदुपात्त-ब्रह्मणोऽपि पारमार्थिकत्वाकारेण निषिद्धतया तस्यापि मिथ्यात्वापत्तेश्च । न हि किञ्चनशब्दस्य ब्रह्मव्यतिरिक्तपरत्वेन सङ्कोचकमस्ति । अन्यथा जीवब्रह्मतद्भेदव्यतिरिक्तत्वेनाऽपि सङ्कोचापत्तेः ।

किञ्च जीवेश्वरभेदादौ तत्समसत्ताकपारमार्थिकत्वस्यापि सत्त्वेन तद्विशिष्टनिषेधासम्भवेन तथाऽपि बाधावारणात् । किञ्च किं पारमार्थिकत्वं सद्विशिष्टभेदनिषेधः साध्यः । न तावत् स्वरूपेणाऽनिषेध्यत्वम् । तस्य भेदादौ सत्त्वेन तद्विशिष्टभेदनिषेधे साध्ये बाधात् । नापि सत्त्वेन अनिषेध्यत्वम् । सत्त्वस्यैव पारमार्थिकत्वरूपत्वेन आत्माश्रयात् । अन्यस्य सत्त्वस्य पारमार्थिकत्वस्य वा दुर्वचत्वात् । अनङ्गी-कारश्चेति ।

## जीवेश्वरभेदौपाधिकसाधकानुमाननिरासः—

एतेन जीवेश्वरभेदौपाधिकत्वसाधकानुमानमपि प्रत्युक्तम् । असिद्धेः । अप्रयोजकत्वाच्च । न च 'यथा ह्ययं ज्योतिरात्मे'त्यादिजीवेश्वरभेदौपाधिकत्वावेदकश्रुत्यप्रामाण्यप्रसङ्ग एव विपक्षबाधकस्तर्कः । अत एवोक्तजीवेश्वरभेदप्रत्यक्षादेरुक्तसिद्धौपाधिकतद्भेदविषयतया तेजस्तिमिरादिभेदप्रत्यक्षस्य नैतत् प्रत्यक्षसाम्यम् । अत एवोक्तजीवेश्वरभेदप्रत्यक्षस्य न तदौपाधिकत्वसाधकानुमानबाधकत्वम् । न वा तन्मिथ्यात्वानुमानबाधकत्वं प्रत्युतानुग्राहकत्वमेवेति वाच्यम् । एतच्छ्रुतेः जीवेश्वरभेदौपाधिकत्वपरत्वे

मानाभावात् । 'इदं सर्वं यदयमात्मा, सर्वं खल्विदं ब्रह्मे'त्यादिश्रुत्या जडेश्वरभेदस्य प्रमिततया 'यथा ह्ययं ज्योतिरात्मा विवस्वानि'त्यादिश्रुत्या प्रत्यक्षादिसिद्धजडेश्वरभेदस्यैवोपाधिकत्वावेदनेन तस्यास्तद्वे-दौपाधिकत्व एव तात्पर्यात् । न चैवं जडेश्वरातिरिक्तस्तद्भेदाद्युपाधिरेव क इति वाच्यम् । जीवेश्वरभेदौ-पाधिकत्वपक्षेऽपि जीवेश्वरातिरिक्तस्तद्भेदौपाधिरेव क इति प्रश्नस्य तुल्यत्वात् । तत्र जीवेश्वरातिरिक्त-जडात्मकाविद्यादिरेव तत्रोपाधिरिति उत्तरवदत्रापि जडेश्वरातिरिक्तश्चेतनो जीव एव जडेश्वरभेदादावुपाधि-रित्युत्तरसम्भवात् । न हि जडेश्वरयोः जीवेश्वरयोश्च ऐक्यपरश्रुतिसाम्ये तदैक्यविरोधिभेदतन्नियतधर्मा-वगाहिप्रत्यक्षादिमानम् । साम्ये च जीवेश्वरयोरैक्यमेव पारमार्थिकमानौपाधिकं च तद्भेदादिरेव जीवे-श्वरातिरिक्तजडोपाधिकः न तु जडेश्वरयोरैक्यम् । पारमार्थिकं स्वाभाविकं न वा तद्भेदादिः जडेश्वरा-तिरिक्तचेतनजीवोपाधिकः किन्तु स्वाभाविक एवेत्यत्र विशेषहेतुरस्ति ।

ननु 'कार्योपाधिरयं जीव' इत्यादि श्रुतिरेकस्यैवात्मनः कार्यकारणभूतान्तःकरणाविद्यारूपोपाधि-भेदेन जीवत्वेनेश्वरत्वेन च भेदमाहेति सैव विशेषहेतुरिति चेन्न, संसार्यसंसारिभेदेन पूर्णबोधापूर्ण-बोधभेदेन च परमार्थतो नानाचेतनवर्गे श्रुतावुपाधिशब्दस्यावच्छेदकपरतया कार्यरूपान्तःकरणाव-च्छिन्नश्चेतनवर्गो जीवपदार्थः कारणभूताविद्या माया प्रकृत्याद्यपरपर्यायशक्त्यवच्छिन्नश्चेतन ईश्वरपदार्थ इति जीवेश्वरपदार्थकथनमात्रपरतयोक्तश्रुतेः 'अस्मिञ्ज्योतिर्मण्डले प्रकृष्टप्रकाशश्चन्द्रः एवंविधं नक्षत्र-मश्विनीत्येवंविधं नक्षत्रं भरणी'त्यादि तद्भेदवाक्यस्य चन्द्रादिपदार्थकथनमात्रपरत्वेन तद्भेदौपाधिक-त्वयोरमानत्ववत् जीवेश्वरभेदतद्भेदौपाधिकत्वयोरमानत्वेन विशेषहेतुत्वायोगात् । 'कार्यकारणतां हित्वा' इति वाक्यशेषस्यापि पूर्णबोधापूर्णबोधश्चेति पदविभागाश्रयणेन अविवक्षितकार्यकारणोपाधिश्चेतनवर्गो विवक्षितपाकयाचनक्रियाद्युपाधिः पुरुषः देवदत्तादिमात्र एवावशिष्यते न तु पाचकयाचकपदार्थत्वेन इतिवत् पूर्णबोधापूर्णबोधमात्र एवावशिष्यते । न तु जीवेश्वरपदार्थत्वेनेत्येवं परत्वात् ।

## 'यथा ह्ययं ज्योतिरिति' श्रुतिः परमात्मभेदं वदतीति समर्थनम्—

वस्तुतस्तु 'यथा ह्ययं ज्योतिरि'तिश्रुतिर्न जीवेश्वरभेदस्य जडेश्वरभेदस्य चौपाधिकत्वमाह । किन्तु परमात्मभेदस्यैव, तथाहि— 'एकमेवाद्वितीयमि'त्यादिश्रुत्युक्तपरमात्मैक्यनिर्वाहाय युगपत् चेतना-चेतनात्मकानन्तनियम्यशरीररूपावच्छेदकभेदप्रयुक्तनियामकेश्वरानन्त्यप्रतीतियाथार्थ्यनिरासार्थं तन्नियामकेश्वरनानात्वस्यौपाधिकत्वमेव न स्वाभाविकमिति बोधयितुमियं श्रुतिः प्रवृत्ता । चेतना-चेतनजातस्येश्वरशरीरत्वं च 'यस्यात्मा शरीरं यस्य पृथिवी शरीरं यस्यापः शरीरमि'त्यादिश्रुतिष्वेव

प्रसिद्धम् । अत एव 'एक एव हि भूतात्मा, इन्द्रो मायाभिः पुरुरूप ईयते', इति श्रुत्योः 'दृश्यते जलचन्द्रवत् पुरुरूप ईयते' इतीश्वरनानात्वदर्शनोक्तिः सङ्गच्छते । न च 'देवः क्षेत्रेष्वेवमजोऽयमात्मे'-त्यविशेषेणात्ममात्रभेदस्यौपाधिकत्वप्रदर्शनेन स्वाभाविकात्मैक्यसिद्धिः । भेदस्यौपाधिकत्वे ऐक्यस्य स्वाभाविकत्वनियमादिति वाच्यम् । महारजनरक्ते पटे पटान्तराद्भेदस्य महारजनरूपोपाधिस्फुटज्ञाप्यत्वरूपोपाधिकत्वेऽपि तत्पटद्वयैक्यस्यैवाभावेन व्यभिचारात् ।

## मुख्यतः आत्मशब्दप्रयोगस्तु परमात्मन्येवेति सप्रमाणं निरूपणम्—

किञ्च 'देवः क्षेत्रेष्वि'ति श्रुतौ नाविशेषेणात्ममात्रभेदस्यौपाधिकत्वमुच्यते । किन्तु परमात्मभेदस्यैव आत्मशब्दस्य परमात्मन्येव योगरूढिभ्यां मुख्यत्वात् द्युभ्वाद्यधिकरणे [1]"तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ" इत्याद्युदाहृत्य परमात्मन्येवात्मशब्दस्य मुख्यत्वोक्तेश्च । वस्तुतः आत्मनः एकत्वे तत्र श्रुतौ तमिति विशेषणस्य एवेत्यवधारणस्य च वैयर्थ्यात् । प्रत्युतैकमात्मानं जानथ अन्या वाचो विमुञ्चथेत्येवोक्त्यापत्तेश्च ।

अपि च 'देवः क्षेत्रेष्वेवमजोऽयमात्मे'त्यत्रापि श्रुतावात्मशब्दमात्रोपादानेन अविशेषेण आत्ममात्रभेदस्यौपाधिकत्वसिद्धेः देव इति अज इति च विशेषणं व्यर्थम् । न च जीवात्मनः स्वत एव देवत्वमजत्वं वा सम्भवति ।

> द्रव्यं कर्म च कालश्च स्वभावो जीव एव च ।
> यदनुग्रहतः सन्ति न सन्ति यदुपेक्षया ॥
> [2]तमेव भान्तमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ।
> परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते ।

इत्यादिना जीवात्मस्वरूपतत्क्रीडादेः परमात्माधीनत्वावगमात् । व्युच्चरन्तीत्यादिना परमात्मनः सकाशात् जीवात्मनः उत्पत्यवगमाच्च । न चेयं श्रुतिः जीवात्मनो न स्वरूपोत्पत्तिमाह । तदनादित्वग्राहकप्रमाणविरोधापत्तेरिति वाच्यम् । उक्तश्रुतेः स्वकर्मार्जितभोगायतनसम्बन्धरूपोत्पत्त्यर्थकत्वेन तदविरोधोपपत्तेः । तथा च देवः अजः इति विशेषणबलादपि न तत्र आत्मशब्दार्थ आत्ममात्रम् । किन्तु परमात्मैव, तस्यैव तन्मुख्यार्थत्वाच्च । तथाच स्मृतिः—

---

1B. मुं.खं.२ मं.५ २. अथ.खं.४ मं.१२

**चेतनस्तु द्विधा प्रोक्तो जीव आत्मेति च प्रभो ।**
**जीवा ब्रह्मादयः प्रोक्ता आत्मैकस्तु जनार्दनः ।**
**इतरेष्वात्मशब्दस्तु सोपचारः प्रयुज्यते ॥ इति ॥**

न च बाधकं विना मुख्यार्थत्यागो युज्यते । एतेनात्मशब्दस्य देहादिष्वपि रूढेः देव इत्यादि-विशेषणस्य तद्व्यावर्तकत्वेनावैय्यर्थ्यमिति निरस्तम् । 'दथा ह्ययं ज्योतिरि'त्यादिश्रुतेः परमात्म-प्रकरणस्थत्वेन प्रकरणादेवात्मशब्दस्य परमात्मपरत्वनिर्णयेन ततो देहाद्यप्रसक्तेः । दृष्टान्तानुरोधेन दार्ष्टान्तिके एक इत्यनुषङ्गादपि देहादिव्यावृत्तिसिद्धेश्च । एवम् 'एक एव तु भूतात्मे'त्यत्रापि भूतात्मशब्देन परमात्मैवोच्यते । 'भूतात्मा भूतभावनः, त्रीन्लोकान् व्याप्य भूतात्मा' इति भूतात्मशब्दस्य परमात्मन्येव प्रसिद्धेः । 'इन्द्रो मायाभिरि'त्यत्र तु इन्द्रशब्दस्य परमेश्वरपरत्वं सुप्रसिद्धमेव । इन्द्रः परमेश्वरः मायाभिः स्वविमुखपरव्यामोहकस्वीयशक्तिभिः पुरुरूपः कृष्णरामाद्यवतारेषु मुग्धत्वविद्धत्वाद्यनेकावस्थापन्नः स्वविमुखैः प्रतीयते । कृष्णरामादयः परमेश्वरस्य अवतार इत्येतत् कुतः इत्यत आह 'युक्ता ह्यस्य हरयः शतादशे'ति । अस्येन्द्रस्य परमेश्वरस्य दशशता हरयः रामकृष्णाद्यवतारा युक्ता हि उपपन्नत्वेन प्रसिद्धाः इत्येतत् श्रुत्यर्थः । तथाच स्मृतिः—

**[1]एताः स्वांशकलाः पुंसः कृष्णस्तु भगवान्स्वयम् ॥**
**[2]दैवी ह्येषा गुणमयी मम माया दुरत्यया ।**
**मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ।**
**विद्धवन्मुग्धवच्चैव केशवो वेदनार्तवत् ।**
**प्रदर्शयति मोहाय दैत्यादीनां तथा हरिः ॥ इत्यादिः ।**

"कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः" इति श्रुतौ कार्यकारणशब्दौ भावप्रधानौ । वाक्यशेषे भावप्रत्ययान्तकार्यकारणशब्ददर्शनात् । तथा च कार्योपाधिरयमनुभवसिद्धोऽपूर्णबोधो जीवो जीव-शब्दार्थः कार्यत्वे सत्यात्मत्वमुपाधिः जीवशब्दप्रवृत्तिनिमित्तमिति यावत् । कारणोपाधिः पूर्णबोध ईश्वरशब्दार्थः । कारणत्वे सत्यात्मत्वमुपाधिः ईश्वरशब्दप्रवृत्तिनिमित्तमिति यावत् । जीवेश्वरात्मनोः कार्यकारणत्वे च व्युच्चरन्तीत्यादिश्रुतिसिद्धे ।

नन्वीश्वरात्मवत् जीवात्मनोऽपि स्वरूपेणानादित्वान्न मुख्योत्पत्तिः सम्भवति । अमुख्योत्पत्तिस्तु ईश्वरात्मनोऽपि तुल्या, 'सच्च त्यच्चाऽभवत्, सम्भवामि युगे युगे, तदात्मानं सृजाम्यहमि'त्यादि-श्रुतिस्मृतिभिः ईश्वरात्मनोऽप्यमुख्योत्पत्तिप्रतीतेः । एवं चामुख्यकार्यत्वे सत्यात्मत्वस्येश्वरात्मनि

१. भाग. १-३-२८ २. भ.गी. ७-१४

अतिप्रसक्तस्य कथं जीवशब्दप्रवृत्तिनिमित्तत्वम् । एवं यत्किञ्चित्कार्यं प्रति कारणत्वे सत्यात्मत्वस्य जीवात्मन्यतिप्रसक्तस्य कथमीश्वरशब्दप्रवृत्तिनिमित्तत्वम् । ततश्चोक्तप्रकारानुपपत्तेः अयमात्मा कार्योपाधिः सन् अन्तःकरणादिकार्यरूपस्वनिष्ठकार्यत्वादिरूपधर्मासञ्जकधर्मवान् सन् जीव इत्युच्यते । कारणोपाधिः सन्ननाद्यविद्यात्मककारणरूपस्वनिष्ठकारणत्वादिरूपधर्मासञ्जकधर्मवान् सन् ईश्वर इत्युच्यते इति प्रकारान्तरेणैव तदर्थोऽङ्गीकर्तव्यः ।

न चैवं वाक्यशेषे कार्यकारणशब्दयोः भावप्रधाननिर्देशानुपपत्तिरूपसञ्जातविरोधितया प्रथमश्रुतकार्यकारणशब्दरूपभवितृप्रधाननिर्देशस्यैव प्रबलत्वेन तदनुसारेणैव वाक्यशेषनिर्णयस्योचितत्वात् । अन्यथोपक्रमाधिकरणन्यायविरोध इति चेत् न । कार्योपाधिरित्यादि श्रुत्युक्तजीवेश्वरशब्दप्रवृत्तिनिमित्तशरीरप्रविष्टात्मत्वशब्देनापूर्णबोधत्वपूर्णबोधत्वयोः विवक्षिततयोक्तातिप्रसक्त्यनवकाशात् । अन्यथा अपूर्णबोधत्वपरस्यायमित्यस्य जीवशब्दप्रवृत्तिनिमित्तनिरुक्तिपरवाक्यगतस्येश्वरशब्दप्रवृत्तिनिमित्तनिरुक्तिपरवाक्यगतस्य पूर्णबोधत्वपरस्य पूर्णबोध इत्यस्य चैतच्छ्रुतावनुपादानप्रसङ्गात् । बोध इत्यनेन जड(डे) व्यावृत्तिसिद्धेः पूर्णशब्दसमभिव्याहारेण बोधशब्दस्य पूर्णबोधव्यावृत्त्यर्थत्वावश्यम्भावेन अयमित्यस्य अनुभवसिद्धापूर्णबोधार्थकत्वस्वीकारौचित्येन पूर्णबोधशब्दस्य तद्व्यावर्तकत्वलाभेन पूर्णपदसार्थक्यात् ।

न च अयमित्यस्य अनुभवसिद्धेदमर्थमात्रबोधनसमर्थस्य अपूर्णबोधत्वपरत्वे मानाभावः । अनाद्यनतिप्रसक्तप्रमाणसिद्धजीवेश्वरव्यवहारनिर्वाहायानतिप्रसक्तजीवेश्वरशब्दप्रवृत्तिनिमित्ते निर्वक्तुं प्रवृत्तैतच्छ्रुत्यन्यथानुपपत्तेरेव तत्र मानत्वात् । अयमित्यस्य सर्वं तदुपपादनाय अनुभवसिद्धाऽपूर्णबोधत्वबोधकगताया अपि सम्भवाच्च । न च जीवत्वेन व्यवह्रियमाणस्य अस्मदादेरपूर्णबोधत्वं नानुभवसिद्धम् । न चायमिति शब्दो न तद्बोधनसमर्थः । अयमित्यस्य सर्वनामविशेषत्वेन बुद्धिविशेषस्थप्रकारार्थत्वविशेषावच्छेदेन तत्तदर्थबोधनशक्तेः क्लृप्तत्वात् ।

यद्यपि पूर्णबोधत्वापूर्णबोधत्वे एव अनतिप्रसक्ते सम्भवतः तथाऽपि प्रवृत्तिनिमित्तत्वे तच्छक्तत्वेन ज्ञानपदजन्यप्रतीतिप्रकारताया एव नियामकत्वेन कार्यत्वादिविशेषितयोस्तयोरेव तथात्वेन तत्र गौरवस्याकिञ्चित्करत्वात् । अन्यथा पूर्ववर्तित्वस्यैवानतिप्रसक्ततया कारणशब्दप्रवृत्तिनिमित्तत्वापत्तेः । वस्तुतस्तु 'एतस्मादात्मनो व्युच्चरन्ती'ति श्रुतिसिद्धपरमात्मनिरूपितजीवगतकार्यत्वविशेषस्यैव जीवशब्दप्रवृत्तिनिमित्तशरीरान्तर्गतत्वेन नोक्तातिप्रसङ्गः । एवमेवैतच्छ्रुतिसिद्धजीवनिरूपितपरमात्मगतकारणविशेषस्य ईश्वरशब्दप्रवृत्तिनिमित्तशरीरप्रविष्टत्वेन ईश्वरशब्दप्रवृत्तिनिमित्तभूतोपाधावपि नोक्तातिप्रसङ्गः । अपि च परव्याख्याने जीवेश्वरशब्दप्रवृत्तिनिमित्तयोः उपाधिशब्दार्थस्य कार्यत्वकारणत्वा-

श्रयभूतस्य धर्मिणो बहुव्रीह्यर्थभूतसम्बन्धस्य च प्रविष्टत्वेनास्मदुक्तप्रवृत्तिनिमित्तापेक्षयाऽतिगौरवम् । तावताऽपि जीवेश्वरभेदस्य पराभिमतौपाधिकत्वासिद्धिश्च । जीवेश्वरभेदस्य स्वाभाविकत्वेऽपि कार्य-कारणभूतान्तःकरणाविद्यादेः स्वगतकार्यत्वकारणत्वरूपधर्ममात्रासञ्जकत्वेनापि उपाधित्वोपपत्तेः । न च विनिगमनाविरहेणान्तःकरणाविद्यादेः यावत्स्वगतधर्मासञ्जकत्वेनैवोपाधित्वमिति वाच्यम् । तथा सति वियदादिप्रपञ्चसृष्ट्यनुकूलेश्वरशक्तेरपि अविद्योपाधिकत्वापातात् । अविद्यायाः वियदादिप्रपञ्चो-पादानतया परैरपि तादृशशक्तिमत्वाङ्गीकारात् । न चेष्टापत्तिः 'पराऽस्य शक्तिर्विविधैव श्रूयते स्वाभाविकी'ति तत्स्वाभाविकत्वावेदकश्रुतिविरोधात् । किञ्चैवमविद्यायाः दृश्यत्व*जडत्वध्यास्तत्व-ज्ञाननिवर्त्यत्वादिरूपस्वधर्मासञ्जकत्वप्रसङ्गः । न च प्रत्यक्षतः प्रतीयमानयावद्धर्मासञ्जकत्वेनान्तः-करणाविद्यादेरुपाधित्वम् । एवं च जीवेश्वरभेदस्यापि प्रत्यक्षत्वेन तदुपाधिकत्वसिद्धिरिति वाच्यम् ।

अत्रानौपाधिकेश्वरनिष्ठजीवादिप्रतियोगिकभेदादिरूपधर्मस्य अस्मदादीन्प्रति अप्रत्यक्षत्वात् । ईश्वरं प्रति प्रत्यक्षत्वे च दर्पणाद्यौपाधिकमुखभेदं पश्यत इवाविद्यौपाधिकस्वगतजीवप्रतियोगिक-भेदादिकं पश्यत ईश्वरस्यापि भ्रान्तत्वप्रसङ्गात् ।

किञ्च तच्छ्रुतावप्यविशेषेण कार्यकारणयोरेवोपाधित्वप्रतिपादनात् कथं कार्यकारणशब्दाभ्या-मन्तःकरणाविद्ययोरेवोपाधित्वेन ग्रहणम् । न च जीवेशावाभासेन 'करोति माया च अविद्या च स्वयमेव भवती'त्यादिविशेषश्रुत्या अविद्यायास्तदुपाधित्वेन ग्रहणमिति वाच्यम् । 'एवमेवैषा माया स्वातिरिक्तानि परिपूर्णानि क्षेत्राणि दर्शयित्वा जीवेशावभासेन करोति माया चाविद्या च स्वयमेव भवती'त्यादिश्रुतेः । मायायाः क्षेत्रप्रदर्शनद्वारा तदभिमानि तन्नियन्तृरूपवास्तवजीवेश्वरगोचरप्रतिपत्यपरनामकाभास-हेतुत्वमात्रप्रतिपादनपरत्वेन तद्बलेन तस्यास्तदुपाधित्वेन ग्रहणायोगात् ।

## जीवेश्वरभेदे औपाधिकत्वाभावसमर्थनम्—

अपि चाविद्याजीवेश्वरभेदयोरनादित्वाविशेषे कथं तद्भेदोऽविद्योपाधिकः । उपाधिजन्यस्यैवौपा-धिकत्वात् । अन्यथात्मस्वरूपस्यैव तदुपाधिकत्वापत्तेः । न च तद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगिक-त्वेन तदुपाधिकत्वं जीवेश्वरभेदस्येति वाच्यम् । तथा सति कार्यमात्रस्य कारणौपाधिकत्वापत्तेः । न च स्वसमानजातीयधर्मवद्व्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वमेव तदुपाधिकत्वम् । तच्च स्फटिकलौहि-त्यादौ सुप्रसिद्धम् । एवं चाकाशभेदस्य स्वसमानजातीयभेदवद्घटमठव्यतिरेकप्रयुक्तव्यतिरेकप्रति-योगित्वेन तदुपाधिकत्ववन्मुखभेदस्य स्वसमानजातीयमुखभेदवद्दर्पणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगि-

* जडचिदध्यस्त्वेति 'आ' पाठः ।

त्वेन तदुपाधिकत्ववच्च, जीवेश्वरभेदस्यापि, तादृशभेदवदविद्यान्तःकरणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वेन तदुपाधिकत्वमिति वाच्यम् । एवं सत्यवयविगुणमात्रस्य तादृशावयवव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वेन तदुपाधिकत्वप्रसङ्गात् । न च स्वाश्रयत्वाभिमतनिष्ठात्यन्ताभावप्रतियोगित्वविशेषितमेतदेव तदुपाधिकत्वम् । त्वन्मतेऽवयव्याश्रितरूपादेर्मिथ्यात्वानुरोधेन अवयविनिष्ठात्यन्ताभावप्रतियोगितया स्वसमानजातीयरूपादिमद् अवयवव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगितया च तस्यापि तदुपाधिकत्वप्रसङ्गतादवस्थ्यात् । एतेन स्फटिकलौहित्यादिकमौपाधिकं तच्छौक्ल्यादिकं तु निरुपाधिकमित्यविगीतानतिप्रसक्तव्यवहारान्यथानुपपत्त्या स्वाश्रयत्वाभिमतावयवान्यत्वस्य स्वसमानजातीयधर्मवतो यो व्यतिरेकस्तत्प्रयुक्तव्यतिरेकप्रतियोगित्वादिरूपतया औपाधिकत्वं सर्वैरप्यङ्गीकर्तव्यमेवेति निरस्तम् ।

## जीवेश्वरभेदस्य औपाधिकत्वे प्रमाणाभावसमर्थनम्—

एवंविधौपाधिकत्वस्य जीवेश्वरभेदे मानाभावेनासिद्धेः । न हि जीवेश्वरभेदस्य तादृशाविद्यान्तःकरणव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वे स्वाश्रयत्वाभिमतनिष्ठात्यन्ताभावप्रतियोगित्वे च मानमस्ति । न च तत्र

**विभेदजनके ज्ञाने नाशमात्यन्तिकं गते ।**
**आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति ॥**

इत्यादि स्मृतिः 'नान्योऽतोऽस्ति द्रष्टा, नान्यत्र काचन भिदास्ति, नैवात्र काचन भिदास्ति । अत्र भिदामिव मन्यमानः शतधा सहस्रधा भिन्ना, मृत्योः स मृत्युमाप्नोति' इत्यादिश्रुतिर्मानमिति वाच्यम् । तत्स्मृतेर्विभेदजनके = भेदसंशयविपर्ययजनके ज्ञाने = विशेषदर्शनेन ब्रह्मत्वनियतधर्मदर्शनेन नाशमात्यन्तिकं गते = भेदसंशयविपर्ययाभिमतदृढतरसंस्कारेण सह निवृत्ते सति आत्मनः = कृष्णरामादि आत्मनो ब्रह्मणः = परब्रह्मणः सकाशात् भेदमसन्तं = संशयविपर्ययरूपभ्रमविषयत्वादविद्यमानं कः करिष्यति = तदापादकः कारणकलापः कोऽस्ति, न कोऽपि इत्येवमर्थपरतया जीवेश्वरभेदस्याविद्याव्यतिरेकप्रयुक्तव्यतिरेकप्रतियोगित्वे मानत्वासिद्धेः । नान्यतोऽस्ति द्रष्टेति श्रुतेरपि 'अतोऽन्यो द्रष्टा ना पुरुषोऽस्ती'त्येवमर्थपरतया जीवेश्वरभेदस्य स्वाश्रयत्वाभिमतनिष्ठात्यन्ताभावप्रतियोगित्वे मानत्वासिद्धेः ।

न च 'नान्यदतोऽस्ति द्रष्टृ'ति श्रुत्यन्तरानुरोधेनोक्तश्रुतेस्तन्निषेधपरत्वम् । आनन्दशब्दस्य नित्यपुल्लिङ्गत्वेऽपि 'नित्यं विज्ञानमानन्दं ब्रह्मे'त्यादिश्रुतौ नपुंसकत्वेन निर्देशवत् 'अन्योऽसावि'ति श्रुता-

वन्यशब्दस्य स्त्रीलिङ्गदेवताप्रतिपादकादशब्दविशेषणत्वेऽपि पुल्लिङ्गत्वेन निर्देशवच्च 'लिङ्गः सर्वनाम-नपुंसकमि'त्यभियुक्तैः शब्दस्वाभाव्याश्रयणेन नपुंसकत्वेन निर्दिष्टस्य द्रष्टित्यादेः सर्वलिङ्गशब्दविशेषणत्वसम्भवेन पुल्लिङ्गनृशब्दविशेषणत्वोपपत्तेः । तदनुरोधेन नान्योऽतोऽस्ति इत्यादि श्रुतेर्निषेधपरत्वायोगात् । अतो यदन्यद्रष्टृस्ति तन्न जीव इति द्रष्ट्रन्तरोद्देशेन जीवत्वविधानपरतया चैतच्छ्रुतेरपि भेदनिषेधपरत्वासिद्धेश्च ।

अन्यथा [1]"तद्विष्णोः परमं पदं सदा पश्यन्ति सूरय" इत्याद्यनेकपरमात्मद्रष्टृसदातनत्वावेदकश्रुतिविरोधात् । आर्ते दुःखिते चेतनवर्गेऽतोऽन्यदार्तमित्यादि परमात्मभिन्नत्वावेदकश्रुतिविरोधाच्च । न चैवं प्रत्यक्षादिप्रमाणप्राप्यर्थत्वेन नान्योऽतोऽस्ति द्रष्टा नान्यदतोऽस्ति द्रष्ट्रित्यादिश्रुतेरनुवादकत्वेन नोक्तार्थपरत्वमिति वाच्यम् । 'अभावप्रत्यक्षेऽधिकरणयोग्यत्वस्येव प्रतियोगियोग्यत्वस्यापि तन्त्रत्वं' इति मते ईश्वरस्य पिशाचादिवदयोग्यत्वेन तत्प्रतियोगिकान्योन्याभावस्य योग्यजीवात्मरूपाधिकरणनिष्ठत्वेऽपि अप्रत्यक्षत्वात् भेदसिद्धेः प्राग्विरुद्धधर्माधिकरणत्वादिरूपहेतूनामसिद्धत्वात् कथञ्चित्सिद्धत्वे वा अनुमानानामलौकिकार्थविषयाणां स्वतन्त्रप्रमाणानुग्रहं विना सम्भावकत्वेन स्वविषयानिश्चायकत्वात् । अन्यथा कार्यत्वाद्यनुमानप्राप्तेश्वरार्थत्वेन 'यतो वा इमानि भूतानि जायन्ते' इत्यादिश्रुतेरपि अनुवादकत्वापत्तेः ।

किञ्चानादिनित्यनिर्दोषश्रुतेः प्रत्यक्षादिमानान्तरप्रवृत्तिनैरपेक्षेणैव स्वविषयावेदकत्वध्रौव्ये कथमनुवादकत्वशङ्कावकाशः । अपि च प्रत्यक्षादीनां सम्भावितदोषत्वादिनातत्त्वावेदकत्वलक्षणप्रामाण्यमेव नेति स्वीकुर्वता कथं तत्प्रामार्थतया श्रुतेर्नित्यत्वेनासम्भावितदोषाया अत एव तत्त्वावेदिकाया अनुवादकत्वं शङ्क्येतापि अन्यथा घटोऽस्ति प्रकाशते इति प्रत्यक्षादिप्राप्तसच्चिदाद्यात्मकब्रह्मस्वरूपावेदिकायाः सत्यं ज्ञानमित्यादिश्रुतेरपि अनुवादकत्वापत्तिः । आद्यत्रयं ब्रह्मरूपमिति त्वत्सिद्धान्तात् । अपि च अहमस्मि प्रकाश इति प्रत्यक्षप्राप्तसत्यज्ञानस्वरूपब्रह्मजीवाभेदकत्वेऽपि अभ्यासरूपलिङ्गावधारिताभेदपरत्वनिर्वाहाय तत्त्वमस्यादिश्रुतेस्तत्त्वंपदलक्ष्यमानान्तराप्राप्तचिन्मात्राभेदार्थकत्वं यथा तव तथा ममापि नान्योतोऽस्ति द्रष्टेत्यादिपदलक्ष्यत्वान्यूनातिरिक्तार्थकप्रत्यक्षादिमानान्तराप्राप्तातःशब्दद्रष्टृशब्दार्थभूतचिन्मात्रभेदार्थकत्वमस्तु । अहमस्मि प्रकाश इति प्रत्यक्षस्यावच्छिन्नोपहितचिदभेदविषयत्ववत् ईश्वरादन्योऽहं द्रष्टास्मीति प्रत्यक्षस्याप्यवच्छिन्नोपहितचिद्भेदविषयत्वं तत्त्वमसीत्यादेरनवच्छिन्नानुपहितचिन्मात्रभेदार्थत्वाश्रयणेनापूर्वतालक्षणतात्पर्यलिङ्गसम्पादनवत् नान्योतोऽस्तीत्यादेरपि अनवच्छिन्नानुपहितचिन्मात्रभेदार्थकत्वाश्रयणेनापूर्वतालक्षणतात्पर्यलिङ्गः सम्पादनं समम् ।

---

१. तै.सं.कां.१ प्र.३ प.१

जीवेश्वरभेदस्योक्तप्रत्यक्षविषयत्ववत् तदभेदस्याप्युक्तप्रत्यक्षविषयत्वेन प्राप्तत्वतौल्ये तत्त्वमसीत्यभेदाभ्यासरूपतात्पर्यलिङ्गं विद्यमानमपि नादरणीयम् । 'अप्राप्ते शास्त्रमर्थवदि'ति न्यायाद्भवतीति स्वीकारविरोधात् । अन्यथा 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोकः' इति फलार्थवादरूपतात्पर्यलिङ्गसत्त्वात् । एतच्छ्रुतेरुक्तप्रत्यक्षादिप्राप्तेऽपि जीवेश्वरभेदे तात्पर्यापत्तिः । किं च 'यथा तव, सोऽयं देवदत्तः, प्रकृष्टप्रकाशश्चन्द्र' इत्यादेः मानान्तरसिद्धदेवदत्तचन्द्रस्वरूपमात्रपरत्वं तथा ममापि नान्योतोऽस्ति द्रष्टेत्यादेर्मानान्तरसिद्धजीवेश्वरभेदपरत्वमुपपद्यत इति अलम् ।

नन्वेवं भेदाभेदश्रुतिभ्यां विशेषहेत्वभावेन जीवेश्वरयोर्भेदाभेदसिद्धौ कथमत्यन्तभेदवादिनस्तवेष्टसिद्धिरिति चेत् न, तथात्वेऽत्यन्ताभेदवादिनस्तवापि कथमिष्टसिद्धिरिति साम्यात् । 'स आत्मा तत्त्वमसी'त्यादिश्रुतेस्त्वं सिंहोऽसीतिवत् तत्सदृशोऽसि अतत्वमसि तस्मात्त्वमसि तस्य त्वमसि तस्मिन् त्वमसि इत्याद्यनेकार्थत्वसन्देहग्रस्तत्वेन तदपेक्षया भेदश्रुतेरेव निश्चितैकार्थत्वरूपविशेषहेतुसम्पन्नत्वेनादर्तव्यत्वाच्चेति दिक् ।

'नात्र काचन भिदास्ती'ति श्रुतेरपि, अत्र = परमात्मनि काचन = कापि भिदा = भेदो नास्तीति = नैव । किन्तु काचन भिदा = जडजीवप्रतियोगिकभिदास्ति, अत्र = परमात्मनि भिदामिवालीकान्तरप्रतियोगिकभेदमलीकमपरमार्थं मन्यमानः शतधा सहस्रधा भिन्नो मृत्योः स मृत्युमाप्नोतीत्यर्थपरतया जीवेश्वरभेदनिषेधपरत्वे मानाभावाच्च । भेदनिषेधपरत्वेऽपि 'नेह नानेत्यादिश्रुतिवदस्याः स्वगतभेदनिषेधपरत्वोपपत्तेश्च' । नन्वेवं भेदनिषेधपरश्रुतीनां भेदश्रुतित्वेन योजनायामपि न मदिष्टसिद्धिहानिः । भेदश्रुतीनां नेह नानास्ति किञ्चनेति ब्रह्मणि भेदमात्रनिषेधाय प्रतियोगिभूतभेदप्रसञ्जकत्वात् । अत एवैवञ्जातीयकमेवाध्यारोपापवादन्यायविषय इत्युच्यते इति चेन्न । तत्त्वमसीत्याद्यभेदश्रुतीनामपि नेह नानास्ति किञ्चनेति ब्रह्मणि भेदमात्रनिषेधाय प्रतियोगिभूताभेदप्रसञ्जकत्वप्रसङ्गात् । श्वेतमालभेतेत्यादीनामपि न हिंस्यादिति निषेधाय प्रतियोगिभूतद्रव्यप्रसञ्जकत्वप्रसङ्गाच्च ।

ननु नेह नानास्ति किञ्चनेत्यादिना भिन्नं ब्रह्मणि किमपि नास्तीति विशिष्टं निषिध्यते । न तु अभिन्नमपि, जीवब्रह्मैक्यमिति चेत् न । तथाविधैक्यस्यापि कुतश्चिद्भिन्नत्वात् जीवब्रह्मणोरुभयोरपि अन्योन्यभेदाध्यासाधिष्ठानत्वेन भेदविशिष्टतया तयोरपि ब्रह्मणि नेह नानास्ति किञ्चनेति निषेधप्रसङ्गाच्च ।

न हि किञ्चनेति श्रुतेस्तदन्यपरत्वेन सङ्कोचकमस्तीत्युक्तमेव । न च जीवब्रह्मचैतन्यातिरेकेण तदैक्यं नाम किञ्चिदस्ति । सत्यमद्वैतहानेः । किञ्च नेह नानास्ति किञ्चनेति श्रुतिः ब्रह्मणि भिन्नं किमपि

नास्तीति नाह । किन्तु नाना विनेत्यर्थः । [1]"विनञ्भ्यां नानाञौ नसहेति स्मरणात् । तथा च सामर्थ्यादिहशब्दार्थस्यैव तृतीयान्तार्थत्वेन सम्बन्धात् । किञ्च जगत् इह *परब्रह्मणि । नाना न परमात्मना विना नास्तीति परमात्मा विनाभूतं तदायत्तमित्याह । न चैवं जगतोऽवृत्तित्वेनान्यथासिद्धौ न जगतः परमात्मायत्तत्वसिद्धिरिति वाच्यम् । तदवृत्तित्वस्य 'यस्मिन्द्यौरि'त्यादिश्रुतिविरुद्धत्वात् । तस्मादुक्तश्रुतीनाम् उक्तरीत्या जीवेश्वरभेदनिषेधपरत्वासम्भवेन न तद्भेदस्य स्वाश्रयत्वाभिमतनिष्ठात्यन्ताभावप्रतियोगित्वगर्भमौपाधिकत्वं युज्यते ।

किञ्च मोक्षदशायामपि अनादिसिद्धतयाऽनुवर्तमानजीवनिष्ठेश्वरादिप्रतियोगिकभेदस्य

**[2]आरभ्य कर्माणि गुणान्वितानि**
**भावांश्च सर्वान्विनियोजयेद्यः ।**
**तेषामभावे कृतकर्मनाशः**
**कर्मक्षये याति स तत्त्वतोऽन्यः ॥**
**अजो ह्येको जुषमाणोऽनु शेते**
**जहात्येनां भुक्तभोगामजोऽन्यः ।**

इत्यादिश्रुत्या तात्त्विकत्वेनावेदितस्यान्तःकरणाद्यौपाधिकत्वानुपपत्तेः । 'उदरमन्तरं [3]कुरुतेऽथ तस्य भयं भवती'त्यादिश्रुत्या जीवेश्वरयोरुदरमल्पमौपाधिकमन्तरं भेदं यः कुरुते तस्य भयं भवतीत्यौपाधिकतद्भेदं जानतो भयावेदनाच्च ।

अपि च जीवेश्वरभेदस्यौपाधिकत्वे तज्ज्ञानस्य भ्रमत्वेन मोक्षसाधनत्वाभावप्रसङ्गः । न च तस्य मोक्षसाधनत्वे मानाभावः । 'ज्ञाज्ञौ द्वावजावीशानीशौ । अनीशश्चात्मा मुह्यते भोक्तृभावात् । [4]अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः । पृथगात्मानं प्रेरितारं च मत्वा जुष्टस्ततस्तेनामृतत्वमेति । जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमेति वीतशोकः' इत्यादिश्रुतेस्तत्र मानत्वात् । न च भेदज्ञानस्य [5]"मृत्योः स मृत्युमाप्नोति, य इह नानेव पश्यति । ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद । क्षत्रं तं परादाद्योऽन्यत्रात्मनः क्षत्रं वेद सर्वतं परादायोऽन्यत्रात्मनः सर्वं वेद । [6]अथ योऽन्यां देवतामुपास्तेऽन्योसावन्योऽहमस्मीति न स वेद यथा पशुरित्यादिश्रुतिभिर्मृत्युप्राप्त्याद्यनिष्टफलत्वप्रतिपादनात्कथमेतदिति वाच्यम् । [7]मृत्योः स मृत्युमाप्नोतीति श्रुतेरिवशब्दस्यालीकार्थत्वेनोपमानार्थत्वेन

---

* परमात्मनि इति 'आ' पाठः  १. पा.सू. ५-२-२७  २. श्वेता. ६-४  ३. तै.उ.प्र.२ प्र.७
४. श्वेता.१-७  ५. बृह. ४-५-७  ६. बृह. १-४-१०  ७. कठ. ४-१०

वा ब्रह्मणि कल्पितनानावस्तुदर्शननिन्दापरत्वात् । ब्रह्म तं परादादित्यादिश्रुतेरपि ब्रह्मजात्यादेः सर्वस्य मुख्यतो ब्रह्माश्रितत्वं त्यक्त्वान्यश्रितत्वदर्शननिन्दापरत्वात् । अन्यथाऽन्यत्रेति सप्तम्यनुपपत्तेः । अन्यत्रेत्यस्यान्यदिति विभक्तिविपरिणामे मानाभावाच्च । अथ योऽन्यां देवतामुपास्ते अन्योसावन्योऽहमस्मीति स न वेद यथा पशुरिति श्रुतेरपि त्वद्रीत्या भेदोपासननिन्दामुखेनोदितहोमनिन्दायास्तन्निन्दामुखेनानुदितहोमस्तुतिपरत्ववदभेदोपासनास्तुतिपरत्वान्मद्रीत्याप्युपासनाकारप्रदर्शनपूर्वकं परदेवतापेक्षयाऽन्यदेवतोपासको यस्तन्निन्दापरत्वोपपत्तेश्च ।

तथा च स्मृतिः—

"वासुदेवं परित्यज्य योऽन्यदेवमुपासते ।
तृषितो जाह्नवीतीरे कूपं खनति दुर्मतिः ॥" इति ॥

## जीवेश्वरादिभेदस्य मायोपाधिकत्वनिरासः—

ननु 'मायामात्रमिदं द्वैतमद्वैतं परमार्थतः' इत्यादिश्रुत्या जीवेश्वरादिभेदस्य मायोपाधिकत्वावगमात् कथं तद्भेदस्यौपाधिकत्वाभावोऽभ्युपेयते इति चेदित्थम् । तद्भेदस्यौपाधिकत्वं तावत् न पदार्थो नापि वाक्यार्थ इत्यविवादम् । तद्भेदस्य मायामात्रत्वं तु श्रुतं तच्च मायाशब्दार्थाभिन्नत्वेन वा तदसाधारणकारणत्वेन वा तज्ज्ञाप्यत्वेन वेति विषये तद्भेदोपाधिकत्ववादिना तद्भेदस्य स्वत एवोपाधिभूतमायाशब्दार्थाभिन्नत्वं वा तज्जन्यत्वं वा न स्वीक्रियत इति परिशेषात् तज्ज्ञाप्यत्वमेव स्वीकारार्हतया स्वीकार्यम् । तच्च महारजनस्थे पटे विद्यमानपटान्तरभेदवत् जीवेश्वरादिभेदस्य स्वाभाविकत्वेऽप्यविरुद्धमिति मात्रशब्दस्य व्याप्त्यर्थत्वाश्रयणे च द्वैतस्य मायाव्याप्तत्वमर्थो भवति सोऽपि नानिष्टकारीति ।

ननु मायाव्याप्तस्य तज्ज्ञाप्यस्य च गजतुरगादेः लोके मिथ्यात्वदर्शनात् तद्वद्वैतप्रपञ्चमात्रस्य मिथ्यात्वं दुर्वारमिति चेन्न, मायाशब्दस्य मिथ्यार्थकत्वेन प्रसिद्धत्वात् मिथ्याभूतस्य च शशविषाणादेः शुक्तिरूप्यादेश्च केवलान्वव्यत्यन्ताभावप्रतियोगित्वनियमेन वृत्तिमतो द्वैतप्रपञ्चस्य मायाशब्दार्थभूतसन्निरूपसामानाधिकरण्यासम्भवेन तद्गर्भव्याप्त्यसम्भवात् मिथ्याभूतप्रतिबिम्बसवितृसुषिरादिज्ञाप्यस्यापि सत्यप्रतिबिम्बानिष्टादेर्मिथ्यात्वादर्शनाच्च । अत द्वैतप्रपञ्चमिथ्यात्वे तत्र मिथ्यार्थप्रसिद्धमायाशब्दप्रयोग (एवैतच्छ्रुतिस्थः) तदन्यथानुपपत्तिश्च मानमिति परास्तम् । स्वतोऽपि सर्वस्वातन्त्र्यरहिते देवदत्त इव परमेश्वराधीनतया सर्वस्वातन्त्र्यरहिते देवदत्त इव परमेश्वराधीनतया सर्वस्वातन्त्र्यरहिते द्वैतप्रपञ्चेऽपि मिथ्याशब्दपर्यायमायाशब्दप्रयोगोपपत्तेः । मायाशब्दस्याभियुक्तैः सत्यभूतमणिमन्त्रौषधादिष्वपि प्रयोगात् मिथ्यामात्रार्थत्वासिद्धेश्च । एतेन 'माया चाविद्या च स्वयमेव भवती'ति श्रुत्या

मायाविद्ययोरभेदावेदनात् तत्रैव मायाशब्दो मुख्यः मिथ्याभूतानिर्वाच्याविद्यया मायिकगजतुरगादिकार्ये कर्तव्ये शुक्तिरूप्यगजादिभ्रमरूपकार्ये कर्तव्ये जाग्रत्सुषुप्त्यवस्थयोरिव मणिमन्त्रादीनां सहकारित्वेन तेषु तत्प्रयोग औपचारिकः । एवं च विमतौ जीवेश्वरभेदौ मिथ्या अविद्यानियतप्रतिभासत्वात् शुक्तिरूप्या-दिवदित्यनुमानं तन्मिथ्यात्वे मानमिति निरस्तम् ।

एतावन्तं कालं शून्यज्ञानमासीदिति प्रत्यक्षेण तम आसीदिति श्रुत्या चाविद्यायाः सत्यत्वावेदनेन तन्मिथ्यात्वाद्यसिद्धेः । 'माया चाविद्या च स्वयमेव भवती'ति मायाविद्याशब्दार्थस्यानन्योपाधिकत्वस्यैव श्रवणाच्च । अन्यदुपासकमन्तरं बभूवेत्यादितत्सत्यत्वावेदकश्रुत्यन्तराच्च । अविद्यानियतप्रतिभासत्वं च चैतन्य एव व्यभिचारीति । न च मुक्तिदशायां चैतन्यभाने मानमस्ति । 'अत्रायं पुरुषः स्वयं ज्योतिरि'ति श्रुत्या सुप्तिदशायामेव स्वप्रकाशत्वावेदनात् । अन्यथात्रेति श्रौतविशेषणवैयर्थ्यात् ।

अपि च पूर्ववाक्ये 'स्वप्नमाया सरूपे'ति सृष्टिरन्यैर्विकल्पितेति सृज्यस्य वियदादेः स्वप्नमायास-रूपत्वं मतान्तरत्वेनोक्त्वा 'इच्छामात्रं प्रभोः सृष्टिरि'ति सृष्टौ विनिश्चिता इतीश्वरेच्छायत्तत्वोक्तेरुत्तरत्र मायाशब्देनेश्वरेच्छाया एव ग्रहणमुचितम् । एवं च मायामात्रमित्येकदेशप्रत्यभिज्ञानमपि सङ्गच्छते । न च स्वप्नमायासरूपेति पूर्वोक्त मायाया एवोत्तरत्र मायामात्रमिति वाक्ये मायाशब्देन प्रत्यभिज्ञानात् तेनेश्वरेच्छालाभ इति वाच्यम् । स्वप्नमाया सरूपेत्यत्र मायाशब्देन मिथ्यार्थविशेषग्रहणेऽपि माया-मात्रमित्यत्रेश्वरेच्छाया एव ग्रहणात् (ग्राह्यत्वात्) । अन्यथा सृज्यस्य वियदादिप्रपञ्चस्य द्वैतप्रपञ्चस्य मिथ्याशब्दापरपर्यायमायाशब्दशक्यार्थरूपत्वे तस्य तथात्वं मतान्तरत्वेनोद्भाव्य तत्रैव श्रुतौ स्वमत-त्वेनेच्छामात्रं प्रभोः सृष्टिरिति जगदेक इवेश्वरेच्छायत्तत्वोक्त्ययोगात् मतभेदानुपलम्भात् । अपि च लोके कार्यानुसारेण क्वचित्पुरुषे मायावित्वं निश्चित्यासावतीव समर्थ इति व्यवहारदर्शनात् वेदेऽपि 'तान्यज्ञस्य मायया सवनिव यजामहे' इत्यादौ सामर्थ्येऽपि मायाशब्दप्रयोगाच्च । श्रुतिमतनिर्वाहाय मायामात्रमिति मायाशब्देनेश्वरसामर्थ्यविशेष एव स्वीकर्तुं युक्तः ।

यद्यपि माया तत्र न कर्तव्या मायायैरेव निर्मितेत्यादौ वञ्चनायामपि मायाशब्दप्रयोगः दृष्टः । तथापि तस्याः प्रकृतवाक्यार्थानानुगुण्यात् मायाशब्देनाग्रहणम् । अत एव प्रकृतमायाशब्दार्थत्वेन 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति श्रुत्युक्तप्रकृतिरपि न भवति । अत्रापि श्रुतौ प्रकृतिशब्देन जग-त्कारणविशेषो वा तत्सृष्टिस्थितिलयानुकूलज्ञानेच्छाक्रियात्मकस्वभावविशेषो वा वाच्यः । तत्राद्यार्थो न प्रकृते मायाशब्देन विवक्षितः । आवाभ्यां जीवेश्वरभेदस्य कार्यविशेषत्वानभ्युपगमात् । द्वितीयार्थविव-क्षायां तु न नो हानिः काचित् । द्वैतप्रपञ्चस्थितेश्वराधीनताङ्गीकारात् । अत एव 'अस्मान् मायी सृजते'

विश्वमेतत्तस्मिंश्चान्यो मायया सन्निरुद्ध इति श्रुत्यन्तरे भेदविशिष्टजीवात्मनो मायाशब्दितेश्वरेच्छाधीन-स्थितिकत्वमुक्तमुपपद्यते । अत्र श्रुतौ सृजत इत्युपलक्षणम् । तेन स्थापयति संहरति चेति तच्छ्रुत्यर्थः । तथा चायमर्थो मायामात्रमिदं द्वैतमित्यस्येश्वरेच्छाधीनो द्वैतप्रपञ्चोऽयमतश्चाद्वैतमप्रतिद्वन्द्विरस्वनिवर्तन-क्षमविरोधिशून्यपरमेश्वरेच्छायत्तोऽयं द्वैतप्रपञ्चो न केनापि विरोधिनाऽन्यथयितुं शक्य इति । अयमर्थो नालीक इत्याह— परमार्थत इति । सत्योपाधिकृतसत्यभेदवादिमतनिरासाय ह्ययं श्लोकः ।

## 'प्रपञ्चो यदि विद्येत' इत्यादिश्रुत्यर्थवर्णनम्—

**[1]प्रपञ्चो यदि विद्येत निवर्तेत न संशयः ।**
**मायामात्रमिदं द्वैतमद्वैतं परमार्थतः ॥ इति ।**

अत्र भेदप्रपञ्चस्योत्तरार्धेनागमापायरहितस्वतन्त्रेश्वरेच्छायत्तत्वोक्त्या स्वातन्त्र्यनिरासः कृतः । पूर्वार्धेन तादृशेश्वरेच्छानियतत्वव्यतिरेकेणागमापायाद्यन्योपाध्यधीनत्वनिरासः क्रियते । तथाहि— प्रपञ्चो भेदप्रपञ्चो यदि विद्येत सन् स्यात् । यद्यागमापाय्यन्योपाध्यधीनस्थितिक स्यादिति यावत् । निवर्तेत न संशयः । तथाविधोपाधिनिवृत्त्या निवृत्तेरवश्यम्भावेनान्योन्याभावापरनामकभेदप्रपञ्च-निवृत्तेरवश्यम्भावात् । न च निवर्तते, तस्मान्न विद्यते । न तादृशोपाध्यधीनस्थितिकः इति । एवं तर्हि किं भेदप्रपञ्चस्वतन्त्र एवेति शङ्कानिरासायेश्वराधीन एवेति प्रतिपादनायोत्तरार्ध इति विवेक इति । एवं च

**[2]विकल्पो निवर्तेत कल्पितो यदि केनचित् ।**
**उपदेशादयं वादो ज्ञाते द्वैतं न विद्यते ।**

इत्युत्तरश्लोको मायावादमतनिरासक इति सङ्गच्छते । मायावादमतनिरासे, पूर्वश्लोकासङ्गतः । न हि तन्मते प्रपञ्चो यदि विद्येत सत् स्यात् तर्हि निवर्तेति तर्काकारप्रदर्शनपरपूर्वश्लोकपूर्वार्धः सम्भव-दर्थको योजयितुं शक्यः सतो ब्रह्मणो निवृत्त्यभावेन व्यभिचारात् । न च विद्येतेत्यस्य ज्ञानरूपे लाभरूपे वा अर्थान्तरे घटं नास्ति । उत्तरश्लोकस्य त्वयमर्थः— विकल्पो = विविधाकारः प्रपञ्चो यदि केनचित् । अविद्यारूपदोषेण कल्पितः = आरोपितः स्यात् तर्हि निवर्तेत = शुक्तिरूप्यवत् । न च निवर्तते तस्मान्न केनचित् कल्पित इति । नन्वेवं तर्हि कुतोऽयं मायावादः आरोपित[3] मायिनां प्रपञ्च आरोपितः इति प्रवाद इत्यत आह **उपदेशादिति** । परम्परागतस्वगृहगोष्ठीत इत्यर्थः । विशेषदर्शने सति कथमेतादृशोपदेश-प्रवृत्तिरित्यत आह **ज्ञात इति** । ज्ञाते सति विश्वं सत्यं, यच्चिकेत सत्यमित्, याथातथ्यतोऽर्थान् व्यदधात् शाश्वतीभ्यः,

---

१. आगम. १७ २. आगम. १८ ३. मायिनां प्रपञ्च आरोपितः

[1]असत्यमप्रतिष्ठन्ते जगदाहुरनीश्वरम् ।
अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ॥

[2]एतान्दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽहिताः ॥

वियदादिः विमतो वा प्रपञ्चः परमार्थसत् प्रामाणिकत्वात् अर्थक्रियासमर्थत्वाद्वा ब्रह्मवत् सत्यकामः इत्यादि श्रुतिप्रतिपन्नेश्वरसत्यकामत्वादन्यथा अनुपपत्तेः । घट सन्नित्यादि श्रुतिस्मृत्यनुमानार्थापत्तिपरीक्षितप्रत्यक्षैः अस्मिन् प्रपञ्चे अबाध्यत्वेन प्रमिते सति अद्वैतम् । अद्वैतवादः प्रपञ्चविषयकारोपितत्ववादो न विद्यते । न स्वात्मानं लभते । न हि विशेषादर्शनात् प्राक् प्रवर्तमानो यादृशतादृशव्यवहारः सति विशेषदर्शने प्रवर्तमानो दृष्टचर इति ।

## 'प्रपञ्चो यदि'त्यादिश्लोकस्य सत्योपाधिकृतसत्यजीवेश्वरादिभेदाभ्युपगन्तृनिष्ठापादकतर्काकारपरत्वसमर्थनम्—

ननु प्रपञ्चो यदि विद्येतेति श्लोकोऽयं सत्योपाधिकृतसत्यजीवेश्वरादिभेदाभ्युपगन्तुरिष्टापादकतर्काकारप्रदर्शनपर इति कथमवसीयत इति चेत्, इत्थं— यद्ययं तादृशतर्काकारप्रदर्शनपरो न स्यात् तदा श्लोके लिङ्द्वयं यदिशब्दः नित्यसम्बन्धात्तदनुमितस्तर्हिशब्दश्च अनुपपन्नः स्यादिति । अविद्यान्तःकरणरूपोपाधिनिवृत्तावपि जीवेश्वरादिभेदप्रपञ्चो यदि न निवर्तेत तदैव विपर्यये पर्यवसानात् सत्तर्कोऽयं स्यात् । तदेव कुत इति चेत् । जपाकुसुमाद्युपाधिनिवृत्तौ तदुपाधिकस्फटिकलौहित्यादिवत् घटाद्याकारापरोक्षवृत्त्या तदज्ञानरूपोपाधिनिवृत्तावपि घटपटादिपरस्परभिन्नप्रपञ्चनिवृत्त्यदर्शनात् । न चान्यस्य भेदोपाधित्वे मानमस्ति येनेदानीं तन्निवृत्त्यभावादेव न भेदनिवृत्तिरिति वचनावकाशः स्यात् । एतेनान्तःकरणमेव जीवेश्वरभेदोपाधिरिति प्रत्यूढं, सुप्तावन्तःकरणस्य विलयेऽपि जीवेश्वरभेदस्य सत्त्वेन तदुपाधिकत्वायोगात्तदुपाधिकत्वे च भेदस्य तन्निवृत्त्यानिवृत्त्यापत्तेः । न च सुप्तावपि संस्कारात्मतां अन्तःकरणमस्तीति वाच्यम् । त्वयैव कार्यकारणयोर्भेदाङ्गीकारात् । अन्यथा परमाणूनामपि घटत्वाद्यापत्तेः । न चान्तःकरणस्य या संस्कारावस्था सैव भेदे जाग्रदाद्यवस्था अनुगतोपाधिः सम्भवतीति वाच्यम् । तथा सति जाग्रदाद्यवस्थायामिव सुप्तावस्थायामपि तदुपाधिरूपसामग्रीसत्त्वेन जीवेश्वरभेदादिप्रतीतिव्यवहारप्रसङ्गात् । न हि जाग्रदवस्थायामपि जीवेश्वरादिभेदानुभवः साक्ष्यतिरिक्तः । न च सुप्तौ साक्ष्यनुभवो वा संस्कारावस्थापन्नान्तःकरणाद्यौपाधिकजीवेश्वरादिभेदो वा नास्तीति शक्यमभ्युपगन्तुम् । ननु तवाप्ययं

१. भ.गी. १६-१८  २. भ.गी. १६-९

दोषस्तुल्य इति चेन्न। त्वयेव मया जीवेश्वरभेदादेः प्रतियोगिविशिष्टस्य स्थितिज्ञप्तिनिर्वाहाय तथा तादृशान्तःकरणाद्यौपाधिकत्वास्वीकारात्। न च त्वन्मते जपाकुसुमाद्यौपाधिकमपि स्फटिकलौहित्यमप्रतीतिदशायां तत्रास्तीत्यत्र किञ्चिन्मानमस्ति। येन जीवेश्वरभेदादेः सुप्तिदशायां प्रतीतावन्तःकरणाद्युपाधिवशादवस्थानमुपपद्येत। मम तु जीवेश्वरभेदादेः स्वाभाविकस्यैव नित्यसाक्षिभास्यत्वेऽपि विषयतानियामकप्रतियोगिज्ञानाद्यभावात् सुप्तावभानमुपपद्यत इति।

ननु मास्तु तदा जीवेश्वरभेदादिप्रतीतिरिति चेत् न, तथा सति स्फटिकलौहित्यवत् जीवेश्वरभेदादेः प्रतीतिकाल एवोत्पत्तिप्रसङ्गात् सुप्तावप्रतीयमानतया जीवेश्वरभेदादेरसत्त्वेन सुप्तस्य सर्वज्ञब्रह्माभिन्नत्वेन सर्वार्थोल्लेखिदृग्रूपत्वप्रसङ्गाच्च। न च ज्ञेयब्रह्मणः सर्वदृक्त्वे मानाभावः। 'तुरीयं तत्सर्वदृक् सदे'ति श्रुतेरेव तत्र मानत्वात्। तुरीयशब्दस्वारस्येन निर्विशेषस्यैव ज्ञेयब्रह्मणः तत्र ग्राह्यत्वादित्यलं पल्लवेन। तस्मान्न च निवर्तते। तस्माज्जीवेश्वरभेदादिर्नाविद्यान्तःकरणादिरूपोपाधिकृत इति न संशय इति विपर्ययपर्यवसानसम्भवेन प्रपञ्चो यदि विद्येतेति पूर्वश्लोकपूर्वार्धस्य जीवेश्वरभेदाद्यौपाधिकत्वनिरासकतर्कपरत्वमव्याहतप्रसरमिति। अन्यथा तत्र तर्काभिनयपरयदिशब्दस्य विद्येत निवर्तेतेति च आपाद्यापादकोद्भावेन परलिङ्गद्वयस्य वैयर्थ्यं स्यादिति उक्तमेव।

## जीवेश्वरभेदस्य मुक्तिदशायामपि निरुपाधिकत्वसमर्थनम्—

अपि च मुक्तिदशायामौपाधिकत्वे जीवेश्वरभेदादेरविद्याद्युपाधिनिवृत्त्या निवृत्त्यवश्यम्भावे कथं 'ब्रह्मविदाप्नोति परमि'त्यादिश्रुत्युक्तभेदाविनाभूतो ब्रह्मप्राप्तिरुपपद्यते तदविनाभूतसर्वकामावाप्तिस्तदविनाभूतब्रह्मसाहित्यं च। न हि स्वतःसिद्धजीवेश्वराभेद एव सम्भवति। न च प्रागज्ञातो वस्त्वभेदः कदाचित् तज्ज्ञानमात्रेण रजतमिदं प्राप्त इति व्यवह्रियते। न च मुक्तिकाले भेदं विना 'सोऽश्नुते सर्वान्कामानि'ति शब्दोक्तकर्तृकर्मत्वक्रियात्वानि ब्रह्मणा सहभावो वा मुख्यः सम्भवति। न च सः 'ब्रह्मणा विपश्चिते'त्यत्र सहशब्दस्य यौगपद्यमर्थः। 'ब्रह्मणा विपश्चिते'त्यस्य ब्रह्मरूपेण विपश्चितेत्यर्थो वा अङ्गीकारार्हः। यौगपद्यस्य कालोपाधिविशेषणत्वेन त्वदभिमतः मुक्तौ जीवेश्वरभेदवत् तस्याप्यभावात् 'ब्रह्मरूपेणे'त्यस्य अपदार्थत्वादवाक्यार्थत्वाच्च। न च 'विपश्चिते'त्यनेन सामानाधिकरण्यानुपपत्त्या तथार्थो विज्ञायत इति वाच्यम्। ब्रह्मणो महाविद्वत्त्वेन विद्वच्छब्दपर्यायविपश्चिच्छब्दवाच्यत्वमादायैव सामानाधिकरण्योपपत्तेः। सहशब्दस्य यौगपद्याद्यनेकार्थत्वेऽपि 'पुत्रेण सहागतः पिते'त्यादाविवात्र बहुव्यवहारसिद्धपुरःस्फूर्तिकसाहित्यार्थपरताया एव अर्थस्य कर्तव्यत्वाच्च। एवं 'ब्रह्म वेद ब्रह्मैव भवती'ति श्रुत्यर्थोऽपि त्वन्मतेऽनुपपन्नः। प्राप्त्यर्थकभूधात्वनुपपत्तेः। ब्रह्मणि सकर्मकवेदनं

विनापि स्वतःसिद्धस्य स्वाभेदस्य स्ववेदफलवत्तानुपपत्तेश्च । न चात्र भूधातोः प्राप्त्यर्थकत्वे मानाभावः । परस्मैपदानुपपत्तिश्चेति वाच्यम् । तत्प्राप्त्यर्थकत्वस्य भूप्राप्ताविति स्मृतिसिद्धत्वात् ।'ब्रह्मविदाप्नोति परमि'त्यादि श्रुत्यनुसारितया ब्रह्म वेदेति द्वितीयान्तस्यैव प्रक्रान्ततया च ब्रह्मैव भवतीति द्वितीयब्रह्मशब्दस्यापि द्वितीयान्तस्यैव प्रत्यभिज्ञाविरोधाश्रयग्राह्यत्वाच्च । 'यदा पश्यः पश्यते' इत्यत्र आत्मनेपदस्येव 'ब्रह्म वेद ब्रह्मैव भवती'त्यत्र परस्मैपदस्यपि उपपत्तेश्च ।

अपि च जीवेश्वरभेदादेरौपाधिकत्वे सर्वोपाधिविनिर्मुक्तमुक्तिदशायां निवृत्त्यवश्यम्भावेन 'तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'नि श्रुतिप्रतिपन्नस्य तदा विद्यमानस्य जीवेश्वरप्रतियोगिकान्तरङ्गसादृश्यस्य 'तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्व'रूपस्य परमसाम्यशब्दार्थस्य कथमुपपत्तिः कथं च यदा पश्यः पश्यते रुग्मवर्णमित्यादि पूर्ववाक्यावगतौपाधिकभेदनियतरुग्मवर्णत्वाद्यनेकविशेषणविशिष्टब्रह्मकर्मकदर्शनस्य तत्त्वज्ञानत्वनिर्वाहः । न हि मुखे दर्पणौपाधिकभेदनियततदर्पणस्थत्वादिविशेषणविशिष्टस्य ज्ञानं तत्त्वज्ञानं एवं यो वेद निहितं गुहायामित्यादिवाक्यावेदितौपाधिकभेदनियतहृदयगुहान्तराकाशसन्निहितत्वादिविशिष्टसत्यज्ञानानन्दस्वरूपब्रह्मकर्मकश्रुत्यावेदितब्रह्मकर्मकावाप्तिहेतुताकज्ञानस्य तत्त्वज्ञानत्वानिर्वाह ऊह्यः ।

न च तथाविधविशेषणवैशिष्ट्यावगाहिब्रह्मज्ञानस्य परप्राप्तिहेतुत्वं श्रुतिविवक्षया न विषय इत्यत्र विशेषहेतुरस्ति । तथा सति तथाविधब्रह्मविशेषणसमर्पकश्रुतिगतशब्दानां तत्कर्मत्वावेदकद्वितीयाश्रुतेश्चोन्मत्तप्रलापसमत्वापातात् । न चांशे ब्रह्मदृष्टिवत् रुग्मवर्णत्वगुहानिहितत्वाद्यनेकविशेषणवैशिष्ट्यावगाहिज्ञानस्यातत्त्वज्ञानत्वेऽपि श्रुत्यावेदितसफलत्वमुपपद्यत इति वाच्यम् । एवं सत्यंशे ब्रह्मदृष्टिवत् तत्त्वमसीत्यादिमहावाक्यजनितत्वम्पदार्थभेदज्ञानस्यातत्त्वज्ञानत्वेऽपि श्रुत्या वेदितमोक्षफलकत्वसम्भवेन तत्त्वम्पदार्थभेदस्य भ्रमविषयतया ब्रह्मवत् तात्त्विकत्वाभावप्रसङ्गात् तत्त्वम्पदार्थभेदावगाहिप्रत्यक्षादीनां च प्रबलविरोध्यभावेन तत्त्वावेदकत्वापत्तेः, तद्भेदस्य श्रुतिस्वारस्यसिद्धार्थत्यागेन कुसृष्ट्या त्वदुक्तरीत्या श्रुत्यर्थमन्यं परिकल्प्य औपाधिकताया अवक्तव्यत्वाच्च ।

तत्त्वज्ञानस्यैव मोक्षहेतुत्वं नान्यस्येति नियमानङ्गीकारे तत्त्वम्पदार्थयोरभेदस्य तत्पदार्थसद्रूपत्वादेश्च श्रुत्यावेदितस्य तात्त्विकत्वानुपपत्तेश्च । अन्यथा शुक्तिरूप्यादेरपि तात्त्विकत्वप्रसङ्गः । तत्त्वमसि तत्त्वामसीत्यभ्यासादेस्ततत्त्वम्पदार्थभेदतात्पर्यसिद्धावपि तदभेदस्य तात्त्विकत्वे मानान्तरस्यैव वक्तव्यत्वात् । न च निर्दोषश्रुतिजन्यज्ञानस्यौत्सर्गिकस्वतःप्रामाण्यात् बाधकान्तराभावाच्च श्रुतिजन्यं तत्त्वं पदार्थाभेदज्ञानं तत्त्वज्ञानमेव पर्यवस्यति । तद्विषयश्च तदभेदोऽपि तात्त्विक इति वाच्यम् । गुहानिहितत्वादि विशेषणविशिष्टब्रह्मज्ञानस्यापि नित्यनिर्दोषश्रुतिजन्यत्वात्सर्गिकश्रुतिस्वतःप्रामाण्ये बाधका-

न्तराभावाच्च सा स्यात् ब्रह्मणि धर्मनिषेधश्रुतिरपि प्रपञ्चनिषेधश्रुतिमिव सोपपत्त्यन्यथैवोपपन्नेत्यलं प्रसक्तानुप्रसक्त्या । तथा च कथं जीवेश्वरभेदस्यौपाधिकत्वे सर्वोपाधिविनिर्मुक्तमुक्तिदशायामवस्थानं तदभावे च तद्भेदगर्भोक्तान्तरङ्गसादृश्यमुपपद्यते । कथं च तदभावे परमसाम्यशब्दोक्तसादृश्यविशेष-प्राप्तिरूपमोक्षमुपपद्यते । कथं चौपाधिकभेदनियतरुग्मवर्णत्वविशिष्टब्रह्मकर्मकज्ञानस्य तत्त्वज्ञानत्व-निर्वाहः । न चात्र समशब्दात् सर्वशब्दपर्यायात् ष्यञ् साम्यमिति भवति । तस्य सर्वात्मकत्वमर्थः ।

अथ 'समं सर्वमि'त्यभिधानादिति वाच्यम् । इष्टानिष्टात्मकसर्वभावस्यापुरुषार्थत्वेन ब्रह्मज्ञानफल-त्वस्वीकारायोगात् । 'तदा पुण्यपापे विधूये'ति तत्रैव वाक्ये इष्टानिष्टसर्वात्मकत्वाभावकपुण्यपापविधू-ननश्रवणाच्च । तस्मान्मुक्तिकाले जीवस्येश्वरपरमसाम्यप्रतिपादकश्रुत्यन्यथानुपपत्त्यापि न तद्भेदादि-रौपाधिकः । अपि च [1]''तं यथा यथोपासति तथैव भवति', [2]''यथा क्रतुरस्मिन् लोके पुरुषो भवति', [3]''तथेति प्रेत्य भवति, यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति', 'एवं मुनेर्विजानत आत्मा भवति गौतमे'त्यादिश्रुत्यावेदितब्रह्मसाम्यहेतुताकब्रह्मज्ञानान्यथानुपपत्त्याप्युक्तरीत्या जीवेश्वरभेदादिरनौपाधिक एवाङ्गीकार्यः । अन्यथा तद्भेदघटितसादृश्यस्य श्रुत्यनभिप्रेतत्वे तत्र 'यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति' इति दृष्टान्तोक्तिः स्यादिति ।

## भगवद्गीतावचनैरपि भेदस्यानौपाधिकत्वसमर्थनम्—

अपि चेश्वरस्य

[4]''द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

[5]'उत्तमः पुरुषस्त्वन्यः

इत्यादि श्रुतिप्रतिपन्नक्षराक्षरकोटिनिविष्टजीवप्रतियोगिकभेदानुभेदवादकल्प्यतद्धेतुभूतस्वानुयोगि-कजीवप्रतियोगिकभेदसाक्षात्कारवत्त्वान्यथानुपपत्त्यापि तद्भेदोऽनौपाधिकः । अन्यथौपाधिकतादृशभेदं साक्षात्कुर्वतः ईश्वरस्यापि भ्रान्तत्वप्रसङ्गात् ।

अर्जुनं प्रति ''यो मामेवसम्मूढो'' इत्याद्युक्तेश्च भेदः पारमार्थिकः न हि स्वव्यतिरिक्तः । तत्त्वं निश्चिन्वन् तदुपदेशार्थं प्रवर्तेत इति सम्भवति ।

---

१. कठ. अ.१ वा.१मं.४ २. छां. ३-१४-१ ३. कठ. अ.१वा. १ मं.१४
४. भ.गी. १५-१६ ५. भ.गी. १५-१७

## भेदस्य घटमठवदौपाधिकत्वभङ्गसमर्थनम्—

किञ्चाकाशं प्रति घटमठादेरिव चैतन्यं प्रत्यविद्यान्तःकरणादेरुपाधित्वं न युज्यते । आकाशेन घटमठादेरिव चैतन्येन अविद्यान्तःकरणादेस्त्वयोपाधिकत्वेन स्वीकृतस्य संयोगानभ्युपगमात् । घटमठादेः संयोगान्यसम्बन्धेनाकाशपरिच्छिन्नत्वादि प्रयोजकोपाधित्वाकल्पनात् । न च सम्बद्धत्वमेव लाघवात् । तथाविधोपाधित्वे तन्त्रम् । संयोगादिसाधारणसम्बद्धत्वस्य दुर्वचत्वात् । संयोगत्वस्य जातिरूपतया तेनैव रूपेणाकाशं प्रति घटमठादेरिव चैतन्यं प्रत्यविद्यान्तःकरणादेरप्युपाधिकत्व-प्रयोजकत्वेन संयोगस्यैवाङ्गीकर्तव्यत्वाच्च । उपाधिशब्दस्य नानार्थत्वेन दर्पणादेः प्रतिबिम्बोद्ग्राहित्वा-दिनैवोपाधिशब्दार्थतयोपाधेयसंयोगं विनाप्युपाधित्वोपपत्तेश्च । घटमठादेः संयोगेन आकाशावच्छेद-कत्वस्यैवोपाधिशब्दप्रवृत्तिनिमित्तत्वात् । चैतन्योपाधिभूताऽविद्यान्तःकरणादेरुपाधित्वप्रयोजकचैत-न्याध्यस्तत्वरूपसम्बन्धस्यापि दुर्निरूपत्वाच्च । दुर्निरूपत्वादेव चैतन्ये तत्सम्बन्धः आध्यासिक इति चेन्न । दुर्निरूपत्वादेव तत्सम्बन्धः पारमार्थिक इत्येव सुवचत्वात् । दुर्निरूपत्वसुनिरूपत्वाभ्यामाध्या-सिकत्वपारमार्थिकत्वयोर्व्याप्त्यभावेन तत्र तयोरप्रयोजकत्वाच्च । दुर्निरूपस्यापीक्षुक्षीरमाधुर्यदिः पारमा-र्थिकत्वात् । सुनिरूपस्यापि शुक्तिरूप्यादेराध्यासिकत्वाच्च । केनापि प्रतिपन्नेन रूपेण विचारासहत्वरूप-दुर्निरूपत्वस्य पारमार्थिके निर्धर्मके ब्रह्मणि सत्त्वात् । सदसद्विलक्षणत्वमिथ्यात्वादिना रूपेण ख्यातिबा-धान्यथानुपपत्त्या विप्रतिपन्नस्य वियदादेः शुक्तिरूप्यादेश्च तेन रूपेण विचारसहत्वेन पारमार्थिकत्वा-पत्तेश्च । अन्यथा सत्त्वादिनेव सदसद्विलक्षणत्वमिथ्यात्वादिना विचारासहत्वे वियदादेः शुक्तिरूप्यादेश्च सदसद्विलक्षणत्वमिथ्यात्वाद्यसिद्धिप्रसङ्गात् । परप्रक्रियाखण्डनमात्रेण स्वाभिमतार्थासिद्धेश्च । पर-प्रक्रियाखण्डनयुक्तीनां स्वप्रक्रियायामपि तुल्यवदवताराच्च । न च खण्डनयुक्तयः परप्रक्रियायामेव प्रयोक्तव्याः न तु स्वप्रक्रियायामिति विशेषश्रुतिरस्ति । बाध्यत्वाबाध्यत्वाभ्यामेवाध्यासिकत्वपार-मार्थिकत्वव्यवस्थेति चेन्न । बाधाबाधयोरपि खण्डनयुक्त्या दुर्निरूपत्वेन स्वयमेवाव्यवस्थिततया तदव्यवस्थापकत्वात् । न हि खण्डनयुक्तयः त्वयैव क्रयक्रीताः । मम स्थाप्यपक्षस्यैवाभावात् । परीत्या परबोधनार्थमेव कथायां प्रवृत्तत्वाच्च । तदनुगुणाः खण्डनयुक्तयो मयैवानुसर्तव्या इति चेन्न । तथा सति जीवेश्वरभेदाद्यौपाधिकत्वप्रपञ्चमिथ्यात्वादि व्यवस्थापना व्यसनत्यागाप्रसङ्गात् ।

ननु भेदेऽपि परीत्या परबोधनायैव जीवेश्वरप्रपञ्चसत्यत्वादिखण्डनमेवास्मत्कृत्यमिति चेत्तर्हि प्रपञ्चसत्यत्वादिसाधनमपि परबोधनायैव जीवेश्वराभेदप्रपञ्चमिथ्यात्वादिखण्डनमेवास्मत्कृत्यमित्येव वैपरीत्यापातात् । धर्मिणः सर्वस्यापि धर्मखण्डनमुखेनैव दुर्निरूपत्वेन जगत्कारणत्वस्य सत्यत्वादि-श्रौतब्रह्मधर्मखण्डनसम्भवेन ब्रह्मणोऽपि दुर्निरूपतया शून्ये जगति वा अध्यस्तत्वापाताच्च । पारमा-

र्थिकत्वापारमार्थिकत्वयोः दुर्निरूपत्वे सुनिरूपत्वबाध्यत्वाबाध्यत्वादीनामप्रयोजकतया लोकवेदसिद्धार्थक्रियासमर्थस्यैव पारमार्थिकत्वं तदन्यस्य त्वध्यस्तत्वम् अपारमार्थिकत्वमसत्त्वं चेत्येव व्यवस्थायाः स्वीकार्यत्वाच्च । प्रत्यक्षानुमानागमप्रामाण्यस्य तद्विषयसत्त्वेनैव निरूपणीयत्वेन तद्विषयसत्त्वस्य तैरेव निरूपणेऽन्योन्याश्रय इत्यादिखण्डनसम्भवेन तेषां स्वविषये प्रामाण्यासिद्धौ त्वद्विवक्षितात्मनोऽपि जगन्न्यायेनापारमार्थिकत्वप्रसङ्गाच्च । एवं सति 'प्रामाण्यं स्वतोऽप्रामाण्यं परत' इति त्वदभ्युपगतार्थासिद्धेश्च । प्रत्यक्षादीनां प्रामाण्यादिकं खण्डयतः धर्मब्रह्मरूपार्थयोः श्रुत्यादिकं प्रमाणत्वेन वदतस्तव स्वक्रियास्वन्यायस्ववचनविरोधापाताच्च । इक्षुक्षीरमाधुर्यादिवत् स्वोचितार्थक्रियासमर्थत्वेनानुभवसिद्धमप्यर्थं दुर्निरूपत्वमात्रेणापलपतस्तव वेदबाह्यवदप्रामाण्यस्यैवोत्पत्तिज्ञप्त्योः स्वतस्त्वापत्त्या सर्वशून्यतावादित्वापत्तेश्च । दुर्निरूपत्वमात्रेणार्थासिद्धौ श्रुतिनिर्दोषत्वप्रत्यक्षप्रामाण्यादेः त्वदभिमतस्यापि तन्न्यायेनैव दुर्निरूपतया सिद्ध्यापत्तेश्च ।

ननु ब्रह्मणः स्वतःसिद्ध्यङ्गीकारान्न मम शून्यतावादित्वप्रसङ्ग इति चेन्न । ब्रह्मणः प्रमाणं विनैव स्वतःसिद्ध्यङ्गीकारे असतः कूर्मरोमादेश्च तद्विनैव स्वतःसिद्ध्यङ्गीकारप्रसङ्गात् । ब्रह्मजगतोरुक्तरीत्या दुर्निरूपत्वाऽविशेषेऽपि जगदेव ब्रह्मण्यध्यस्तं न ब्रह्मजगतीत्यत्र विशेषहेत्वभावाच्च । तदुक्तं—

**प्रमाणमन्तरेणैव ब्रह्म चेत्परमार्थसत् ।**<br>**तदापराद्धं किं कूर्मरोमव्योमाम्बुजादिभिः ।**<br>**अथ स्वसाक्षिकं ब्रह्मघटोऽप्यस्तु स्वसाक्षिकः ॥ इत्यादि ॥**

किञ्च चैतन्याविद्यान्तःकरणादेरध्यास एव मानाभावः । येन तत्र तत्सम्बन्धोऽप्यध्यस्तः स्यात् । प्रतीतिमात्रस्य विशिष्टप्रतीतिमात्रस्य वा स्वविषयाध्यस्तत्वासाधकत्वात् । अन्यथा घटे घटत्वस्य निर्विकल्पकेन देवदत्ते दण्डस्य विशिष्टप्रतीत्याध्यस्तत्वसिद्धिप्रसङ्गात् । चैतन्यस्य शून्ये चरमवृत्त्याध्यस्तत्वसिद्धिप्रसङ्गाच्च । प्रमितेर्भ्रान्तेर्वा प्रमितत्वादेः खण्डनयुक्त्या दुर्निरूपत्वेन स्वविषयानध्यस्तत्वाध्यस्तत्वासाधकत्वाच्च । [1]''असङ्गो ह्ययं पुरुष'' इति श्रुत्या सम्बन्धसामान्यनिषेधाच्च । ''तम आसीत्'' [2]''तमसा गूढमग्र'' इत्यादेः तमःशब्दार्थभूताविद्यासम्बन्धात्मकनिषेध्यसमर्पकत्वोपपत्तेश्च इति । तस्माच्चैतन्येनाविद्यान्तःकरणादेः सम्बन्धस्यैवाभावेन न घटमठादिवत् उपाधिकत्वं युज्यते ।

घटमठवदुपाधिकत्वभङ्गसमर्थनम् । अपि चाविद्यान्तःकरणादेः किञ्चैतन्ये तादात्म्याध्यासः किं वा स्वस्वाध्यासः । आद्येऽपि तप्तायःपिण्डवदितरेतराध्यासः । किं वा दर्पणेमुखवत् संसर्गाध्यासः । नाद्यः,

१. बृह. ६-३-३५ २. तै.ब्रा.अ.२ प्र.८ प.७४

अहमज्ञः ममान्तःकरणं मम मन इत्येव प्रतीतेः । मायिनं तु महेश्वरं तमसा गूढमग्रे अनृते न हि प्रत्यूढा इत्यादिश्रुतिषु चैतन्याविद्यासंसर्गस्यैव प्रतीतेः । अहमज्ञानमविद्याहमहमन्तःकरणं अहं मन इति वा प्रतीतेश्च । शुक्ताविदं रजतमिति क्लृप्ताकारवभासाभावेनाहमिति प्रतीतेः चैतन्यान्तःकरणतादात्म्याध्यासरूपत्वायोगात् । चिन्मात्रोऽहं सदा शिवः, अहं सर्वस्य प्रभवः इत्यादिष्वानन्दचिन्मात्र एव अहंशब्दप्रयोगेणाहमर्थस्य चिदचिद्ग्रन्थिरूपत्वानुपपत्तेश्च । इतरेतराध्यासे चैतन्यस्याध्यस्ततया शुक्तिरूप्यादिवत् मिथ्यात्वापत्तेश्च । सत्यं ज्ञानमित्यादिश्रुत्या चैतन्यस्य सत्यत्वावगमात् तस्य न स्वरूपेणाध्यासः किन्तु तत्तादात्म्यस्यैवेति चेत् न, 'विश्वं सत्यं, यच्चिकेत सत्यमि'त्यादिश्रुत्या कार्याकार्यप्रपञ्चमात्रसत्यत्वावगमात् तत्तदन्तर्गताविद्यादेरपि न चैतन्ये स्वरूपेणाध्यासः किन्तु तत्तादात्म्यस्यैवेति वैपरीत्यापत्तेश्च । विश्वं सत्यमित्यादेः प्रत्यक्षादिसिद्धसत्यत्वानुवादितया न तत्र तात्पर्यमिति चेत् सत्यं ज्ञानमित्यादेरप्यहमस्मीत्यादि प्रत्यक्षसिद्धसत्यत्वानुवादितया न तत्र तात्पर्यमित्यापत्तेः । सत्यं ज्ञानमित्यादिश्रुतौ आज्यैः स्तुवत इत्यादाविव वेदे वैदिकस्यैवार्थस्य ग्राह्यतया [1]"तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति । तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तद्यत्सत्तदमृतमथ यत्ति तन्मर्त्यम् । अथ यद्यं तेनोभे यच्छति यदनेनोभे यच्छति तस्माद्यमहरहर्वा एवंवित्स्वर्गं लोकमेति" इत्यादिश्रुत्यनुसारेण सत्यशब्दस्य मुक्तामुक्तनियामकेश्वरमात्रार्थकत्वेनान्यार्थपरत्वायोगाच्च । न द्वितीयः । अविद्यान्तःकरणादेरपरोक्षसंवित्तादात्म्याभावेनापरोक्ष्याभावप्रसङ्गात् । त्वयापरोक्षसंविदभेदस्यैव विषयापरोक्षत्वप्रयोजकत्वेन स्वीकृतत्वात् ।

किञ्चात एव—

उत्पत्तिश्च विनाशश्च तथैवार्थक्रिया अपि ।
नामरूपविशेषश्च सर्वं भ्रान्त्या प्रसिध्यति ॥

अतः सर्वविकारश्च वाचा केवलमास्थितः ।
अस्तीत्यारभ्यते नामधेयमात्रं हि तत्सदा ॥

प्रातीतिकेन रूपेण विकारो वाच्य एव हि ।
कारणाकार एवास्य सत्यः साक्षात्सुरासुरा ॥

इत्यादि पुराणवचनेन वियन्मिथ्यात्वसिद्धिः प्रत्यूढा ।

---

१. छां. ८-३-४

## प्रत्यक्षश्रुतिविरोधेन जगन्मिथ्यात्वप्रतिपादकपुराणवचनस्य अन्यार्थत्ववर्णनम्—

'औदुम्बरीं स्पृष्ट्वोद्गायेदि'ति प्रत्यक्षश्रुतिविरोधेन सर्वविष्टनस्मृतेरिव विश्वसत्यत्वावेदकोक्तप्रत्यक्ष-श्रुतिविरोधेन तन्मिथ्यात्वावेदकपुराणवचनस्यान्यथयितव्यत्वात् । कारणाकार एवास्य सत्यः साक्षात्सुरासुरा इत्युत्तरत्र तत्रैव कारणात्मिकायाः प्रकृतेर्ब्रह्मव्यतिरिक्तायाः सत्यत्वावेदनाच्च । भ्रान्त्या प्रसिध्यतीत्युपक्रमगतभ्रान्तिशब्दस्य सजातीयप्रवाहावृत्तिरूपभ्रमणार्थत्वेनारोपपरत्वे मानाभावाच्च । सत्यशब्दस्य नित्येऽपि प्रयोगदर्शनेन विकारोऽसत्य एव हीत्यसत्यशब्दस्य विकारानित्यत्वसार्थकत्वोपपत्तेश्च । कारणाकार एवास्य सत्य इति सत्यशब्दस्यापि कारणभूतप्रकृतिनित्यत्वावेदकत्वो*पपादनाच्च । न च "नासद्रूपा न सद्रूपा माया नैवोभयात्मिका । अनिर्वाच्या ततो ज्ञेया भेदबुद्धिप्रदायिनी । मायैवाज्ञानशब्देन शब्द्यते मुनिसत्तम" इति स्मृत्या कारणभूतप्रकृतेरनिर्वाच्यत्वावेदनात् कथमेवेति वाच्यम् । तत्र मायाशब्दिताज्ञानशब्दितप्रकृतेः 'यदन्यद्वायोश्चान्तरिक्षाच्चैतत्सदि'त्यादिश्रुत्या सच्छब्दार्थत्वेन प्रतिपन्नतेजोबन्नात्मकत्वस्यासच्छब्दार्थत्वेन प्रतिपन्नवाय्वाकाशात्मकत्वस्य तदुभयात्मकत्वस्य च निषेधपूर्वकमनिर्वाच्यशब्दार्थभूताद्भुतत्वावेदनेनाविरोधात् । तथा च श्रुत्यन्तरम् 'अद्भुतत्वादनिर्वाच्यं ब्रह्मचिच्चेत्यमेव चे'ति । यद्वेयं स्मृतिर्मायाशब्दार्थस्य 'ॐ तत्सदिति निर्देशो ब्रह्मण' इत्यादिस्मृतेः सच्छब्दार्थभूतब्रह्मस्वरूपत्वसच्छब्दार्थभूतशून्यात्मकत्वं तदुभयात्मकत्वं च निराकृत्य तत इति विचित्रानन्तकार्यकारित्वं हेतूकृत्यानिर्वाच्यशब्देनाद्भुतत्वमाहेत्यविरोधः । 'तद्धैक आहुः, 'असदेवेदमग्र आसीत्' इत्यादावसच्छब्दस्य शून्यपरत्वमुभयवादिसम्प्रतिपन्नमिति न कश्चित्क्षुद्रोपद्रवः । अत एव 'वाचारम्भणमि'त्यादिश्रुत्यनुरोधेन विश्वमिथ्यात्वमुपेयमिति प्रत्यूढं, तस्यापदार्थत्वादवाक्यार्थत्वाच्च । तदुक्तं 'वाचारम्भणमित्युक्तेर्मिथ्येत्यश्रुतकल्पने'त्यादि ।

किञ्च 'मृत्तिकेत्येव सत्यमि'ति श्रुत्या मृदुपलक्षितोपादानमात्रस्य तद्विकारभूतकार्यसत्यत्वसिद्ध्यर्थं मृत्तिकेति मृत्तिकाप्रकारमेव तद्वदर्थक्रियासमर्थमेव सत्यमिति सत्यत्वविधानात् । तद्विरोधेन नासद्रूपेत्यादिर्न पराभिमतमायाशब्दार्थोद्भूतप्रकृत्यनिर्वाच्यत्वपरत्वं युक्तम् । अत एव "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि'त्यादिभगवद्वचनेन जगन्मिथ्यात्ववादिनां निन्दा । न चात्राप्रतिष्ठितमित्यादौ बहुव्रीहिदर्शनादसत्यमितिपदेन तत्पुरुषाश्रयणं किन्तु बहुव्रीह्याश्रयणमेव युक्तम् । तथाच न तद्विरोध इति वाच्यम् । बहुव्रीहेर्जघन्यवृत्तित्वेन तदपेक्षया तत्पुरुषस्य ज्यायस्त्वेन सम्भवतस्त्यागायोगात् । न विद्यते

*. त्वोपपत्तेश्च - 'इ' पाठः          १. छां. ८-३-४

सत्यं यस्मिञ्जगतीति बहुव्रीह्याश्रयणेऽनीश्वरमित्यनेन पौनरुक्त्यापत्तेश्च । न सत्यमसत्यमिति तत्पुरुषस्य विश्वं सत्यमित्यादिश्रुतिविहितानुसारि निर्दोषयुक्तत्वाच्च ।

नन्वेकमेवाद्वितीयं, नेह नानास्ति किञ्चन, नान्योऽतोऽस्ति द्रष्टा नेति नेति, इत्यादि श्रुत्या प्रतिपन्नोपाधौ ब्रह्मचैतन्ये प्रपञ्चस्य जीवभेदस्य च निषेधात् । शुक्तौ रूप्यस्येव मिथ्यात्वं युक्तम् । तत्सत्यत्वश्रुतिस्तु प्रत्यक्षादिसिद्धाधिष्ठानभूतब्रह्मसत्यत्वानुवादिनी । न चानुवादे प्रयोजनाभावः । उक्त-निषेधार्थत्वात् । न च वैपरीत्यं ब्रह्मणः क्वापि प्रतिपन्नोपाधौ अस्तीति प्रतिपन्नस्य तत्त्वावेदकप्रमाणे-नानिषेधात् । तथा च चैतन्य एवाविद्यान्तःकरणादिप्रपञ्चस्य स्वरूपेणाध्यासः न तु चैतन्यस्य क्वापि स्वरूपेणाध्यासः ।

किन्तु तत्तादात्म्यस्येति चेत् । मैवम् । 'एकमेवाद्वितीयमि'ति श्रुतेः 'नेति नेति' इति श्रुतेश्च ब्रह्मणो जगद्विरुद्धस्वभावत्वप्रतिपादनपरतया जगन्निषेधकत्वाभावात् । एकमेव मुख्यमेव ब्रह्मजडचेतनात्मक-द्वितीयप्रपञ्चावृत्ति कर्तुमकर्तुमन्यथाकर्तुं च यत्सामर्थ्यं तद्वदित्यर्थप्रतीतेः । नञस्तद्विरुद्धार्थत्वेऽपि प्रसिद्धेः 'परं ब्रह्मेति नेति नेती'ति साभ्यासमनुभवसिद्धापर्याप्तशक्त्यादिमज्जगद्विलक्षणमिति ब्रह्मणो जगद्विरुद्धस्वभावावेदकतया नेति नेतीति श्रुतेरप्येतन्निषेधपरत्वात् । नेह नानास्ति किञ्चनेति श्रुतेरपि न विरोधः । ईहाचेष्टाव्यापारो यस्य तत् नेह तच्च तत् नाना च तत्, किञ्चन किमप्यस्तीति ब्रह्मविल-क्षणव्यापारस्य प्रपञ्चमात्रस्य सत्यत्वविधायितयाऽतन्निषेधपरत्वात् । नेहेत्यत्र नानुयाजेष्वित्यत्रेव नसमासविज्ञानात् 'नान्योतोऽस्ति द्रष्टे'ति श्रुतेरपि अतः परमात्मनोऽन्यो विलक्षणो द्रष्टा न पुरुषो-ऽस्तीत्यर्थपरत्वेन द्रष्ट्रन्तरनिषेधपरत्वाभावस्योक्तत्वात् । अन्यथा 'द्वा सुपर्णे'त्यादिजीवेश्वरभेदा-वेदकतत्परश्रुतिविरोधात् । न च द्वित्वं न भेदः किन्तु तन्नियतधर्म इति वाच्यम् । द्वित्वद्विपृथक्त्वा-न्योन्याभाववैधर्म्यस्वरूपभेदानामविगीतभेदशब्दप्रयोगविषयत्वात् ।

## द्वा सुपर्णेत्यादिश्रुतिविरोधोद्भावनं तद्विमर्शश्च—

किञ्च तयोरन्य इत्यादौ साक्षादन्योन्याभावापरनामकभेदवाचिनोऽन्यशब्दस्य सत्त्वेनोक्तशङ्का-नवकाशात् । न चान्यशब्दस्य तयोर्मध्ये एक इत्यर्थकत्वावश्यम्भावेन भेदपरत्वे मानाभावः । भेद-वाचिनोऽन्यशब्दस्य एक इत्यर्थकत्वे एव मानाभावात् । तयोर्मध्ये योऽन्य इत्यस्य तयोर्मध्ये विद्यमानो यो भिन्न इत्यर्थलाभेन भेदस्य च धर्मिप्रतियोग्यनुयोगिसापेक्षत्वेन तच्छब्दोपस्थितयोरेवान्वयसम्भ-वात् । अन्यथा अश्नन्नश्नन्नित्युपपत्तिविरोधापत्तेरिति ।

किञ्च प्रथमान्यशब्दस्य एक इत्यर्थपरत्वेऽपि द्वितीयान्यशब्दस्य तयोर्भिन्नार्थत्वमावश्यकम् । अन्यथा विवक्षितार्थासङ्गतेरिति ।

ननु 'तयोरन्यः पिप्पलं स्वाद्वत्ति' इति 'अनश्नन्नन्योऽभिचाकशीति' इत्यनश्नन्नन्योऽभिपश्यति अज्ञस्तावेतौ सत्त्वक्षेत्रज्ञाविति तदेतत्सत्त्वं येन स्वप्नं पश्यतीत्यथ योऽयं शारीरे उपद्रष्टा स क्षेत्रज्ञ इति पैङ्गिरहस्यब्राह्मणेन सत्त्वक्षेत्रज्ञपदयोरन्तःकरणशारीरपरतया व्याख्यानात् न द्वा सुपर्णेत्यादिश्रुति-जीवेश्वरयोर्भेदावेदनपरेति चेन्न । तथापि जडचेतनयोर्भेदावरणात् । किञ्च व्याख्यानरूपवाक्यद्वयेऽपि सत्त्वशब्दस्य घोरसत्त्वनिषेवित इत्यादौ प्राणिष्वपि अविगानेन प्रयुक्तस्य विना बाधकं जीवपरत्व-त्यागायोगेन तदेतज्जीवस्वरूपं सत्त्वशब्दार्थः । येन कारणेन स्वप्नं पश्यतीति व्याख्यानसम्भवेन क्षेत्रज्ञ-शब्दस्यापि 'क्षेत्रज्ञं चापि मां विद्धी'त्यादौ मामपि क्षेत्रज्ञं च विद्धीति क्षेत्रज्ञशब्दशक्तिग्राहकरूपवाक्ये परमात्मनोऽप्यर्थपरत्वाभिधानेन बाधकं विना तत्परत्वत्यागायोगेन यथा 'योऽयं शारीरे जीवात्मनि स्थित्वोपद्रष्टा स क्षेत्रज्ञ' इति च परमात्मन्येव प्रकृते क्षेत्रज्ञशब्द इति तत्रैवेत्युत्पादनेन च सत्त्वक्षेत्रज्ञ-पदाभ्यामन्तःकरणजीवग्रहणासिद्धेः । किञ्च जीवेश्वरयोः वास्तवभेदाभावे 'यः पृथिवीमन्तरो यमयति योऽपोऽन्तरः य आत्मानमन्तरः, यो विज्ञानमन्तर इत्यादिश्रुतिप्रतिपन्नजीवेश्वरनियम्यनियामकभावा-नुपपत्तिः ।

ननु

जाग्रत्स्वप्नसुषुप्त्यादिप्रपञ्चं यत्प्रकाशते ।
तद् ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ॥

[1]मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम् ॥

[2]अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम चित्सदाहम् ।
[3]वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥

इति कैवल्योपनिषदि पूर्वत्र साधकपरत्वप्रतीतेः ।

१. कै.व.मं. १९. २. कै.व.मं. २१ ३. कै.व.मं. २२

[1]एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।
समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥ इति ॥

तत्रैवोत्तरत्र साधकस्योपसंहाराच्च । जीवेश्वरयोरभेद एव वेदान्तानां तात्पर्यम् । ननु भेदे तस्य प्रत्यक्षादिसिद्धत्वादिति चेत् न, निरस्तत्वात् । "किञ्च देवाः ह वै स्वर्गं लोकमगमन् स्म ते रुद्रमपृच्छन् को भवानिति । सोऽब्रवीत् अहमेवैकः प्रथममासम् । वर्तामि भविष्यामि चे"तिवत् "यो मामेव-मसम्मूढः" इत्यादिवच्च तत्राहं शब्दस्योपदेष्टृपरमेश्वरपरत्वमेव । न तु साधकपरत्वम् । न च त्वन्मतेऽपि साधकस्य जीवात्मनोऽनेकवेदवेद्यत्वमस्ति । किञ्च जीवेश्वरयोरभेदे "एवं विदित्वा परमात्मरूपम्" इत्युपसंहारे व्यावृत्त्यभावेन परमशब्दवैय्यर्थ्यम् । उपक्रमे विविक्तरूप इति चासम्बन्धं जडाजडविविक्त-स्वरूपत्वस्यैव तद्भिन्नत्वरूपत्वात् । न च निर्विशेषात्मैक्यवादे 'एवं विदित्वे'तिशब्दोक्तसप्रकारक-ज्ञानस्य परमात्मरूपप्राप्तिहेतुत्वं युक्तम् ।

नन्वेवमपि 'तस्मै सहोवाच पितामहश्चे'ति तद्वक्तृत्वेन प्रकारान्तरस्य हिरण्यगर्भस्य अनीश्वरत्वेन जाग्रत्स्वप्नसुषुप्त्यादीत्यादिना प्रतिपन्नं यद्रूपं तद्वत्त्वमनुपपन्नमिति तदुपपादनाय तस्य वास्तवेश्वरा-भेदाङ्गीकारे किमपरमार्थिकमितरजीवस्य वास्तवपरमेश्वराभेदेनेति चेत् । न, आकाशाधिकरणन्यायेन तत्रत्यहिरण्यगर्भशब्दस्यापि परमात्मपरत्वसम्भवात्, अन्यथा परमात्मासाधारणधर्मरूपलिङ्गसत्त्वेऽपि यथाश्रुतार्थपरत्वेऽस्य लोकस्य का गतिरित्याकाशाधिकरणविषयवाक्यगताकाशशब्दस्यापि भूताका-शपरत्वापत्तिः । अपि च तथावक्तुर्हिरण्यगर्भत्वेऽपि न कश्चिद्दोषः । स्थूलारुन्धतीन्यायेन हिरण्यगर्भस्यैव स्वसन्निहितपरमात्मस्वरूपज्ञापनार्थमेव तथाविधोक्त्युपपत्तेः । अत एव श्रुत्यन्तरे "कस्माद्ध्यभैष्यत् मदन्यन्नास्ति", "द्वितीयाद्वै भयं भवति", [2]"यस्मिन्सर्वाणि भूतान्यात्मैवाभूद्विजानतः", "तत्र को मोहः कः शोक एकत्वमनुपश्यत" इति भिन्नवस्तुमात्रनिषेधात् । ऐक्यज्ञानवतो मोहशोकनिराकरणाच्च। न जीवेश्वरभेदस्वीकारो युक्तः । अत एव 'यो वेदाहं ब्रह्मास्मीति स इदं सर्वं भवती'त्यद्वैतज्ञानफलतया सर्वभूतत्वश्रुतिरुपपद्यत इति प्रत्युक्तम् । कस्माद्ध्यभैष्यत् यत् यस्मान्मदन्यन्मद्विरोधि नास्ति द्वितीयाद्वै विरोधिनो हि भयं भवति । न तु स्वभिन्नमात्रात् केवलहितकारिणोऽपि स्वभिन्नस्य दर्शनात् । अन्यथा नित्यानित्यवस्तुविवेकादितोऽपि भयप्रसङ्गात् । यस्मिञ्ज्ञानित्वकाले सर्वाणि भूतानि आत्मैव, रागद्वेषा-दिकारणाभावात् । स्वात्मवदेवाभूत् विजानतः सम्पन्नज्ञानस्य तत्र ज्ञानसम्पत्तिकाले को मोहः कः शोकः न कोऽपि । न हि ज्ञानविरोधिनि जागरूके मोहः सम्भवति । न वा तत्कार्यभूतः शोकः । एकत्वमनुकूलं मत्यैक्यं स्थानैक्यं च पश्यतो निश्चिन्वत इति तव श्रुतेर्ज्ञानिकर्तृकाभिलाषाकाररूपत्वेन जीवेश्वरैक्यपर-

१. कै.व.मं. २४  २. ईश. ७

त्वाभावात् । अत एव श्लोके स्थानैक्यं मत्यैक्यं चादाय राज्ञोरावयोरिदानीमैक्यमेवास्ति 'सायं गोष्ठे सर्वे गावो एकीभवन्ती'त्यादि अविगीतव्यवहारः । अन्यथा जीवेश्वरयोर्जीवानां च स्वरूपेणैवोक्तवक्ष्यमाण-श्रुतीनां परस्परैक्यपरत्वे 'कर्माणि विज्ञानमयश्च आत्मा, परेऽव्यये सर्व एकीभवन्ती'त्यादिश्रुतिविरोधः स्यात् । न च तासामपि तत्स्वरूपेणैक्यपरत्वं, तथात्वे एकीभवन्तीति च्विप्रत्ययानुपपत्तेः । परेऽव्यय इति सप्तम्यनुपपत्तिश्च । न चैवं "यो वेदाहं ब्रह्मास्मीति, स इदं सर्वं भवती"ति अद्वैतज्ञानफलत्वे सर्वात्मक-त्वोक्तिः श्रौती न स्यादिति वाच्यम् । सर्वात्मकत्वे दुःखात्मकत्वस्यावर्जनीयतया तत्प्रतिपादनमुखे-नैतच्छ्रुतेः अद्वैतज्ञानस्यानर्थत्वप्रतिपादनपरत्वेन तन्निन्दारूपत्वावसायात् ।

किञ्च,

**अस्मान्मायी सृजते विश्वमेतत्**
**तस्मिंश्चान्यो मायया सन्निरुद्धः ।**
**द्वे ब्रह्मणी वेदितव्ये परं चापरं च ।**
**आत्मानं द्विविधं विद्यात्परापरविभेदतः ।**

[1]"**द्वे ब्रह्मणी वेदितव्ये**" इति चाथर्वणी श्रुतिः ।

**जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः ।**

**आत्माप्यनीशः सुखदुःखहेतोः ।**
**पृथगात्मानं प्रेरितारं च मत्वा ।**

**जुष्टस्ततस्तेनामृतत्वमेति ।**

**अजो ह्येको जुषमाणोऽनु शेते**
**जहात्येनां भुक्तभोगामजोन्यः ।**
[2]**कर्मक्षये याति स्तत्त्वतोऽन्य**

इत्यादिभेदपरश्रुत्यादिभिरद्वैतश्रुत्यादीनां प्रतिरोधेनानिश्चायकत्वं तात्पर्यनिमित्तस्योपक्रमादिष्व-न्यतमस्य नित्यनिर्दोषत्वस्य चोभयत्राप्यविशेषात् । 'अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽह-मस्मी'त्यादिश्रुत्यनुरोधेनाभेदश्रुतीनामुपासनार्थत्वेनान्यथासिद्धेश्च । अपि च जीवेश्वरभेदतन्निषेधश्रुतीनां परस्परविरुद्धार्थत्वेनैवमनेवं वेति सन्देहे नाहमीश्वरः नाहं सर्वज्ञः नाहं सत्यकाम इत्यादिनित्यनिर्दोष-

---

१. त्रि.ता. ४-१७   २. श्वेत. ६-४

परीक्षितसाक्षिप्रत्यक्षतदनुगृहीतविरुद्धधर्माधिकरणत्वादिरूपानुमानाभ्यां जीवेश्वरभेदसिद्धिः अव्याहत-प्रसरेति। किमधिकोक्त्या न हि बाधकं विना तद्भेदप्रत्यक्षादिभ्रमत्वं स्वीकारार्हम्। न चानिश्चितार्थ-मन्यथासिद्धत्वेन शङ्कितं चाद्वैतश्रुतिवाक्यमलब्धात्मकं प्रत्यक्षादिबाधनाय क्षमत इति स्वीकारो युक्तः। न चौत्सर्गिकज्ञानप्रामाण्यास्वतस्त्वं विषयसत्त्वं विनोपपन्नम्। अन्यथा सत्यज्ञानादिवाक्यप्रतिपन्न-ब्रह्मसत्स्वरूपत्वादिकमपि असत्स्यादित्यापत्तेः।

किञ्च द्वैतप्रमाणानामनेकत्वेन प्राबल्यात्तदनुसारेणैवाद्वैतप्रमाणस्यान्यथानयनं युक्तम्। तथा च पारमर्षं सूत्रं 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात्सधर्मत्वमि'ति। ततश्च जीवेश्वरभेदस्य प्रपञ्च-मात्रस्य चैकमेवाद्वितीयमित्याद्युक्तश्रुत्या निषेधप्रतियोगित्वरूपमिथ्यात्वावगतेश्चैतन्यस्वरूपेणैवाध्यासः न तु जडचैतन्यस्येव तादात्म्यमात्रेणाध्यास इत्ययुक्तम्। अस्तु वा प्रपञ्चस्य भेदमात्रस्य च ब्रह्मणि "नेह नानास्ति किञ्चन" इत्यादिश्रुत्या निषेधः। तथापि न तावन्मात्रेण तस्य मिथ्यात्वमारोपितत्वं वा शक्याभ्युपगमम्। भूतलादावानीतापसारितघटादेः प्रत्यक्षादिना निषिद्धत्वेऽपि मिथ्याभूतलाध्यस्त-त्वव्यवहाराभाजनत्वात् भूतलवन्निषेधवच्च, प्रतियोगिनो घटादेर्व्यावहारिकसत्त्वस्यैवोपलब्धेश्च। एवं कलञ्जभक्षणादौ "न कलञ्जं भक्षयेत्" इत्यादिनिषिद्धकर्तव्यत्वादेरपि मिथ्यात्वारोपितत्वव्यवहारा-भाजनत्वे न तावन्मात्रस्य मिथ्यात्वादिव्यवहारप्रयोजकत्वम्। उपादानदेशे प्रमाणनिषिद्धत्वं तत्र प्रयोजकमित्यभ्युपगमान्नोक्तदोष इति चेन्न। शुक्तौ प्रत्यक्षनिषेधस्य रूप्यस्य तदनुपादानकस्यापि मिथ्यात्वादिदर्शनाद् ब्रह्मणि श्रुतिनिषिद्धाविद्यादेस्तदनुपादानकत्वेऽपि मिथ्यात्वोपगमाच्च। वियदादि सादिप्रपञ्चस्यापि मायाशब्दितप्रकृतिमात्रोपादानकस्य तदनुपादाने ब्रह्मणि श्रुत्या निषिद्धत्वेऽपि तदुपा-दानभूतप्रकृतावनिषिद्धत्वेन मिथ्यात्वापाताच्च। न च ब्रह्मापि तदुपादानमित्यत्र मानमस्ति।

## ब्रह्मणः जगदुपादानत्वे प्रमाणाभावसमर्थनम्—

तथा हि। न तावद् ब्रह्मणो जगदुपादानत्वे प्रत्यक्षं मानम्। तत्र तस्यासामर्थ्यात्। घटः पटोपादा-नोपादानकः कार्यत्वात्पटवदित्याद्यनुमानस्याप्रयोजकत्वात् उभयसिद्धमायोपादानकत्वेनार्थान्तराच्च। घटस्तन्तूपादानकः कार्यत्वात्पटवदित्याभाससाम्याच्च। न चात्र प्रत्यक्षबाधः शङ्क्यः। घटोपादानतया योग्यानामेवानुमानेन विषयीकरणात्। प्रपञ्चस्य ब्रह्मोपादानतां विनाऽनुपपत्त्यभावेनार्थापत्तेरप्यप्रसराच्च। न च मृद्घट इतिवत् सन् घटः घटः स्फुरति घटो मे प्रिय इति सच्चिदानन्दलक्षणब्रह्मासाधारणस्वरूपानु-विधत्वानुपपत्तिरेव तत्र मानमिति वाच्यम्। सत्तायाः द्रव्यत्वपृथिवीत्वघटत्वादिवत् घटधर्मत्वेन ब्रह्म-मात्रधर्मत्वासिद्धेः। एतन्मृदेव घटः एतत्तन्तवः एव पट इतिवत् एतत् सदेव घट इत्यसाधारणोपादान-

स्वरूपानुभूत्यनुभवाभावेन दृष्टान्तवैषम्याच्च । घटः स्फुरतीति घटस्य स्फुरणानुकूलव्यापारवत्त्वप्रतीत्या स्फुरणाभेदाप्रतीतेः । अन्यथा घटश्चलतीति प्रतीत्या घटस्य चलनाभेदेन तदुपादानकत्वापत्तेः । इच्छाविषयत्वरूपप्रियत्वस्य वेष्टसाधनताज्ञानानन्तरभावित्वेन जलाहरणारूपेष्टसाधनत्वेनान्यथोपपन्नतया घटस्य सुखरूपकत्वानाक्षेपकत्वात् । अन्यथा तत्रैव घटेऽनिष्टत्वरूपप्रियत्वस्यापि दर्शनेन तस्य दुःखरूपत्वाक्षेपकत्वेन तदुपादानभूतब्रह्मणोऽपि दुःखस्वरूपत्वस्याप्यापातात् । अस्तु वा घटादिगतप्रियत्वस्य तत्सुखरूपत्वाक्षेपकत्वं तथापि घटादिसुखरूपत्वस्य सुखात्मकसत्त्वगुणकप्रकृत्युपादानकत्वेनैवान्यथोपपन्नतया सुखरूपब्रह्मोपादानकत्वानाक्षेपकत्वात् । 'आत्मन आकाशः सम्भूतः' इति पञ्चमीश्रुतेश्च । पुत्रात्प्रमोदो जायत इतिवद्धेतुत्वावेदकत्वेनान्यथासिद्धतया तदुपादानत्वप्रमाणायोगात् । 'सदेव सोम्येदमग्र आसीदि'त्यादिसामानाधिकरण्यनिदर्शनस्यापि 'ब्राह्मणोऽस्य मुखमासीदि'त्यादिवत् अग्रे यत्सदासीत्, तत्तदेवेदमासीत् एतत् जगत्कारणमासीदिति ब्रह्मगतजगन्निमित्तकारणमात्रपरतयोपपन्नतया तत्राप्रमाणत्वात् । इदं सदेव सृष्टेः पूर्वमासीत्, न जगत् इति इदंशब्दस्य सद्विशेषणत्वेन प्रपञ्चपरत्वाभावाच्च । आत्मा वा इदमेक एवाग्र आसीदित्यादावपीदंशब्दस्यात्मविशेषणत्वात् । 'असद्वा इदमग्र आसीत्, असदेवेदमग्र आसीत् इदं वाग्रे नैव किञ्चनासीदि'त्यादौ चाग्रशब्दस्य समभिव्याहृताभावप्रतियोग्यर्थकासच्छब्दरूपसविशेषणसामर्थ्यादिवेदंशब्दस्य जगत्परत्वौचित्यादिति । अग्रशब्दसमभिव्याहारेण नञः प्रागभावार्थकत्वस्य व्युत्पत्तिसिद्धत्वादिति । न चैवं प्रकृत्यधिकरणोक्तप्रतिज्ञादृष्टान्तरूपन्यायविरोधः । राजनि दृष्टे प्रसन्ने वा समर्थोऽप्यमात्यादिर्दृष्टः प्रसन्नश्चेत्यादिवत्प्रतिज्ञादृष्टान्तयोः ब्रह्मप्राधान्याख्यापनमात्रपरत्वेनाविरोधात् । मुख्यार्थस्यानुभवविरुद्धत्वेन तत्त्यागस्याद्वैतवादेऽप्यविशेषात् । अन्यथा ब्रह्मशब्दादिना ब्रह्मज्ञाने प्रपञ्चमात्रस्य ज्ञातत्वेन प्रपञ्चे क्वाप्यज्ञानसंशयाद्यभावप्रसङ्गात् । न चैवमनुपादानत्वे 'सोऽकामयत, बहुस्यां प्रजायेये'ति बहुभवनकामनानुपपत्तिः । तस्यानन्तपदार्थप्रेरकानन्तरूपैर्बहुभवनसङ्कल्पमात्रपरतया प्रपञ्चरूपेण बहुभवनसङ्कल्पपरत्वासिद्धेः । न च स्वस्य नियामकानन्तरूपैर्बहुभवनं सङ्कल्प्य 'इदं सर्वमसृजते'ति प्रपञ्चसर्जनानुपपत्तिरिति वाच्यम् । नियामकरूपैर्बहुभावस्य नियम्यसापेक्षत्वेन गुरुः स्यामिति सङ्कल्प्य शिष्यसम्पादनवत्तदुपपत्तेः । अत एव नियम्यं सृष्ट्वा नियामकरूपैः प्रवेशोक्तिरपि सङ्गच्छते ।

अपि चाहमर्थो जगदुपादानं सृष्टेः प्रागन्तःकरणाभावेन तद्विशिष्टाहमर्थाभावात् । अन्यथा अहमर्थाभावेऽप्यात्ममात्रस्योपादानत्वाङ्गीकारे स्यामित्युत्तमपुरुषानुपपत्तिः । न च उक्तरीत्यैव तदुपपत्तौ लक्षणाश्रयणं युज्यते ।

## परमात्मनः निमित्तकारणत्वप्रतिपादकश्रुत्यर्थत्वोपवर्णनम्—

किञ्च 'तत्तेजोऽसृजते'ति यत्तेजःप्रभृति सृज्यं तदात्मना हि त्वया बहुभावो वाच्यः। तेजःप्रभृतिश्च चेतनं [1]"तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्त तिस्रो देवता" इतीक्षितृत्व-स्रष्टृत्व-देवतात्मानां श्रवणात्। न च चेतनं प्रत्युपादानता तवापि सम्मता। [2]"सर्वाणि ह वा इमानि भूतानि आकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यान्ती"ति श्रुतिरप्याकाशशब्दार्थस्य परमात्मनो जगदुत्पत्तिप्रलयमात्रप्रतिपादिकानां तदुपादानप्रतिपादनपरा अपदार्थत्वाद्वाक्यार्थत्वाच्च। एवं "यतो वा इमानि भूतानि जायन्त" इत्यादिश्रुतिरपि। न चोपादानत्वं विना जगदुत्पत्तिलयाधारत्वमनुपपन्नम्। इदानीं घट उत्पन्नः तदानीमिह घटो नष्टः इत्यनुभवेन कालदेशयोरिवानुपादानत्वेऽपि सर्वाधारत्वेन परमात्मनस्तदाधारत्वोपपत्तेः। निमित्त एवोर्णनाभौ तन्तोरिव निमित्त एव ब्रह्मणि जगतो लयस्य निगरणस्य चोपपत्तेश्च। ऊर्णनाभिवदेव जगत्संहर्तृत्वादौ ब्रह्मणो [3]"यथोर्णनाभिः सृजते गृह्णते च" इत्यादिश्रुतेर्मानत्वात्, अनुष्टुभो जगदुपादानत्वाभावेऽपि [4]"अनुष्टुभो वा इमानि भूतानि जायन्ते" "अनुष्टुभो जातानि जीवन्ति" इत्यादिश्रुतिवत् ब्रह्मणोऽनुपादानत्वेऽपि "यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति" इत्यादि जगदुत्पत्त्याद्याधारत्वश्रुतेरप्युपपत्तेश्च [5]"तदात्मानं स्वयमकुरुत" इत्यादिश्रुतेरपि [6]"तदात्मानं सृजाम्यम्, सम्भवामि युगे युगे" इतिवदुपपत्तेः। न ह्यत्रात्मानमाकाशाद्यात्मनाऽकुरुतेति श्रूयते। सामान्यश्रुतेश्च नियम्यानुसारेणात्मानं नियामकमकुरुतेत्येवं परत्वोपपत्तेश्च। स्वयमितिपदस्य स्वातन्त्र्यप्रतिपादनेन प्रकृत्यादिकारणान्तरसापेक्षत्वेन चान्यान-पेक्षत्वपरत्वायोगात्। किञ्च सदा सिद्धवस्तुनि परमात्मनि कथं साध्यत्वसमावेशः, विरोधात्। न च साध्यत्वमवास्तवं, वास्तवत्वे बाधकाभावात्। न हि नित्यनिर्दोषश्रुतिजन्यज्ञानविषयीभूतसाध्यत्वं मिथ्येति शक्यमभ्युपगन्तुम्। तथा सति परमात्मस्वरूपस्यापि तथात्वापत्तेः।

## ब्रह्मणः भूतोपादानत्वनिराकरणम्—

ननु ब्रह्मणः 'सच्चत्यच्चाभवदि'त्यादिश्रुत्या सत्त्यच्छब्दार्थभूतपञ्चमहाभूतरूपेण परिणामोक्तेः भूतोपादानत्वं सेत्स्यतीति चेत् न", "तत्सृष्ट्वा तदेवानुप्राविशत्, तदनुप्रविश्य सच्चत्यच्चाभवदि"ति जगत्सृष्टितदनुप्रवेशानन्तरभावित्वेन तच्छ्रुतेर्ब्रह्मपरिणामत्वेन भूतप्रतिपादत्वानुपपत्तेः। सत्त्वादिगुणाभि-व्यक्तिमात्रपरत्वात्। अन्यथा सत्यत्पदाभ्यामेव मूर्तामूर्तप्रपञ्चमात्रस्योक्तत्वात् 'निरुक्तञ्चानिरुक्तञ्चे'-

---

१. छां. ६-२-३  २. शौनको. ४-५  ३. मुंड.अ.१ खं.१ मं.७
४. नृ.पू.ता. १-१  ५. भ.गी. ४-७  ६. भ.गी. ४-८

त्यादि वाक्यशेषस्थनिरुक्तादिपदवैयर्थ्यापत्तिः । 'यद्भूतयोनिं परिपश्यन्ति धीरा' इत्यादिश्रुतिषु परमात्मनो भूतयोनित्वेनाभिधानमपि न भूतोपादानत्वे मानम् । योनिशब्दस्यावयवविशेषवाचित्वेन उपादानार्थकत्वे मानाभावात् । 'पृथिवी योनिरोषधिवनस्पतीनामि'त्यादिषु योनिशब्दस्य लक्षणया प्रमाणान्तरसिद्धतदुपादानपरत्वात् । अन्यथा अन्या 'यश्चानेकार्थत्वमि'ति न्यायेनानन्यलभ्यस्यैव शब्दवाच्यत्वकल्पनात् । प्रकृतेऽपि लक्षणया मानान्तरसिद्धनिमित्तकारणत्वस्यैव भूतयोनिशब्देन प्रतिपादनात् । [१]"मम योनिरप्स्वन्तस्समुद्रे" इत्यादौ योनिशब्दस्य नियामकेऽपि प्रयोगदर्शनेन प्रकृतेऽपि भूतयोनिशब्देन भूतनियामकत्वाभिधानोपपत्तेश्च । न चैकमेवाद्वितीयमिति वस्त्वन्तरनिषेधादाकाशादेव समुत्पद्यन्त इति सावधारणश्रुत्या ब्रह्मण्यतिरिक्तकरणनिषेधाच्चात्मन एव जगदुपादानत्वम् । त्वन्मतेऽपि अविद्यादेः सत्त्वेन पारमार्थिकवस्त्वन्तरस्यैव तेन निषेधात् । अन्यथा वस्तुमात्रस्य स्वरूपेणैव निषेधे कार्यप्रपञ्चस्वरूपस्यैवाभावेन ब्रह्मणस्तदुपादानत्वानुपपत्तेः ।

## 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतीनां सामानाधिकरण्यानुपपत्तिशङ्कानिराकरणम्—

न च 'सर्वं खल्विदं ब्रह्मे'त्यादिसामानाधिकरण्यानुपपत्तिस्तत्र मानम् । जडाजडयोर्मृद्घटयोरिव अभेदासम्भवेन परमते अभेदे सामानाधिकरण्यासम्भवात् । बाधायां सामानाधिकरण्याभ्युपगमे च तस्य सर्वनिषेधपर्यवसायितया सर्वोपादानत्वविरुद्धत्वेन तदुपादानत्वानापेक्षकत्वात् । 'सर्वं समाप्नोषि ततोऽसि सर्व' इत्यादिस्मृत्या सर्वशब्दस्य सर्वव्याप्त्यर्थकत्वाभिधानेन सामानाधिकरण्योपपत्तेश्च । 'यदधीना यस्य सत्ता तत्तदित्येव भण्यत' इति भारतोक्तेः सर्वनियामकत्वादिदं ब्रह्म सर्वशब्दसामानाधिकरण्योपपत्तेश्च । अत एव सर्वव्याप्तत्वसर्वनियामकत्वोपपादकतया ब्रह्मणस्तज्जलानिति सर्वोत्पत्तिस्थितिलयहेतुत्वोक्तिरपि सङ्गच्छते । तत्सर्वं जगज्जायते लीयते अनिति च यस्मात्तद्ब्रह्म तज्जलानिति उच्यते । अत एव च सर्वस्य ब्रह्मनियम्यत्वेन स्वातन्त्र्याभावात् धानुष्कप्रेरितबाणस्येव द्वेषानर्हत्वात् । स्वतन्त्रे च ब्रह्मणि द्वेषे स्वस्यैवानिष्टापत्तेः । द्वेषं विहाय शान्त एव सर्वः (सन्) तादृशं ब्रह्मोपासीतेति सार्थवाददर्शनविरोध्युपपत्तिः ।

## ब्रह्मण उपादानत्वे निर्विकारश्रुतिविरोधमभिधाय परमते उपादानत्वानिर्वाहसमर्थनम्—

अपि च ब्रह्मण उपादानत्वे निर्विकारत्वश्रुतिविरोधः । विकारिकारणस्यैवोपादानत्वात् । तस्माद् ब्रह्मण उपादानत्वायोगात् तत्र जगतो निषेधेऽपि न मिथ्यात्वं न वा तत्प्रयुक्तमध्यस्तत्वमिति ।

१. देव्यु. ४

अत्र नवीनाः— न तावद्विकारवत्कारणत्वमुपादानत्वं यद् ब्रह्मणो न सम्भवतीत्युच्यते। तथाहि–विकारवत्त्वं न समवायेन। समवायस्यानभ्युपगमात्। नापि संयोगेन। उपादानोपादेययोः संयोगासम्भवात्। संयोगेन भूतलादिदेशस्यापि घटादिरूपविकारवत्त्वेन तं प्रत्यधिकरणतया कारणत्वेन चातिप्रसङ्गात्। नापि तादात्म्येन तथात्वमुपादानत्वं तादात्म्यशब्देनात्यन्ताभेदोक्तौ कार्यकारणभावानुपपत्तेः। प्रागसतः पश्चाच्च सत एव कार्यत्वात्। प्राक् सत एव कारणत्वात्। प्राक्कारणवत्कार्यस्यापि सत्त्वापत्त्या सामग्रीसम्पादनवैयर्थ्यात्। मृदवस्थायामपि घटादि(घटधी)व्यवहारप्रसङ्गात्। तदुचितार्थक्रियापत्तेश्च। मृदवस्थायां घट इति ज्ञानस्याभ्रमत्वापत्तेश्च। सामग्र्यास्तदभिव्यञ्जकत्वस्य निरस्तत्वाच्च। भेदाभेदयोश्च विरुद्धत्वेन तादात्म्यशब्देनावक्तव्यत्वात् अन्यस्य तादर्थ्यशब्दार्थस्यानभ्युपगमात्। असम्भवाच्च। ननु नात्र विकारशब्देन कार्यमुच्यते। किन्तु परिणामः। तथा च परिणामिकारणत्वमेवोपादानत्वमिति चेत् न। तद्धि कारणत्वस्य न तात्त्विकरूपान्तरेणाभेदः अभेदे रूपान्तरत्वस्यैवायोगात्। रूपान्तरत्वे चाभेदानुपपत्तेः। भेदाभेदयोश्च विरोधेनासम्भवात्। तस्मात्परमते कथमपि नोपादानत्वनिर्वाहः।

अस्मत्पक्षे तु यदभिन्नं कार्यमुत्पद्यते तत्कारणमुपादानम्। अभेदश्च पृथक् सत्ताशून्यत्वम्। तच्चाविद्याब्रह्मणोः समानम्। तथाहि— अविद्या तावच्छुद्धब्रह्मगता भूताकारेण परिणमते, तदवच्छिन्नब्रह्मगता भौतिकाकारेण, न च जगतोऽविद्यापरिणामत्वे प्रमाणाभावः, जगदविद्यापरिणामः कार्यत्वात् शुक्तिरूप्यवत्, जगत् जडोपादानकं कार्यत्वात् घटवदित्यनुमानस्यैव लाघवतर्कसहकृतस्य तत्र मानत्वात्।

अथवा तन्त्वनुपादानकं कार्यं पटोपादानजडोपादानकं कार्यत्वात् पटवदित्यनुमानम् (तत्र मानम्)। न चाप्रयोजकत्वं सर्वस्यापि घटस्यानुगतैकोपादानाभावे घटोऽयं घटोऽयमित्यनुगतप्रत्ययस्य निरालम्बनत्वप्रसङ्गात्। न च घटत्वजातिस्तदालम्बनं, घटपटादौ सर्वत्रानुगतघटपटादिप्रत्ययनियामकतयानुगतैकाविद्याया एव स्वीकर्तुमुचितत्वात्। अन्यथा घटत्वपटत्वाद्यनन्तजातिकल्पनागौरवप्रसङ्गात्। न चैवं घट इव पटादावपि घट इति प्रत्ययप्रसङ्गः अविद्यारूपघटवृत्तिजातेरेव पटादावप्यविशेषादिति वाच्यम्। घटबुद्धौ घटरूपव्यक्तिविशेषस्यापि कारणत्वात्। सर्वसर्वगता जातिरिति मते व्यक्तिविशेषसमवायादेव तस्यास्तद्बुद्धिविषयत्ववदेकस्यापि सर्वानुगतस्य व्यक्तिविशेषसम्बन्धात् तथात्वोपपत्तेः। व्यक्तिसर्वगता जातिरिति मतेऽपि व्यक्तिविशेषस्यैव तत्तत्प्रत्ययविशेषनियामकत्वात्। सर्वाधारत्वेन काले सर्वजातिसत्त्वेऽपि घटादिबुद्ध्यभावात्। स्वसम्बन्धविशेषस्यापि तन्नियामकत्वे एकस्याप्यज्ञानस्य तत्तद्व्यक्तिविशेषतादात्म्यात् तत्तद्बुद्धिरिति किमनन्तजातिकल्पनया। तस्मात् जडं कारणमेव कार्येष्व-

नुस्यूतं तत्तदनुगतबुद्धिविषयः । तच्चानिर्वचनीयाविद्यैवेति । एवं ब्रह्मापि जगद्विवर्ताधिष्ठानत्वेन जगदुपादानं विवर्तस्याधिष्ठानसत्तान्यसत्ताशून्यत्वात् । ब्रह्मणो जगत्कारणत्वाच्च । तथाहि । सन् घट इत्यादि अनुभवात् सद्घटयोरभेदाऽनुभवसिद्धः सच्च ब्रह्मैव, तदतिरिक्तसत्तायाः प्रमाणाभावात् । न तावद् घटः सन्निति प्रतीयमाना सत्ता घटादिस्वरूपमेव घटो घट इतिवत् सन् घट इति सहप्रयोगायोगात् अनुगतसद्बुद्धेरनुगतसत्ताविषयत्वाच्च । नापि पराभिमतसत्ताजातिः । सन्निति बुद्धिर्हि घटपटादेः सत्तादात्म्यं विषयीकरोति, न तु तस्या घटादिनिष्ठत्वमपि तस्यास्तत्रौदासीन्यात् । सत्तादात्म्यञ्चानिदमिति रजत इदन्तादात्म्यवत्सद्विलक्षणेऽपि घटादौ सद्ब्रह्माधिष्ठानकत्वेन सन् घट इति बुद्धिरुपपद्यते । युक्तञ्च तथाऽतिरिक्तसत्ताकल्पने गौरवात् । अनुभवस्य सदात्मविषयत्वेऽप्युपपत्तेः । न चैवं रजत इदन्तादात्म्यबाधवत् घटादौ सत्तातादात्म्यबाधः स्यादिति वाच्यम् । सत्तादात्म्यस्य अनुभवहेतुमूलाज्ञानानिवर्तकसाक्षात्काराभावात् । यौक्तिकबाधस्त्विष्ट एव । विमतं घटादिकं बाधायोग्यं न भवति जडत्वात् शुक्तिरूप्यवत् । न चाप्रयोजकत्वम् । आत्मातिरिक्तसत्ताकल्पनागौरवात् । सिद्धान्ते च लाघवाच्छ्रुतिरपि न ह्यस्ति द्वैतसिद्धिः आत्मैव सिद्धो द्वितीयो मायया ह्यन्यदिव "यस्मात्परं नापरमस्ति किञ्चिदि"-त्यादिर्विश्वस्य स्वाभाविकसत्तां निराकरोति [1]"अस्तीत्येवोपलब्धव्यम्", "अस्ति ब्रह्मेति चेद्वेद" इत्यादिश्रुतिरात्मनोऽस्तित्वं दर्शयति । किञ्च किं जातिः सति वर्तते ? किं वा असति ? आद्ये आत्माश्रयः । द्वितीये सत्तायाः असदाश्रयत्वानुपपत्तिः अन्यथा नृशृङ्गादेरपि तथात्वापत्तिः ।

## प्रपञ्चस्य बाधायोग्यत्वसमर्थनम्—

यत्तु सत्तोपलक्षिते सेति तन्न, तदुपलक्षितसत्ताश्रयस्यापि सदसदन्यतरत्वनियमेनोक्तदोषतादवस्थ्यात् । सदसद्व्यतिरिक्तप्रकारान्तरस्य त्वयानभ्युपगमाच्च । अपि च सद्बुद्धिविषयः सत्ताजातिश्चेत् सामान्यादौ सद्बुद्ध्यभावप्रसङ्गात् । तत्र सत्ताप्रसङ्गाद्वा तत्रापि सत्तैकाधिकरण्येन सद्बुद्धिरिति चेन्न, अन्यत्र सद्बुद्धेः सत्तासाक्षात्सम्बन्धविषयत्वेन प्रतीतिवैलक्षण्यं विना सामान्यादौ विषयवैलक्षण्यकल्पनायोगात् । अन्यथा गुणादावपि सत्तैकाधिकरण्यप्रयुक्तैव सद्बुद्धिः स्यात् । अत एव सामान्यादौ स्वरूपविषयिणी सद्बुद्धिरन्यत्र जातिविषयिणीति प्रत्युक्तम् । एकाकारप्रतीतेर्विषयवैलक्षण्यायोगात् । सामान्यादावनुगतसद्बुद्ध्यभावप्रसङ्गाच्च । बाधायोग्यत्वलक्षणा सत्ता सामान्यादावप्यस्तीति सैव सर्वत्र सद्बुध्यालम्बनमिति चेत् । तस्या एव सत्तायाः लाघवानुगृहीतानुभवबलेनोदाहृतश्रुत्या चात्ममात्रतया सिद्धत्वात् । प्रपञ्चस्य श्रुत्यनुमानाभ्यां बाधायोग्यत्वस्यैव सिद्धत्वात् । एतेन "असद्वा इदमग्र आसीत्" इत्यादिश्रुत्या ब्रह्मणोऽपि बाधितत्वात् ब्रह्मापि सदिति नवीनोक्तं प्रत्युक्तम् । "असन्नेव स भवति

१. कठ. ६-१३

असद्ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद'', ''सन्तमेनं ततो विदुरि''ति श्रुत्या ब्रह्मणोऽसत्त्वं निषिध्य सत्त्वस्यैव प्रतिपादितत्वात् । 'असद्वे'त्यादिश्रुतिस्तु सृष्टेः प्राक् प्रपञ्चस्य अनभिव्यक्तनामरूपतां दर्शयति । न तु ब्रह्मणोऽसत्त्वमिदमिति जगतः परामर्शात् । 'ततो वै सदजायते'त्युत्तरवाक्यविरोधाच्च कथमसतः सज्जायेतेति श्रुत्यैवासतः सदुत्पत्तेर्निराकरणाच्च ।

## बाधायोग्यत्वं सत्त्वं नेत्याशङ्क्य असतः बाधयोग्यत्वसमर्थनम्—

ननु बाधायोग्यत्वं न सत्त्वम् । असतोऽपि बाधायोग्यत्वेन सत्त्वापत्तेः । न ह्यसदभावः केनचित् प्रमाणेन प्रमीयते । किन्तु प्रमाणायोग्यत्वमेव तत् । तच्च प्रपञ्चस्यापि प्रत्यक्षादियोग्यत्वादस्तीति न सदभेदानुभवो न ब्रह्मगोचर इति चेत् न, धर्मस्य स्वरूपस्य वा बाधायोग्यत्वस्य निःस्वरूपेऽसत्यसम्भवात् । न हि तस्य कश्चिद्धर्मो न वा किञ्चित्स्वरूपमस्ति । तथात्वे क्लृप्तपदार्थस्यैव कस्यचिदसदिति नाममात्रं कृतं स्यात् । कथं तर्ह्यसत् सन्न भवतीत्यादिनिषेधः । असतो निर्धर्मकत्वेन निःस्वरूपत्वेन च निषेधावधित्वस्य धर्मभूतस्य स्वरूपभूतस्य वाऽसम्भवादिति चेन्न, असदिति ज्ञानं सद्विषयं न भवतीत्यस्यैवासत् सन्न भवतीत्येतन्निषेधः ? असतो निर्धर्मकत्वेन निःस्वरूपत्वेन च निषेध्यवधित्वस्य धर्मभूतस्य स्वरूपभूतस्य वा असम्भवादिति चेत् न । असदिति ज्ञानं सद्विषयं न भवतीत्यस्यैव असन्न भवतीत्येते निषेध्यर्थत्वात् । असतो ज्ञानविषयत्वं वा कथमिति चेन्न, कथञ्चिन्निर्विषयं ज्ञानमेव नास्तीति चेन्न, परमते अतीतादिविषयेतरस्य भूयसः सत्त्वात् परोक्षज्ञानस्य विषयाजन्यत्वेन विषयं विनानुत्पत्त्यभावात् तत्कथं तर्ह्यसतो सत्त्वसिद्धिरिति चेत् सा सिद्धिरुत्पत्तिर्ज्ञानं वा, आद्ये न कथमपि। ज्ञानं तु निर्विषयमेवेत्युक्तम् । तस्मान्नासतो बाधायोग्यत्वम् । येन तस्यासत्यतिप्रसक्ततया सत्त्वरूपत्वं न स्यात् ।

यत्तु प्रमाणयोग्यत्वमेव सत्त्वमित्युक्तं, तत्र प्रमाणं यद्यबाधितोऽनुभवः बाधायोग्यत्वमेव सत्त्वमित्यायातम् । यदि चानुभवमात्रं तर्हि मिथ्या रजतादेरपि सत्त्वप्रसङ्गः ।

## जगदनिर्वचनीयाविद्याब्रह्मोभयोपादानकत्वस्य विमर्शः—

ननु बाधायोग्यत्वं, प्रमाणयोग्यत्वं वा सत्त्वम् । यदि ब्रह्मस्वरूपं तदा ब्रह्मपदार्थातिरिक्ताभावेन सद्ब्रह्मेति प्रत्ययप्रयोगौ न स्याताम् । यदि ब्रह्मणोऽन्यत् तदा मुक्तौ तत्सत्त्वेऽद्वैतहानिः । असत्त्वे ब्रह्मणोऽसत्त्वप्रसङ्गः । बाधायोग्यत्वस्य कल्पितत्वेऽपि एष दोषः सम इति चेन्न, ब्रह्मणो बाधयोग्यतायाः श्रुत्यैव निराकरणात् । एवञ्च कल्पितबाधायोग्यत्वविशिष्टं बाधायोग्यं चैतन्यं सच्छब्दार्थः । कल्पितब्रह्मत्वादिविशिष्टं वृक्षचैतन्यं ब्रह्मशब्दार्थ इति सद्ब्रह्मयोर्न सामानाधिकरण्यानुपपत्तिः । न वा द्वैतहानिरिति । तस्माज्जनिमन्मात्रे स्फुरणसत्तातादात्म्यानुभवात् स्फुरणात्मकं सद् ब्रह्मापि विवर्ताधि-

ष्ठानत्वेन उपादानमिति जगदविद्याब्रह्मोपादानकम् । तदाहुः । ''अस्ति भाति प्रियं रूपं नाम चेत्यंश-पञ्चकम् । आद्यं त्रयं ब्रह्मरूपं जगद्रूपं तथाद्वयम्'' इति । कल्पितविकारसम्बन्धस्य वास्तवनिर्विकार-त्वाविरुद्धत्वात् । न निर्विकारत्वश्रुतिविरोधः । न च ब्रह्मणो जगदुपादानत्वे विकारस्योपादानसमान-स्वभावत्वनियमात् परमार्थत्वप्रसङ्गः । अन्यथानिर्वचनीयत्वमपि न स्यादिति वाच्यम् । परिणामस्य परिणामिसमानस्वभावत्वनियमेन जगतश्चाविद्यापरिणामतया तत्समानानिर्वचनीयत्वस्वभावत्वसम्भ-वेऽपि ब्रह्मविवर्ततया तत्परिणामत्वाभावेनापरमार्थत्वोपपत्तेः । विवर्तस्य चाधिष्ठानब्रह्मचैतन्यसमान-स्वभावत्वाभावात् । अन्यथा शुक्तिरूप्यादेरप्यधिष्ठानसमसत्ताकत्वापत्त्या विवर्तत्वाभावप्रसङ्गः । तस्मात्तन्त्वजन्यो घटादिः स्वोपादानजडातिरिक्तोपादानकः कार्यत्वात्पटवदिति चेतनोपादानकत्व-सिद्धिः । अन्यथा सन् घटः इत्याद्यनुभवानुपपत्तेः । एवं 'आत्मनः आकाशः सम्भूत' इत्यादिश्रुतिरपि ब्रह्मणो जगदुपादानत्वे मानमिति जगदनिर्वचनीयाविद्याब्रह्मोभयोपादानकं इति सिद्धम् ।

तत्र ब्रूमः । 'अजामेकां' इत्यादिश्रुतिसिद्धं त्रिगुणात्मकं जडं प्रकृतिशब्दितं जगदुपादानकारण-मित्यावयोरविवादम् । तस्यानिर्वचनीयत्वे परं विवादः । अनिर्वचनीयत्वञ्च मूलप्रकृतेरयुक्तम् । स्वरू-पस्य वा धर्मरूपस्य वा सत्त्वस्य 'तम आसीदि'त्यादिश्रुतिसिद्धतया तस्याः सत्त्वानधिकरणत्वरूपा-निर्वचनीयत्वानुपपत्तेः । प्रत्युत निर्धर्मकत्वेन ब्रह्मण एव सत्त्वरूपधर्मानधिकरणत्वेनानिर्वचनीयत्व-प्रसङ्गः । स्वरूपसत्वं च मूलप्रकृतेरपि ब्रह्मवदविशिष्टम् । ब्रह्ममूलप्रकृतिस्वरूपयोर्द्वयोरपि ''सत्यं ज्ञान-मनन्तं ब्रह्म'', ''तम आसीदि''त्यादिश्रुतिसिद्धत्वाविशेषेण ब्रह्मस्वरूपमेव स्वस्य जगतश्च सत्त्वं न मूल-प्रकृतिरूपं तथेत्यत्र विशेषहेत्वभावात् ।

## बाधायोग्यत्वविशिष्टस्वरूपस्यैव सत्त्वमित्यस्य निराकरणम्—

ननु न स्वरूपमात्रं सत्त्वं किन्तु बाधायोग्यं स्वरूपम् । अन्यथा शुक्तिरूप्यादेरपि सत्त्वापत्तेः । बाधायोग्यं च स्वरूपं ब्रह्मैव न प्रकृतिर्न वा जगत् । सप्रकृतिकस्य जगतो ''नेह नानास्ति किञ्चन''-त्यादिश्रुत्या बाधितत्वादिति चेन्न । लाघवेन स्वरूपमात्रस्यैव सत्त्वरूपत्वेन बाधायोग्यत्वविशेषण-वैयर्थ्यात् । शुक्तिरूप्यादेरत्यन्तासत्त्वेन निस्स्वरूपत्वात् वियदादेर्घटादेश्च सस्वरूपत्वे शुक्तिरूप्यादेः नृशृङ्गादेश्च निःस्वरूपत्वे च संविद एव साक्षित्वात् । तदुक्तम् ''संविदेव हि भवती वस्तूपगमे नः शरणम्'' इति ।

किञ्च बाधो नाम न प्रमाणनिषिद्धत्वं, प्रतिपन्नोपाधौ प्रमाणनिषिद्धत्वं वा । ''अघटं भूतलम्'' इति प्रत्यक्षेण, ''न कलञ्जं भक्षयेत्'', ''नातिरात्रे षोडशिनं गृह्णाति'' इत्यादिश्रुत्या च प्रतिपन्नोपाधौ भूतले कलञ्जभक्षणादौ च निषिद्धस्य घटकर्तव्यत्वादेस्तत्र बाधितत्वप्रसङ्गात् । प्रतिपन्नोपाधिशब्देनोपादान-विवक्षायामविद्यादेस्तदभावेन ''नेह नाने''ति ब्रह्मणि निषिद्धत्वेऽपि तत्र तस्याबाधितत्वप्रसङ्गात् ।

आरोपाधिष्ठानविवक्षायां च ब्रह्मणस्तथात्वस्य ब्रह्मणि नित्यनिर्दोषश्रुतिजन्यप्रपञ्चज्ञानारोपत्वसिद्ध्यधीनत्वेन तत्सिद्धेश्च प्रपञ्चबाधितत्वसिद्ध्यधीनत्वेनान्योन्याश्रयात् ।

एतेन विवर्ताधिष्ठाने प्रमाणनिषिद्धत्वं बाधितत्वमिति प्रत्युक्तम् । वियदादिसकलप्रपञ्चस्य त्वद्रीत्याऽतात्त्विकत्वेनान्योन्यापेक्षयान्यथा प्रकारान्तरेण भावस्य व्युत्पत्तेर्विद्यमानत्वस्य वा सत्त्वेन तस्यैव च विवर्तशब्दार्थत्वेन परस्परं विवर्ताधिष्ठानत्वप्रसङ्गात् । न हि भूतलादौ तदपेक्षया अतात्त्विकान्यथाभाववतो घटादेः न प्रत्यक्षादिप्रमाणेन निषेध इत्यस्ति । एतेनैव प्रतिपन्नोपाधिशब्देनोपादानानुपादानसाधारणमधिकरणमात्रं विवक्षितम् । तत्र सर्वत्र प्रमाणनिषिद्धत्वं बाधितत्वमित्यपि प्रत्यूढम्, अविद्यादेर्वियदादेश्च "नेह नानास्ती"त्यादिश्रुत्या ब्रह्मणि निषिद्धत्वेऽपि अन्यत्रानिषिद्धतया अबाधितत्वप्रसङ्गात् । न हि निषेधश्रुतेर्ब्रह्मव्यतिरिक्तेऽपि जगन्नास्तीत्यत्रार्थे व्यापारं पश्यामः ।

## प्रमाणनिषिद्धत्वमात्रस्य बाध्यत्वरूपत्वे बाधकाभिधानम्—

अपि च यत्र कश्चित्प्रमाणनिषिद्धत्वमात्रस्य बाध्यत्वरूपत्वे "नेहनानास्ति किञ्चने"त्यादिश्रुत्या ब्रह्मणि सप्रकृतिकप्रपञ्चस्यैव ब्रह्मणोऽप्युक्तरीत्या निषिद्धत्वेन बाधितत्वापत्तिः । न च नाना किञ्चनश्रुतेर्ब्रह्मव्यतिरिक्तपरत्वेन सङ्कोचकमस्तीत्युक्तत्वेन नानाशब्दस्य भिन्नार्थत्वे ब्रह्मणोऽपि "तेभ्यो विलक्षणः साक्षी चिन्मात्र" इत्यादिश्रुत्या भोग्यभोक्तृभोगेभ्यो भिन्नत्वावेदनात् । न च ब्रह्मण एकत्वेन बह्वर्थकेन नानापदेनैव ब्रह्मव्यावृत्तिरिति वाच्यम् । ब्रह्मणो ब्रह्मत्वेन बहुत्वाभावेऽपि वस्तुत्वादिना बहुत्वात् । अन्यथा तद्व्यक्तित्वेन बहुत्वाभावस्य प्रपञ्चमात्रसाधारणतया तेनैव नानापदेन ब्रह्मवत्प्रपञ्चस्यापि व्यावृत्तिप्रसङ्गात् ।

एतेन सप्रकृतिकप्रपञ्चस्य बाधितत्वं "सत्यं ज्ञानमनन्तमि"त्यनन्तशब्दनिषिद्धत्वात् सिद्ध्यतीति परास्तम् । वस्त्वभेदशून्यत्वस्यानन्तशब्दार्थत्वे मानाभावात्, भावे वा "सर्वं खल्विदं ब्रह्मे"त्यादि श्रुतिप्रतिपन्नसत्यब्रह्माभिन्नस्य प्रपञ्चस्य सत्यत्वानपायात् । अनन्तशब्देन वस्तुतः परिच्छेदरूपतद्भेदमात्रनिषेधात् । "अनन्ता वै वेदा स यथानन्तोऽयमाकाश एवमनन्तात्मा वेदितव्य", इत्यनन्तशब्देन वेदादिष्वपि वस्तुतः परिच्छेदरूपभेदशून्यत्वप्रसङ्गश्च । एतेनानन्तशब्देन वस्तुतः परिच्छेदे निषिद्धे तस्य विशिष्टनिषेधतया प्रपञ्चे बाधितत्वसिद्धिरिति परास्तम् । वेदाद्यनन्तत्वश्रुत्या तद्वद्विशिष्टनिषेधे प्रपञ्चवद् ब्रह्मणोऽपि निषिद्धत्वेन बाधितत्वप्रसङ्गात् ।

## प्रमाणनिषिद्धत्वस्य बाधितत्वे युक्त्यन्तरनिरासः—

ननु "सत्यं ज्ञानमनन्तं ब्रह्मे"ति श्रुत्या ब्रह्मणः सत्यत्वावगमात् ब्रह्मान्यस्य सतः प्रतिपन्नोपाधौ प्रमाणनिषिद्धत्वं बाधितत्वमित्याश्रियत इति चेत् न । "विश्वं सत्यं मघवाना, ऐतदात्म्यमिदं सर्वं,

तत्सत्यम्'' इत्यादिश्रुत्या सप्रकृतिकप्रपञ्चस्यापि सत्यत्वावगमात् तदन्यस्यापि सतः प्रतिपन्नोपाधौ प्रमाणनिषिद्धत्वं बाधितत्वमित्याश्रयणापत्तेः । न च ''विश्वं सत्यं'' इत्यादिश्रुतिर्ब्रह्मरूपाधिष्ठानौपाधिकं सप्रकृतिकप्रपञ्चस्य सत्यत्वमाह । न तु ''सत्यं ज्ञानमनन्तं ब्रह्मे''त्यादि श्रुतिः प्रकृत्यधिष्ठानौपाधिकं ब्रह्मणः सत्यत्वमित्यत्र नियामकमस्ति । न च प्रकृत्यादेरारोपितत्वनिर्णयात्प्राक् ब्रह्मणः तदधिष्ठानत्वेऽन्यन्मानमस्ति । न च [1]''यस्मिन्पञ्चपञ्चजना आकाशश्च प्रतिष्ठितः'', ''यस्मिन् द्यौरि''त्यादि श्रुतिर्ब्रह्मणो जगदारोपाधिष्ठानत्वे मानम् । तस्यापदार्थत्वादवाक्यार्थत्वाच्च तदाधाराधेयभावस्यैव वाक्यार्थत्वाच्च । अन्यथा ''अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः'' इत्यादि श्रुतिः सर्वशब्दार्थभूतप्रकृतेर्ब्रह्माधिष्ठानारोपत्वे मानमिति स्यात् । न च ब्रह्मणि ''नेह नाने''ति प्रपञ्चस्य निषेधात् तद्बलेन ब्रह्मणस्तदारोपाधिष्ठानत्वसिद्धिः । ब्रह्मणि ब्रह्मणोऽपि ''नेह नाने''ति निषेधात् स्वारोपाधिष्ठानत्वसिद्धिप्रसङ्गात् । प्रत्यक्षादिना घटस्य स्वस्मिन्निषेधेऽपि तत्र तदारोपाधिष्ठानत्वाभाववद् ब्रह्मणः स्वस्मिन्निषेधेऽपि स्वस्य स्वारोपाधिष्ठानत्वाभावोपपत्तिरिति चेत् न । कलञ्जभक्षणादौ ''न कलञ्जं भक्षयेदि''ति श्रुत्या कार्यत्वस्य निषेधेऽपि तद्भक्षणादेस्तदारोपाधिष्ठानत्वाभाववद् ब्रह्मणि ''नेह नाने''ति प्रपञ्चस्य निषेधेऽपि ब्रह्मणस्तदारोपाधिष्ठानत्वाभावोपपत्तेरिति साम्यात् । न च ''नेह नाने''ति बाधकमानान्यथानुपपत्त्यैव ''यस्मिन्द्यौरि''त्यादि श्रुतिजन्यज्ञानस्यारोपितत्वसिद्धिरिति वाच्यम् । निषेधमात्रस्य बाधकमानत्वस्योक्तत्वात् ब्रह्मणि प्रपञ्चनिषेधस्यैव तद्विधेरपि नित्यनिर्दोषत्वे तात्पर्यलिङ्गवत्त्वेन चाविशेषे विधिजन्यज्ञानस्यैवारोपत्वं न निषेधजन्यज्ञानस्येत्यत्र नियामकाभावाच्च विधिजन्यज्ञानारोपत्वसिद्धेः ''नेह नाने''त्यादेर्बाधकत्वसिद्ध्यधीनत्वेनान्योन्याश्रयत्वाच्च । कालवद्ब्रह्मणोऽपि सर्वाधारत्वेन तत्र प्रपञ्चतन्निषेधयोरविरुद्धतया तत्र निषेधज्ञानस्य प्रपञ्चज्ञानारोप्यत्वकल्पकत्वाऽयोगाच्च। शुक्तिरूप्यमिथ्यात्वस्य च मिथ्यैव रूप्यमभादिति परीक्षितप्रत्यक्षसिद्धत्वेन नान्योन्याश्रयशङ्कावकाशः । अन्यथा भूतलादौ घटाद्यपनयनानन्तरं जायमानघटाद्यभावप्रतीत्या पूर्वोत्पन्नघटादिसत्त्वप्रतीतेरारोपत्वप्रसङ्गः । एवमिदानीं घटतदभावाविति निषेधप्रतीत्या घटांशे तस्या एवारोपत्वापत्तिः ।

किञ्च पूर्वोत्पन्नज्ञानस्य परीक्षितविशेषदर्शनिनाप्रामाण्यज्ञापनं विना निषेधबुद्धिरेव नोत्पत्तुमर्हतीति क्व तत्र बाधकत्वचिन्ता । न च निर्विशेषब्रह्मणि तादृशविशेषदर्शनं सम्भवति, येन पूर्वोत्पन्न ब्रह्म सप्रपञ्चत्वज्ञानस्य भ्रमत्वज्ञापने सति ब्रह्मणि प्रपञ्चनिषेधबुद्धिरुदयमासादयेत् । प्रपञ्चज्ञानबाधिका वा स्यात् । भ्रमानन्तरं नायं सर्प इत्याप्तवाक्याद्वादिवाक्यादिव ज्ञानमात्रोत्पत्तावपि पूर्वोत्पन्नज्ञाने विशेषदर्शनिनाप्रामाण्यं ज्ञापनं विना निर्विचिकित्सज्ञानोत्पत्तिरसिद्धैव । यत्रापि वाक्यश्रवणानन्तरमेव विशेष-

१. बृह. ६-४-१७

गवेषणां विना भयकम्पादि निवर्तते तत्राप्यन्ततः तादृशाप्तवाक्यविशेषतात्पर्यविषयत्वादेरेव विशेषस्य सम्भवेन तज्ज्ञानावश्यम्भावात् । न चैवं ब्रह्मण्यपि कल्पितविशेषदर्शनसम्भवेन सप्रपञ्चत्वज्ञानस्याप्रामाण्यज्ञापनं सुलभमिति वाच्यम् । ब्रह्म सप्रपञ्चत्वनिष्प्रपञ्चत्वश्रुत्योर्नित्यनिर्दोषत्वापूर्वत्वादिलक्षणतात्पर्यलिङ्गवत्त्वतौल्ये कल्पितविशेषदर्शनेन तादृशश्रुतिजन्यप्रपञ्चत्वज्ञानेऽप्रामाण्यज्ञापने तादृशश्रुतिजन्यनिष्प्रपञ्चत्वज्ञानेऽपि कल्पितसप्रपञ्चत्वव्याप्यदर्शनसम्भवेनाप्रामाण्यज्ञापनस्य सुलभत्वात् । अपि च 'यस्य यत्रोत्पत्तिर्विनाशज्ञानं दोषाजन्यं न तत्र तस्य ज्ञानमारोप' इति नियमात् कथं ब्रह्मणि निर्दोषश्रुतिजन्यसप्रपञ्चत्वज्ञानस्यारोपत्वं ब्रह्मणि च प्रपञ्चोत्पादविनाशज्ञानस्य "यतो वे'त्यादि निर्दोषश्रुतिजन्यत्वेन दोषाजन्यत्वमुभयसिद्धमेव । न च शुक्तिरूप्यादेरुत्पत्तौ विनाशे च श्रुतिरस्ति न वा प्रत्यक्षम्। न च योग्यजातीयस्योत्पत्तिर्विनाशो वा कदापि न प्रत्यक्ष इति दृष्टचरम् । एतेन कादाचित्कभावत्वेन शुक्तिरूप्यादेरुत्पत्त्याद्यनुमानमपि निरस्तम् । असिद्धेः । न च कादाचित्कप्रतीत्यैव तत्सिद्धिः । तथा सति नृशृङ्गादेरपि तथात्वापत्तेः । नापि तादृशापरोक्षप्रतीतिविषयत्वेन तत्सिद्धिः । नृशृङ्गादेरपि स्वज्ञानानुव्यवसायादिविषयत्वेन तथात्वादप्रयोजकत्वाच्च । अपि च यत्र यदवच्छेदेन यत्प्रतिपन्नं तत्र तदवच्छेदेन तदभावप्रमितिर्हि बाधः । न हि ब्रह्मणि वियदाद्यभावस्तथा प्रमीयते येन स बाध इत्युच्येत, किन्तु सामान्यतः । न च सामान्यप्रमितिरेव बाधः । भिन्नावच्छेदेन तदभावसत्त्वमादायापि सामान्यतः प्रमितिसम्भवात् ।

## भ्रमलक्षणनिरूपणपुरस्सरं कथमपि प्रपञ्चज्ञानस्य भ्रमत्वकल्पनं न सम्भवतीति प्रतिपादनम्—

किञ्च दुष्टकरणजन्यं हि ज्ञानं भ्रमः न हि वेदो दुष्टकरणम् । अपि च दोषजन्यज्ञानं हि भ्रमः । न हि ब्रह्मणि प्रपञ्चबोधकश्रुतौ क्लृप्तशब्ददोषो अस्ति येन तत् श्रुतिजन्यसप्रपञ्चब्रह्मज्ञानं दोषजन्यत्वात् भ्रम इत्युच्येत । न चाक्लृप्तदोषान्तरकल्पने मानमस्ति । एवं योग्यप्रपञ्चप्रत्यक्षेऽपि अभ्रमत्वं भ्रमत्वापादकक्लृप्तदोषादर्शनात् । शुक्तिरूप्यप्रपञ्चब्रह्मज्ञानं दोषजन्यत्वात् भ्रम इत्युच्येत । न चाक्लृप्तदोषान्तरकल्पने मानमस्ति । एवं योग्यप्रपञ्चप्रत्यक्षेऽपि अभ्रमत्वं भ्रमत्वापादकक्लृप्तदोषादर्शनात् । शुक्तिरूप्यप्रत्यक्ष इव प्रपञ्चप्रत्यक्षभ्रमत्वस्य प्रत्यक्षदृष्टत्वाभावेन क्लृप्तदोषान्तरकल्पनाऽसम्भवात् । न हि शुक्तिरूप्यप्रत्यक्षभ्रमत्वमप्रत्यक्षम् । तस्य 'मिथ्यैव रजतं प्रत्यभादि'ति साक्षिप्रत्यक्षसिद्धत्वात् । न चैवमप्रामाण्यस्य स्वतो ग्रहणापत्तिः बाधानवतारदशायां भ्रमग्राहकसामग्र्या भ्रमत्वग्रहणे यावत्स्वाश्रयग्राहकग्राह्यत्वाभावात् । एतेनाधिष्ठाने यन्मानं न निषिध्यते तस्य तत्रैव विधिज्ञानं भ्रमः इति निरस्तम् । अधिष्ठानशब्देन आश्रयविवक्षायां वृक्षादौ कालभेदेन एककालेऽपि शाखाग्राद्यवच्छेदभेदेन एकावच्छिन्नेऽपि

सम्बन्धभेदेन प्रत्यक्षप्रमाणनिषिद्धकपिसंयोगादिज्ञानस्यापि भ्रमत्वापत्तेः कलञ्जभक्षणादौ निषिद्धेष्ट-साधनत्वप्रत्यक्षस्यापि भ्रमत्वापत्त्या तृप्तिरूपेष्टसाधनत्वस्यापि कलञ्जभक्षणाद्यपेक्षया न्यूनसत्त्वापत्तेः। न च 'कलञ्जं भक्षयेदि'त्यादेः न कलञ्जभक्षणमनिष्टसाधनमित्याद्यर्थपरतया न तन्निषेधार्थ इति वाच्यम्। 'नेह नानास्ति किञ्चने'त्यादिवत् न कलञ्जमित्यादेरपि निषेधार्थत्वत्यागे कारणाभावेनान्यार्थकल्पना-योगात्। न च प्रत्यक्षं तव श्रुत्यपेक्षया प्रबलं येनान्योन्यार्थत्वकल्पना युक्ता स्यात्।

अपि चैवं ब्रह्मणि 'यस्मिन्द्यौरि'त्यादि नित्यनिर्दोषश्रुतिजन्यप्रपञ्चज्ञानस्य भ्रमत्वकल्पनं विनैव 'नेह नाने'त्यादेरन्यार्थत्वकल्पनापत्तिः। 'नेह नाने'त्यादेर्ब्रह्मणि वियदादिप्रपञ्चाव्याप्यवृत्तित्वपरत्व-सम्भवात् तत्र वियदादिप्रपञ्चसत्त्वावगाहिश्रुतिजन्यज्ञानस्याभ्रमत्वोपपत्तेः। अबाधेनैवोपपत्तौ बाधस्या-न्याय्यत्वाच्च। एतेनैवाविशेषेण सर्वत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं मिथ्यात्वं विवक्षितम्, अतो नोक्तदोष इति निरस्तम्। शुक्तिरूप्यस्य मिथ्यात्वे इदं रूप्यं नास्ति नासीन्न भविष्यतीति कालत्रयेऽपि इदं रजतं न कुत्राऽपि नेत्यनुभवस्येव ब्रह्मणि तथा प्रपञ्चाभावावेदकज्ञानाभावात् शुक्तिरूप्यमिथ्यात्वस्य मिथ्यैवेदं रजतमिति प्रत्यक्षेणार्थक्रियासामर्थ्याभावरूपानुमानेन च सिद्धत्वात्। न च प्रपञ्चमिथ्यात्वे ईदृशप्रमाणावतारस्सम्भवन्दृष्टः। श्रुतिश्चान्यार्थपरा सम्भवतीत्युक्तम्। अपि च ब्रह्मणि प्रपञ्चस्य श्रुत्या-निषेधेऽपि प्रकृत्यादिष्वनिषेधात्। न तस्य मिथ्यात्वं न वा तत्र तज्ज्ञानं भ्रमः सर्वत्र प्रतिपन्नोपाधौ निषेधप्रतियोगित्वं हि तव मिथ्यात्वम्। अयं पटादिरेतत्तन्त्वादिनिष्ठात्यन्ताभावप्रतियोगी पटादित्वा-दित्याद्यनुमानेनान्यत्र असतः पटादेः तन्त्वादिष्वपि निषेधे तन्मिथ्यात्वं स्वत एव पर्यवस्यतीति चेन्न। तदनुमानस्य परीक्षितप्रत्यक्षादिना बाधितत्वात्। अन्यथा ब्रह्म प्रपञ्चनिष्ठात्यन्ताभावप्रतियोगि ज्ञेय-त्वात्पटवदित्यादिना ब्रह्मणोऽपि मिथ्यात्वसिद्धिप्रसङ्गः। तत्सत्यत्वश्रुतिबाधितमनुमानमिति चेदत्रापि तत्सत्यत्वग्राहिप्रत्यक्षादि बाधितं तन्मिथ्यात्वानुमानमिति समम्।

अपि च ब्रह्मजगतोर्भेदमङ्गीकृत्य सत्तैक्यमङ्गीकुर्वतस्तव सा सत्ता ब्रह्म स्वरूपरूपैव नान्या पारमार्थिकी अपसिद्धान्तापातात्। तथा च सा सत्ता ब्रह्मणीव जगत्यप्यविशिष्टेति कथं ब्रह्मैव परमार्थ-सत् न जगादित्यङ्गीकारो युज्यते। न च ''नेह नानास्ती''ति ब्रह्मणि जगतस्सत्ता निषिद्ध्यते किन्तु तत्र जगदेव। एवं च तेनैव वाक्येन नाना किञ्चनेति प्रतियोगिसमर्पकस्य सङ्कोचकमानाभावेन स्वस्मिन्नि-षिद्धमपि ब्रह्म यथा ''सत्यं ज्ञानमनन्तं ब्रह्मे''त्यादि श्रुतिबलात् परमार्थसदङ्गीक्रियते तथा तत्र ''नेह नाने''ति निषिद्धमपि जगत् ''विश्वं सत्यमि''त्यादि श्रुतिबलात् परमार्थसदङ्गीक्रियतामविशेषात्। न च अस्मिन् घटे कोऽपि घटो नास्तीति भ्रमे प्रतियोगिनि वा घटे घटत्वनिषेधः, किन्तु घटमात्रस्य तद्वदिदमप्यस्तु न चैवमेवास्तीति वाच्यम्। तथापि ब्रह्मवदेव जगतो मिथ्यात्वसम्भवात्। अन्यथा

यस्मिन्द्यौरित्यादिनित्यनिर्दोषजगद्विधायकश्रुत्यप्रामाण्यप्रसङ्गात्। अपि चैवं "न हिंस्यात्सर्वा भूतानि", "ब्राह्मणो न हन्तव्यः" इत्यादि निषेधबलात् 'वायव्यं श्वेतमालभेत", "ब्राह्मणो ब्राह्मणमालभेत" इत्यादि विधायकश्रुत्यप्रामाण्यप्रसङ्गः।

## पूर्वमीमांसाप्रक्रियया श्रुतिमात्रप्राप्तस्य श्रुत्या सर्वात्मना निषेधे विकल्पोच्छेद इति समर्थनम्—

अपि चैवं श्रुतिमात्रप्राप्तस्य श्रुत्या सर्वात्मना निषेधे कथं विकल्पोच्छेदो न स्यात्। "अनाहुतिर्वै जवर्तिलाश्च गवीधुकाश्चेति न जर्तिलयवाग्वा वा न जुहुयात्। गवीयुक यवाग्वावान् जुहुयात्" इति विधायकश्रुतिप्राप्तस्य निषेधः। अत एव दशमे चिन्तितम्। जर्तिलयवावाग्वायु जुहुयात् गवीयुक-यवाग्वावा न ग्राम्यान् पशून् हिनस्ति नारण्यान् अथो खल्वाहुरनाहुतिर्वै जर्तिलाश्च गवीयुकाश्च पयसाग्निहोत्रं जुहूयादिति श्रूयते। तत्र सन्देहः। जर्तिलयवाग्वा वा जुहुयादित्यादिः किं विधिरर्थवादो वा इति तत्र निन्दया निषेधानुमानात् विधिनिषेधाविति पूर्वः पक्षः। सिद्धान्तस्तु "न चेदन्यं प्रकल्पयेत् प्राक्कृप्तार्थवादस्यानर्थक्यात् परसामर्थ्याच्चेति। अत्र शिष्टाऽनुप्रतिषेधः स्यादिति पूर्वाधिकरणसूत्रा-नुषङ्गेण योज्यम्। न चेदन्यं विधिं प्रकल्पयेत्। यद्यत्र प्रत्यक्षः सन्निहितो विधिर्न स्यात् तदा षोडशि-ग्रहणाग्रहणवाक्यवत् एकेन वाक्येन शिष्टा विधाय परेण वाक्येन तस्य प्रतिषेध इति स्यात् इह तु पयसाग्निहोत्रं जुहुयादिति वाक्यस्यैव विधायकत्वकृप्तौ तच्छेषभूतोऽयमर्थवादः स्यात्। अन्यथा निषेधैकवाक्यत्वं विना निन्दात्वाऽनवधारणेनानाहुतित्वकीर्तनस्यान्योन्याश्रयदोषेण निषेधकल्पक-त्वाऽसम्भवात् आनर्थक्यापत्तेः। कथञ्चित्कल्पितस्यापि वा निषेधस्य षोडशिग्रहणनिषेधवत् विक-ल्पार्थत्वात् तस्य च अत्र पयःप्रभृतिद्रव्यान्तरविधानादेव सिद्धेरानर्थक्यस्यापरिहारात्। ग्राम्यारण्य-पशुहिंसानापादकत्वेन प्रशस्तानामपि जर्तिलगवीयुकानां पयोपेक्षया दुष्टत्वात् पयःप्रशस्ततरमिति परेण पयोविधानान्वये सामर्थ्याच्चेत्यर्थः। एवं चैकवाक्यत्वे सम्भवति अनेकादृष्टानुबन्धिवाक्यभेदापादक-विधित्वाङ्गीकरणायोगात् जुहुयादिति लिङ्गोऽपि स्तुत्यर्थत्वसिद्धिरिति। अपि च प्रपञ्चगतसत्ता ब्रह्मगतसत्तयाऽभिन्नेत्येतावता न ब्रह्मणो जगदारोपाधिष्ठानत्वसिद्धिः। न च नीलपीतादिघटगतघटत्वं रक्तघटगतघटत्वेनाभिन्नमित्येतावता रक्तघटस्य नीलपीतादि घटारोपाधिष्ठानत्वम्।

किञ्च घटोऽयं घटोऽयं पटोऽयं पटोऽयमित्याद्यनुगतबुद्धिविषयस्य घटत्वादिसामान्यस्य त्वन्मते-ऽविद्यारूपतया घटः सन् पटस्सन् इत्याद्यनुगत बुद्धिविषयस्याऽपि सत्त्वस्याविद्यातिरिक्तत्वे मानाभावेन ब्रह्मण एव सत्त्वरूपत्वेऽविद्यात्वापत्या ज्ञाननिवर्त्यत्वापत्तिः। न ह्यनुगतबुध्यविशेषे घटत्वादिसामान्य-मेवाविद्या न तु सत्त्वसामान्यमित्यत्र नियामकमस्ति।

ननु ब्रह्मणो निवृत्तिरेवं सति स्यादिति चेत् किं तावता । सत्त्वश्रुतिविरोधस्योभयत्राऽपि सत्वेन अनिर्वचनीयाविद्यात्मकताया अनभ्युपेतव्यसाम्यात् । न च जगदारोपाधिष्ठानत्वं ब्रह्मणोऽद्यापि सिद्धम्, येन ब्रह्मणस्तदधिष्ठानतया जगदपेक्षयाधिकसत्त्वमावश्यकमित्युच्येत । न चैवं अनन्तत्वश्रुतिविरोधः। प्रकृतेरपि [1]"गौरनाद्यन्तवती" [2]"एषोश्वत्थः सनातनः" इत्यनन्तत्वश्रुतिविरोधसाम्यात् । किञ्च ब्रह्मसत्तैव प्रपञ्चेऽपि सत्तेति स्वीकारे सत्ताद्वैविध्यत्रैविध्ययोरनुपपत्तिः ।

अपि च ब्रह्मणोजगदारोपाधिष्ठानत्वेऽपि सत्तानेकत्वानुपपत्तिरेव । शुक्ते रूप्याधिष्ठानत्वेऽपि शुक्तीदन्तादेरिवैकविध्यस्यैव न्याय्यत्वात् । "न हि शुक्तीदन्तायां प्रकारभेदमुपलभामहे । एतेन "नेहनाने"त्यादिश्रुतौ किञ्चन शब्दो ब्रह्मव्यतिरिक्तप्रपञ्चमात्रपर एव स्वीकार्यः । न तु ब्रह्मप्रपञ्चोभयपरः [3]"असन्नेव स भवति" [4]"असद् ब्रह्मेति वेद चेत्" [5]"अस्ति ब्रह्मेति चेद्वेद" [6]"सन्तमेनं ततो विदुरि"त्यादि श्रुत्या ब्रह्मणोऽनिर्वचनीयत्वापरनामक सद्विलक्षणत्वनिषेधात् [7]"अस्तीत्येवोपलब्धव्यं" इत्यादि सावधारणश्रुत्या ब्रह्मणः सत्वमात्रविधानेन असत्त्वनिषेधावगमात् [8]"कथमसतः सज्जायेते"-त्यादिश्रुत्याऽपि ब्रह्मणोऽसत्त्वनिषेधाच्च । अन्यथा जगद्वत् ब्रह्मणोऽप्यसत्वाङ्गीकारे उक्तबहुश्रुतिविरोधापत्तेः । तथा च ब्रह्मण एवानन्यसाधारणमन्याप्रयुक्तं सत्त्वं प्रकृत्यादिप्रपञ्चस्य तु शुक्तिरूप्यादिसाधारणं प्रातीतिकमेव ब्रह्म सम्बन्धप्रयुक्तं ब्रह्मण इवास्य प्रपञ्चस्यापि सत्त्वनिषेधकश्रुत्यभावादनन्यथासिद्धसत्त्वावेदकश्रुत्यभावाच्च । "घटः सन् पटः सन्" इति प्रत्यक्षस्य घटादिः सन् अर्थक्रियासमर्थत्वादित्याद्यनुमानस्य चात्मौपाधिकप्रपञ्चसत्त्वगोचरत्वेनान्यथासिद्धतया प्रपञ्चस्वाभाविकसत्त्वे प्रमाणत्वायोगात् । "न ह्यस्ति द्वैतसिद्धिः" आत्मैव सिद्धो द्वितीयो मायया ह्यन्यदिव" [9]"यस्मात्परं नापरमस्ति किञ्चिदि"त्यादिश्रुत्या प्रपञ्चस्य स्वाभाविकसत्त्वनिषेधाच्च । अतः प्रपञ्चस्य शुक्तिरूप्यादिवदौपाधिकमेव सत्त्वं ब्रह्मणस्तु स्वाभाविकम् । एवं चेदमेव ब्रह्म सत्त्वस्य मदभिमतमनेकविधत्वमिति परास्तम् । [10]"अथ तस्यायमादेशो नान्तःप्रज्ञं न बहिःप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमलक्षणमव्यपदेश्यमैकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय" इति माण्डूकोपनिषद्गतश्रुत्या ब्रह्मणोऽपि सत्त्वनिषेधात् । न हि लक्षणशब्देन प्रज्ञानघनशब्देन च सद्रूपत्वज्ञानरूपत्वरूपस्वरूपलक्षणं नोच्यत इत्यस्ति "नोसदासीदि"ति श्रुत्यन्तरेणाऽपि तन्निषेधाच्च । "नासदासीदि"त्यादि श्रुत्याऽसदादिकं निषिध्य 'तम आसीदि'ति तमःशब्दार्थभूतप्रकृतेर्विद्यमानत्वावेदनान्यथानुपपत्त्याऽनिर्वचनीयत्ववत् 'आनीदवातमि'ति वाक्यशेषावगतब्रह्मणोऽपि तदनुपपत्ति-

---

१. मन्त्रिको. ४ २. कठ. २-३ ३. तै.उ.प्र.२ प.६
४. तै.उ.प्र.२ प.६ ५. तै.उ.प्र.२ प.६ ६. तै.उ.प्र.२ प.६
७. कठ. ६-१३ ८. छां. ६-२-६ ९. तै.उ.प्र.४ प.२ १०. नृसिंहो. २-७

तौल्येन सदसद्विलक्षणत्वरूपानिर्वचनीयत्वं ब्रह्मण्यपि दुर्निवारत्वाच्च। किञ्च "असन्नेव स भवती"ति श्रुतेर्न सत्त्वनिषेधोऽर्थः, किन्तु ब्रह्माऽसत्त्वज्ञानस्येष्टसाधनत्वाभावः। न हि "सकञ्चुकं यतिं दृष्ट्वा सवासा जलमाविशेत्" इत्यादेः यतिकञ्चुकधारणकर्तव्यत्वाभावोऽर्थः, किन्तु धृतकञ्चुकयतिदर्शनमिष्टसाधनं नेति। तद्वदस्तीत्येवोपलब्धव्यमित्यस्या अपि ब्रह्मास्तित्वोपलब्धेरेव इष्टसाधनत्वं नान्यस्येत्यर्थः। कथमसतः सज्जायेतेति श्रुतेरपि असतः कथं सज्जायेत न कथमपि असतो सदुत्पत्तेरेव तदनुरूपतयोचितत्वात् असद् ब्रह्मणः सकाशादुत्पन्नं जगदप्यसदेवेत्यर्थः। न चायमर्थो 'असद्वा इदमग्र आसीत्ततो वै सदजायते'ति श्रुतिविरुद्धः सृष्टेः पूर्वमनभिव्यक्तनामरूपात्मकतया स्थितमिदं जगत्सृष्ट्युत्तरकालमभिव्यक्तनामरूपात्मकं जातमित्यर्थपरत्वेनोक्तार्थस्यैतच्छ्रुत्यविरुद्धत्वात्, "सत्यं ज्ञानमनन्तं ब्रह्मे"त्यादेरपि "नासदासीत्" इत्यादिना निषेधार्थमनुवादित्वेन किञ्चनशब्दसङ्कोचकत्वानुपपत्तेश्च। अन्यथा [1]"सदेव सोम्येदमग्र आसीदि"त्यादेरपीदमर्थे जगति सदेकस्वभावत्वविधायितया "नेह नाने"त्यत्र किञ्चनश्रुतेः ब्रह्मव्यतिरिक्तपरत्वेन सङ्कोचकत्ववत् (जगद्व्यतिरिक्त) जगद्व्यतिरिक्तपरत्वेनाऽपि सङ्कोचकत्वानुपपत्तेरिति। एतेनैव किं गवि गोत्वमुतागवि गोत्वमिति खण्डनोक्तप्रकारेण सत्त्वखण्डनं प्रत्युक्तम्। गवि गोत्ववत्सत्त्वे सत्त्वस्वीकारात्। न चैवमात्माश्रयः। ज्ञेयत्वाभिधेयत्वदृश्यत्वमिथ्यात्वादिवत् सिद्धविषयत्वेन तस्यादोषत्वात्। गोत्वोपहिते गोत्वस्येव सत्त्वोपहिते सत्त्वस्याङ्गीकाराविरोधाच्च, अन्यथा तत्सत्यमिति श्रुतिप्रतिपन्नसत्यत्वेऽप्युक्तरीत्या विकल्पप्रसङ्गः।

एतेनैव ब्रह्मणोऽपि "कालाय नमः, कलविकरणाय नमः, कालः कलयतामहम्" इत्यादिना कालरूपतयावगतेः "आकाशवत्सर्वगतश्च नित्यः स्वे महिम्नि प्रतिष्ठितः, य आत्मनि तिष्ठन्नि"त्यादि श्रुत्या इदानीं सर्वकालः सदाऽस्ति मयि सुखं तदनुभवश्चेत्याद्यनुभवेन च स्वोपाधितया प्रतिपन्नोपाधौ ब्रह्मणि अपि "नेह नानास्ति किञ्चन", "अदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते", "मायाधारो निराधार" इत्यादिना निषिद्धत्वेन जगद्वन्मिथ्यात्वे मिथ्यार्थस्य च स्वोपाधौ अध्यस्तत्वनियमेन स्वोपाधिभूतस्य ब्रह्मणोऽधिष्ठानत्वेन अधिष्ठानस्य चाध्यस्तापेक्षयाऽधिकसत्ताकत्वनियमेनैकस्यैव ब्रह्मणः स्वाधिष्ठानत्वस्वाध्यस्तत्वाङ्गीकारे एकस्यैवैकदा न्यूनाधिकसत्त्वापत्त्या विरोधः। मिथ्यात्वे निवृत्त्यवश्यम्भावश्च नेहनानेत्यादिनिषेधस्य ब्रह्मव्यतिरिक्तविषयत्वे मानम्। तथाच ब्रह्मणो न जगद्वन्मिथ्यात्वं न वा स्वस्य स्वस्मिन्नध्यस्तत्वम्। इतरेतराध्यासाङ्गीकारेऽपि आत्मन्यनात्मन इवानात्मन्यात्मन स्वरूपेण नाध्यासः। किन्तु तस्य तत्र तादात्म्यादिसंसर्गाध्यासः। अन्यथाऽनुपपत्तेरुक्तत्वात् अनुपपत्तेश्च सर्वतो बलत्वादिति निरस्तम्। व्यावहारिकेऽहमर्थेऽहं गौरोऽहं मनुष्यः काणः कञ्ज

१. छां. ६-२-१

इत्यादि व्यावहारिकाध्यासदर्शनिनादिष्ठानस्याध्यस्तस्य मानाधिकसत्त्वविनिमयाभावात् । न च तत्रापि तत्तदवच्छिन्नतत्तदुपहितचैतन्य एवाध्यासः । तच्च अधिकसत्ताकमेवेति वाच्यम् । असिद्धेः । अन्यथा अवच्छिन्नोऽपहितचैतन्ये गौराद्यवच्छिन्नोपहितचैतन्यस्यैवाध्यास इति किं न स्यात् ।

किञ्चावच्छिन्नोपहितचैतन्यस्यानवच्छिन्नानुपहितपारमार्थिकचैतन्यान्यत्वेन नाधिकसत्ताकत्वम् । अन्यथा अवच्छिन्नोपहितचैतन्यसाक्षात्कारस्यैव तत्साक्षात्कारत्वेन तस्येदानीमपि सत्त्वेन सद्यो मोक्ष-प्रसङ्गात् । श्रवणादिवैय्यर्थ्यप्रसङ्गाच्च । किञ्च अत्यन्तासतः शशविषाणादेरपि शशविषाणमस्तीत्यादि-शाब्दसत्त्वाध्यासदर्शनिनाध्यासेऽधिष्ठानसत्तात्वानवश्यम्भावाच्च । तत्सत्त्वाधिकसत्त्वनियमेऽपि "सत्यं ज्ञानमनन्तं ब्रह्म", "तेषामेष सत्यः", [1]"सत्यस्य सत्यम्" इत्यादिश्रुतिस्मृत्यारोपितस्य श्रुत्याद्यारोपितस्वप्रकाशत्वनित्यत्वजंगज्जन्मादिकारणत्वादिवद्ब्रह्मणि सुलभत्वाच्च ।

## जगतो सर्वज्ञ-सर्वशक्त-सत्यसङ्कल्प-भगवन्निर्मितत्वपुरस्सरं सत्यत्वसमर्थनम्—

न हि ब्रह्मणि तवाधिकसत्त्वान्तरमपि पारमार्थिकमस्ति । ब्रह्मरूपमस्तीति चेत् । न । असङ्गश्रुति-विरोधात् । अभेदे सत्त्वसम्बन्धानुपपत्तेश्च । तस्माच्छुक्तिरूप्यादेरिव विना मानान्तरं ब्रह्मणि निषिद्धत्व-मात्रेण ब्रह्मवत् कलञ्जभक्षणादाविष्टसाधनत्ववच्च न जगतो मिथ्यात्वसिद्धिः । यत्तु 'न ह्यस्ति द्वैतसिद्धि-रि'त्यादिश्रुत्या प्रपञ्चस्य स्वाभाविकसत्त्वनिषेध इति । तदपि न । हि यस्मादात्मैव सिद्धो द्वितीयो मायया ह्यन्यदिवेति न हि तस्माद्वैतसिद्धिरस्तीति योजनासम्भवेन तच्छ्रुतेः प्रपञ्चसत्तानिरासकत्वे मानाभावात् । 'यस्मात्परं ने'ति श्रुतेरपि यस्मात् = परमात्मनः सकाशात् परं = पूर्णमुत्कृष्टं वा नास्ति। अपरमपूर्णमनुत्कृष्टं वा किञ्चिदस्तीति तादृशप्रपञ्चास्तित्वावेदकत्वेन प्रपञ्चसत्तानिराकरणपरत्वासिद्धेः । अन्यथा यस्मात्परं नापरमपि किञ्चिन्नेति नञः सकृच्छ्रुतस्य परापरपदाभ्यां सम्बन्धकल्पनाप्रसङ्गात् ।

किञ्च 'यस्मान्नाणीयो न ज्यायोऽस्ती'त्यत्रेव पूर्वत्राप्यसन्देहार्थं नञ्द्वयप्रसङ्ग इति नाणीयो न ज्यायोऽस्तीत्यस्य पूर्ववाक्येन सह पौनरुक्त्यप्रसङ्गश्चेति । अपि चैवं प्रसिद्धार्थकप्रथमहिशब्दानर्थक्यं स्यात् । द्वैताभावस्याप्रसिद्धत्वात् । मम तु हिशब्दो नानर्थकः । द्वैतस्य प्रत्यक्षादिप्रसिद्धत्वेन तत्परत्व-सम्भवात् । न च त्वत्पक्षे आत्मैव सिद्धो द्वितीयो मायया ह्यन्यदिवेत्यस्यार्थस्य कलञ्जभक्षणे कर्तव्य-स्येव प्रसञ्जकाभावेनाप्रसक्तप्रतिषेधत्वापत्तिः । न ह्यस्ति द्वैतसिद्धिरित्यादिश्रुतेरिति वाच्यम् । यथा त्वत्पक्षे ब्रह्मणि मानान्तराप्रसक्तविविधप्रपञ्चस्य निषेधार्थं तत्तदाकारेण श्रुत्यैव प्रसक्तिः । तद्वदस्या-

१. तै.सं.कां.१ प्र.६ प.१

प्यर्थस्य तच्छ्रुत्यैव प्रसक्त्युपपत्तेः । 'प्रक्षालनाद्धि पङ्कस्ये'त्यादि न्यायस्तूभयपक्षेऽपि तुल्यः । 'तद्धैक आहुः', 'असदेवेदमग्र आसीदि'त्यादिवत् 'यस्मिन् द्यौरि'त्यादिरप्यनादिसमयप्रसक्तानुवादो निषेधार्थ इति चेत् । न । आत्मैव सिद्धो द्वितीयो मायया ह्यन्यदिवेत्यादेरपि न हीति निषेधार्थं तथाविध-समयप्रसक्तत्वसम्भवेन तदनुवादित्वोपपत्तेः ।

अपि च 'नेह नाने'ति श्रुत्या ब्रह्मणि प्रपञ्चमात्रस्य निषेधात् मास्तु तत्र प्रपञ्चः । यत्र तु भूतलादौ प्रत्यक्षादिप्रमाणसिद्धः तत्र तत्र तथा तथा स्थास्यतीति कथं तस्य निषेधश्रुत्या मिथ्यात्वसिद्धिः । न च नेहेत्यत्रेहशब्दस्य ब्रह्मवत्प्रपञ्चमात्रमप्यर्थः । येन सर्वत्र तच्छ्रुत्यैव निषिद्धत्वेन सर्वत्र प्रतिपन्नोपाधौ प्रमाणनिषिद्धत्वरूपमिथ्यात्वमागच्छेत् । किन्तु ब्रह्ममात्रं, न च प्रपञ्चमात्रोपादानभूतप्रकृतेरत्यानाश्रि-ताया ब्रह्ममात्राश्रितायास्तत्र निषेधे मिथ्यात्वावश्यम्भावेन तत्कार्यभूतप्रपञ्चस्य तदनुरूपतावश्यकत्वेन तन्निषेधः सर्वमिथ्यात्वमादायैव पर्यवस्यतीति वाच्यम् ।

त्वत्पक्षेऽपि कार्यस्योपादानमात्रानुरूपत्वाभावात् प्रकृतिमिथ्यात्वेऽपि तत्कार्यस्य ब्रह्मवत्परमा-र्थत्वोपपत्तेः । अन्यथा तवापि प्रपञ्चस्य परमार्थब्रह्मकार्यत्वेन परमार्थत्वापत्तेः । किञ्च प्रकृतेरप्यनाद्य-नन्तदेशकालवृत्तितया सर्वत्रानिषिद्धत्वेनामिथ्यात्वोपपत्तेः । आकाशवदवृत्तित्वेनापि प्रकृतेर्मिथ्यात्वा-सम्भवाच्च । 'आकाशवत्सर्वगतश्च नित्य' इत्यादि श्रुतिबलेनाकार्यभूतनित्याकाशस्य दुर्निवारत्वात् । 'कालश्च नित्यः प्रकृतिश्च नित्या गौरनाद्यन्तवती एषोऽश्वत्थः सनातन' इत्यादिना कालादेरपि तथात्वा-वगमाच्च । न च [1]''तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिरि''ति श्रुत्या [2]''मायां तु प्रकृतिं विद्यात्'' इति श्रुतिबलान्मायाशब्दितप्रकृतेर्ब्रह्मज्ञाननिवर्त्यत्वावेदनात् शुक्तिज्ञाननिवर्त्य-रूप्यवत् ज्ञाननिवर्त्यत्वं तावदवश्यमभ्युपेतव्यम् । ज्ञाननिवर्त्यत्वे च तद्वदेव बाध्यत्वं दुर्वारम् । न च बाध्यत्वे प्रकृतेः सत्त्वं युक्तं शुक्तिरूप्यस्यापि तथात्वापत्तेः । एवं च यथा शुक्तिरूप्यवत् तद्गत-शौक्ल्यादेः साक्षात् बाध्यत्वाभावेऽपि साक्षाद्बाध्यगतत्वेन मिथ्यात्वम् । एवं प्रकृतिवत्तद्गतसत्त्वरजस्तमः प्रभृतिप्रपञ्चस्य साक्षाद्बाध्यत्वाभावेऽपि साक्षाद्बाध्यप्रकृतिगतत्वेन मिथ्यात्वमवश्यमुपेयम् । अन्यथा शुक्तिरूप्यस्य मिथ्यात्वेऽपि तद्गतशौक्ल्यादेः सत्यत्वप्रसङ्गादिति वाच्यम् । शुक्तिज्ञानेन तद्रूप्यनिवृत्तौ मानाभावात् । न हि शुक्तिज्ञानेन तदज्ञानं निवृत्तमितिवत् तेन तद्रूप्यमित्यनुभवः कदाप्यस्ति । किञ्च किं ज्ञाननिवर्त्यत्वमेव बाध्यत्वमुपेयते, किं वा ज्ञाननिवर्त्यत्वे प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं बाध्यत्वमावश्यकमिति ।

१. विवृतिः श्वेता. १-१० २. श्वेत. अध्या.४ मं. १०

इत्यादि व्यावहारिकाध्यासदर्शनादिष्ठानस्याध्यस्तस्य मानाधिकसत्त्वविनियमाभावात् । न च तत्रापि तत्तदवच्छिन्नतत्तदुपहितचैतन्य एवाध्यासः । तच्च अधिकसत्ताकमेवेति वाच्यम् । असिद्धेः । अन्यथा अवच्छिन्नोऽपहितचैतन्ये गौराद्यवच्छिन्नोपहितचैतन्यस्यैवाध्यास इति किं न स्यात् ।

किञ्चावच्छिन्नोपहितचैतन्यस्यानवच्छिन्नानुपहितपारमार्थिकचैतन्यान्यत्वेन नाधिकसत्ताकत्वम् । अन्यथा अवच्छिन्नोपहितचैतन्यसाक्षात्कारस्यैव तत्साक्षात्कारत्वेन तस्येदानीमपि सत्त्वेन सद्यो मोक्षप्रसङ्गात् । श्रवणादिवैय्यर्थ्यप्रसङ्गाच्च । किञ्च अत्यन्तासतः शशविषाणादेरपि शशविषाणमस्तीत्यादिशाब्दसत्त्वाध्यासदर्शनाध्यासेऽधिष्ठानसत्तात्वानवश्यम्भावाच्च । तत्सत्त्वाधिकसत्त्वनियमेऽपि "सत्यं ज्ञानमनन्तं ब्रह्म", "तेषामेष सत्यः", [1]"सत्यस्य सत्यम्" इत्यादिश्रुतिस्मृत्यारोपितस्य श्रुत्याद्यारोपितस्वप्रकाशत्वनित्यत्वजगज्जन्मादिकारणत्वादिवद्ब्रह्मणि सुलभत्वाच्च ।

## जगतो सर्वज्ञ-सर्वशक्त-सत्यसङ्कल्प-भगवन्निर्मितत्वपुरस्सरं सत्यत्वसमर्थनम्—

न हि ब्रह्मणि तवाधिकसत्त्वान्तरमपि पारमार्थिकमस्ति । ब्रह्मरूपमस्तीति चेत् । न । असङ्गश्रुतिविरोधात् । अभेदे सत्त्वसम्बन्धानुपपत्तेश्च । तस्माच्छुक्तिरूप्यादेरिव विना मानान्तरं ब्रह्मणि निषिद्धत्वमात्रेण ब्रह्मवत् कलञ्जभक्षणादाविष्टसाधनत्ववच्च न जगतो मिथ्यात्वसिद्धिः । यत्तु 'न ह्यस्ति द्वैतसिद्धिरि'त्यादिश्रुत्या प्रपञ्चस्य स्वाभाविकसत्त्वनिषेध इति । तदपि न । हि यस्मादात्मैव सिद्धो द्वितीयो मायया ह्यन्यदिवेति न हि तस्माद्वैतसिद्धिरस्तीति योजनासम्भवेन तच्छ्रुतेः प्रपञ्चसत्तानिरासकत्वे मानाभावात् । 'यस्मात्परं ने'ति श्रुतेरपि यस्मात् = परमात्मनः सकाशात् परं = पूर्णमुत्कृष्टं वा नास्ति । अपरमपूर्णमनुत्कृष्टं वा किञ्चिदस्तीति तादृशप्रपञ्चास्तित्वावेदकत्वेन प्रपञ्चसत्तानिराकरणपरत्वासिद्धेः । अन्यथा यस्मात्परं नापरमपि किञ्चिन्नेति नञः सकृच्छ्रुतस्य परापरपदाभ्यां सम्बन्धकल्पनाप्रसङ्गात् ।

किञ्च 'यस्मान्नाणीयो न ज्यायोऽस्ती'त्यत्रेव पूर्वत्राप्यसन्देहार्थं नञ्द्वयप्रसङ्ग इति नाणीयो न ज्यायोऽस्तीत्यस्य पूर्ववाक्येन सह पौनरुक्त्यप्रसङ्गश्चेति । अपि चैवं प्रसिद्धार्थकप्रथमहिशब्दानर्थक्यं स्यात् । द्वैताभावस्याप्रसिद्धत्वात् । मम तु हिशब्दो नानर्थकः । द्वैतस्य प्रत्यक्षादिप्रसिद्धत्वेन तत्परत्वसम्भवात् । न च त्वत्पक्षे आत्मैव सिद्धो द्वितीयो मायया ह्यन्यदिवेत्यस्यार्थस्य कलञ्जभक्षणे कर्तव्यस्येव प्रसञ्जकाभावेनाप्रसक्तप्रतिषेधत्वापत्तिः । न ह्यस्ति द्वैतसिद्धिरित्यादिश्रुतेरिति वाच्यम् । यथा त्वत्पक्षे ब्रह्मणि मानान्तराप्रसक्तविविधप्रपञ्चस्य निषेधार्थं तत्तदाकारेण श्रुत्यैव प्रसक्तिः । तद्वदस्या-

१. तै.सं.कां.१ प्र.६ प.१

प्यर्थस्य तच्छ्रुत्यैव प्रसक्त्युपपत्तेः। 'प्रक्षालनाद्धि पङ्कस्ये'त्यादि न्यायस्तूभयपक्षेऽपि तुल्यः। 'तद्धैक आहुः', 'असदेवेदमग्र आसीदि'त्यादिवत् 'यस्मिन् द्यौरि'त्यादिरप्यनादिसमयप्रसक्तानुवादो निषेधार्थ इति चेत्। न। आत्मैव सिद्धो द्वितीयो मायया ह्यन्यदिवेत्यादेरपि न हीति निषेधार्थे तथाविध-समयप्रसक्तत्वसम्भवेन तदनुवादित्वोपपत्तेः।

अपि च 'नेह नाने'ति श्रुत्या ब्रह्मणि प्रपञ्चमात्रस्य निषेधात् मास्तु तत्र प्रपञ्चः। यत्र तु भूतलादौ प्रत्यक्षादिप्रमाणसिद्धः तत्र तत्र तथा तथा स्थास्यतीति कथं तस्य निषेधश्रुत्या मिथ्यात्वसिद्धिः। न च नेहेत्यत्रेहशब्दस्य ब्रह्मवत्प्रपञ्चमात्रमप्यर्थः। येन सर्वत्र तच्छ्रुत्यैव निषिद्धत्वेन सर्वत्र प्रतिपन्नोपाधौ प्रमाणनिषिद्धत्वरूपमिथ्यात्वमागच्छेत्। किन्तु ब्रह्ममात्रं, न च प्रपञ्चमात्रोपादानभूतप्रकृतेरन्यानाश्रि-ताया ब्रह्ममात्राश्रितायास्तत्र निषेधे मिथ्यात्वावश्यम्भावेन तत्कार्यभूतप्रपञ्चस्य तदनुरूपतावश्यकत्वेन तन्निषेधः सर्वमिथ्यात्वमादायैव पर्यवस्यतीति वाच्यम्।

त्वत्पक्षेऽपि कार्यस्योपादानमात्रानुरूपत्वाभावात् प्रकृतिमिथ्यात्वेऽपि तत्कार्यस्य ब्रह्मवत्परमा-र्थत्वोपपत्तेः। अन्यथा तवापि प्रपञ्चस्य परमार्थब्रह्मकार्यत्वेन परमार्थत्वापत्तेः। किञ्च प्रकृतेरप्यनाद्य-नन्तदेशकालवृत्तितया सर्वत्रानिषिद्धत्वेनामिथ्यात्वोपपत्तेः। आकाशवदवृत्तित्वेनापि प्रकृतेर्मिथ्यात्वा-सम्भवाच्च। 'आकाशवत्सर्वगतश्च नित्य' इत्यादि श्रुतिबलेनाकार्यभूतनित्याकाशस्य दुर्निवारत्वात्। 'कालश्च नित्यः प्रकृतिश्च नित्या गौरनाद्यन्तवती एषोऽश्वत्थः सनातन' इत्यादिना कालादेरपि तथात्वा-वगमाच्च। न च [1]''तस्याभिध्यानाद्योजनात्तत्त्वभावात् भूयश्चान्ते विश्वमायानिवृत्तिरि''ति श्रुत्या [2]''मायां तु प्रकृतिं विद्यात्'' इति श्रुतिबलान्मायाशब्दितप्रकृतेर्ब्रह्मज्ञाननिवर्त्यत्वावेदनात् शुक्तिज्ञाननिवर्त्य-रूप्यवत् ज्ञाननिवर्त्यत्वं तावदवश्यमभ्युपेतव्यम्। ज्ञाननिवर्त्यत्वे च तद्वदेव बाध्यत्वं दुर्वारम्। न च बाध्यत्वे प्रकृतेः सत्त्वं युक्तं शुक्तिरूप्यस्यापि तथात्वापत्तेः। एवं च यथा शुक्तिरूप्यवत् तद्गत-शौक्ल्यादेः साक्षात् बाध्यत्वाभावेऽपि साक्षाद्बाध्यगतत्वेन मिथ्यात्वम्। एवं प्रकृतिवत्तद्गतसत्त्वरजस्तमः प्रभृतिप्रपञ्चस्य साक्षाद्बाध्यत्वाभावेऽपि साक्षाद्बाध्यप्रकृतिगतत्वेन मिथ्यात्वमवश्यमुपेयम्। अन्यथा शुक्तिरूप्यस्य मिथ्यात्वेऽपि तद्गतशौक्ल्यादेः सत्यत्वप्रसङ्गादिति वाच्यम्। शुक्तिज्ञानेन तद्रूप्यनिवृत्तौ मानाभावात्। न हि शुक्तिज्ञानेन तदज्ञानं निवृत्तमितिवत् तेन तद्रूप्यमित्यनुभवः कदाप्यस्ति। किञ्च किं ज्ञाननिवर्त्यत्वमेव बाध्यत्वमुपेयते, किं वा ज्ञाननिवर्त्यत्वे प्रतिपन्नोपाधौ निषेधप्रतियोगित्वरूपं बाध्यत्वमावश्यकमिति।

१. विवृतिः श्वेता. १-१०   २. श्वेत. अध्या.४ मं. १०

नाद्यः सेतुसुहृद्दर्शननिवर्त्यब्रह्महत्यादुःखादौ शुक्तिरूप्यवत् बाध्यत्वव्यवहाराभावेन [1]"यूस्त्र्याख्यौ नदी'तिवत् ज्ञाननिवर्त्यत्वं बाध्यत्वमिति परिभाषापत्तेः । न द्वितीयः । ब्रह्महत्यादावेव व्यभिचारात् । किञ्च यद्यद्दर्शननिवर्त्यं बाध्यं तत्तत्र तदवच्छिन्नोपहिते वा चैतन्येऽध्यस्तमिति नियमात् । शुक्तौ तदवच्छिन्ने तदुपहिते वा चैतन्ये तद्रूप्यवत् सेत्वादिदर्शननिवर्त्य ब्रह्महत्यादिकं बाध्यं सत् सेत्वादौ तदवच्छिन्ने तदुपहिते वा चैतन्येऽध्यस्तं स्यात् । न चैवं त्वदभ्युपगमः । न वा तत्राध्यस्तमिति युक्तम्। तथा सति शुक्ताविदं रूप्यमितिवत् सेतावियं ब्रह्महत्या सुहृदीदं दुःखमिति वा व्यवहारप्रसङ्गात् । किञ्चेश्वरज्ञानस्य कार्यं प्रति कारणतया वियदादिनिवृत्तेरपि कार्यत्वेन तज्जन्यत्वं वियदादेश्च तत्प्रतियोगित्वरूपमनित्यत्वं मयापि स्वीकृतमेव । किन्तु न तस्य मिथ्यात्वरूपत्वं, मानाभावात् । न च ज्ञानजन्यनिवृत्तिप्रतियोगित्वमिदमेव मिथ्यात्वं बाध्यत्वं चेति वाच्यम् । एतादृशं मिथ्यात्वं बाध्यत्वं चेति परिभाषाकरणस्येष्टत्वात् ।

ननु शुक्तिरूप्यादावपीतोऽतिरिक्तमेव मिथ्यात्वादिकं दुर्वाचनमिति चेन्न । तथा सति सेत्वादिदर्शननिवर्त्यपापादेरपि मिथ्यात्वबाध्यत्वप्रसङ्गेन सेत्वादेरपि शुक्त्यादिरूप्याद्यारोपाधिष्ठानत्ववत् तदविनाभूतपापदुःखाद्यारोपाधिष्ठानत्वापत्तौ तदतिप्रसङ्गपरिहाराय तदतिरिक्तस्य दुर्वचत्वेऽपि 'मिथ्यैव रूप्यमभादि'ति प्रत्यक्षादिसिद्धस्यानतिप्रसक्तमिथ्यात्वादिरूपधर्मस्याकामेनाप्यभ्युपेयत्वात् । मिथ्यात्वादेस्त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपनिरस्वरूपरूपेण सुवचतया दुर्वचत्वासिद्धेश्च । अधिकरणे प्रतियोगिनिषेधबुद्धिमात्रस्य बाधत्वेऽतिप्रसङ्गस्योक्तत्वेन बाधापरनामकमिथ्यात्वप्रकारकानुभवजनकतयैव नेदं रूप्यमित्यादिनिषेधबुद्धेर्लाङ्गलस्य जीवनबुद्धिव्यवहारविषयत्ववत् बाधव्यवहारबुद्धिविषयत्वात् । क्लृप्तदोषजन्यज्ञानपूर्वकत्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपनिरस्वरूपत्वबुद्धेरेव बाधत्वात् । न च प्रत्यक्षस्य वर्तमानवस्तुमात्रग्राहित्वेन त्रिकालादिघटितोक्तनिषेधप्रतियोगित्वविषयकत्वासम्भवेन कथं बाधस्य प्रत्यक्षत्वनिर्वाह इति वाच्यम् । अञ्जनाक्तचक्षुर्वत् सहकारिसामर्थ्येन प्रत्यक्षस्यापि त्रिकालादिग्राहकतोपपत्तेः । चक्षुःप्रत्यक्षस्याप्युपनयसहकारिसामर्थ्येन सुरभिचन्दनमिति सौरभचन्दनज्ञानजनकत्वदर्शनात् प्रमाणसिद्धकार्यस्यैव स्वात्मलाभाय स्वानुकूलसामग्र्याक्षेपकताया तान्त्रिकमात्रसिद्धत्वाच्च । त्वयापि सन् घट इत्यादि प्रत्यक्षे त्रिकालाबाध्यत्वरूपाधिष्ठानब्रह्मसत्ताभानस्याभ्युपेतत्वाच्च । अपि च शुक्तिरूप्यादौ त्रिकालसर्वदेशीयनिषेधप्रतियोगित्वरूपमिथ्यात्वस्य प्रत्यक्षाद्यसिद्धत्वे प्रपञ्चमिथ्यात्वानुमाने साध्यासिद्धिप्रसङ्गः ।

---

१. पा.सू. १-४-३

किञ्च ज्ञाननिवर्त्यत्वस्यैव बाध्यत्वमिथ्यात्वरूपत्वेऽपि तदनिवर्त्यप्रपञ्चस्य कथं बाध्यत्वादिकम् । न च तथाविधप्रपञ्चे मानाभावः । 'आकाशवत्सर्वगतश्च नित्य' इत्यादिश्रुत्याकाशादेर्नित्यत्वावेदनात् । अन्यथात्मनित्यत्वे तस्य दृष्टान्तत्वानुपपत्तेः । चशब्दानर्थक्यप्रसङ्गाच्च । न च 'आत्मन आकाश' इति तस्योत्पत्तिश्रवणादुत्पन्नस्य भावस्यानित्यत्वनियमात्तच्छ्रुतेर्बहुकालावस्थायित्वमेवार्थ इति वाच्यम् । उत्पन्नस्यापि श्रुतिबलेनाविनाशोपपत्तेः । श्रुतिबलेन नियम एव सङ्कोचस्य न्याय्यत्वात् । अन्यथा 'अनादिमायया सुप्तो यदा जीवः प्रबुध्यते' इति मायया अनादित्वावेदनात् । अनादिभावस्यानिवर्त्यत्वनियमात् 'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति श्रुतेर्न तन्निवृत्तिरर्थः स्यात् । न च 'नित्यो नित्यानामि'ति श्रुत्यैव ब्रह्मनित्यत्वस्याधिक्योक्तेः । श्रौतार्थान्यथानुपपत्त्यैव तद्व्यतिरिक्तानां मुख्यनित्यत्वमापतितम् । नानुमानमात्रादिति वाच्यम् । नित्यचेतनानां नित्यश्चेतन इति तच्छ्रुतेरेकवाक्यत्वसम्भवे नित्यानां नित्यश्चेतनानां चेतन इति वाक्यभेदेनान्वयाश्रयणायोगात् । विशिष्टविधौ वाक्यभेदशङ्कानवकाशात् । मङ्गलानां च मङ्गलमितिवत् तस्याः परमात्मोत्कर्षप्रतिपादकत्वेन नित्यानां चेतनानामिति सामानाधिकरण्येनान्वयेऽपि पदावैय्यर्थ्याच्च । स्वतन्त्राप्रतिबद्धचेतनत्वादिना समानाधिकृतत्वेन परमात्मनित्यचेतनत्वस्योत्कर्षोपपत्तेः ।

किञ्चात्रात्मनिवृत्तिर्ब्रह्मस्वरूपातिरिक्ता ब्रह्मवत्सत्या नाभ्युपेया अद्वैतश्रुतिविरोधात् । नापि सा ज्ञाननिवर्त्या । साप्येवमेवमित्यनवस्थानात् । न च सा ब्रह्मस्वरूपरूपैवातो नोक्तदोष इति वाच्यम् । तथा सति तस्याज्ञानसाध्यत्वानुपपत्तेः । अत एव न निवृत्तिरत्यन्ताभावः । अपि च 'नेह नानास्ती'त्यादिना नित्यनिर्दोषवाक्येन घटः सन् पटः सन्निति प्रत्यक्षादिविषयस्य मिथ्यात्वावधारणे तत्र जलाहरणाद्यर्थप्रवृत्त्यभावप्रसङ्गः । दोषप्राबल्यात्पीतः शङ्ख इत्यादि भ्रमानुवृत्तावपि शङ्खः श्वेत इत्यवधारणे कदापि पीतार्थिप्रवृत्त्यभावात् ।

अपि च नित्यनिर्दोषत्वेन सिद्धप्रमाणभावे वेदे विधेर्हि निषेध्यार्पकतया तादर्थ्येन गुणतया निषेध एव तदपेक्षया प्रधानतया प्रबल इति न व्यवस्थोचिता । तथा सति विकल्पोत्सर्गापवादयोरुच्छेदापत्तेः। निषेध इव विधावपि तात्पर्यलिङ्गसत्त्वेन तद्भावाभावाभ्यामपि प्राबल्यदौर्बल्यावधारणानुपपत्तेश्च । उपक्रमाधिकरणन्यायेन प्रथमप्रवृत्तसप्रपञ्चवाक्यानामेव प्राबल्यौचित्याच्च तेषां बहुत्वेनापि निषेधापेक्षया प्राबल्याच्च । न हिंस्यादिति साकल्येन हिंसानिषेधापेक्षया, वायव्यं श्वेतमालभेतेति विशेषविधिनेव एकमेवाद्वितीयं नेहनानेत्यादिसामान्यनिषेधस्यापि यस्मिन्द्यौरित्यादि प्रपञ्चविशेषविधिनैव न्यक्कर्तव्यत्वाच्च । अपि च षोडशग्रहणक्रियायामिव वस्तुनिर्विकल्पमाश्रित्य वेदान्तगतविधिनिषेधयोः प्रामाण्योपपादनासम्भवेऽपि जाग्रत्स्वप्नप्रपञ्चविषयतयापि यस्मिन्द्यौरेकमेवाद्वितीयमित्यादि प्रपञ्चविधिनिषेधानां प्रामाण्यस्य सूपपादत्वाच्च ।

तथा चाह श्रुतिः— 'अथ रथान् रथयोगान् पथः सृजत' इत्यादिः । तथा च पारमर्षं सूत्रं 'वैधर्म्याच्च न स्वप्नादिवत्' इति । अत एव च 'तत्सृष्ट्वा तदेवानुप्राविशत्तदनुप्रविश्य सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं चाविज्ञानं च सत्यं चानृतं च सत्यमभवत् यदिदं किञ्चे'ति श्रुत्या सत्यानृतप्रपञ्चप्रवेशप्रयुक्तसत्यानृताकारत्वोक्तिर्ब्रह्मणः सङ्गच्छते । अत एव लोकेऽपि वस्तुतः समीचीने पुरुषे उत्कृष्टापकृष्टपुरुषसम्बन्धप्रयुक्तस्तत्तद्व्यपदेशो दृश्यते । न चैवं विधिनिषेध-वाक्यानां त्वद्रीत्यैव गतिसम्भवे सर्वात्मना विधिबाधो युक्तः । न चैवं नेह नानेत्यादौ किञ्चन द्वितीया-दिपदस्य स्वाप्रप्रपञ्चविशेषपरत्वाश्रयणे यथा श्रुतार्थपरित्यागलक्षणो बाधः प्रसज्यत इति वाच्यम् । लोकेऽस्य गोद्वितीयेन भाव्यम् । कश्चन आगत इत्यादाविव वेदेऽपि सामान्यशब्दस्य विशेषपरताया आश्रयितव्यत्वात् । न हि लोकसिद्धव्युत्पत्तिमर्यादामाश्रित्य सामान्येनैव रूपेण विशेषपरत्वकल्पनं बाधो भवति । अतिप्रसङ्गात् । तस्माद् ब्रह्मवत्प्रपञ्चस्य तदुपादानभूतमायाशब्दितप्रकृतेश्च मिथ्यात्वे मानाभावात् । सत्यत्व एव तत्सद्भावाच्च नानिर्वचनीयत्वमिति सिद्धम् । एवं च त्रिगुणात्मकोभय-सिद्धप्रकृतेरेव तदनुरूपजडप्रपञ्चोपादानत्वसम्भवे ब्रह्मणोऽपि न तदुपादानत्वं मानाभावादित्युक्तमेव । यत्तु सन् घट इत्याद्यनुभवात् सद्रूपस्य ब्रह्मणः प्रपञ्चयोर्भिन्नत्वात्कारणत्वाच्चोपादानत्वसिद्धिरिति । तन्न । सत्ताया घटत्वद्रव्यत्वादेरिव साक्षाद् घटधर्मत्वस्य बहुशः प्रपञ्चितत्वात् । यदपि श्रुतिरपि ब्रह्मण उपादानत्वे मानमिति । तदपि न । 'आत्मन' इत्यादि पञ्चम्या हेतुमात्रपरत्वात् 'जनिकर्तुः प्रकृतिरि'ति सूत्रेण प्रकृते अपादानत्वसंज्ञायाश्च प्रमाणान्तरेणोपादानत्वसिद्ध्युत्तरकालमेव प्रवृत्तेः आत्मनश्चोपादानत्वे मानान्तराभावात् । आत्मन इत्यादिपञ्चम्या एव तत्र मानत्वेऽन्योन्याश्रयात् ।

'पुत्रात्प्रमोदो जायते, जाड्याद्बद्ध' इत्यादाविव तदुपपत्तेश्च । किञ्च "तदशिष्यं संज्ञाप्रमाणत्वात् कृत्वं कस्मान्न भवति भत्वात्" इति सूत्रभाष्ययोः हेतुपञ्चम्याश्रितत्वेन हेतौ पञ्चम्यां तादृशसूत्रभाष्य-योरेव मानत्वात् । भाष्यकृता 'जनिकर्तुः प्रकृतिरि'ति सूत्रस्य प्रत्याख्यातत्वाच्च । यदपि पञ्चम्या हेतुमात्रपरत्वेऽपि निमित्तमात्रपरत्वे विशेषनियामकाभावादानन्त्यश्रुतिबलाच्चात्मन एव उभयविध-कारणत्वसिद्धिः ।

अन्यथोपादाननिमित्तयोर्भेदे वस्तुपरिच्छेदशून्यत्वपरानन्त्यश्रुतिविरोधः स्यादिति । तदपि न । द्रव्योपादानत्वकर्तृत्वयोर्विरोधस्य कार्यद्रव्यस्योपादाने व्याप्यवृत्तित्वनियमस्य च विशेषनियामकत्वात् प्रकृते तूपादानमात्रत्वे ब्रह्मणो निमित्तमात्रत्वेऽपि त्वद्रीत्या ब्रह्मवत् सत्यभूतोपादानान्तराभावेनानन्त्य-श्रुतिविरोधाच्च । अनन्तपदस्य वस्तुपरिच्छेदशून्यत्वपरत्वे मानाभावाच्च । वस्तुपरिच्छेदवति गगनादा-

१. बृह. ६-३-१० २. ब्र.सू. २-२-८-२९ ३. नै.उ.प्र.२ प.६

वप्यनन्तशब्दप्रयोगाच्च । किञ्च वस्तुकृतपरिच्छेदराहित्यस्याप्यनन्तशब्दार्थत्वे तेनानन्तशब्देन निमित्तोपादानयोरभेदवत् ब्रह्मणो जीवाभेदवच्च वियदादिप्रपञ्चाभेदप्रसङ्गः । न च जीवस्वरूपस्य जगदुपादाने निमित्तस्वरूपयोश्च तात्त्विकत्वात् वियदाद्युपादेयस्य च अतात्त्विकत्वात् वैषम्यमिति वाच्यम् । अनन्तशब्दमहिमलब्धतात्त्विकब्रह्माभेदबलेन जीववत्प्रपञ्चस्यापि तात्त्विकत्वापत्तेः । किञ्च ब्रह्मणोऽपरिच्छिन्नत्वजडव्यावृत्तिं च वदता भेदस्यान्तशब्दार्थभूतपरिच्छेदरूपतैव त्याज्या । अन्यथा परिच्छिन्नजडाभेदे ब्रह्मणो वास्तवपरिच्छिन्नत्वाद्यापत्तिरिति ।

यदपि [1]"सोऽकामयत बहु स्यां प्रजायेते"ति ब्रह्मणो बहुभवनसङ्कल्पपूर्वकं जनिसङ्कल्पश्रुतिरपि ब्रह्मणो जगदुपादानत्वे मानम् । अन्यथा ब्रह्मसत्तया सदात्मकनामरूपाभिव्यक्तिरूपजन्मनस्तत्सङ्कल्पस्य चानुपपत्तेः । निमित्तमात्रस्य कुलालादेर्घटशरावादिकार्यात्मना जन्मानुपपत्तेरिति । तदपि न । निमित्तमात्रस्यापि ब्रह्मणस्तत्तन्नियन्तृरूपेण बहुनियम्यप्रवेशकृतबहुत्वविषयत्वात् । बहुभवनसङ्कल्पस्य तादृशबहुत्वस्य च बहुनियम्यगापेक्षतया सृष्टेः पूर्वं तदभावे कथं बहुभवनमित्याशङ्क्याह— प्रजायेयेति ।

अत्र प्रजायेयेत्यस्य 'प्रजापतिरकामयत प्रजायेये'ति 'समुखतस्त्रिवृत्त तन्निरमिमीते'त्यत्रेवान्तर्भावितण्यर्थतया प्रजनयिष्यामीति नियम्यजनिविषयकव्यापारसङ्कल्प एवार्थः । न तु स्वजन्मसङ्कल्पः । ब्रह्मण अनाद्यनन्तत्वे तदसम्भवात् । उत्तरवाक्ये 'इदं सर्वमसृजत, तत्सृष्ट्वा तदेवानुप्राविशादि'त्यादिना नियम्यप्रपञ्चसृष्टितत्प्रवेशकर्तृत्वयोरेव प्रतिपादनात् । स्वजनेः कामनाविषयत्वे वाक्यशेषे तस्या एव प्रतिपादनप्रसङ्गात् ।

## ब्रह्मणः जगदुपादानत्वं 'सच्चत्यच्चाभवदि'त्यादि श्रुतिप्रमाणमित्यस्य निरासः—

यत्त्वप्रविष्टरूपेणैव नियमनसम्भवेन तदर्थं तत्प्रवेशप्रतिपादनवैयर्थ्यम् । एकेनापि बहूनां सर्वज्ञेन सर्वगतेन युगपद्ग्रहसृष्टिवत् बहुनियमस्य सम्भवात् । एकस्य सर्वगतस्य ब्रह्मणा वस्तुतो बहुभवनप्रवेशायोगात् । अवास्तवस्य बहुभवनस्य प्रवेशस्य च त्वन्मतेऽनङ्गीकारादिति । तन्न । युगपदनन्तपदार्थप्रवेशपूर्वकतन्नियमनस्य विचित्रशक्तिख्यापनार्थत्वेनावैयर्थ्यात् । वास्तवप्रवेशस्याणोरणीयानिति श्रुतिप्रतिपन्नाणुत्वसत्त्वेन परमात्मनः सम्भवाच्च । किञ्च सृष्टेः पूर्वमन्तःकरणाभावेन तद्विशिष्टाहमर्थाभावात्त्वन्मते बहुस्यामित्याद्युत्तमपुरुषप्रयोगानुपपत्तिः । न चेयं श्रुतिरीश्वरोक्तिरूपेति नोत्तमपुरुषप्रयोगोपाधित्वेनान्तः करणापेक्षेति वाच्यम् । ईश्वरस्यान्तःकरणाभावेन तदुपहितस्य तद्विशिष्टस्य वा चैतन्यस्याभावात् । अहं स्यामितीच्छायास्तथाभिलापस्य च सुतरां सम्भवात् न चेच्छाप्रयोजकरूपवच्चैतन्यमहमर्थः । तच्च जीवानामन्तःकरणमीश्वरस्य ज्ञानमिति जीवेश्वरयोरुभयोरप्यहं स्यामित्यादि

१. तै.उ.प्र.प.६

प्रयोगोपपत्तिरिति वाच्यम् । अविद्याया इच्छाप्रयोजकत्वस्यैवाभावात् । 'कामः सङ्कल्पः एतत्सर्वं मन एवे'ति सावधारणश्रुत्या मनस एवेच्छाप्रयोजकत्वावेदनात् । एतेन नियम्योत्पत्तेः पूर्वं तदुत्पत्तिकामनैव युक्ता । न तु नियन्तृरूपेण बहुभवनकामना । नियन्तृरूपेण बहुभवनस्य नियम्योत्पत्तिसापेक्षत्वादिति निरस्तम् । शिष्यसम्पादनात्पूर्वं शिष्यसम्पादनसापेक्षगुरुत्वकामनावदुपपत्तेरिति । यदपि 'सच्च त्यच्चाभवदि'ति श्रुतिरपि मायया मूर्तामूर्तात्मकतां ब्रुवाणा ब्रह्मणस्तदुपादानत्वे मानम् । अन्यथा तद्भावायोगादिति । तदपि न । सत्यज्ञानानन्दाद्यात्मकस्य परमात्मनोऽनृतजड दुःखाद्यात्मकप्रपञ्चरूपत्वानुपपत्त्या तच्छ्रुतेः परमात्मनः सत्त्वादिगुणाभिव्यक्तिपरत्वात् प्रपञ्चसृष्टितत्प्रवेशोत्तरभावित्वेन तत्सृष्टिपरत्वानुपपत्तेश्च ।

न च ब्रह्मणः श्रुत्या निर्गुणत्वावेदनान्न सत्यत्वादिगुणाभिव्यक्तिपरत्वमिति वाच्यम् । निर्गुणश्रुतेर्हेयगुणराहित्यपरत्वात् । अन्यथा सत्यकामः सत्यसङ्कल्प इत्यादि गुणविधायकश्रुतिविरोधात् । शाखान्तरमूर्तामूर्तयोरेव सत्यच्छब्दश्रवणेऽपि सर्वशब्दवाच्यत्वेन ब्रह्मणोऽपि सत्यच्छब्दप्रतिपाद्यत्वसम्भवात् । न च 'तदनुप्रविश्य सच्च त्यच्चाभवदि'ति तदनुप्रवेशसमानकर्तृकत्वेन श्रूयमाणं सदादिभवनं न सत्त्वादिगुणाभिव्यक्तिरूपं तदभिव्यक्तेरसत्त्वादिगुणकर्तृकत्वेनानुप्रवेशकर्तृब्रह्मकर्तृकत्वाभावेन सदादिभवनस्य श्रुतानुप्रवेशसमानकर्तृत्वानुपपत्तेरिति वाच्यम् । सत्त्वादिगुणवत्तयाभिव्यक्तेरेव सदादिभवनशब्दार्थत्वात्तस्याश्च ब्रह्मकर्तृत्वेनानुप्रवेशसमानकर्तृकत्वोपपत्तेः सदादिभवनस्य सृष्ट्यनुप्रवेशोत्तरभावित्वेन सृष्टिरूपत्वासम्भवस्योक्तत्वाच्च । न च सदादिभवनस्य बहु स्यामिति कामितबहुभवनरूपत्वेन तस्य सृष्ट्यनुप्रवेशप्रयुक्तत्वेन च सृष्ट्याद्युत्तरभावित्वमविरुद्धमिति वाच्यम् । बहुभवनस्य वियदाद्युत्पत्त्यतिरिक्तस्याभावेन तदनन्तरभावित्वासम्भवात् ।

## 'सच्च त्यच्चाभवदि'ति श्रुतेः अर्थान्तरपरत्वोपवर्णननिरासः—

यत्तु सृष्टस्याहेरिव रज्जोः प्रपञ्चस्य ब्रह्मणः पृथक् सत्त्वशून्यत्वमेव कामितबहुभवनं तदेव च सच्च त्यच्चाभवदिति श्रुतिः ब्रूत इति । तन्न । रज्जुसर्पभ्रमेऽत्यन्तासत एव सर्पस्यारोप्यत्वेन तस्य सृष्टौ मानाभावेन दृष्टान्तत्वानुपपत्तेः । बहुभवनस्य पृथक् सत्त्वशून्यत्वरूपत्वे मानाभावाच्च । किञ्च बहुभवनस्य पृथक् सत्त्वशून्यत्वे सर्वस्य सर्वभावापत्तिः । प्रपञ्चमात्रे ब्रह्मस्वरूपरूपाया जातिरूपाया वा सत्ताया एकत्वात् । यदपि चोक्तं 'निरुक्तं चानिरुक्तं चे'त्यादेर्मूर्तामूर्तविशेषभावापत्त्यभिप्रायत्वान्न वैय्यर्थ्यमिति । तदपि न, मूर्तामूर्तयोस्तद्विशेषयोर्वा ब्रह्मणोऽत्यन्तभिन्नत्वेन तस्य मूर्तादिस्वरूपरूपत्वात्मकतद्भावानुपपत्तेः । अन्यादृशस्य तद्भावस्यातिप्रसक्तत्वात् पारिभाषिकतापत्तेश्च । यदपि 'असद्वा इदमग्र आसीदि'ति मन्त्रोऽपीदं नामरूपविशेषणव्याकृतं जगदग्रे प्रागुत्पत्तेः असदव्याकृतनाम-

रूपं ब्रह्मैवासीत् ततो ब्रह्मणः सदभिव्यक्तनामरूपं जगदजायत किं मातुरिव पुत्रो नेत्याह । तद्ब्रह्म स्वयं अन्यानधिष्ठितं तस्यैव कर्तृत्वात् 'आत्मानमकुरुत मायावीव स्वात्मानमेव व्याघ्रादि स्वरूपेण जायमानप्रपञ्चाकारेणात्मानकमरोदिति श्रवणात् ब्रह्मोपादानमिति । तन्न । यदिदं प्रत्यक्षादि प्रमाणसिद्धं जगदग्रे स्वोत्पत्तेः पूर्वम् असद्वा आसीत् अभावप्रतियोग्येवासीदलब्धस्वरूपमेवासीदिति यावत् । तत्तु ततः परमप्रकृतात् ब्रह्मणः सकाशात् सदजायत लब्धस्वरूपमजायत तदुत्पन्नं जगदात्मानं शरीरं स्वयं स्वतन्त्रं ब्रह्माकुरुत जगतश्च ब्रह्मशरीरत्वं 'यस्यात्मशरीरमि'त्यादिश्रुतिसिद्धमित्यर्थपरपरत्वेन त्वदुक्तार्थ-परत्वे मानाभावात् । ब्रह्मणो सच्छब्दार्थपरत्वे च 'सदेव सौम्येदमग्र आसीदि'ति श्रुतिसिद्धसद्रूपत्वा-नुपपत्तेः । किञ्च 'तदात्मानं सृजाम्यहं, सम्भवामि युगे युगे' इतिवत् 'तदात्मानं स्वयमकुरुते'त्यस्य उपपत्तेराकाशाद्यात्मनात्मानमकुरुतेत्यर्थपरत्वे मानाभावः । न ह्यत्र आत्मानमाकाशाद्यात्मनाऽकुरुतेति श्रूयते ।

किञ्च परमते 'ततो वै सदजायते'ति पूर्ववाक्येनैव सच्छब्दनिर्दिष्टप्रपञ्चस्य ब्रह्मसकाशादुत्पत्तेः सिद्धत्वेन तदात्मानमित्यादेर्वैयर्थ्यम् । एवं 'तदैक्षत बहु स्यामि'त्येतदपि तत्तन्नियामकरूपेण बहुभवन-सङ्कल्पाभिप्रायं अत्र तेज आदिरूपेण बहुभवनसङ्कल्पो न विवक्षितः । तेज आदिपदेन चेतनानामेव विवक्षितत्वात् 'तत्तेज ऐक्षत तदपोऽसृजत ता आप ऐक्षन्त ता अन्नमसृजन्ते'ति ईक्षितृत्वस्रष्टृत्वदेवता-त्मश्रवणात् । न हि ब्रह्मणस्तेज आदिपदप्रतिपाद्यत्वं चेतनरूपेण बहुभावो वा तदुपात्तत्वं वा तवाभिमतं युक्तं वा । यत्त्वत्र प्रथमं तेजःपदं तेजोरूपभूतपरं द्वितीयं तु तदवच्छिन्नब्रह्मपरम् । एवमुत्तरत्रापि ।

यथा 'आत्मन आकाशः सम्भूत' इत्यत्र प्रथमाकाशपदं भूताकाशपरम् । द्वितीयं तु ब्रह्मपरं तथेद-मपीति । तन्न । 'आत्मन आकाशः सम्भूतः आकाशाद्वायुरि'त्युभयत्रापि आकाशपदस्य भूताकाश-परत्वेन दृष्टान्तासम्प्रतिपत्तेः । दार्ष्टान्तिकेऽपीक्षितृत्वादिना चेतनदेवतापरत्वेन निर्णीततेजः प्रायपाठेन प्रथमतेजः पदस्यापि चेतनदेवतापरस्यैव न्याय्यत्वात् । अन्यथा 'तत्तेज ऐक्षत' इति प्रत्यभिज्ञाविरोधात्। यदपि चोक्तं "सर्वाणि ह वा इमानि भूतानि", "य एता वा इमानि भूतानी"त्यादि श्रुतिजातमपि ब्रह्मण्येव जगत्सृष्टिस्थितिलयप्रतिपादकमिति । तदपि न । देशकालयोरिव ब्रह्मणोऽनुपादानत्वेऽपि सर्वाधारत्वेन सृष्ट्याद्याधारत्वोपपत्तेरुक्तत्वात् । लवणानुपादानस्य जलस्य लवणलयाधारत्ववत् जग-दनुपादनस्यापि ब्रह्मणस्तल्लयाधारत्वोपपत्तेश्च ।

'एकविज्ञानेन सर्वविज्ञान'श्रुतिरपि यथाश्रुतार्थे बाधकसत्त्वेन राजनि विज्ञाते सर्वोऽप्यमात्यादि-र्विज्ञात इतिवत् ब्रह्मणः प्राधान्यमात्रपरेति तदुपादानत्वे मानमित्युक्तम् । यदपि चोक्तं, सर्वशाखासु 'ब्रह्मणः सार्वात्म्य'श्रुतिरपि तदुपादानत्वे मानमिति । तदपि न । 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतीनां

सर्वमिदं जललवणमितिवत् सर्वव्याप्तिमात्रपरत्वात् । सत्यज्ञानानन्दाद्यात्मनो ब्रह्मणः तद्विलक्षणसर्वात्मत्वासम्भवेन न तत्परत्वानुपपत्तेश्च । 'सर्वं समाप्नोषि ततोऽसि सर्वः' इति भगवद्गीतावचनमपि न सर्वात्म्यपरम् ॥ उक्तरीत्या ब्रह्मणः सर्वात्म्यानुपपत्तेः । किं तु सर्वदेशकालावच्छेदेन सर्ववस्तुसबन्धमात्रपरम् । न च तस्याकाशादिसाधारणतयाऽतिप्रसक्तत्वेन सर्वहेतुत्वानुपपत्तिः । नियामकतया सद्ब्रह्मस्यैव संपूर्वकाप्तशब्दार्थत्वात् । अत एव संशब्दो न व्यर्थः । नियामकत्वं च यथावद्वस्तुव्यवस्थापकत्वलक्षणं द्रव्यवद्गुणादावपि सम्भवत्येव । सम्बन्धश्च यद्यपि गुणादिना न संयोगादिरनभ्युपगमात् । तथापि संयुक्ततादात्म्यादिलक्षणाश्रयद्वारको वा, काले सर्वाधारता*प्रयोजकसम्बन्धवत् स्वरूपसम्बन्धविशेषो वा ब्रह्मणः सर्वेण सहास्तीति न काप्यनुपपत्तिः ।

## प्रकृतिपरिणामस्य प्रपञ्चस्य ब्रह्मणोपादानत्वे प्रमाणाभावसमर्थनम्—

अत एव प्रपञ्चस्य सत्तादात्म्यानुभवादपि सदात्मब्रह्मणः सर्वात्मकत्वं सद्बुद्धेर्लाघवेनात्मस्वरूपसत्तामात्रविषयत्वनिश्चयात् अविद्यान्यथाभावरूपप्रपञ्चस्य सदधिष्ठानं विनाऽयोगादपि ब्रह्मण उपादानत्वम् । तस्माद्रज्जुरिवाहेः सर्वस्य विवर्ततया स्वरूपपरित्यागेन ब्रह्मोपादानमिति निरस्तम् । सत्त्वस्य द्रव्यत्वघटत्वादिवत् साक्षात्प्रपञ्चधर्मत्वस्य स्थापितत्वात् प्रपञ्चस्य मायारचितप्रकृत्यन्यथाभावरूपत्वेऽपि प्रकृतेरनिर्वचनीयाविद्यारूपत्वे मानाभावात् । मृदन्यथाभावरूपघटस्येव प्रकृत्यन्यथाभावरूपप्रपञ्चस्यापि परमार्थसत्यत्वेन त्वदभिमताधिष्ठाननिरपेक्षत्वात् अधिष्ठानशब्देन देशकालसाधारणाश्रयमात्रोक्ताविष्टापत्तेः । अत एव जगदाकारेण परिणममानाविद्याधिष्ठानत्वमेव ब्रह्मणो जगदुपादनत्वमिति लक्षणं प्रत्युक्तम् । तस्मात्प्रकृतिपरिणामस्य सत्यस्य प्रपञ्चस्य ब्रह्मणोपादाने मानाभावादिति सिद्धम् ।

किञ्च ब्रह्मणो जगदुपादानत्वे निर्विकारत्वश्रुतिविरोधः । विकारवत्कारणत्वस्यैवोपादानत्वरूपत्वात् । न च निर्विकारत्वश्रुतेः पारमार्थिकविकाराभावविषयत्वं सामान्यश्रुतेः विशेषपरत्वे मानाभावात् । अन्यथा ब्रह्मणि प्रपञ्चनिषेधश्रुतेरप्यपारमार्थिकप्रपञ्चरूपविशेषविषयत्वापत्तेः । यत्तु विकारवत्कारणत्वमुपादानत्वमित्यत्र विकारत्वं न संयोगादिरूपमिति प्रसङ्गादित्यादि, तदपि न । विकारविकारिकारणयोरभेदेन संयोगानभ्युपगमात् ।

न चैवं विकारत्वानुपपत्तिः । कार्यकारणभावादेरेव मतुबर्थत्वात् धनी गोमानित्यादौ संयोगाद्यभावेऽपि मतुब्रो दर्शनिनाविशेषितसम्बन्धमात्रस्यैव मतुबर्थत्वात् । न चाभेदे कार्यकारणभावाद्यनुपपत्तिः। घटोत्पत्तेः प्रागपिमृदि घटबुद्धि तत्कार्यजलाद्याहरणापत्तिश्चेति वाच्यम् । पक्वे घटे पूर्वं श्याम आसीदिदानीं

* कालिकविशेषणता

न श्याम इत्यबाधितानुभवबलेन समयभेदेन तत्रैव भेदाभेदवन्मृद्यपि घटोत्पत्त्यनन्तरं 'इयमेव मृद्घटः पूर्वं ने'त्यबाधितप्रतीतिबलेन तत्रैव समयभेदेन घटभेदाभेदयोः सत्त्वात् । न चैवं घटोत्पत्त्यनन्तरं मृद्घटयोरत्यन्ताभेदेन मृद्घट इति सामानाधिकरण्येन सह प्रयोगानुपपत्तिः । धर्म्यभेदेऽपि प्रवृत्तिनिमित्तद्वयमादाय द्रव्यं घट इतिवत् सत्यं ज्ञानमितिवत् तदुपपत्तेः । सविशेषाभेदाभ्युपगमेनोक्तदोषानवकाशाच्च । तस्माद्ब्रह्मणो जगदुपादानत्वसम्भवेनोपादानत्वरूपप्रतिपन्नोपाधौ प्रमाणनिषिद्धत्वरूपं मिथ्यात्वं प्रपञ्चस्येत्ययुक्तम् । अत एव ब्रह्मणो जडाभेदसाधकपूर्वोक्तानुमाने तदुपादानकत्वहेतुरसिद्धः । तथा च सत्यप्रपञ्चान्तर्गतस्य जीवेश्वरभेदस्य जडेश्वरभेदस्य च सत्यत्वात् स्वाभाविकत्वाच्च न मिथ्यात्वमौपाधिकत्वं च ।

किञ्चाविद्यान्तःकरणादेश्चैतन्ये आकाशघटमठादिवदुपाधित्वमयुक्तम् । घटाकाशो मठाकाश इतिवत् अविद्याचैतन्यामज्ञानचैतन्यमन्तःकरणचैतन्यं मनश्चैतन्यमित्यननुभवात् । नापि दर्पणतदुपाधित्वं दर्पणे मुखमितिवदविद्यायां चैतन्यमन्तःकरणचैतन्यमित्याद्यननुभवात् । प्रत्युताहमज्ञो अज्ञचेतनोऽहमित्येवानुभवात् । किञ्चाविद्यान्तःकरणादेश्चैतन्यप्रतिबिम्बोद्ग्राहित्वं चैतन्यस्य तत्प्रतिफलनं चायुक्तम् । नीरूपत्वात् । लोके हि उद्भूतरूपवदेव हि सूर्यमुखादिकमुद्भूतरूपत्वे वा प्रतिफलनयोग्ये स्वतो विप्रकृष्टदेशवर्तिनि स्वच्छे जलदर्पणादौ प्रतिबिम्बवत इति दृष्टम् ।

न हि चैतन्यमन्तःकरणादिकं चोद्भूतरूपवत् । न चाविद्यादिकं प्रतिफलनयोग्यं स्वतो विप्रकृष्टदेशवर्तिस्वच्छं वा, न चाविद्यान्तःकरणनिमग्नचैतन्यस्य प्रतिफलनं सम्भवति । जलनिमग्नमुखादेस्तत्र प्रतिबिम्बादर्शनात् । ननु नीरूपस्याप्याकाशस्य साभ्रनक्षत्रस्य जले प्रतिबिम्बो दृश्यत इति चेत् । न । गगनदेशवर्तिनि सवितृप्रभामण्डले सलिलप्रतिबिम्बिते गगनप्रतिबिम्बत्वस्य व्यवहारस्य भ्रममात्रमूलत्वात् । न च बाधकाभावान्न तथा । नीरूपस्य वाय्वादेः प्रतिफलनादर्शनेनोद्भूतरूपवत्त्वस्यैव प्रतिफलनयोग्यतावच्छेदकत्वकल्पने प्रकृते तदभावस्यैव बाधकत्वात् । न च नीरूपस्यापि वर्णस्य ध्वनौ प्रतिबिम्बदर्शनेन नोद्भूतरूपवत्त्वं तदवच्छेदकमिति वाच्यम् । ध्वनौ वर्णप्रतिफलने मानाभावात् । न च मुखे दर्पणमालिन्यादिप्रतीतिवत् वर्णे ध्वनिधर्मह्रस्वत्वदीर्घत्वादिप्रतीतिरेव मानमिति वाच्यम् । व्यञ्जकतया सन्निधानमात्रेणापि जपाकुसुमेऽप्रतिबिम्बितेऽपि स्फटिके सन्निहितजपाकुसुमधर्मभूतलौहित्यादिप्रतीतिवद्वह्न्यप्रतिबिम्बितेऽपि तप्तजले वह्निधर्मभूतोष्णत्वादिप्रतीतिवत् घटमठादिष्वप्रतिबिम्बितेऽपि तदवच्छिन्नाकाशे घटादिधर्मभूतपरिच्छिन्नत्वादिवदयस्कान्तमणावप्रतिबिम्बितेऽप्ययसि स्वसन्निहितायस्कान्तमणिधर्मभूतक्रियाप्रतीतिवच्च ध्वन्यप्रतिबिम्बितेऽपि वर्णेष्वनिर्वचनीयह्रस्वत्वाद्युत्पत्त्या वा वास्तवतदुत्पत्त्या वा अन्यथाख्यातिवादिरीत्या वा ध्वनिधर्मभूतह्रस्वत्वादिप्रतीत्युपपत्तेः ।

प्रतिध्वनिरपि न पूर्वध्वनिप्रतिबिम्बः पञ्चीकरणप्रक्रियया पटहपयोनिधिप्रभृतिशब्दानां क्षितिसलिलादिशब्दत्वेन प्रतिध्वनेरेवाकाशशब्दत्वेन तस्य वर्णादिशब्दप्रतिबिम्बत्वायोगात् । वर्णरूपप्रतिशब्दोऽपि न पूर्ववर्णप्रतिबिम्बः वर्णाभिव्यञ्जकध्वनिनिमित्तकप्रतिध्वनेरपि स्वावच्छिन्नवर्णाभिव्यञ्जकत्वेन तथाविधप्रतीत्युपपत्तेः । किञ्चाविद्यान्तर्गतचैतन्यस्य नाविद्यायां प्रतिफलनं सम्भवति । तदुपाध्यन्तर्गतस्य तत्र प्रतिफलनायोगात् । न हि दर्पणजलाद्यन्तर्गतस्य वस्तुनस्तत्र प्रतिफलनं दृष्टम् । नापि न तदनन्तर्गतस्यचैतन्यस्य प्रतिबिम्बेश्वरत्वपक्षे तस्य प्रपञ्चानन्तर्गतत्वेन सर्वान्तर्यामित्वसर्वकर्तृत्वसर्वोपादानत्वसर्वसाक्षित्वाद्यनुपपत्तेः । किञ्चान्तःकरणप्रतिबिम्बितस्य तदवच्छिन्नस्य वा चैतन्यस्य जीवत्वपक्षे कृतहानाकृताभ्यागमप्रसङ्गः ।

प्रतिबिम्बपक्षे स्वान्तर्गतस्य स्वानन्तर्गतस्वसन्निहितस्य वा चैतन्यप्रदेशस्य अन्तःकरणे प्रतिबिम्बस्य वक्तव्यतया तत्र तत्र स्वर्गनरकादिष्वन्तःकरणस्य गमने बिम्बभूतचैतन्यप्रदेशभेदात् (भूतात्), तत्प्रतिबिम्बचैतन्यस्यापि भेदावश्यम्भावेन कर्तृभोक्तृचैतन्यभेदात् । एवमवच्छिन्नत्वपक्षेऽपि कर्तृभोक्तृचैतन्ययोस्तत्रतत्रान्तःकरणावच्छेद्यभिन्नतत्तच्चैतन्यप्रदेशरूपत्वेन भेदावश्यम्भावात् ।

## अविद्यान्तःकरणादेः प्रतिबिम्बोद्ग्राहितया दर्पणादिवन्नोपाधित्वमिति समर्थनम्—

एतेनः "यथा ह्ययं ज्योतिरात्मा विवस्वान्" [1]"अत एव चोपमा सूर्यकादिवत्" इति श्रुतिसूत्राभ्यां जीवेश्वरयोः बिम्बप्रतिबिम्बभावव्यवस्थापनात् तदन्यथानुपपत्त्या लोकेऽदृष्टमपि नीरूपस्य चैतन्यस्य नीरूपाविद्यान्तःकरणादौ प्रतिफलनमिहैव कल्प्यत इति निरस्तम् । श्रुतिसूत्रयोरन्यथैव व्याख्यातत्वात् । त्वन्मतेऽपि [2]"अम्बुवदग्रहणात्त्र तथात्व"मिति उत्तरसूत्रेण सूर्यस्य प्रतिबिम्बोदययोग्यविप्रकृष्टदेशवर्तिरूपवत्स्वच्छजलादेरिव चैतन्यप्रतिबिम्बोदययोग्यस्य तादृशवस्तुनोऽभावात् । चैतन्यप्रतिबिम्बनासम्भवमुक्त्वा 'वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवमि'ति तदनन्तरसूत्रेण यथा जलप्रतिबिम्बितः सूर्यो जलवृद्धौ वर्धत इव तद्ध्रासे ह्रसतीव तच्चलने चलतीव तस्याध्यासिकं जलानुरोधि वृद्धिह्रासादिभाक्त्वं तथात्मनोऽन्तःकरणादिनावच्छेदेनोपाद्यन्तर्भावादाध्यासिकं तदनुरोधिवृद्धिह्रासादि भाक्त्वमित्येवं दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोध इत्युत्तरसूत्रद्वयव्याख्यानमुखेन 'अत एव चोपमा सूर्यकादिवदि'ति पूर्वसूत्रस्यापि तदधीनमात्रेण तत्प्रतिबिम्बत्वमित्येवमर्थपरतया व्याख्यातत्वाच्च । तस्मादविद्यान्तःकरणादेः प्रतिबिम्बोद्ग्राहितया दर्पणादिवन्नोपाधित्वमिति । नापि जपाकुसुमवदुपाधित्वं, तद्वदेव प्रतिबिम्बोद्ग्राहित्वाभावप्रसङ्गात् । नन्वविद्यान्तःकरणादेः प्रतिबिम्बोद्ग्राहितयोपाधित्वमस्माभिरुपेयते । किं तु जपाकुसुमवत्स्वधर्मासञ्जकत्वमात्रेणेति चेत् । न ।

एवं ह्यनौपाधिकचैतन्यनानात्वमभ्युपगच्छतः तन्नानात्वं भेदकं चेश्वरजीवत्वे च अविद्योपाधिकमभ्युपगच्छतस्तवाविद्यादिकं स्वनिष्ठं जपाकुसुमलौहित्यवदनौपाधिकमेव चैतन्यभेदं भेदकं चेश्वरत्वं जीवत्वं तन्नियतसर्वज्ञत्वासार्वज्ञत्वादि धर्मांश्च वस्तुत अभिन्ननिर्धर्मके चैतन्यै आदधत् 'कार्योपाधिरि'त्यादिश्रुत्या तावुपाधिरित्युच्यत इत्यभिप्रेतम् । तच्चायुक्तम् । तथा सत्यविद्यान्तःकरणादेश्च त्वदभ्युपगतचैतन्यभास्यत्वानुपपत्तेः । न हि चैतन्यप्रतियोगिकानौपाधिकभेदाश्रयस्य स्वप्रकाशचैतन्याभेदप्रयुक्तं तद्भास्यत्वं सम्भवति । न च वस्तुतः चैतन्यभिन्नस्यैवाविद्यारोपितरजतादेरिवारोपितचैतन्यतादात्म्यमादाय तद्भास्यत्वं सम्भवतीति वाच्यम् ।

इदं रजतमितिवदहमविद्येति तादात्म्यानुभवाभावेन अविद्यादेश्चैतन्यतादात्म्याध्यासे मानाभावात् । 'प्रत्युताहमज्ञो ममान्तःकरणमि'ति संसर्गितयैवानुभवात् । किञ्चाविद्यादिकं जपाकुसुमवत् चैतन्यस्वधर्मसजातीयं धर्मान्तरमादधाति उत तमेवाधानमपि किमुत्पादनं किं वा ज्ञापनमात्रम् । नाद्यः । जीवेश्वरभेदस्यानादित्वात् । न द्वितीयः । दीपेनेव अविद्यादिना विद्यमानचैतन्यभेदज्ञापने तदुपाधित्ववार्तायाः पारिभाषिकत्वेन मदिष्टाविघातित्वात् । न तृतीयः । नैसर्गिकस्वधर्मस्य तत्सम्बन्धस्य वा अनादितया अन्यत्रोत्पादनासम्भवात् । न चतुर्थः । अन्यथाख्यातिप्रसङ्गात् । अविद्यानिष्ठचैतन्यप्रतियोगिकभेदस्य विप्रकृष्टत्वेनापरोक्षानुपपत्तेश्च । न हि तच्चैतन्येऽनध्यस्तं ते न भास्यत इति प्रसङ्गात् ।

किञ्चेवं सार्वज्ञसर्वशक्तित्वादिधर्माणामप्यौपाधिकत्वे "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया" चेत्यादि श्रुतिविरोधः । अपि च स्वतःसार्वज्ञादीनां चैतन्यनिष्ठत्वाभावेन तस्यामुख्यब्रह्मत्वादिकमविद्यादेरेव चानौपाधिकसर्वज्ञत्वादिसत्त्वेन मुख्यब्रह्मत्वादिकं च स्यात् । ब्रह्मणि सर्वज्ञत्वादिश्रुतीनामतत्त्वावेदकत्वं च स्यात् । किञ्च लोके वेदसिद्धसर्वज्ञत्वादिचैतन्यधर्माणां वस्तुतोऽविद्यादिधर्मकत्वे मानाभावेन कथमौपाधिकत्वम् । न हि सर्वज्ञत्वादयो वस्तुतोऽविद्यादिधर्माः न, चैतन्यधर्मा इति श्रुतिरस्ति । न च चैतन्यस्यासङ्गत्वावेदकश्रुत्यथानुपपत्त्या तत्सिद्धिः । तत एव विशेषेण सङ्गमात्रनिषेधवत् उपाधिसम्बन्धतत्प्रयुक्तभेदतन्नियतसर्वज्ञत्वादिधर्मसम्बन्धस्याप्यसिद्धिप्रसङ्गात् ।

इदं च पुरुत्वसंसर्गिचैतन्ये "असङ्गो ह्ययं पुरुषः" इत्यसङ्गत्वविधायिन्याः श्रुतेः स्वव्याहतभाषित्वपरिहाराय [1]"एको देवः सर्वभूतेषु गूढः सर्वव्यापी"त्यादि सर्वसङ्गप्रतिपादकश्रुत्यन्तरादिविरोधाय च परमात्मनः सर्वसङ्गकृतदुःखादिकार्यनिषेधमात्रपरत्वस्यैव न्याय्यत्वात् । श्रुतिप्रतिपन्न-

१. श्वेता. अध्या. ६ मं. ११

नित्यत्वज्ञानत्वानन्दत्वादि परमात्मधर्मणामप्यौपाधिकत्वापत्त्या तत्प्राप्तेर्नित्यपुरुषार्थत्वाभावप्रसङ्गात् । न हि नित्यत्वानन्दत्वादयो धर्मा न भवन्ति 'अविनाशीवारेयमात्मानुच्छित्तिधर्मे'त्यादि श्रुत्या तेषां धर्मत्वोक्तेः । आनन्दो विषयानुभवो नित्यत्वं चेति श्रुतिधर्मा इति त्वदुक्तेश्च । न च नित्यत्वादीनां स्वरूपभूतधर्मत्वेन च नौपाधिकत्वमिति वाच्यम् । 'असङ्गो ह्ययमि'ति श्रुत्याऽविशेषेण सङ्गमात्रनिषेधेन स्वरूपभूतधर्मस्याप्ययोगात् । न चाविनाशि नित्यं विज्ञानमानन्दं ब्रह्मेत्यादिश्रुतिविरोधेन नाशाङ्गश्रुतेः स्वरूपाद्यतिरिक्तधर्मसङ्गमात्रनिषेधपरत्वमिति वाच्यम् । त्वद्रीत्या [१]"सत्यकामः सत्यसङ्कल्पः यः सर्वज्ञः सर्ववित् भिन्नोऽचिन्त्यः परमो जीवसङ्घात्", [२]"त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् । तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः" इत्यादिश्रुत्या स्वरूपातिरिक्तधर्माणामप्यवेदनादसङ्गश्रुतेः तत्सङ्गनिषेधपरत्वादस्याप्ययोगात् । तुरीयं तत्सर्वदृक्सदेतिश्रुत्या ब्रह्मचैतन्यस्य सर्वसम्बन्धिताया सदातनत्वाभिधानाच्च । [३]"यच्च किञ्चिज्जगत्सर्वं दृश्यते श्रूयतेऽपि वा", "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" इत्यादिश्रुत्या नारायणशब्दितस्य परमात्मनः प्रामाणिकयावत्पदार्थसङ्गित्वाभिधानाच्च ।

किञ्चेश्वरतद्धर्माणामविद्योपाधिकत्वे 'सत्यकामः सत्यसङ्कल्प' इत्यादि श्रुतिप्रतिपन्नसत्यकामत्वादीश्वरत्वनियतधर्माणामसिद्धिप्रसङ्गः । अविद्यायास्तद्धर्मकत्वे मानाभावात् । 'कामः सङ्कल्प' इत्यादि सावधारणश्रुत्या कामादीनामन्तःकरणमात्रवृत्तित्वावधारणाच्च । ईश्वरस्य श्रुतिप्रतिपन्नसत्यकामत्वादि निर्वाहाय कामादिधर्मकान्तःकरुणोपाधिकत्वस्याप्यङ्गीकारे तस्यापि जीवत्वापत्तेः । औपाधिकस्यापि जीवेश्वरभेदस्यासिध्यापत्तेश्च । अपि चैवमपि जगत्कर्तृत्वादीश्वरधर्माणां कर्तृत्वभोक्तृत्वादिजीवधर्माणां चौपाधिकत्वं न सिद्ध्येत् । अविद्यान्तःकरणादेः कर्तृत्वादिधर्मकत्वे मानाभावात् ।

कामः सङ्कल्प इत्यादि श्रुतौ कर्तृत्वादीनामनुपादानात् ओदनकामोऽहं पाकं करोमीत्याद्यनुभवेन कर्तृत्वस्याप्यन्तःकरणवृत्तिरूपेच्छासमानाधिकरण्यप्रतीतेस्तस्याप्यन्तःकरणवृत्तित्वसिद्धिरिति चेत् न । कर्तृत्वादेः स्वाभाविकात्मधर्मत्वेऽपि त्वद्रीत्येतरेतरधर्माध्यासेनापि सामानाधिकरण्यानुभवोपपत्तेः । [४]"विज्ञानं यज्ञं तनुत" इति श्रुतौ विज्ञानशब्दस्य ब्रह्मपरत्वात् त्वद्रीत्या बुद्ध्यपरनामकान्तःकरणपरत्वेऽपि अन्तःकरण एव स्वाभाविकात्मधर्मभूतकर्तृत्वाध्यासमादायापि विज्ञानं यज्ञं तनुत इति श्रौतव्यपदेशोपपत्तेश्च ।

---

१. मुं. २-२-७ २. कैवल्यो. १८ ३. तै.उ.प्र.४ प.२९ ४. तै.उ.प्र.२ प.५

**ब्रह्मणः स्वाभाविकात्मधर्मनिरूपणद्वारा 'मायाप्रतिबिम्बितचैतन्यमीश्वरः, अविद्याप्रतिबिम्बितचैतन्यं जीव' इति मतनिरासः—**

कामादीनां कर्तृत्वादीनां चान्तःकरणपरिणामत्वेऽपि स्वावयवपरिणामभूतदण्डकुण्डलादेः तथाभूदधनादेश्च संयोगेन सम्बन्धान्तरेण वा दण्डीकुण्डलीत्याद्यबाधितविशिष्टानुभवबलेन स्वाभाविक-पुरुषधर्मत्ववत् स्वाभाविकात्मधर्मत्वोपपत्तेश्च । न हि जीवे धर्मनिषेधिका श्रुतिरस्ति यद्बलात् जीवे कर्तृत्वादि प्रतीतेर्भ्रमत्वसिध्या तदौपाधिकत्वं सिद्ध्येत् । "असङ्गो ह्ययं पुरुषः", "केवलो निर्गुणश्च" इत्यादि धर्मनिषेधश्रुतीनां परमात्मविषयत्वात् परमात्मन्यपि केवलो निर्गुणश्चेति श्रौतसत्यकामत्वादि धर्मसमुच्चयार्थकचशब्दमहिम्ना निर्गुण इति धर्मसामान्यवाचि गुणशब्दस्य तद्विशेषभूत हेयधर्मभूत-परत्वस्यैव न्याय्यत्वाच्च ।

अत एव 'मायाप्रतिबिम्बितं चैतन्यमीश्वरः । अविद्याप्रतिबिम्बितं चैतन्यं जीव' इति मतमपा-स्तम् । पूर्वोक्तसकलदोषानतिवृत्तेः । जीवेश्वरयोरुभयोरपि प्रतिबिम्बितत्वे जीवस्य श्रुतिप्रतिपन्नेश्वर-पारतन्त्र्यानुपपत्तेः । प्रतिबिम्बस्य बिम्बान्तरानधीनत्वात् । किञ्च मायाविद्याप्रतिबिम्बितचैतन्ययोर्वा अविद्यान्तःकरणप्रतिबिम्बितचैतन्ययोर्वा जीवेश्वररूपत्वेन वा नोदपात्रस्थसूर्यप्रतिबिम्बवत् जीवेश्वर-स्वरुपयोरप्युपाधिनाशे नाशापत्तिः । एवं बिम्बचैतन्यमनवच्छिन्नचैतन्यं वा ईश्वरः अविद्याप्रतिबिम्बित-चैतन्यं तदवच्छिन्नचैतन्यं वा जीव इति पक्षेऽपि । तथा च प्रामुर्जीवस्य प्राप्यस्येश्वरस्याभावेन तत्प्राप्ति-रुपमुक्तेरपुरुषार्थत्वे तदुपयोगिपुरुषव्यापारवैयर्थ्यापत्तेः ।

ननूपाधिनाशेनौपाधिकचैतन्यभेदतन्नियतसकलधर्मनाशेऽपि न चैतन्यस्वरूपनाशः । माना-भावात् । तत्त्वमसीत्यादिना नित्यशुद्धचैतन्याभेदावेदनाच्च । एवं नानोदपात्रस्थसूर्यप्रतिबिम्बानामपि नोपाधिनाशान्नाशः । तेषामाकाशस्थसूर्याभिन्नत्वात् । तथा च नोक्तदोष इति चेन्न । एवं हि चैतन्यमात्राभेदस्य स्वतःसिद्धत्वेन ज्ञानफलत्वाभावप्रसङ्गात् । भेदं विना जीवस्य ब्रह्मप्राप्त्ययोगात् । बिम्बप्रतिबिम्बयोर्वस्तुतो भिन्नत्वेन तदैक्ये मानाभावात् । तथाहि न तावद्दर्पणस्थतया प्रतीयमाने मुखे ममेदं मुखमिति प्रतीतिस्तत्र मानम् । पार्श्वस्थस्य चैत्रमुखतत्प्रतिबिम्बयोर्निर्विचिकित्सभेदसादृश्य-द्वित्वपृथक्त्वप्राङ्मुखत्वप्रत्यङ्मुखत्वावदातत्वश्यामत्वादिगोचरप्रत्यक्षविरोधेन प्रतिबिम्बे चैत्रस्येदं मुख-मित्यभेदप्रतीतेरेवाभावात् । ममेदं मुखं चैत्रस्येदं मुखमित्यादि प्रतिबिम्बव्यपदेशस्य कर्दम-लग्नस्वपादप्रतिमुद्रायां ममायं पाद इतिवत् चित्रलिखितमुखे छायामुखे च ममेदं मुखमितिवच्च गौण-त्वात् । न च विशेषदर्शनादिवदुपाधिसन्निधानस्याप्युत्तेजकतया तत्समवधानकालीनभेदादिदर्शनस्य

विरोधिविषयकत्वेऽपि नाभेदज्ञानप्रतिबन्धकत्वमिति वाच्यम् । तदुत्तेजकत्व*स्यान्यत्राकल्पनात् । इह च प्रतिबध्यत्वाभिमताभेदज्ञानस्यासम्प्रतिपत्तेः । उक्तव्यपदेशस्य गौणत्वेनाप्युपपत्तेश्च । तत्कल्पकाभावात् । न चाभेदज्ञानविरोधान्न भेदादिज्ञानं सम्भवति किन्तु तद्व्यपदेशमात्रं गौणमिति वैपरीत्यमेव किं न स्यादिति वाच्यम् । पादलग्नप्रतिमुद्रादिस्थलेऽपि भेदव्यपदेशस्योक्तरीत्या गौणत्वस्य सुवचत्वात् । बालानां बिम्बप्रतिबिम्बयोर्भेदज्ञानस्य हानोपादानपर्यन्तस्य अपलापानर्हत्वेन प्रेक्षावतामपि तद्भेदादि ज्ञानकल्पनाच्च ।

ननु बालानां विरोध्यभेदज्ञानाभावेन बिम्बप्रतिबिम्बयोर्भेदादि ज्ञानसम्भवेऽपि न प्रेक्षावतां तत्सम्भवः । तेषां विरोध्यभेदज्ञानसत्त्वात् । अन्यथा स्वमुखसौन्दर्यादिदर्शनोद्देशेन दर्पणाद्यनुपादानप्रसङ्ग इति चेत् न । बिम्बाद्भेदेऽपि प्रतिबिम्बस्य बिम्बसमानाकारत्वनियमविशेषज्ञानादेव बिम्बभूतस्वमुखसौन्दर्याद्यनुमित्यर्थं दर्पणाद्युपादानोपपत्तेः । तदज्ञानदशायां तदुपादानासिद्धेः । भेदसादृश्यवैधर्म्यादिज्ञानानां तद्व्यपदेशानां च भ्रमत्वगौणत्वकल्पने बहुबाधपत्तेः । बहुबाधस्यान्याय्यत्वेन बिम्बप्रतिबिम्बयोरभेदज्ञानस्य तद्व्यपदेशस्य वाल्पत्वेन तद्भ्रमत्वगौणत्वकल्पनस्यैव न्याय्यत्वात् ।

किञ्च भेदाभेदप्रत्यययोरभ्युपगमेऽप्येकानन्तरमपरोदयेन अन्यतरभ्रमत्वासम्भवात् । अबाधेनैवोपपत्तावन्यतरबाधस्यान्याय्यत्वाच्च । उभयोरपि भिन्नविषयत्वेन प्रमात्वस्यैव अवश्यवाच्यत्वे सेयं दीपकलिका सेयं गुर्जरी तदेवेदमौषधमित्यादि प्रत्यभिज्ञानवत् चैत्रमुखप्रतिबिम्बे स्वमुखप्रतिबिम्बे वा चैत्रमुखमिदं ममेदं मुखमिति प्रत्यभिज्ञाया अपि तज्जात्यभेदविषयत्वात् । न च तादृशजातौ मानाभावः । चैत्रमुखप्रतिमुखयोः वृश्चिकगोमयप्रभववृश्चिकयोरिवानुगतप्रतीतेरेव मानत्वात् । न च बिम्बप्रतिबिम्बाभेदप्रतीतेरेव व्यक्त्यभेदविषयत्वमस्तु प्रत्यभिज्ञाया व्यक्त्यभेदविषयत्वस्यौत्सर्गिकत्वात् । तद्भेदादिप्रतीतीनां तु परम्परासम्बन्धेन विशेषणभेदादिविषयत्वमेव किं न स्यादिति वाच्यम् । प्रतीतिमात्रस्य साक्षात्सम्बन्धविषयताया अप्यौत्सर्गिकत्वात् । परम्पराया अनेकपदार्थघटितमूर्तित्वेन तावद्विषयत्वकल्पने गौरवाच्च । बिम्बप्रतिबिम्बयोरभेदप्रतीतेः जात्यभेदविषयत्वेऽपि औत्सर्गिकसाक्षात्सम्बन्धविषयत्वापरित्यागाच्च ।

एतेन "नेक्षेतोद्यन्तमादित्यं नास्तं यान्तं कदाचन । नोपरक्तं न वारिस्थं न मध्यं नभसो गतम्" इति वचनबलेन तदभेदसिद्धिरिति परास्तम् । वस्तुतस्तु मुखात् प्रतिमुखमन्यदेव तत्सदृशमुखत्वानधिकरणं चित्रलिखितमुखवत् छायामुखादिवच्च । तत्र मुखशब्दप्रयोगस्तु असिंहे माणवके

* प्रतिबन्धकसमानकालीनकार्यजनकत्वं

सिंहशब्दप्रयोगवत् गौण इत्युक्तम् । न च सुधामये प्रतिमाविशेषेऽत्यन्तसादृश्याद्व्यावर्तकधर्माग्रहे पुरुषविशेषाभेदभ्रमवत् कस्यचिद्बालस्य पित्रादिप्रतिबिम्बे तत एव क्वचित्तदभेदभ्रमोऽस्तीत्येतावता प्रमाणसिद्धबिम्बप्रतिबिम्बभेदादिरवास्तव इति स्वीकारो युक्तः ।

न च दर्पणे मदीयं मुखं न मदीयो हस्तो नेति तद्व्यतिरेकनिश्चयेऽपि दर्पणे प्रतिमुखं नासीत् प्रतिहस्तो नासीन्नास्ति भविष्यतीति प्रतीतिः कदाप्यस्ति । येन प्रतिबिम्बस्य दर्पणसंसर्गप्रतीतिभ्रमः स्यात् । न हि भ्रमावकाशस्थमेघव्यतिरिक्तनिश्चयदशायां तत्र च्छायाप्रतीतिभ्रमः । तद्वदेव प्रतिमुखस्यापि । द्रव्यान्तरत्वात् । अन्यथा छायामुखे प्रतिमुख इव भेदादिप्रतीतेर्भ्रमत्वापत्तिः । तद्वत्स्वमुखे छायामुखाभेदप्रतीतिश्च स्यात् । न चैवं दर्पणाद्युपाधिसन्निधाने तत्र हस्तादिप्रतीतिकालेऽपि दर्पणादौ हस्तादिर्नास्तीत्यपि प्रतीत्यापत्तिः । भूमौ छायाहस्तप्रतीतिकालेऽपि भूमौ हस्तो नास्तीत्यपि प्रतीत्यापत्त्या साम्यात् हस्तशब्देन स्वशरीरावयवविशेषोक्तौ इष्टापत्तेः । तत्सदृशप्रतिहस्तोक्तौ तस्य दर्पणे मम प्रतिहस्तोऽस्तीत्यबाधितानुभवसिद्धस्य तदा सत्त्वेन तद्व्यतिरेकप्रमायास्तेनैवानुभवेन प्रतिबन्धात् दोषाभावाच्च । तद्भ्रमस्य चानुपपत्तेश्च । विमर्शदशायां पार्श्वस्थस्य प्रतिमुखमेव दर्पणसंसृष्टं न तु ग्रीवास्थं बिम्बरूपमपीत्यबाधितानुभवसत्त्वेन दर्पणे मम मुखं नास्तीति प्रतीतेरपि बिम्बाभावविषयतया भिन्नविषयत्वेन दर्पणे प्रतिमुखत्वप्रतीतिं प्रत्यबाधकत्वाच्च ।

ननु दर्पणादावन्यत्र क्लृप्तमुखादिसामग्रीबाधात् तत्र तत्प्रतीतिर्भ्रमः । अन्यथा शुक्ताविदं रजतमिति प्रतीतेरप्यभ्रमत्वापत्तिरिति चेत् । न । प्रतिमुखस्य मुखसदृशद्रव्यान्तरत्वेन मुखत्वरहिततया मुखसामग्रीबाधेऽपि च्छायामुखस्यैव प्रतिसूर्यपरिवेषेन्द्रचापादेरिव सर्गाद्यकालीन ब्राह्मणादिशरीरादेरिव च प्रमाणसिद्धतयां फलबलेन विलक्षणसामग्रीजन्यत्वकल्पनात् । अन्यथा त्वन्मतेऽपि क्लृप्तमुखतत्संसर्गादि सामग्रीबाधेन तद्विलक्षणस्य अनिर्वचनीयमुखादेस्तत्संसर्गादेश्चाऽनुपपत्तिप्रसङ्गात् ।

शुक्तिरजतस्य नेदं रजतं नाभून्नास्ति न भविष्यति कालत्रयेऽपीदं रजतं न भविष्यतीत्यादि सकलसम्प्रतिपन्नबाधदर्शनेन रजतस्यैव तत्राऽसत्त्वे सामग्रीकल्पकाभावेन तत्प्रतीतेर्भ्रमत्वस्यैव न्याय्यत्वात् । न ह्येवं दर्पणे प्रतिमुखं नास्ति नासीन्न भविष्यति कालत्रयेपीदं प्रतिमुखमेव न भवतीति बाधं कोऽप्यनुभवति । किञ्चैवं क्लृप्तसामग्रीविरहादनिर्वचनीयं रजतान्तरमपि त्वन्मते नोत्पद्येत । एतेन दर्पणादौ प्रतीयमानं मुखं प्रतीयमानरूपपरिमाणसंस्थानविशेषमुखत्वादिधर्मयुक्तं तद्रहितं वा । नान्त्यः । द्रव्यान्तरस्य रूपविशेषादिविशिष्टप्रतिबिम्बोपलम्भाऽनिर्वाहकतया तत्कल्पनवैयर्थ्यापत्तेः । प्रथमे, कथमेकस्मिन् अल्पपरिमाणे दर्पणे युगपदसङ्कीर्णतया प्रतीयमानानां महापरिमाणानामनेकमुखादि प्रतिबिम्बानां

सत्यतानिर्वाह इति निरस्तम् । अविरुद्धरूपादिधर्मयुक्तस्यापि प्रतिबिम्बस्य विरुद्धाधिकपरिणामरहिततया तत्प्रतीतेस्तावन्मात्रांशे भ्रमत्वेऽपीतरांशे प्रमात्वाहानेः ।

ननु बिम्बस्योपाधिसन्निकर्षतारतम्येनाधिकाल्पपरिमाणतारतम्यप्रतीतेरेकत्र प्रतिबिम्बविरुद्ध-नानापरिमाणसमावेशायोगात् तेषां मध्ये इदमेवास्य परिमाणं नान्यदिति व्यवस्थापकाभावाच्च । परि-माणज्ञानमात्रस्य भ्रमत्वे प्रतिबिम्बस्य रूपवत्त्वेऽपि परिमाणशून्यतया चाक्षुषत्वानुपपत्तिरिति चेन्न । वस्तुतस्तस्य परिमाणशून्यत्वेऽपि तवारोपितरूपेणाकाशचाक्षुषत्ववत् ममारोपितपरिमाणेऽप्रति-बिम्बचाक्षुषत्वोपपत्तेः ।

वस्तुतस्तु प्रतिबिम्बस्य औपाधिकपरिमाणशून्यत्वेऽप्यनुभवसिद्धचाक्षुषत्वस्य दुरपह्नवत्वेन दूरस्थशैलाग्रवर्तिवनस्पतेरिव यथोचितवास्तवपरिमाणकल्पनान्न परिमाणशून्यत्वं बिम्बस्योपाधिविप्र-कर्षतारतम्येनाल्पाल्पतराल्पतमपरिमाणवत्तया प्रतीयमानानां तु प्रतिबिम्बानां परस्परात्यन्तभिन्नतया प्रतीयमानतत्तत्परिमाणं बाधकाभावाद्वास्तवमिति न कश्चिद्दोष इति । अत एव निबिडावयवानुस्यूते दर्पणे तथैवावतिष्ठमाने तदनन्तर्ह्नुनासिकाद्यनेकनिम्नोन्नतप्रदेशवतो द्रव्यान्तरस्योत्पत्तिर्न युज्यते तदुपाध्य-वयवविभागं विना तदन्तस्तथाविधद्रव्यान्तरोत्पत्तावनवकाशादिति निरस्तम् । तदवयवविभागं विनैव तदन्तःप्रवेशो फलबलेन तथाविधप्रतिबिम्बस्य छायापुरुषवत् विद्युद्घनमेघशब्दवच्च स्वकारणाधीनो-त्पत्तिकल्पनात् । न च तथाऽपि दर्पणावयवैर्व्यवधानात् प्रतिबिम्बस्य चाक्षुषत्वमेवानुपपन्नम् । अन्यथा दर्पणान्तरावयवानामपि चाक्षुषत्वप्रसङ्गादिति वाच्यम् । अञ्जनाक्तनेत्रस्य भूम्यन्तस्थितनिधिचाक्षुष-त्ववत्फलबलेन तदवयवानां प्रतिबिम्बमात्राव्यवधायकत्वकल्पनेन तच्चाक्षुषत्वोपपत्तेः । तन्निम्नोन्नतत्वादि प्रतीतेरपि भूनिक्षिप्तसुवर्णप्रतिष्ठामुखनिम्नोन्नतत्वादि प्रतीतिवदेवोपपत्तेश्च । एतेनैव दर्पणमध्ये सितपीत-रक्ताद्यनेकवर्णादिमनः प्रतिबिम्बस्योत्पत्तौ सततसन्निहितं न तादृशं कारणमस्ति । यच्चुच्यते यथा-पूर्वं दर्पणावयवावस्थानाविरोधेन तादृशप्रतिबिम्बोत्पादनसमर्थं किञ्चित्कारणं फलबलेन कल्प्यम् । उपाधिमध्यविश्रान्तियोग्यपरिमाणनामेव प्रतिबिम्बानां विरुद्धाधिकपारिमाणतादृशनिम्नोन्नतादि ज्ञानं च भ्रम एवेति । तर्हि शुक्तिरजतमपि सत्यमस्तु । तत्रापि शुक्तौ यथापूर्वमवस्थितायामेव तत्तादात्म्यापन्न-रजतोत्पादनसमर्थं किञ्चित्कारणं परिकल्प्य तस्य रजतस्य दोषत्वाभिमतकारणसहकृतेन्द्रियग्राह्यत्व-नियमवर्णनोपपत्तेः । किं शुक्तिरजतम् असत्यं प्रतिबिम्बः सत्य इत्यर्धजरतीयेन* । न चैवं रजतत्वेन परिदृश्यमानायाः शक्तेरग्नौ प्रक्षेपे रजतोचित द्रवीभावापत्तिः अनलकस्तूरिकादिप्रतिबिम्बस्य औष्ण्य-सौरभादिराहित्यवच्छुक्तिरजतस्य द्रवीभावयोग्यताराहित्योपपत्तेः ।

* कुक्कुटाण्डस्य अर्धं भक्षाय, अर्धं प्रसवाय

## प्रतिमुखशुक्तिरजतयोः वैषम्यप्रतिपादनम्—

अथोच्येत नेदं रजतं मिथ्यैव रजतमभादिति सर्वसम्प्रतिपन्नबाधान्न शुक्तिरजतं सत्यमिति तर्हि दर्पणे मुखं नास्ति मिथ्यैवात्र दर्पणे मुखमभादित्यादिसर्वसिद्धबाधात् प्रतिबिम्बोऽपि न सत्य इत्येव युक्तमिति निरस्तम् । एतावन्तं कालं दर्पणे प्रतिमुखमासीत् वक्रमासीत् ऋज्वासीच्छ्याममासीदवदातमासीदिदानीमपि तथैवास्तीत्यादि प्रतिमुखसत्त्वानुभवबलेन छायामुखवतिभूतले इह छायामुखमासीदस्ति चेत्यबाधिततत्सत्त्वानुभवबलेनेह मुखं नास्तीति प्रतीतेः प्रसिद्धमुखाभावविषयत्ववद्दर्पणे मुखं नास्तीति ग्रीवास्थमुखाभावविषयत्वाद्दर्पणे मिथ्यामुखमभादिति प्रतीतेरपि छायामुखवति मिथ्यैव मुखमभादिति प्रतीतेरिव चित्रलिखितनिम्नोन्नतादिदेशेमिथ्यैव निम्नोन्नतत्वादिकमभादित्यादि प्रतीतेरिव च तादृशार्थक्रियासमर्थवस्तुविलक्षणवस्तुविषयत्वेनोपपत्तेश्च । तत्र मिथ्यामुखशब्दप्रयोगस्यापि मच्छायामुख इव तादृशार्थक्रियासमर्थग्रीवास्थमुखविलक्षणत्वेन तदत्यन्तसदृशत्वेन चौपचारिकत्वात् ।

अत एव दर्पणे प्रतिमुखमेवास्ति परं न तु मन्मुखमित्यनुभवो लोकानाम् । अन्यथा शुक्तिरूप्यवत्प्रतिमुखस्यापि असत्यत्वे विशेषदर्शनानन्तरं तत्र कालत्रयेऽपीदं रजतं न भवतीतिवद्दर्पणेऽपि कालत्रयेऽपीदं प्रतिमुखं न दर्पणे प्रतिमुखं नास्ति नासीन्न भविष्यति दर्पणे मिथ्यैव प्रतिमुखमभादित्यादि प्रतीत्यापत्तिः । न हि विशेषदर्शनान्तरं शुक्तिरजते मिथ्यैव रजतमभादिदं रजतं नास्ति नासीन्न भविष्यति असदेव रजतं प्रत्यभादित्यादिप्रतीतिवद्दर्पणे मिथ्यैव प्रतिमुखमभादित्यादि प्रतीतिरस्ति । एतेन दर्पणे प्रतिमुखवच्छुक्तिरजतमपि सत्यमेव । तच्च दोषत्वाभिमतकारणसहकृतेन्द्रियग्राह्यमेव अस्त्विति निरस्तम् । बाध्यत्राधाभ्यां तयोर्वैषम्यस्योक्तत्वात् । एवं चोक्ताबाधितानुभवबलेन प्रतिबिम्बस्य सत्यत्वध्रौव्ये तस्य कादाचित्कत्वेन तदनुरूपसामग्रीकल्पनमपि न्याय्यम् । विरुद्धाधिकपरिमाणनिम्नोन्नतत्वादि प्रतीतेरपि गतिरुक्तैवेति न किञ्चिदनुपपन्नम् ।

किञ्च यत्र बिम्बप्रतिबिम्बयोरत्यन्तसदृशसुवर्णपित्तलकलशयोरिव तादृशसुवर्णकलशयोरिव च प्रथममारभ्य भेदग्रहः । तत्र प्रतिमुखं मिथ्यैव मुखमभादिति मिथ्यामुखशब्दप्रयोगस्योक्तरीत्यौपचारिकत्वेनाप्युपपत्तेः । यत्र च बिम्बाऽसन्निकर्षादिना ग्रीवास्थत्वादि परस्परवैधर्म्यग्रहपुरःसरं भेदग्रहो न जातः । तत्र पूर्वपरिचितात्यन्तसदृशसुवर्णपित्तलघटयोरन्यतराभावदशायामन्यतरेन्द्रियसन्निकर्षे सत्यन्यतरतादात्म्यभ्रमवत् प्रतिमुखे तदत्यन्तसदृशग्रीवास्थमुखतादात्म्यभ्रमसम्भवेन बाधोत्तरकालं मिथ्यैव मुखमभादित्यनुभवस्य तथाविधाभिलापस्य च सम्भवेन तदनुरोधेन प्रतिमुखमिथ्यात्वं युक्तम् । न च एवं दर्पणे मिथ्यामुखमभादिति प्रत्ययाद्यनुपपत्तिः । प्रतिमुखे मिथ्यामुखतादात्म्यस्य प्रत्ययेऽपि दर्पणे

मुखसंसर्गस्याप्रतीतत्वादिति वाच्यम् । भूतलसंसृष्टशुक्तौ प्रतीतरजततादात्म्यमादायेह भूतले रजतमिति प्रतीतिवत् बाधवतारदशायामिह भूतले मिथ्यैव रजतमभादिति प्रतीतिवच्च दर्पणसंसृष्टप्रतिमुखे प्रतीतबिम्बभूतमुखतादात्म्यमादाय दर्पणे मुखमिति प्रतीतेर्बाधावतारानन्तरं दर्पणे मिथ्यैव मुखमभादिति प्रतीतेस्तथाभिलापस्य चोपपत्तेः ।

ननु भूतले रजततादात्म्यारोपाधिष्ठानभूतशुक्तेः प्रमाणसिद्धत्वेनेह भूतले रजतमिति प्रतीतेः शुक्त्यन्वयव्यतिरेकानुविधायित्वेन चोक्तप्रतीतिद्वयस्य तथोपपादनं युक्तम् । प्रकृते तु दर्पणसंसृष्टमुखतादात्म्यारोपाधिष्ठानभूतप्रतिमुखस्यैवाऽप्रामाणिकत्वेन नोक्तप्रतीतिद्वयस्योतरीत्योपपादनं युक्तम् । किन्तु बिम्बभूतमुखे दर्पणसंसर्गमात्राध्यासेनैव तदुपपादनं युक्तं लाघवात् । अन्यथा वस्त्वन्तरस्य प्रतिमुखस्य तत्र दर्पणसंसर्गस्य बिम्बभूतमुखतादात्म्यारोपस्य च कल्पने गौरवप्रङ्गात् किञ्चैवं संसर्गारोपमात्रोच्छेदप्रसङ्गः । तत्तत्संसृष्टे तत्तद्वस्त्वन्येव तत्तत्सदृशवस्त्वन्तरतादात्म्यारोपमादायैवोक्तरीत्या तत्तत्संसर्गप्रतीत्युपपादनसम्भवादिति चेन्न । एतावन्तं कालं दर्पणे प्रतिमुखमासीदित्याद्यबाधितानुभवस्यैव मानत्वात् । अन्यथा पटहादिशब्दस्य प्रतिध्वनिरपि भिन्नो न सिध्येत् । लाघवेन पटहादिशब्देष्वेव गुहादिदेशविशेषसंसर्गमात्राध्यासकल्पने दर्पणे प्रतिमुखमिति प्रतीतेरिव गुहायां पटहादिशब्दप्रतिशब्द इत्यादि प्रतीतेरप्युपपादनसम्भवात् । न चेष्टापत्तिः । पटहपयोनिधिप्रभृतिशब्दानां पञ्चीकृतपृथिव्यादिशब्दत्वेन तदतिरिक्तप्रतिशब्दानङ्गीकारे पञ्चीकृताकाशस्य शब्दगुणकत्वाभावप्रसङ्गात् । यदुक्तं संसर्गारोपमात्रोच्छेदप्रसङ्ग इति । तन्न ।

तत्तदधिकरणसंसृष्टे वस्तुनि सदृशवस्त्वन्तरतादात्म्यारोपसमये तत्तदधिकरणे तत्तद्वस्तुसंसर्गारोपसामग्र्याधिष्ठानज्ञानारोप्यसंसर्गग्रहादिरूपयोः सत्त्वेन तदनुच्छेदात् । प्रकृते तु मुखादौ दर्पणाद्युपाधिसंसर्गारोपसामग्र्यभावस्य वक्ष्यमाणत्वात् । अपि चैवं लाघवादरे जपाकुसुमसन्निधाने स्फोटकेऽपि त्वदभ्युपगतरक्तरूपान्तरानुत्पत्तिप्रसङ्गः । तत्रापि वस्तुतो जपाकुसुमरक्तरूप एव स्फटिकोपाधिसंसर्गमात्राध्यासकल्पनेनापि रक्तस्फटिक इति प्रतीत्युपपादनसम्भवात् । न चेष्टापत्तिः अपसिद्धान्तात् । अपिच एवमेव शुक्त्यादौ रजताध्यासस्याप्रसिद्धिप्रसङ्गः । तत्रापि लाघवेन शुक्त्यादौ प्रसिद्धरजतादितादात्म्यमात्राध्यासस्वीकारेणापीदं रजतमित्यादि प्रतीत्युपपादनसम्भवात् । न चेष्टापत्तिः । त्वया अनिर्वचनीयरजताद्युत्पत्तिस्वीकारात् । न च प्रसिद्धरजतमात्राध्यासे तादृशरजतादेरसन्नि-कृष्टतया अपरोक्षत्वानुपपत्त्या शुक्त्यादौ तदध्यास आवश्यक इति वाच्यम् । तव मतेऽप्यध्यस्तरजतादेरिन्द्रियासन्निकृष्टत्वात् प्रमाणसिद्धतदापरोक्ष्यनिर्वाहाय त्वदभिमतप्रक्रियाकल्पनवन्मदभिमतदोषादिसन्निकर्षप्रकल्पनस्यापि सुलभताया देशान्तरस्यासतो वा रजतस्य तादृशतत्संसर्गस्य चापरोक्षसम्भवेन

शुक्त्यादावनिर्वजनीयरजततत्संसर्गोत्पत्तिकल्पनस्यातीव गौरवग्रस्तत्वेन रजततत्संसर्गानुत्पत्तिपक्षस्यैवातिलाघवेनादर्तव्यत्वात् । न हि तदापरोक्ष्यनिर्वाहाय त्वदुक्तप्रक्रियादरणीया । न तु मदुक्तेनि श्रुतिरस्ति । अपि चैवं शुक्त्यादौ रजतादेरापरोक्ष्यनिर्वाहाय तत्स्वरूपस्याप्यध्यासस्वीकारे दर्पणेऽपि स्वमुखस्य पश्चाद्भागवर्तिगजतुरगादेश्चासन्निकृष्टतया परोक्षत्वासम्भवेन रजतादिवदापरोक्ष्यनिर्वाहाय दर्पणादौ मुखादिस्वरूपस्याप्यध्यासस्वीकारप्रसङ्गः । न च दर्पणप्रतिहतनायनरश्मीनां परावृत्त्या स्वमुखादिग्राहकत्वसम्भवेन तदापरोक्ष्यनिर्वाह इति वाच्यम् ।

तथा सति कुड्याप्रतिहतनायनरश्मीनामपि स्वमुखादिग्राहकत्वप्रसङ्गात् । फलबलेन दर्पणादिप्रतिहतानामेव तथात्वकल्पने पुरोवर्तिशुक्त्यादिप्रतिहतानामपि तेषां फलबलेन दोषत्वाभिमतकारणसहकारेण विप्रकृष्टरजतादिग्राहकत्वसम्भवेन तत्रैव पुरोवर्तितादात्म्यमात्राध्यासकल्पनेऽपि तदापरोक्ष्यनिर्वाहसम्भवात् । न चैवं विनष्टदेवदत्ततादात्म्यं यत्र यज्ञदत्ते पुरोवर्तिन्यारोप्यते तत्रोक्तप्रकारासम्भवेन तदापरोक्ष्यसिद्ध्यर्थं देवदत्तस्वरूपाध्यासस्यैवावश्यकतया अनेनैव न्यायेन रजतादिस्वरूपाध्यासो युक्तमिति वाच्यम् । तादृशस्थलेऽनन्यगत्या स्वरूपेऽध्यासस्वीकारेऽपि विप्रकृष्टविद्यमानरजतादिस्थले उक्तरीत्या गत्यन्तरसम्भवेन स्वरूपेणाध्यासस्यास्वीकार्यत्वात् । अन्यथा दर्पणे मुखस्वरूपस्याप्युक्तन्यायेनाध्यासस्वीकारप्रसङ्गात् ।

अपि चैवमेव चैतन्येऽविद्यान्तःकरणादेर्वियदादेः शुक्तिरूप्यादेश्चावैरूप्याय संसर्गमात्राध्यासस्वीकारप्रसङ्गः । लाघवादब्रह्मणि प्रपञ्चनिषेधश्रुतेर्दर्पणे मुखं नास्तीति प्रतीतेरिव तत्संसर्गमात्रविषयत्वोपपत्तेः । ब्रह्मणि श्रुतिप्रतिपन्नप्रपञ्चस्वरूपनिषेधप्रतियोगित्वात्यागे च दर्पणादौ प्रत्यक्षप्रतिपन्नमुखादिस्वरूपनिषेधप्रतियोगित्वस्याप्यत्याज्यत्वात् । एवं च विश्वं सत्यमित्यादि प्रपञ्चसत्यत्वावेदकश्रुतिरप्यनुकूलिता भवति । न चैषा श्रुतिः 'नेह नानास्ति किञ्चन, एकमेवाद्वितीयं, नेति नेती'ति निषेधाय प्रत्यक्षसिद्धं प्रपञ्चसत्यत्वमनुवदतीति युक्तम् । योग्यायोग्यप्रपञ्चमात्रसत्यत्वस्य प्रत्यक्षप्राप्तत्वेन तस्यास्तदनुवादकत्वायोगादिति ।

एतच्च सप्रपञ्चं निरूपितं यस्मात् अपि च उपाधिप्रतिहता परावृत्तनायनरश्मीनामधिष्ठानग्राहकत्वे जलस्थत्वेन मध्यन्दिनसूर्यग्रहानुपपत्तिः । जलानाममृदुलत्वेन तत्प्रतिघातकत्वायोगात् । तत्प्रतिघातेन तेषां परावृत्त्यङ्गीकारे च जलान्तस्थसैकतादिना सम्बन्धाभावेनानुभवसिद्धसैकतादिप्रतीतेराकस्मिकत्वापातात् । केषाञ्चित् जलान्तःप्रवेशेन सिकताग्राहकत्वं केषाञ्चित्तु जलाभिहतानां परावृत्य मध्यन्दिनसूर्यग्राहकत्वं फलबलादेव कल्प्यत इति चेन्न । प्राग्जलोपाधिप्रतिहतेरकुञ्चितान्यानुपक्षीणशक्तिक-

सन्धीभूतनायनरश्मीनां दुर्ग्रहत्वेन प्रमाणसिद्धस्य मध्यन्दिनसूर्यस्य जलप्रतिहतत्वेन कुण्ठितशक्तिभिर्जलान्तस्थितसिकतादिग्रहणाय तत्र प्रविष्टस्वसमानजातीयनायनरश्मिवियुक्तैः कतिपयैरेव तैः सुग्रहत्वस्वीकारायोगेन दुर्ग्रहनिदाघकालीन मध्यन्दिनबिम्बसूर्यादन्यस्यैव सुग्रहत्वेन अनुभवसिद्धस्य प्रतिसूर्यस्य जलाद्युपाधिगतस्यावश्यं स्वीकार्यत्वात् तत्सामग्रीकल्पनागौरवस्य फलमुखत्वेनादोषत्वात् । एतेन दर्पणादिप्रतिहतनायनरश्मीनां परावृत्त्यबिम्बमुखाद्यग्राहकत्वे महत् उद्भूतरूपवतः सन्निहितस्यैव वस्तुनः प्रतिबिम्बः, न अमहतः परमाण्वादेर्न वादीनां रूपस्य वाय्वादेः कुड्यादेः व्यवहितस्य घटादेश्च प्रतिबिम्ब इति नियमो न स्यात् ।

बिम्बगतमहत्वादेस्तदन्यप्रतिबिम्बसाक्षात्कारेऽनुपयोगात् । न ह्यन्यदीयमहत्वादिकं अन्यसाक्षात्कारे उपयुज्यतेऽतिप्रसङ्गात् । तथा चैतादृशनियमान्यथाऽनुपपत्त्यैव बिम्बप्रतिबिम्बाभेद इति निरस्तम् । तन्तुमहत्वादीनां पटमहत्वादिसम्पादनद्वारा पटसाक्षात्कारप्रयोजकत्ववत् बिम्बमहत्त्वादीनामपि प्रतिबिम्बमहत्वादिसम्पादनद्वारा बिम्बकार्यभूतप्रतिबिम्बसाक्षात्कारप्रयोजकत्वेन तादृशनियमोपपत्तेः । अपि च बिम्बत्वेनाभिमते मुखादौ त्वदभिमताज्ञानादिरूपाध्याससामग्रीविरहादपि न तत्र दर्पणादिरूपोपाधिसंसर्गभेदस्यातत्त्वाद्यध्यासो युक्तः । न हि पार्श्वस्थस्य देवदत्तमुखादौ दर्पणाद्युपाधिसंसर्गव्यतिरेकतदैक्यमवदातत्वग्रीवास्थत्वादिवैध्यर्म्यं च निर्विचिकित्सं साक्षात्कुर्वतस्तदज्ञानं युज्यते । ज्ञानाज्ञानयोर्विरोधात् । अन्यथा चरमवृत्तिसत्त्वदशायामपि बन्धापादकाज्ञानानुवृत्तिप्रसङ्गात् ।

न चोपाधिसन्निधानमज्ञाननिवृत्तिप्रतिबन्धकं तत्राज्ञानानुवृत्तावेव मानाभावेन तस्य प्रतिबन्धकत्वे मानाभावात् । न च मुखादौ दर्पणसंसर्गाध्यास एव तदनुवृत्तौ मानमन्योन्याश्रयात् । लाघवेनाज्ञाननिवृत्तिप्रतिज्ञानमात्रस्यैव भ्रमकारणत्वेन तत्प्रतिबन्धकत्वानुपपत्तेश्च । किञ्चोक्तस्थले उक्तरीत्या विरोधिसाक्षात्कारसत्त्वेऽपि तदज्ञानानुवृत्तौ देवदत्तमुखे दर्पणाद्युपाधिसंसर्गाभावं न जानामि । ऐक्यं न जानामि । ग्रीवास्थत्वं न जानामि इत्याद्यज्ञानानुभवप्रसङ्गः । न च तत्रोक्तसाक्षात्कारेणावरणशक्तेर्निवृत्तत्वेन विक्षेपशक्तिमदज्ञानानुवृत्तावपि न तथाविधानुभवप्रसङ्गः ।

अज्ञानस्य तत्तदर्थविषयकत्वे आवरणशक्तेर्नियामकत्वेन तदभावे तद्विषयकत्वस्याप्यभावात् । विक्षेपशक्तेः सत्त्वेन नोक्ताध्यासानुपपत्तिश्चेति वाच्यम् । विरोधिज्ञाने सत्यावरणविक्षेपशक्तिमदज्ञानस्यैवासम्भवेनैवंविधकल्पनायां मानाभावात् । अन्यथा वह्निगतदाहानुकूलशक्तिं प्रति मण्यादेरिवाज्ञानगतावरणशक्तिं प्रत्येव ज्ञानस्य निवर्तकत्वापत्त्या यतो 'ज्ञानमज्ञानस्यैव निवर्तकमि'ति स्वाभ्युपगमविरोधः । मुक्तावज्ञानस्वरूपमात्रानुवृत्तिप्रसङ्गश्च । अपि च अधिष्ठानयाथात्म्यज्ञानस्य स्वोपाधिका-

ध्यासस्थले आवरणशक्त्यंशमात्रनिवर्तकत्वं न स्वभावप्रयुक्तम् । ब्रह्मसाक्षात्कारेण मूलाज्ञानस्य शुक्त्यादिसाक्षात्कारेण तदवस्थारूपाज्ञानस्य च आवरणशक्त्यंशमात्रनिवृत्तौ तस्य विक्षेपशक्तिमतः सर्वदाऽनुवृत्तिप्रसङ्गात् । न च सोपाधिकाध्यासस्थल इव ब्रह्मसाक्षात्कारानन्तरं मुक्तौ विक्षेपशक्त-मदज्ञानानुवृत्तौ मनाभावः ।

## 'विश्वमायानिवृत्तिरि'त्यत्र आवरणमात्रनिवृत्तिपरत्वसमर्थनम्—

प्रत्युत भूयश्चान्ते विश्वमायानिवृत्तिरिति मायामात्रनिवृत्तिरेव श्रूयत इति वाच्यम् । परममुक्तावपि 'जक्षन् क्रीडन् रममाण स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा अज्ञानिभिर्वे'त्यादि श्रुत्या विक्षेपश्रवणात् 'भूयश्चान्ते विश्वमायानिवृत्तिरि'ति श्रुतेश्च आवरणशक्तिमात्रनिवृत्तिपरत्वात् । लोके निवृत्तिशक्तिके वस्तुनि नावृत्ति-दर्शायामपि निवृत्तत्वव्यवहारदर्शनात् जक्षन् क्रीडन्नित्यादिश्रुत्यनुरोधेन मायाशब्दस्य तदावरणशक्ति-लक्षकत्वोपपत्तेः । अन्यथा परममुक्तिप्रकरणस्थाया जक्षन्नित्यादिश्रुते उत्कर्षप्रसङ्गः ।

संसारदशायामिव मुक्तिदशायां 'तरति शोकमात्मविदि'त्यादि श्रुत्यनुरोधेन दुःखरूपविक्षेप-निवृत्तावपि तदतिरिक्तमिथ्याभूतविक्षेपतत्कारणानुवृत्तावप्यद्वैतश्रुत्यविरोधाच्च । पारमार्थिकद्वितीय-सत्त्वस्यैव तद्विरोधित्वात् ।

ननु ज्ञानस्याज्ञाननिवर्तकत्वं स्वभावप्रयुक्तमेव । सोपाधिकाध्यासस्थले बिम्बोपाधिसन्निधि-रूपप्रतिबन्धकदशायां न तन्निवृत्तिः किन्त्वज्ञानगतावरणशक्तिमात्रनिवृत्तिः । ब्रह्मसाक्षात्कारानन्तरं तु अज्ञाननिवृत्तिप्रतिबन्धकाभावेन ब्रह्मसाक्षात्कारेण आवरणविक्षेपशक्तिद्वयविशिष्टाज्ञानस्यैव निवृत्तिः । अत एव जक्षन्नित्यादिश्रुतेः परममुक्तिप्रकरणस्थत्वेऽपि तत उत्कर्ष एव न्याय्यः पूषानुमन्त्रणमन्त्रवत् प्राकरणिकार्थे नानन्वयादिति चेन्न । बिम्बोपाधिसन्निधानस्याज्ञाननिवृत्तिप्रतिबन्धकत्वे बिम्बोपाधि-सन्निधानात्प्रागेव बिम्बे चैत्रमुखादौ दर्पणादिसंसर्गाद्यभावे दर्पणादौ चैत्रमुखाद्यभावे वा प्रत्यक्षतोऽव-गम्यमाने बिम्बोपाधिसन्निधिरूपप्रतिबन्धकाभावविशिष्टप्रत्यक्षेण शक्तिद्वयोपेताज्ञानस्य निवृत्त्यवश्य-म्भावेन तत्कालबिम्बोपाध्योः सन्निधाने सत्युपादानाभावेन प्रतिबिम्बभ्रमाभावप्रसङ्गात् ।

ननु तत्र कस्यचिदज्ञानस्य ज्ञानेन निवृत्तावप्यज्ञानान्तरस्य सत्त्वेन नोपादानाभावप्रयुक्तप्रति-बिम्बाध्यासानुपपत्तिरिति चेन्नः, तमः प्रकाशयोरिव ज्ञानाज्ञानयोः स्वरूपेणैव विरोधेन यावदज्ञानानि-वृत्तेरेव न्याय्यत्वात् । न हि प्रकाशविषये घटादौ किञ्चित्तमो निवर्तते किञ्चिन्न निवर्तत इति दृष्टचरम् । न च ज्ञानप्रागभावानामनेकत्वेऽपि कस्यचिज्ज्ञानस्य किञ्चित्प्रागभावनिवर्तकत्ववदवस्थारूपाज्ञानाना-मनेकत्वेऽपि कस्यचिज्ज्ञानस्य किञ्चिदज्ञाननिवर्तकत्वमेवेति वाच्यम् ।

तज्ज्ञानप्रागभावानामनेकत्वेऽपि तत्तज्ज्ञानस्यैव स्वस्वप्रागभावनिवृत्तिरूपतया प्रागभावनिवर्तकत्वाभावेन वैषम्यात् । निवृत्तेरतिरिक्तत्वे च न्यायसाम्येन तत्प्रागभावस्याप्यतिरिक्तत्वापत्त्या प्रामाणिकानन्तप्रागभावनिवृत्त्यभ्युपगमापत्तेः । प्रागभावनिवृत्तेः प्रतियोग्यतिरिक्तत्वेऽपि तत्तत्प्रागभावत्वेनैव तत्तज्ज्ञाननिवर्त्यत्वं न तु प्रागभावत्वेनेति न प्रागभावान्तरनिवृत्तिः । अज्ञानस्य तु स्वसमानाधिकरणस्वसमानविषयकज्ञानत्वेनैव ज्ञाननिवर्त्यत्वेन यत्किञ्चिदेकज्ञानेनापि तादृश यावदज्ञाननिवृत्तिः स्यादेव। अन्यथा अज्ञानान्तरसत्त्वे चैतन्यस्य तदावृतत्वे नानावृतापरोक्षैकरसचैतन्याभेदसम्भवेन तदानीं विषयापरोक्ष्यानुपपत्तिप्रसङ्गः । त्वन्नये तादृशचैतन्याभेदस्यैव तत्राध्यस्तविषयापरोक्ष्यरूपत्वात् ।

न च यदा यदज्ञानं विषयचैतन्यमावृणोति तदा जायमानेन ज्ञानेन तस्यैव नाशः नाज्ञानान्तरस्य तस्य तदा तदनावरकत्वात् । सर्वमज्ञानं सर्वदा चैतन्यमावृणोतीत्यनभ्युपगमात् । किञ्चावरकाज्ञाने वृत्त्या नाशिते तद्वृत्त्युपरमानन्तरमेवाज्ञानान्तरमावृणोतीति इत्येवाभ्युपगमादेकेनाज्ञानेनावृते चैतन्ये अज्ञानान्तरस्य कृतकार्यतया वैय्यर्थ्येन चैतन्यानावरकत्वाच्चेति वाच्यम् ।

यत्रावतमसवति प्रदेशे प्रौढालोकापगमेव अन्धतमसमुत्पन्नं तत्रावतमसान्धतमसयोर्विनिगमनाविरहेण युगपदेकविषयावरकत्ववदेकविषयकानेकाज्ञानानामपि विनिगमनाविरहेण युगपदेकचैतन्यावरकत्वस्यैव अभ्युपगन्तव्यात्वात् । चरमसाक्षात्कारस्योत्पत्तिकाले तत्तद्विषयोपहितचैतन्यावरकत्वेनानावरकत्वेन च स्थितानां तत्तदज्ञानानां निवर्तकज्ञानाभावेन मुक्तिकालेऽप्यनुवृत्तिप्रसङ्गाच्च । न हि वेदान्तजन्यचरमसाक्षात्कारोऽनन्ततत्तद्विषयावच्छिन्नानन्तचैतन्यगोचरः, येन समानविषयतया विरोधिसत्त्वेन स एव तन्निवर्तक इत्युच्येत । न च तत्तद्विषयावच्छिन्नचैतन्यावरकानावरकाज्ञानानां साक्षाच्चरमसाक्षात्कारनिवर्त्यत्वेऽपि तन्निवर्त्यमूलाज्ञानपरतन्त्रतया चैतन्यमूलाज्ञानसम्बन्धादिवत् तन्निवृत्त्यैव निवृत्तिः । एतदर्थमेव तेषां मूलाज्ञानावस्थाभेदरूपतया तत्पारतन्त्र्यमिष्यत इति वाच्यम् । अनाद्यज्ञानत्वाविशेषेण तेषां मूलाज्ञानपरतन्त्रत्वे मानाभावात् । विनिगमकाभावेन मूलाज्ञानत्वाभिमतस्यैव इतराज्ञानपरतन्त्रत्वापत्तेश्च । स्वेच्छाकल्पितप्रक्रियामात्रेण तेषां मूलाज्ञानत्वाभिमतपारतन्त्र्यस्वीकारायोगाच्च । यत्त्वज्ञानस्यावरकस्वभावत्वादन्धकारवदवकुण्ठनपटवच्च सर्वदा स्वविषयमावृणोत्येव । न चैवमेकेन घटज्ञानेन तदवच्छिन्नचैतन्यसकलाज्ञाननिवृत्तिप्रसङ्गः । यथा बहुजनसङ्कुले देशे कस्यचिच्छिरसि पतन्नशनिः इतरानप्यपसारयति । यथा च सन्निपातहरमौषधमेकं दोषनिवर्तयद्दोषान्तरमपि तिरस्कारोति । एवमेकमज्ञाननाशे यज्ज्ञानमज्ञानान्तराण्यपि तिरस्करोति । तिरस्कारश्च यावज्ज्ञानस्थितितदावरणशक्तिप्रतिबन्धः इत्यभ्युपगमादिति । तन्न । निवर्तकस्याशनेरपसारकत्वाभावादशनिपातानिष्टत्वज्ञानस्यैवेतरापसरणप्रयोजकत्वात् अशनिपातभ्रमेणाप्यपसरणदर्शनादन्यथा अशनिपातज्ञानरहितस्याप्यपसरणप्रसङ्गात् ।

अपसरणस्य क्रियारूपत्वेन अज्ञाने तदसम्भवेन तस्य प्रकृते दृष्टान्तत्वानुपपत्तेश्च । औषधस्याप्यविशेषेणोल्वणदोषमात्रनिवर्तकत्वमेव न त्वन्यतमतिरस्कर्तृत्वम् । निवृत्त्यतिरिक्ततिरस्कारस्यानिरूपणादिति तस्यापि दृष्टान्तत्वानुपपत्तेः । एवं दार्ष्टान्तिकेऽप्यनेकाः ज्ञानानां युगपदेकचैतन्यावरकत्वे एकघटज्ञानेनैकस्यैवाज्ञानस्य नाशः । इतराज्ञानानां तिरस्कार इत्ययुक्तम् । विनिगमकाभावात् । तिरस्कारश्चावरणशक्तिप्रतिवन्ध इत्यप्ययुक्तम् । मूलाज्ञानावस्थारूपानेकाज्ञानस्वीकारवैयर्थ्यात् । अवस्थारूपाज्ञानस्यैकत्वेऽपि ज्ञानेन तन्निवृत्तिं विनैव तद्गतावरणशक्तिमात्रप्रतिबन्धेनापि सर्वसामञ्जस्यात् ।

न चैवं घटज्ञानेन घटाज्ञानं नष्टमित्यनुभवानुपपत्तिः । अस्य अनुभवस्याज्ञानमात्रनाशविषयस्यानेकज्ञानापक्षेऽप्यज्ञानान्तरसत्त्वेनानुपपत्तेस्तुल्यतया कथञ्चिदुपपादनीयत्वात् । अज्ञानव्यक्तिविशेषनाशविषयत्वे च घटव्यक्तिविशेषनाशप्रत्यक्षे तद्गतविशेषोल्लेखवत् अज्ञानस्य व्यक्तिविशेषो नष्ट इत्युल्लेखप्रसङ्गात् ।

किञ्चैवं सति मूलाज्ञानातिरिक्ततदवस्थारूप अज्ञानस्वीकारवैयर्थ्यप्रसङ्गः । मूलाज्ञानस्यैव तत्तद्विषयावच्छिन्न चैतन्यावणशक्त्यङ्गीकारेण तस्या एव तत्तद्विषयाकारज्ञानेन प्रतिबन्धकल्पनस्यैव लघुत्वादज्ञानान्तरस्वीकारे गौरवात् । एतेनैव निद्रासुषुप्त्यादिवदागन्तुकं क्रमिकं मूलाज्ञानावस्थारूपं तत्तद्विषयावच्छिन्नचैतन्यावरकमनेकमज्ञानं तत्र चैकस्यैकज्ञानेन निवृत्तावपि निवर्तकज्ञानापगमे पुनरवस्थारूपाज्ञानान्तरोत्पत्तिरिति नोक्तदोष इति निरस्तम् । तस्य सादित्वेनानादिभावरूपं यदित्यादि त्वदुक्तलक्षणरहितत्वेनाज्ञानत्वानुपपत्तेः । उक्तरीत्या लाघवेन मूलाज्ञानगतावरणविक्षेपशक्तिभ्यामेव सर्वव्यवस्थोपपत्तावागन्तुकतदवस्थारूपानन्ताज्ञानस्वीकारस्य गौरवग्रस्तत्वेनायुक्तत्वाच्च । एवमपि प्रतिबिम्बाध्यासस्थलेऽधिष्ठानयाथात्म्यज्ञानस्य निवर्तकस्य सत्त्वेनागन्तुकावस्थारूपाज्ञानोत्पत्त्यसम्भवेनोपादानाभावप्रयुक्तप्रतिबिम्बाध्यासानुपपत्तिरूपदोषतादवस्थ्याच्च । बिम्बोपाधिसन्निधानाभावसहकृतस्याधिष्ठानतत्त्वज्ञानस्य तदज्ञाननिवर्तकत्वे गौरवस्योक्तत्वाच्च । नन्वस्त्वेकमेव मूलाज्ञानं तस्यैव चैतन्यावरकस्य तत्तद्विषयावच्छिन्नप्रदेशे खद्योतादिप्रकाशेन महान्धकारस्येव ज्ञानेनैकदेशेन नाशो वा कटवत् संवेष्टनं वा भीरुभटवदपसरणं वा आवरणशक्तिप्रतिबन्धो वा अभिभवः ।

एवञ्च प्रतिबिम्बाध्यासस्थले अधिष्ठानयाथात्म्यज्ञानेनावरणशक्त्यभिभवेऽपि विक्षेपशक्तिः मूलाज्ञानरूपोपादानसत्त्वेन प्रतिबिम्बाध्यासानुपपत्तिः । न वा मुखं न जानामि दर्पणादिकं न जानामीत्याद्यनुभवापत्तिश्च । अधिष्ठानयाथात्म्यज्ञानकाले तस्यानावरकत्वेन तदावृतत्वरूपविषयाभावेनैव तथानुभवाभावोपपत्तेरिति चेन्न । अन्धकारवदज्ञानस्यैकदेशेन नाशे उपादानाभावात् पुनस्तदवच्छेदेन विक्षेपाभावप्रसङ्गात् ।

सकृदवगते समयान्तरेऽप्यावरणाभावप्रसङ्गात् । निष्क्रियत्वेनाज्ञानस्यापसरणसंवेष्टनयोरप्ययोगाच्च । अधिष्ठानयाथात्म्यज्ञानस्य तद्गतशक्तिमात्रप्रतिबन्धकत्वेन तदनिवर्तकत्वाभ्युपगमे, चरमसाक्षात्कारस्याप्यावरणविक्षेपशक्तिमात्रप्रतिबन्धकत्वेन तदनिवर्तकतया मुक्तिदशायामपि मूलाज्ञानानुवृत्तिप्रसङ्गाच्च ।

न चैवं चरमसाक्षात्कारनिवृत्तौ पूर्ववदावरणविक्षेपप्रसङ्गः । चरमसाक्षात्कारवत् तन्निवृत्तेरपि तत्प्रतिबन्धकत्वात् । किञ्च सोपाधिक निरुपाधिकाध्यासोपादानभूततत्तदवच्छिन्नचैतन्यावरकाज्ञानस्य मूलाज्ञानानन्यत्वे कथं मुखसाक्षात्कारेण मुखाज्ञानं निवृत्तं शुक्तिज्ञानेन मम तदज्ञानं निवृत्तमित्याद्यनुभवः ।

न चैकदेशेन तन्निवृत्त्यभ्युपगमो युक्तः । तत्तदवच्छिन्नचैतन्ये समयान्तरे आवरणविक्षेपाभावप्रसङ्गरूपोक्तदोषग्रासात् प्रबलव्याधिना बहुकालव्यवधानेन वा निवृत्ततत्तदर्थगोचरज्ञानाऽहिततत्तदर्थगोचरसंस्कारस्य कालान्तरे तत्रैवार्थे न जानामीति तदज्ञानानुभवाभावप्रसङ्गाच्च । न च तदनुभवस्य तज्ज्ञानाभावो विषयः । अभावज्ञानस्य धर्मिप्रतियोगिज्ञानसाध्यत्वेन तत्सत्त्वावश्यकत्वे तज्ज्ञानसामान्याभावविषयत्वानुपपत्तेः । विशेषाभावविषयत्वेन च प्रतियोगिविशेषोल्लेखापत्तेः । अन्यथा अहमज्ञ इत्याद्यनुभवस्यापि ज्ञानविशेषाभावविषयतया प्रत्यक्षतो विवक्षिताज्ञानासिद्धिप्रसङ्गात् ।

किञ्च अज्ञानस्य निरवयवत्वेन कथमेकदेशेन तन्निवृत्तिः ? एकदेशशब्देनाज्ञानगत आवरणविक्षेपशक्तिविवक्षायामपि कदाचित् दृष्टेऽर्थे शक्तेः नष्टत्वेन कालान्तरे तत्रावरणविक्षेपयोरभावप्रसङ्गात् । न च मूलाज्ञानशक्तीनामनेकत्वेनेकशक्तिनाशेऽपि शक्त्यन्तरमस्तीति युक्तम् । तथा सति ज्ञानकालेऽपि विषयावरणप्रसङ्गात् । तथाप्यज्ञानं निवृत्तमित्यज्ञानप्रतियोगिकनिवृत्तिप्रतीतिव्यवहारयोगाच्च ।

ननु घटं न जानामीत्याद्यनुभवस्य तदवच्छिन्नचैतन्याज्ञानालम्बनत्ववदज्ञाननिवृत्त्यनुभवस्यापि तद्गतशक्तिनिवृत्त्यालम्बनत्वमविरुद्धमिति चेन्न । तथा सति बाधकं विनाऽप्यज्ञाननिवृत्तिप्रतीतिव्यवहारयोस्तच्छक्तिनिवृत्त्यालम्बनत्वे भूयश्चान्ते विश्वमायानिवृत्तिः", "विभेदजनके ज्ञाने नाशमात्यन्तिकं गत" इत्यादि श्रुतिस्मृतिजन्यतन्निवृत्तिप्रतीतेरपि तच्छक्तिनिवृत्यालम्बनत्वापत्तेः । "गौरनाद्यन्तवती"ति श्रुतिप्रतिपन्नमायाऽविद्यापरपर्यायगोशब्दार्थभूतप्रकृत्त्ययनन्तत्वाभ्युपगमापत्तेश्च । अनुभवमुल्लङ्घ्य घटाद्यज्ञानस्यापि तदवच्छिन्नचैतन्यविषयत्वमङ्गीकुर्वता त्वयैव दृष्टान्तस्याप्युपपादनीयत्वाच्च । अतीन्द्रियशक्तिनिवृत्तेरप्यतीन्द्रियतया मम अज्ञाननिवृत्तमित्यपरोक्षानुभवालम्बनत्वानुपपत्तेश्च । स्वतः परतो वा प्रसक्तप्रकाशमात्रप्रतिबन्धकत्वेन चैतन्यविषयत्ववज्जडविषयत्वोपपत्तेश्च ।

एतावांस्तु विशेषः । चैतन्यस्य स्वत एव प्रकाशः जडस्य तु तदधीन इति । किञ्च रजताद्यध्यासस्य वियदादिवन्मूलाज्ञानकार्यत्वे व्यावहारिकत्वापत्तिः । न च अविद्यातिरिक्तदोषाजन्यत्वमागन्तुकदोषाजन्यत्वं वा अन्तःकरणवृत्तिविषयत्वं वा तत्र तन्त्रम् । चैतन्यस्यापि व्यावहारिकत्वापत्तेः । लाघवेनानतिप्रसक्तत्वेन च मूलाविद्याकार्यत्वस्यैव व्यावहारिकत्वे तन्त्रत्वाच्च । न चाविद्यादेरविद्याकार्यत्वाभावेनाव्यावहारिकत्वापत्तिः । अविद्याकार्यत्वशब्देनाविद्याधीनस्थितिकत्वस्यैव विवक्षितत्वात् । अविद्यास्थितिनियतस्थितिकत्वरूपस्य तस्याभेदेऽपि सत्त्वात् । अविद्याकार्यत्वस्य वियदादावविद्यातिरिक्तदोषाजन्यत्वागन्तुकदोषजन्यत्वादिना व्याप्यस्य स्वरूप्याध्यासेष्वङ्गीकारे तत्र अविद्यातिरिक्तदोषाजन्यत्वादेरप्यापाद्यत्वाच्च । तस्यादध्याससामग्रीविरहाद्बिम्बत्वेन अभिमतेमुखादौ दप्रणाद्युपाधिसंसर्गाध्यासो न युक्तः । अत एव दर्पणाद्युपाधौ शुक्त्यादौ रूप्याद्यध्यासवन्न स्वरूपेण प्रतिमुखाद्यध्यासो युक्तः । तत्राप्युक्तरीत्यावस्थारूपाज्ञानस्य मूलाज्ञानस्य वोपादानत्वासम्भवेनाध्याससामग्रीविरहात् ।

किञ्च अयमध्यासो न तावदनुभूयमानरोपरूपस्सम्भवति । ग्रीवास्थस्वमुखेन पश्चाद्भागवर्त्यपूर्वचैत्रमुखादिना वेन्द्रियसन्निकर्षासम्भवेन तद्ग्रहणासम्भवात् । दर्पणाद्युपाधिप्रतिहत्या परावृत्त्य नायनरश्मीनां ग्रीवास्थमुखादिग्राहकत्वस्य निरस्तत्वात् । किञ्च नायनरश्मीनां परावृत्त्य स्वमुखग्रहणपूर्वकं प्रतिमुखाध्यासाङ्गीकारे पार्श्वस्थचैत्रमुखतत्प्रतिमुखयोरिव ग्रीवास्थस्वमुखप्रतिमुखयोरपि कदाचित्समूहालम्बनप्रसङ्गः । बिम्बत्वाभिमतग्रीवास्थस्वमुखादावेव दर्पणसंसर्गादिरूपधर्ममात्राध्यासस्य लघुत्वेन दर्पणादौ स्वरूपेण मुखाद्यध्यासकल्पने गौरवं मानाभावाच्च ।

अपि च प्रतिबिम्बबिम्बाद्भिन्नमित्युभयसम्प्रतिपन्नविलक्षणसामग्रीकल्पनं ममेदं मुखमित्यादेरौपचारिकत्वं च तथा । एवं च प्रतिबिम्बप्रतीतेः प्रामाण्यस्यौत्सर्गिकत्वाल्लघुत्वाच्च तदेव कल्प्यम् । न त्वप्रामाण्यं, तथा सति तस्यानुभूयमानारोपत्वनिर्वाहाय नायनरश्मीनामुपाधिप्रतिहत्यादिकं बहुकल्प्यमिति गौरवं, प्रमाणाभावश्च । दर्पणे मुखं नास्ति मिथ्यैव मुखमभादित्यादि प्रतीतेरन्यथैवोपपादितत्वात् । न तद्बलेनपि प्रतिबिम्बप्रतीतेर्भ्रमत्वम् ।

अत एव स्मर्यमाणारोपरूपप्रतिबिम्बाध्यासोऽप्ययुक्तः । उक्तरीत्याग्रीवास्थस्वमुखादेरनुभवसामग्र्या एवाभावेन तत्स्मरणसामग्र्याः सुतरामभावात् । एतेनैव प्रागनुभूतव्याघ्रादीनां सामान्यसंस्कारेणैव यथा स्वप्नेऽध्यासस्तथैव प्रागननुभूतस्वमुखादेरपि मुखादिगोचरसामान्यसंस्कारेणैव दर्पणादौ प्रतिमुखाध्यास इति प्रत्युक्तम् ।

## 'अविद्याप्रतिबिम्बितं चैतन्यं जीव' इति मतनिरासः—

अन्यगोचरसंस्कारस्यातिप्रसङ्गेनान्याध्यासाहेतुत्वात् । न चैवं स्वप्नदोषसंस्कारसम्प्रयोगाजन्यत्वेनानध्यासत्वापत्तिरिष्टत्वात् । क्लृप्ताध्याससामग्रीबाधतः सत्यत्वस्य दुर्निवारत्वेन तस्याकामेनाप्यङ्गीकर्तव्यत्वाच्च । नन्वेवमपि यत्र प्रतिबिम्बस्थले स्वप्नस्थले वा अन्यत्र क्लृप्ताध्याससामग्रीविरहः तत्रास्तु प्रतिबिम्बादिस्वाप्नपदार्थे सत्यत्वं, यत्र तु तत्सामग्री सम्पत्तिः तत्र तदध्यासत्वमक्षतमिति चेत् तर्हि तत्र सत्यत्वेनाभिमतप्रतिबिम्बादिस्थले क्लृप्तसामग्र्याः सर्वत्र प्रतिबिम्बादिस्थले सत्त्वेन तस्यापि तन्न्यायेन सत्यत्वौचित्यात् । न ह्यधिष्ठानत्वाभिमत सम्प्रयोगादिकमस्तीत्येतावतैव तस्याध्यासत्वाभ्युपगमो युक्तः । तथा सति सत्यप्रत्यभिज्ञास्थलेऽप्यध्यासत्वापत्तेः । दर्पणे मुखं नास्ति मिथ्यैव मुखमभादित्यादिप्रतीतेः । तस्या अन्यथोपपादनस्य चोभयत्रापि तौल्यात् ।

किञ्चैवं क्वचिदपि बिम्बप्रतियोगिकभेदवैधर्म्यादिविशिष्टप्रतिबिम्बस्य सत्यत्वे तन्न्यायेनैव बिम्बत्वाभिमतेश्वरप्रतियोगिकभेदवैधर्म्यादिविशिष्टप्रतिबिम्बत्वाभिमतजीवस्यापि बिम्बचैतन्यसमानसत्यत्वप्रसङ्गः । किञ्च प्रतिबिम्बस्य स्वरूपेणाध्यासे जीवस्यापि प्रतिबिम्बत्वेन तदुपाधिनिवृत्त्या निवृत्तिप्रसङ्गः । मुक्त्यनन्वयप्रसङ्गश्च । अपि च "कार्योपाधिरयं जीव" इति श्रुतेः कार्यभूतान्तःकरणप्रतिबिम्बितचैतन्यस्य जीवत्वे सादिदर्पणाद्यौपाधिकमुखप्रतिबिम्बवत्तस्यापि सादित्वसान्तत्वापत्त्या कृतहानादिप्रसङ्गः । अतःकरणस्य संस्कारात्मना सुप्त्यादौ सत्त्वेन नोक्तदोष इति चेत्तर्हि दर्पणनाशानन्तरमपि संस्कारात्मना तस्य सत्त्वेन मुखादिप्रतिबिम्बानुवृत्तिरपि स्यात् । अत एव "जीवेशावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति" श्रुतेरविद्याप्रतिबिम्बितं चैतन्यं जीव इति पक्षोऽपि प्रत्यूढः । अविद्यारूपोपाधिनिवृत्त्या तदुपाधिकजीवचैतन्यस्यापि निवृत्त्यवश्यम्भावेन मुक्त्यनन्वयप्रसङ्गतादवस्थ्यात् । किञ्चैव प्रतिबिम्बभूतजीवस्य स्वरूपेणाध्यस्तत्वे तस्य तत्त्वमस्यादिश्रुत्यावेदितभूतचिन्मात्राभेदासम्भवेन तत्त्वमसीत्यादितत्परवेदान्ताप्रामाण्यप्रसङ्गः ।

ननु जलाशयतरङ्गबुद्बुदन्यायेनोपर्युपरि कल्पनाजीवस्त्रिविधः । पारमार्थिको व्यावहारिकः प्रातिभासिकश्चेति । तत्र स्थूलसूक्ष्मदेहद्वयाधिष्ठानतया वर्तमानं तदवच्छिन्नं चैतन्यं पारमार्थिको जीवः । तस्मिन्नवच्छेदस्य कल्पितत्वेऽपि अवच्छेद्यस्य तस्याकल्पितत्वेन ब्रह्माभिन्नत्वोपपत्तेः । तमावृत्यस्थितया मायाकल्पितेऽन्तःकरणे चिदाभासोऽन्तःकरणतादात्म्ये नाहमित्यभिमन्यमानो व्यावहारिकः । तस्य मायिकत्वेऽपि यावद्व्यवहारमनुवृत्तेः । स्वप्ने तमावृत्य स्थितया मायावस्थाभेदरूपया निद्रया कल्पिते स्वाप्नदेहादौ अहमित्यभिमानी प्रातिभसिको जीवः स्वाप्नप्रपञ्चेन सह तद्द्रष्टुर्जीवस्यापि प्रबोधे सति निवृत्तेः । तत्रावच्छिन्नचैतन्यरूपपारमार्थिकजीवस्यैव पारमार्थिकब्रह्माभेदः मुक्त्यन्वयः ।

तत्त्वमसीत्यादिवेदान्ततात्पर्यविषयत्वं च । न तु प्रतिबिम्बरूपयोर्व्यावहारिकप्रातिभासिकजीवयोरपि येनोक्तदोषः स्यादिति चेत् न । एतादृशकल्पनायां मानाभावात् । स्थूलसूक्ष्मदेहावच्छिन्नचैतन्यरूपजीववत् त्वदुक्तव्यावहारिकप्रातिभासिकत्वाभिमतजीवयोरपि अन्तःकरणाद्यवच्छिन्नत्वेनैव जीवप्रभेदत्वसम्भवे अन्तःकरणादौ चैतन्यप्रतिफलनेन तत्र भेदकल्पनायां मानाभावात् । प्रतिफलनाङ्गीकारेऽपि संसर्गमात्रस्याध्यस्तत्वेन प्रतिफलितचैतन्यस्य बिम्बचैतन्याभिन्नतया पारमार्थिकत्वेन पारमार्थिकत्वव्यावहारिकत्वादिना चैतन्यत्रैविध्यानुपपत्तेः । प्रबिम्बचैतन्यस्य बिम्बचैतन्याद्भिन्नत्वेऽपि तस्य मद्रीत्या पारमार्थिकत्वसम्भवेनोक्तरीत्या त्रैविध्यानुपपत्तेश्च । ब्रह्मज्ञानेन व्यावहारिकप्रपञ्चसहितव्यावहारिकजीवस्य जाग्रद्बोधेन स्वाप्नप्रपञ्चसहितस्वाप्नजीवस्य च 'प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती'त्यादि श्रुत्यनुविरोधेन व्यावराहिकस्वाप्नजीवयोर्विनाशाभ्युपगमेऽपि तस्य तत्सत्यत्वाविघातित्वात् ।

वस्तुतस्तु ब्रह्मज्ञानजाग्रद्बोधादिना व्यावहारिकस्वाप्नप्रपञ्चादिनिवृत्तावपि नात्मनो निवृत्तिः । तथा सति मुक्त्यन्वयानुपपत्तेः । प्रतिसुप्ति स्वप्नमन्तःकरणस्वाप्नपदार्थानां भिन्नत्वेन तदुपाधिकजीवानामप्यागमापायितया भिन्नत्वेन कृतहानाद्यापत्तेः । यो हि स्वप्नमद्राक्षं सोऽहमिदानीं जागर्मीति प्रत्यभिज्ञानुपपत्तेश्च । एतेन यथा घटावच्छिन्नाकाशो घटाकाशः तदाश्रिते जले प्रतिबिम्बितः साभ्रनक्षत्रो जलाकाशः । अनवच्छिन्नो महाकाशः । महाकाशमध्यवर्तिनि मेघमण्डले वृष्टिलक्षणकार्यानुमेयेषु जलरूपतदवयवेषु तुषाराकारेषु प्रतिबिम्बितो मेघाकाश इति । वस्तुत एकस्याकाशस्य चातुर्विध्यं तथा स्थूलसूक्ष्मदेहस्याधिष्ठानतया वर्तमानं तदवच्छिन्नचैतन्यं कूटवन्निर्विकारत्वेन स्थितं कूटस्थम् । तत्र कल्पितेऽन्तःकरणे प्रतिबिम्बितं चैतन्यं संसारयोगी जीवः । तथा अनवच्छिन्नचैतन्यं ब्रह्मतदाश्रितमायातमसिस्थितासु सर्वे प्राणिनां वासनासु प्रतिबिम्बितं चैतन्यमीश्वर इति चैतन्यचातुर्विध्यम् । तेषु चतुर्विधेषु चैतन्येषु अहमिति प्रकाशमानो जीवः कूटस्थे विद्यातिरोहितासङ्गानन्दरूपविशेषांशे शुक्तौ रूप्यवदध्यस्तः । अत एवेदन्त्वरजतत्वयोरिवाधिष्ठानसामान्यांशाध्यस्तविशेषांशरूपयोः स्वत्वहन्त्वयोः सह प्रकाशः स्वयमहं करोमीति अहं त्वं हि अध्यस्तविशेषांशरूपपुरुषान्तरस्य पुरुषान्तरे अहमिति व्यवहाराभावेन व्यावृत्तत्वात् स्वयं त्वं चात्वन्यत्वप्रतियोग्यधिष्ठानसामान्यांशरूपं स्वयं देवदत्तो गच्छति न त्वन्य इति पुरुषन्तरेऽपि व्यवहारेणानुवृत्तत्वात् । एवं परस्पराध्यासादेव कूटस्थजीवचैतन्ययोरविवेको लौकिकानां तयोर्विवेकस्तु बृहदारण्यके "प्रज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती"ति जीवाभिप्रायेणोपाधिविनाशानुविनाशप्रतिपादनेन 'अविनाशी वा अरे अयमात्मा' इति कूटस्थाभिप्रायेणाविनाशप्रतिपादनेन च स्पष्टः । न चाहमर्थस्य जीवस्य विनाशित्वे कथं

विनाशि ब्रह्माभेद इति वाच्यम् । नेदमभेदे सामानाधिकरण्यम् । किन्तु बाधायां यथा यं स्थाणुरेष पुमानिति पुरुषत्वबोधेन स्थाणुत्वबुद्धिं निवर्तत एवमहं ब्रह्मास्मीति कूटस्थब्रह्मरूपत्वबोधेनाध्यस्ताहमर्थरूपत्वं निवर्त्यते यो यं स्थाणुः पुमानेष पुंधिया स्थाणुधीरिव ब्रह्मास्मीति धिया शेषाह्वयं बुद्धिः निवर्तत इति नैष्कर्म्यसिद्धिवचनात् ।

यदि तु विवरणाद्युक्तरीत्या इदमभेदे सामानाधिकरण्यं तदा जीववाचिना अहंशब्दस्य लक्षणया कूटस्थपरत्वमस्तु । तस्याबाध्यस्य ब्रह्माभेदयोग्यत्वात् एवं चान्तःकरणावावासनोपरक्ताज्ञानोपाधिभेदेन जीवेश्वरविभागसम्भवात् न काचिदनुपपत्तिरिति निरस्तम् । उक्तरीत्या चैतन्यभेदे मानाभावात् । प्रकारभेदोऽस्तीत्येतावतैव चैतन्यचातुर्विध्यङ्गीकारे घटपटादिप्रकारभेदानां आनन्त्येन तत्प्रयुक्तचैतन्यानन्त्यस्याप्यङ्गीकारापत्तेश्च । कृतहानादिदोषतादवस्थ्याच्च । अस्मिन्पक्षे आत्महानस्यैव मुक्तित्वापत्तेश्च । न स्वात्महानं पुरुषार्थः । मानभवं भूयासमित्यनुभवेन परमप्रेमास्पदतया 'आत्मनस्तु कामाय सर्वं प्रियं भवती'त्यादिश्रुत्यान्तसुखरूपतया सिद्धात्महानस्यानुद्देश्यत्वात् । तुल्यायव्ययफलत्वेन दुःखतत्साधननिवृत्तिमात्रस्यापुरुषार्थत्वेनात्महानस्य दुःखहेतुनिवृत्तत्वेनापि पुरुषार्थत्वायोगात् च ।

## देहद्वयावच्छिन्नकूटस्थचैतन्ये जीवस्वरूपेणाध्यस्त इति मतनिरासः—

यदुक्तं देहद्वयावच्छिन्नकूटस्थचैतन्ये जीवः स्वरूपेणाध्यस्त इति तन्न । मानाभावात् । जीवस्य स्वरूपेणानध्यस्तत्वेऽपि अनुवृत्तव्यावृत्तयोः स्वयं त्वहंत्वयोः स्वाभाविकजीवधर्मत्वेनैव स्वयमहङ्कारोमीत्यनुभवोपपत्तेश्च । न ह्यनुवृत्तव्यावृत्तसामान्यविशेषात्रागोचरप्रतीतिविषयत्वमात्रेणाध्यस्तत्वम् । तथा सति अयं घटः द्रव्यं घट इति प्रतीत्या इदमिद्रव्ये वा घटस्याप्यध्यस्तत्वप्रसङ्गात् । न च "तान्येवानुविनश्यति", "अविनाशी चे"ति श्रुत्योः प्रामाण्यनिर्वाहाय भिन्नविषयत्वस्यावश्यकत्वेऽध्यस्तानध्यस्तत्वविषयत्वेनैव भिन्नविषयत्वमुपपादनीयम् । प्रकारान्तरेण तदुपपादनासम्भवादिति वाच्यम् । भूतवन्मुखविनाशाभावेऽपि अविनाशी चेत्युत्तरवाक्यानुसारेण अनुविनश्यतीत्यस्यानुकरोतीति शब्दस्येव विनाशानुकरणामात्रपरत्वेन समानविषयत्वोपपत्तौ भिन्नविषयत्वाकल्पनात् । मात्रा असंसर्गस्त्वस्य भवती'त्यग्रिमवाक्ये विषयासंसर्गप्रतिपादनेनानुविनाशस्यौपचारिकत्वस्यस्फुटीकरणात् च । किञ्चान्तःकरणावच्छिन्नचैतन्यस्यैव जीवत्वसम्भवे तत्र चैतन्यस्य प्रतिफलनकल्पने मानाभावः । न च "क्वान्येवानुविनश्यतीति" जीवविषयकविनाशश्रुतिरेव मानम् । अवच्छिन्नस्याप्यनवच्छिन्नादन्यत्वेनावच्छेदकानुविनाशित्वोपपत्तेः । न चावच्छेदकतत्संसर्गादिः कल्पितत्वेन विनाशित्वेऽप्यवच्छेद्यचैतन्यस्याकल्पित्वेन न तथात्वमिति वाच्यम् । प्रतिबिम्बत्वं पक्षेऽप्यन्तःकरणाद्युपाधिसंसर्गस्यैवाधिष्ठानभूतचैतन्येऽध्यस्तत्वेन विनाशित्वम् । न च अधिष्ठानभूतचैतन्यस्यानध्यस्तत्वादित्यपि सुवचत्वात् ।

## 'धीवासनोपरक्ताविद्याप्रतिबिम्बितचैतन्यमीश्वर' इति मतनिरासः—

यदप्युक्तं 'धीवासनोपरक्ताविद्याप्रतिबिम्बितचैतन्यमीश्वर' इति तदपि न । तथा सति जीववत् तस्यापि विनाशित्वापत्तेः अविद्याविषयचैतन्यस्य बिम्बचैतन्यस्य वा ईश्वरत्वसम्भवेनोक्तरीत्या-विद्याप्रतिबिम्बचैतन्येश्वरत्वे मानाभावाच्च । वासनानां स्वकार्यकारणभूतस्मृत्यनुभवसमानाधिकरणत्व-नियमेन जीवनिष्ठत्वस्यैवाङ्गीकरणीयत्वेन तासामविद्योपरागायोगात् च । यदपि चोक्तं तत्त्वमसीत्यादिना भेदे सामानाधिकरण्यम् । किन्तु यः स्थाणुरेष पुणानितिवत् बाधायां अभेदे सामानाधिकरण्यपक्षेऽपि जीववाचिनस्त्वम्पदस्य लक्षणया कूटस्थपरत्वाज्जीवस्य स्वरूपेणाध्यस्तया विनाशित्वेऽपि न काप्य-नुपपत्तिरिति । तदपि न । उक्तरीत्या तान्येवानुविनश्यतीत्यस्य विनाशानुकरणमात्रपरत्वेन 'अविनाशी वा', 'नित्यो नित्यानामि'त्यादिश्रुत्या जीवस्य मुख्याविनाशित्वाश्रयणे विवरणाद्युक्तरीत्या विरुद्धांश-त्यागेन पदद्वयलक्षणया वा वक्ष्यमाणासु मद्रीत्या तत्सहचरितत्वतदाश्रितत्वादिना तदिति व्यपदेशा-ङ्गीकारेण वा त्वम्पदार्थपरित्यागेनैव सोऽयं देवदत्त इत्यादाविव तत्त्वमसीत्यादावप्यभेद एव सामा-नाधिकरण्योपपत्तौ जीवस्य मुखविनाशाङ्गीकारेण बाधायां सामानाधिकरण्यस्य वा सर्वथा त्वम्प-दार्थत्यागेन कूटस्थे त्वम्पदस्य जहल्लक्षणाश्रयणेनाभेदे सामानाधिकरण्योपपादनस्य वा न्याय्यत्वात् । जीवत्वाभिमतचैतन्यस्याप्यन्तःकरणादितुल्यतयाध्यस्तत्वेन अनर्थहेतुत्वेन चान्तःकरणतद्धर्मभूतकर्तृ-त्वाद्यध्यासवज्जीवस्वरूपतद्धर्मभूतान्तःकरणोपाधिकप्रमातृत्वाध्यासस्यापि बन्धकोटिनिविष्टत्वेन जीव-तदुपाधिभूतान्तःकरणादिरूपकार्येण वर्तमानेन प्रलीनेन वा सह तदुपादानभूताया अविद्याया निवृत्ते-र्मोक्षत्वेन च तदुभयभाक्तेन ब्रह्मभावप्राप्त्या च कूटस्थचैतन्यस्यैव जीवत्वापत्तेश्च । तस्यानान्तःकरण-धीवासनोपरक्ता ज्ञानोपाधिभेदेन जीवेश्वरविभागः सम्भवतीति ।

यत्तु यथा वृक्षाणां समष्ट्यभिप्रायेण वनमित्येकत्वव्यपदेशः । यथा जलानां सृष्ट्यभिप्रायेण जलाशय इति तथा नानात्वेन प्रतिभासमानानां जीवगताज्ञानां समष्ट्यभिप्रायेणैकत्वव्यपदेशः । 'अजामेकामि'त्यादिश्रुतेः इयं समष्टिरुत्कृष्टोपाधितया विरुद्धसत्त्वप्रधाना एतदुपहितचैतन्यं सर्वज्ञत्व-सर्वेश्वरत्वसर्वनियन्तृत्वादिगुणकर्मव्यक्तमन्तर्यामिजगत्कारणमीश्वर इति च व्यपदिश्यते । यथा वनस्य व्यष्ट्यभिप्रायेण वृक्षा इत्यनेकत्वव्यपदेशः । यथा वा जलाशयस्य व्यष्ट्यभिप्रायेण जलानीति तथा अज्ञानस्य व्यष्ट्यभिप्रायेणानेकत्वव्यपदेशः । 'इन्द्रो मायाभिरि'त्यादिश्रुतेः । अत्र व्यस्तसमस्तत्वेन व्यष्टिसमष्टिताव्यपदेशः । इयं व्यष्टिः निकृष्टोपाधितया मलिनसत्त्वप्रधाना । एतदुपहितं चैतन्यं अल्पज्ञत्वानीश्वरत्वादिगुणकः प्राज्ञ इत्युच्यते । अनयोरज्ञानसमष्टिव्यष्ट्योः वनवृक्षयोरिव जलाशय-जलयोरिव वाऽभेदः । एतदुपहितचैतन्ययोरीश्वरप्राज्ञयोरपि वनवृक्षावच्छिन्नाकाशयोः जलाशयजल-

गतप्रतिबिम्बाकाशयोरिव वाऽभेदः । एष सर्वेश्वर इत्यादिश्रुतेः वनतदवच्छिन्नाकाशयोः जलाशयतद्गत-प्रतिबिम्बाकाशयोर्वा आधारनुपहिता*जलाशयवनयोरज्ञानसमष्टिव्यष्टितदुपहितचैतन्ययोः आधारो यदनुपहितचैतन्यं तत्तुरीयमित्युच्यते । 'शिवमद्वैतं चतुर्थं मन्यत' इत्यादिश्रुतेः इदमेव शुद्धतुरीयचैतन्य-मज्ञानादि तदुपहितचैतन्याभ्यामविविक्तं महावाक्यस्य वाच्यम् । विविक्तं सल्लक्ष्यमिति चोच्यते ।

## चैतन्यैक्यमेव तत्त्वमसिवाक्यार्थः, तज्ज्ञानादेव च मुक्तिरिति मतनिरासः—

एवं पञ्चप्राणमनोबुद्धिदशेन्द्रियात्मकमखिलसूक्ष्मशरीरमेकबुद्धिविषयतया वनवज्जलाशयवद्वा समष्टिरनेकबुद्धिविषयतया व्यष्टिरिति च भवति । तत्र सूक्ष्मशरीरसमष्ट्युपहितं चैतन्यं सूत्रात्मा हिरण्यगर्भः प्राण इति चोच्यते । एतद्व्यष्ट्युपहितं चैतन्यं तैजस इत्युच्यते । अत्राप्यनयोः सूक्ष्मशरीरसमष्टिव्यष्ट्योः तदुपहितसूत्रात्मतैजसयोर्वनवृक्षवत् तदवच्छिन्नाकाशवज्जलाशयवज्जलवत् तद्गतप्रतिबिम्बाकाशवच्चाभेदः ।

एवं पञ्चीकृतभूतारब्धजरायुजाण्डजस्वेदजोद्भिजाख्यचतुर्विधसकलस्थूलशरीरमेकानेकबुद्धिविषय-तया वनवज्जलाशयवद्वा समष्टिः वृक्षवज्जलवद्वा व्यष्टिरपि भवति । एतत् समष्ट्युपहितं चैतन्यं 'वैश्वानरो विराड्' इति चोच्यते । एतत् स्थूलं शरीरव्यष्ट्युपहितं चैतन्यं विश्व इत्युच्यते । अत्राऽप्यनयोः स्थूल-शरीरसमष्टिव्यष्ट्योस्तदुपहितचैतन्ययोर्विश्ववैश्वानरयोश्च वनवृक्षवत् तदवच्छिन्नाकाशवच्च जलाशय-जलवत्तद्गतप्रतिबिम्बाकाशवच्च पूर्ववदभेदः । तेषां स्थूलसूक्ष्मकारणप्रपञ्चानामपि समष्टिरेको महान् प्रपञ्चो भवति ।

यथा वावान्तरवनानां समष्टिरेकं महद्वनं यथावान्तरजलाशयानां समष्टिरेको महान् जलाशयः । एवमेतदुपहितवैश्वानरादीश्वरपर्यन्तचैतन्यमप्यवान्तरवनावच्छिन्नाकाशवत् अवान्तरजलाशयगतप्रति-बिम्बाकाशवच्चैकमेव । आभ्यां महाप्रपञ्चतदुपहितचैतन्याभ्यां तप्तायःपिण्डवदविविक्तं सदुपहितचैतन्यं 'सर्वं ब्रह्मे'तिवाक्यस्य मुख्यार्थो विविक्तं सल्लक्ष्यमपि भवति । एवम् अज्ञानादिसमष्टिः एतदुपहित-सर्वज्ञत्वादिविशिष्टं चैतन्यमेतदनुपहितचैतन्यं चैतत्त्रयम् । तप्तायः पिण्डवदेकत्वेनाऽवभासमानं तत्पदवाच्यार्थो भवति । एतदुपाध्युपहितयोर्यदाधारभूतमनुपहितं चैतन्यं तत्पदलक्ष्यार्थो भवति । अज्ञानादिव्यष्टिरेतदुपहितप्राज्ञत्वादिविशिष्टचैतन्यमेतदनुपहितचैतन्यं चैतत्त्रयम् । तप्तायःपिण्डवदेक-त्वेनावभासमानं तत्त्वम्पदवाच्यार्थो भवति । एतदुपाध्युपहितयोराधारभूतमनुपहितं प्रत्यगानन्दं तुरीयं चैतन्यं त्वम्पदलक्ष्यार्थो भवति । तत्त्वम्पदलक्ष्यचैतन्यैक्यमेव तत्त्वमसीत्यादिमहावाक्यार्थः । तज्ज्ञाना-देव च मुक्तिरिति चैतन्यैक्यमेव वास्तवम् । तद्भेदस्तूक्तरीत्यौपाधिक इति ।

---

* आकाशवनयो इति 'आ' पाठे दृश्यते ।

तत्र तत्त्वम्पदार्थयोः जीवेश्वरयोर्वस्तुतोऽत्यन्तभिन्नत्वेन त्वदुक्तरीत्याऽज्ञानसूक्ष्मस्थूलशरीरसमष्ट्युपहितचैतन्यस्य तत्पदवाच्यत्वे तद्व्यष्ट्युपहितचैतन्यस्य त्वम्पदवाच्यत्वेऽनुपहितचैतन्यस्य तत्त्वम्पदलक्ष्यत्वे च मानाभावात् । माण्डूके नृसिंहतापनीये च 'सोऽयमात्मा चतुष्पादि'त्यादिनोपास्यात्मन एकस्यैव विश्ववैश्वानरतैजसहिरण्यगर्भप्राज्ञेश्वरतुरीयादिरूपत्वमात्रप्रतिपादनेन विश्वतैजसप्राज्ञानां स्थूलसूक्ष्मशरीराविद्याव्यष्ट्युपाधिकत्वस्य विराट् हिरण्यगर्भेश्वराणां तत्समष्ट्युपाधिकत्वस्य चाप्रतिपादनेनोक्तप्रक्रियायाः तन्मानकत्वासम्भवेन स्वोत्प्रेक्षामात्रत्वाच्च । ननु तत्रैव 'अयमात्मा ब्रह्मे'ति तत्त्वम्पदार्थयोरैक्यप्रतिपादनान्नोक्तप्रक्रियाया उत्प्रेक्षामात्रत्वमिति चेन्न । तत्रैव सर्वमोङ्कार एव सर्वं ह्येतद्ब्रह्मेत्यादिवदयमात्मा ब्रह्मेति तत्त्वम्पदार्थप्रतिपादनस्याऽप्युपासनार्थत्वेन प्रत्यक्षादिविरुद्धतदैक्यपरत्वासिद्धेः ।

तत्त्वमसीत्यादिश्रुतीनां तदैक्यपरत्वं च निरसिष्यते । किञ्च अविद्याभेदवत् चैतन्यभेदस्यापि प्रत्यक्षादिप्रमाणसिद्धत्वाविशेषात् स्वाभाविकत्वमेव स्वीकार्यं न तु तत्समष्टिव्यष्ट्योपाधिकत्वं 'एकमेवाद्वितीयमि'त्यादिश्रुत्या चैतन्यैक्यस्वीकारे च 'अजामेकामि'त्यादिश्रुत्या अविद्यैक्यस्यापि स्वीकारापत्तेः । 'इन्द्रो मायाभिरि'त्यादि श्रुत्या माया चाऽविद्या च स्वयमेव भवतीति श्रुतिसिद्धमायाभिन्नाऽविद्याबहुत्वस्य श्रुतत्वात् । अजामेकामित्यादिश्रुतेरविद्यासमष्ट्यभिप्रायत्वे 'द्वे ब्रह्मणी, चेतनश्चेतनानामि'त्यादिश्रुत्या चैतन्यबहुत्वस्यापि श्रुतत्वादेकमेवाद्वितीयमित्यादिश्रुतेरपि चैतन्यसमष्ट्यभिप्रायस्य सुवचत्वादिति ।

एतेन यथा स्वतःशुभ्रः पटो धौतः अनुलिप्तो घट्टितः मनुष्याकारयुक्तो लाञ्छितः वर्णपूरितो रञ्जित इत्यवस्थाचतुष्टयमेकस्यैव पटस्य तथा परमात्मा मायातत्कार्योपाधिरहितः शुद्धः मायोपहित ईश्वरः अपञ्चीकृतभूतकार्यसमष्टिसूक्ष्मशरीरोपहितो हिरण्यगर्भः पञ्चीकृतभूतकार्यसमष्टिस्थूलशरीरोपहितो विराट्पुरुष इत्यधिदैवतमवस्थाचतुष्टयमेकस्यैव परमात्मनोऽस्मिन् चित्रपटस्थानीये परमात्मनि चित्रस्थानीयस्थावरजङ्गमात्मको निखिलः प्रपञ्चः यथा चित्रार्पितं मनुष्याणां चित्राधारवच्च सदृशवस्त्राभासा लिख्यन्ते । तथा परमात्माध्यस्तदेहानामधिष्ठानचैतन्यसदृशाश्चिदाभासाः कल्प्यन्ते तेन जीवनामानः संसरन्तीति ।

## ब्रह्मण एवाविद्यया जीवभाव इति मतनिरासः—

अध्यात्मं तु विश्वतैजसप्राज्ञभेदेन त्रीणि रूपाणि । तत्र सुषुप्तौ विलीनेऽन्तःकरणे ज्ञानमात्रसाक्षी विलीनावस्थान्तःकरणोपाधिकः प्राज्ञः, स्वप्ने व्यष्टिसूक्ष्मशरीराभिमानी तैजसः, जागरे व्यष्टिस्थूलशरीराभिमानी विश्व इति चित्रदीपोक्तमपि प्रत्युक्तम् । उक्तरीत्या 'सोऽयमात्मा चतुष्पादि'त्यादिनोपास्यैक-

स्यैवात्मनो विश्ववैश्वानरादिरूपत्वमात्रं प्रतिपादनेन विश्ववैश्वानरादीनां स्थूलशरीरादि व्यष्टिसमष्ट्युपाधित्वे मानाभावात् । कल्पितचिदाभासानां जीवरूपत्वे च कृतहानाद्युक्तदोषानतिवृत्तेश्चेति । यदप्युक्तं न प्रतिबिम्बोऽवच्छिन्नो वा जीवः किन्तु कौन्तेयस्यैव राधेयत्ववदविकृतस्य ब्रह्मण एवाऽविद्यया जीवभावः । व्याधकुलसंवर्धित राजकुमारदृष्टान्तेन ब्रह्मैव स्वाविद्यया संसरति स्वविद्यया मुच्यत इति बृहदारण्यकभाष्ये प्रतिपादनात् । "राजसूनोः स्मृतिप्राप्तौ व्याधभावो निवर्तते । यथैवमात्मनोऽज्ञस्य तत्त्वमस्यादिवाक्यत" इति सुरेश्वरवार्तिकोक्तेश्च । एवं च स्वाविद्यया जीवभावमापतन्नस्यैव ब्रह्मणः सर्वप्रपञ्चकल्पकत्वादीश्वरोऽपि सह सर्वज्ञत्वसर्वकारणत्वादिधर्मैः स्वप्नोपलब्धदेवतावत् जीवकल्पित इति ।

तदपि न । 'अधिकं तु भेदनिर्देशात्', 'लोकवत्तु लीलाकैवल्यमि'त्यादिसूत्रैः जीवाधिक ईश्वर एव जगत्स्रष्टा न जीवः । तस्याप्तकामत्वेन प्रयोजनाभावेऽपि केवलं लीला जगत्सृष्टिरित्यादिप्रतिपादनविरोधात् । 'द्वे ब्रह्मणी वेदितव्ये, चेतनश्चेतनानां, य आत्मनि तिष्ठन्नात्मानमन्तरः, द्वा सुपर्णे'त्यादिजीवेश्वरभेदप्रतिपादकश्रुतिविरोधाच्च । ब्रह्मण एकत्वेन जीवस्याप्येकत्वापत्तेश्च । न चेष्टापत्तिः । बद्धमुक्तव्यवस्थानुपपत्तेः ।

ननु नास्त्येव बद्धमुक्तव्यवस्था शुकमुक्त्यादिकमपि स्वाप्नपुरुषान्तरमुक्त्यादिकमिव कल्पितम् । एवं चैकेन जीवेनैकमेव शरीरं सजीवमन्यानि तु स्वप्नदृष्टशरीराणीव निर्जीवानि तज्जीवाज्ञानकल्पितं सर्वं जगत् तस्य स्वप्नवद्यावदविद्यं सर्वोऽपि व्यवहार इति चेन्न । 'तद्यो यो देवानां प्रत्यवबुद्ध्यत स एव तदभवदि'त्यादिश्रुतिविरोधात् ।

सजीवत्वप्रयोजकसुखदुःखादेः सर्वशरीरसाधारणतया इदमेकमेव शरीरं सजीवमन्यानि तु निर्जीवानीत्यत्र विशेषहेत्वभावात् । स्वप्नदृष्टशरीरवत् स्वाप्नशरीरान्तराणामपि चेष्टाद्यविशेषेण सजीवत्वस्यैव सम्भवेन निर्जीवत्वासिद्ध्या दृष्टान्तासम्प्रतिपत्तेश्च । न च स्वप्नोत्थितस्य द्रष्टुः स्वाप्नशरीरावच्छिन्नभोगानुसन्धानवत् स्वप्नदृष्टपित्रादिशरीराणामपि पित्रादिजीवैरेव सजीवत्वस्य वक्तव्यतया पित्रादीनामपि पुत्रदृष्टस्वाप्नशरीरावच्छिन्नभोगानुसन्धानापत्तिरिति वाच्यम् । यत्र पितापुत्रयोरन्यूनानतिरिक्तार्थविषयकस्वप्नो जातस्तत्र तथानुसन्धानस्येष्टत्वात् युगपत्तदुभयदृष्टघटपटत्वद्वित्ववद्युगपत्तदुभयदृष्टस्वाप्नशरीरादेरप्येकत्वात् । तद्भेदकल्पने प्रमाणाभावात् । क्वचित्तदननुसन्धानस्य जागरे क्वचिद्भुक्तभोगाननुसन्धानवत् स्वप्नद्रष्टुरपि कदाचित्स्वाप्नपदार्थाननुसन्धानवच्चोपपत्तेश्च । जीवान्तरेणैव वा पित्रादिजाग्रद्देहसदृशस्वाप्नशरीराणां सजीवित्वेऽपि पित्रादीनां तदवच्छिन्नभोगाद्यननुसन्धानोपपत्तेः । मत्पितुरेव शरीरमिति प्रतीतेर्भ्रमत्वात् । न चैव जीवान्तरस्यैव तत्तच्छरीरावच्छिन्नभोगाद्यनुसन्धानापत्तिः । परबुद्धे-

रप्रत्यक्षत्वेन तदननुसन्धाने प्रमाणाभावात् । प्रत्युत तदनुसन्धाननिर्णायकस्यैव मुखप्रसादादेः सत्त्वात् प्रतिबिम्बदेहादेरपि तुल्यन्यायतया सजीवत्वसम्भवाच्चेत्यन्यत्र विस्तरः ।

एतेन एक एव जीवोऽविशेषेण सर्वशरीरमधितिष्ठते । तेन सर्वमपि शरीरं सजीवमेवातो नोक्तदोष इति निरस्तम् । तथा सति देवदत्तशरीरावच्छेदेनोत्पन्नसुखदुःखादेर्यज्ञदत्तशरीरावच्छिन्नजीवेनाप्यनुसन्धानप्रसङ्गात् । न चानुसन्धानेऽवच्छेदभेदः प्रतिबन्धकः तथा सति कण्टकविद्धपादावच्छेदेनोत्पन्नदुःखस्य हस्तावच्छिन्नजीवेनाऽननुसन्धानप्रसङ्गात् । न चेष्टापत्तिः कण्टकोद्धारार्थः हस्तावच्छिन्नस्याऽप्रवृत्त्यापत्तेः ।

ननु हस्तावच्छिन्नजीवस्य न कण्टकविद्धपादावच्छेदेनोत्पन्नदुःखानुसन्धानम् । हस्तावच्छिन्नोऽहं पादावच्छिन्नवेदनामनुभवामि इत्यननुभवत् । न चैव पादावलग्नककण्टकोद्धाराय हस्तव्यापारानुपपत्तिरिति वाच्यम् । नाऽयं हस्तव्यापारो हस्तावच्छिन्नचैतन्यस्य पादावच्छिन्नदुःखानुसन्धनप्रयुक्तः । किन्तु सर्वावयवानुस्यूतशरीरावच्छिन्नजीवस्यैवाहं चरणे वेदना वा नित्यनुसन्धानात्, तत्प्रयुक्त एवेति चेत् । तथापि हस्तपादाद्यवच्छेदभेदरूपप्रतिबन्धकस्य सत्त्वेन सर्वावयवानुस्यूतशरीरावाच्छिन्नजीवस्याप्यनुसन्धानानुपपत्तेः । अन्यथा चैत्रमैत्रादिशरीराणां परस्परभेदेन तत्तच्छरीरावच्छिन्नजीवस्य तत्तदितरशरीरावच्छिन्नसुखदुःखाद्यननुसन्धानेऽपि चैत्रमैत्रादिदेहानुस्यूतग्रहाकाशावच्छिन्नजीवस्यानुसन्धानम् । तत्प्रयुक्तश्चैत्रशरीरलग्नकण्टकोद्धाराय मैत्रशरीरव्यापारश्च स्यात् ।

ननु भोगावच्छेदकविश्लेष एवाऽनुसन्धानप्रतिबन्धकः । विश्लेषश्चैकस्मिन्नवयविन्यवयवभावेन अननुप्रविष्टत्वम् । तथा च हस्तावच्छिन्नस्य कण्टकविद्धपादावच्छिन्नदुःखानुसन्धानं गर्भस्थस्य मातृशरीरावच्छिन्नसुखाद्यननुसन्धानम् । मैत्रशरीरावच्छिन्नजीवस्य चैत्रशरीरावच्छिन्नसुखाद्यननुसन्धानं मैत्रचैत्रशरीरद्वयानुस्यूतग्रहाकशावच्छिन्नजीवस्य तद्द्वयावच्छिन्नसुखदुःखाद्यननुसन्धानं चोपपद्यते इति चेत् न । "उद्यतायुधदोर्दण्डा पतितः स्वशिरोक्षिभिः । पश्यन्तः पातयन्तीह कबन्धा अप्यरीन् युधि" इति भारतोक्त्या विश्लेषेऽप्यनुसन्धानावगमात् । न हि तदानीमेवोत्पन्नयोः कबन्धशिरःखण्डयोरतन्तुवत् एकस्मिन्नवयविन्यवयवभावेनाननुप्रवेशोऽस्ति । तयोर्घटभागानन्तरोपलभ्यमानखर्परवत्पूर्वावयव्युत्पत्तेः प्रागसत्त्वेन तदनवयवत्वात् । कबन्धशिरःखण्डावस्थायामवयविन एवाभावेन तत्रानुप्रवेशाभावाच्च ।

अनुप्रवेशयोग्यत्वस्य विश्लेषपदार्थत्वे च चोरचैत्रमैत्रयोः कर्णनासाद्यवयवच्छेदानन्तरं व्यत्ययेन तद्योजनदर्शिनेन्द्रादेः मेषवृषणसंयोजनस्य श्रुतत्वेन च भिन्नशरीरावयवानामपि एकावयविन्यनुप्रवेशयोग्यतादर्शिनि प्रागपि तदवच्छेदेनोत्पन्नसुखादेः अन्योन्यगतस्य ताभ्यां अनुसन्धानप्रसङ्गात् । न च भारतवचनस्य असति बाधके कैमुत्तिकन्यायेन योग्योत्साहातिशयप्रशंसापरत्वाश्रयणं युक्तम् । न च

शिरश्छेदानन्तरं मरणमूर्छयोरन्यतरावश्यम्भावे मानमस्ति । दक्षादेः प्राचीनशिरच्छेदानन्तरं शिरोऽन्तर-संयोजनेऽपि जीवनस्य श्रुतत्वाच्च । अत एवैकस्मिन्नवयविनि अवयवभावेन योऽनुप्रवेशः तत्प्रति-योगिकानादिसंसर्गाभाव एवाऽत्र विश्लेषपदार्थो विवक्षितः । स चाऽनुप्रवेशस्तद्ध्वंसस्थले व्यावृत्त इति तत्रानुसन्धानं युज्यते । तत्प्रागभावात्यन्ताभावस्थले च सोऽनुवृत्त इति तत्राऽनुसन्धानं च युज्यते इति प्रत्युक्तम् । कबन्धशिरःखण्डाद्यवयवानामचिन्त्येन मणिमन्त्रौषधिप्रभावेन पुनर्योजने सति यथापूर्वं यत्र शरीरारम्भः तत्र तदनुप्रवेशात् प्राकृतप्रतियोगिकानादिसंसर्गाभावस्य प्रागभावस्यासत्त्वेन विश्लेषसत्त्वात्। प्राग्वृत्तशिरश्छेदाव्यवहितोत्तरकाले कबन्धानां पतितस्वशिरोक्षिभिः छेतृदर्शनाद्यभावप्रसङ्गात् ।

ननु निरुक्तस्यैकस्मिन्नवयविनि अवयवभावेन अनुप्रवेशरूपविश्लेषस्योत्सर्गतोऽननुसन्धानप्रयोज-कत्वात् क्वचिद्योगविशेषेषु योगिविशेषेषु वा तादृशविश्लेषसत्त्वेऽपि तपःप्रभावादिरूपापवादकेन तदनु-सन्धानमविरुद्धमिति चेन्न । सर्वत्राऽनुगतानतिप्रसक्ताननुसन्धानप्रयोजकाक्षेपे तादृशप्रयोजकोक्त्यैव तत्समाधानस्योचितत्वेनौत्सर्गिककथनायोगात् । क्वचित्तादृशविश्लेषसत्त्वेऽपि अनुसन्धानाभ्युपगमे तस्यानुसन्धानप्रतिबन्धकत्वपर्यवसिताऽननुसन्धानप्रयोजकताया एवासम्भवाच्च ।

नन्वस्तु तादृशविश्लेषस्यानुसन्धानप्रतिबन्धकत्वमेवाननुसन्धानप्रयोजकत्वं तस्य चौत्सर्गिकत्व-मपवादापरनामकतपःप्रभावादिरूपोत्तेजकस्थले विश्लेषस्य स्वप्रतिबध्यत्वाभिमतानुसन्धानसमवहि-तत्वमेवेति न तस्यानुसन्धानप्रतिबन्धकत्वपर्यवसिताननुसन्धानप्रयोजकत्वासम्भवः । उत्तेजकत्वाभि-मततपःप्रभावादिविरहविशिष्टनिरुक्तविश्लेषप्रतिबन्धकत्वोपपत्तेरिति चेन्न । एकजीववादे जीवत्त्वाभि-मतस्यैकस्यैवानन्तशरीरसम्बन्धाविशेषेण उत्तेजकत्वाभिमततपःप्रभावादि अस्यैव नान्यस्येति व्यव-स्थाया एवाऽसम्भवेन योग्ययोगिविशेषाणामेव तादृशविश्लेषरूपानुसन्धानप्रतिबन्धकसत्त्वेऽपि तपः-प्रभावादिरूपोत्तेजकसमवधानमहिम्ना विलक्षणानुसन्धानं नेतरेषामिति व्यवस्थानुपपत्तितादवस्थ्यात् । अनन्तशरीरानुस्यूतजीवस्यैकत्वेऽपि कथञ्चित्तद्भेदमाश्रित्य योगप्रभावादिरूपोत्तेजकसमवधानव्यवस्था-भ्युपगमे च तत एव सुखदुःखाद्यनुसन्धानव्यवस्थोपपत्त्या उक्तरीत्या तत्प्रतिबन्धकोत्तेजकादिकल्पनाया निष्प्रमाणकत्वात् । अत एव शरीरभेदस्तत्र प्रतिबन्धक इत्यपि प्रत्युक्तम् । तथा सति योगिनां कायव्यूहे तत्तच्छरीरावच्छेदेनोत्पन्नसुखाद्यनुसन्धानाभावप्रसङ्गात् । न च अन्तःकरणैक्यमनुसन्धानप्रयोजकं योगिनां तु शरीरभेदेऽपि तावच्छरीरव्याप्यन्तःकरणैक्येन तदनुसन्धानं नेतरेषामिति वाच्यम् ।

' शरीरभेदस्य अन्तःकरणभेदाविनाभूतत्वेन योगिनोऽपि प्रतिशरीरं चक्षुरादिभेदवदन्तःकरण-भेदस्याऽप्यावश्यकत्वात् । ''प्रदीपवदावेशस्तथाहि दर्शयति'' इत्यधिकरणे कायव्यूहे प्रतिशरीरमन्तः करणस्य चक्षुरादेश्च भिन्नभिन्नस्यैव योगप्रभावात् सृष्टेरुपादानात् । अन्यथा काशीरामेश्वरादिव्यवहित-

नानादेशस्थतावद्योगिशरीरव्याप्यन्तःकरणैक्यस्वीकारे मध्ये सञ्चरत्कठिणद्रव्याभिघातेन जलवत्साव-यवान्तःकरणभेदावश्यम्भावेन तत्काले योगिनो नानाशरीरावच्छेदेन तेन सुखेनाऽहं सुखी अनेनापि सुखेन 'अहं सुखी'त्याद्यनुसन्धानाभावप्रसङ्गात् । काशीस्थयोगिशरीरावच्छिन्नजीवसम्बन्ध्यन्तःकरण-स्यैव रामेश्वरस्थतद्योगिशरीरावच्छिन्नजीवसम्बन्धित्वे आन्तरालिकयोगिशरीरावच्छिन्नजीवसम्बन्ध-स्याप्यावश्यकतया योगिनः काशीरामेश्वरस्थस्वशरीवच्छिन्नसुखाद्यनुसन्धानवदान्तरालिकायोगिशरीरा-वच्छिन्नसुखाद्यनुसन्धानापत्तेश्च । यदा योगिनोऽयोगिराजदेहादिप्रवेशेनातिशयितसुखाद्यनुभवेच्छा तदा योग्यन्तःकरणस्य राजादिदेहान्तःप्रवेशावश्यम्भावेन राजयोगिनोरन्योन्यं तत्तत्सुखानुसन्धानप्रसङ्गात् । जीवैक्ये योग्ययोगिव्यवस्थानुपपत्तेश्च । न च फलबलेन योग्यन्तःकरणस्यान्तरालिकयोगिशरीरान्तः-प्रवेश एव नेति वाच्यम् ।

## सुखदुःखादयः नात्मधर्माः, अपि तु अन्तःकरणधर्माः इति मतनिरासः—

एतेन न सुखदुःखादय आत्मधर्माः येन तदैक्याभ्युपगमे सुखदुःखादिव्यवस्थानुपपत्तिरुच्येत । किन्त्वन्तःकरणधर्माः कामः । सङ्कल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिः ह्रीर्धीर्भीरित्येतत्सर्वं मन एव । "विज्ञानं यज्ञं तनुत" इत्यादिश्रुतिभिः शोकहर्षभयक्रोधलोभमोहस्पृहादयः अहङ्कारश्च दृश्यन्ते । "जन्ममृत्युश्च नात्मनः" इत्यादि स्मृत्या च तस्यैव निखिलानर्थाश्रयत्वप्रतिपादनात् । [1]"असङ्गो ह्ययं पुरुषः", [2]"असङ्गो न हि सज्जत" इत्यादि श्रुतिभिश्चेतनस्य सर्वात्मनौदासीन्यप्रतिपादनाच्च अन्तः-करणानां चान्योन्यमत्यन्तभिन्नतया न शुखदुःखादिव्यवस्थानुपपत्तिः । न चैवं सुखदुःखकर्तृभोक्तृ-त्वादीनां अन्तःकरणमात्रधर्मत्वे अहं सुखी दुःखी कर्ता भोक्ता चेति सामानाधिकरण्यानुभवविरोधः । सुखदुःखकर्तृत्वादिविशिष्टान्तःकरणस्य चेतनतादात्म्येनाध्यस्ततया तद्धर्माणां शुक्तीदमंशे रजत-त्वादिविशिष्टरजतस्य तादात्म्येनाध्यस्ततया रजतधर्माणामिदं रजतमिति इदमंशसामानाधिकरण्या-नुभववच्चैतन्यसामानाधिकरण्यानुभवोपपत्तेरिति निरस्तम् । एवं सत्यन्तःकरणस्यैव कर्तृत्वभोक्तृत्वा-द्यनर्थाश्रयत्वेन संसारित्वापत्तेः । आत्मनस्तदभावापत्तेश्च । न च कर्तृत्वाद्यनर्थाश्रयधर्मान्तःकरण-तादात्म्याध्यासाधिष्ठानभाव एवात्मनः संसार इति वाच्यम् । त्वदुक्तासङ्गश्रुतिविरोधेन आत्मनः कर्तृत्वाद्यनर्थाश्रयत्ववत् तदाश्रयाऽन्तःकरणतादात्म्याध्यासाधिष्ठानभावस्याप्ययोगात् श्रुतेः पारमा-र्थिकसङ्गनिषेधपरतया कल्पितान्तःकरणतादात्म्याध्यासाधिष्ठानभावरूपसङ्गाविरोधे कल्पितकर्तृत्वा-द्यनर्थसङ्गस्यापि आत्मन्यविरोधात्[3] । सङ्गविशेषनिषेधपरत्वे श्रुतहानाद्यापत्तेश्च । [4]"एतत्सर्वं मन एवे"ति सावधारणश्रुत्या कामादीनां मनोभिन्नत्वस्यैव प्रतिपादनेन तद्धर्मत्वासिद्धेः । दण्डी कुण्डली-

१. बृह. ४-६-१५  २. बृह. ९-९-२६  ३. अविशेषात्  ४. प्रश्नो. १-५-३

तिवत् कामादीनामन्तःकरणपरिणामत्वेऽपि अहं सुखी दुःखी अहमिच्छामि अहं करोमि द्वेष्मि इत्याद्यनुभवेन तेषामात्माश्रितस्यैवोचितत्वात्। 'ध्यायतीव लेलायतीव अहङ्कारविमूढात्मा कर्ताऽहमिति मन्यते। कर्ता शास्त्रार्थवत्वात्' इत्यादिभिरात्मन एव कर्तृत्वप्रतिपादनात्। कामः सङ्कल्प इत्यादिश्रुतौ सुखदुःखकर्तृत्वादीनां अन्तःकरणधर्मत्वाश्रयणाच्च। 'विज्ञानं यज्ञं तनुत' इत्यादिश्रुतेः परमात्मपरत्वस्य वक्ष्यमाणत्वात्। शोकहर्षेत्यादावप्यहङ्कारस्येति षष्ठी। एतत्सर्वं मन एवेत्युदाहृतसावधारणश्रुतिबलेन राहोः शिर इत्यादाविव योज्येति तद्विरोधानवकाशाच्च।

अस्तु सुखदुःखादीनामन्तःकरणपरिणामत्वमुक्तरीत्या चैतन्यसामानाधिकरण्यानुभवश्च। अस्तु वा तादृशान्तःकरणाध्यासाधिष्ठानभाव एव चेतनस्य संसारः। तथाऽपि जीवचैतन्यस्यैकत्वे तस्यैव विलक्षणपरिणामवदनन्तान्तःकरणाध्यासाधिष्ठानत्वेन तत्साक्षित्वेन च देवदत्तजीवो यथा तादृशं स्वीयमन्तःकरणं तत्परिणामभूतान् विचित्रसुखदुःखादींश्च स्वीयतयाऽनुसन्धत्ते तथा तादृशं यज्ञदत्तीयान्तःकरणतत्परिणामभूतान्विचित्रसुखदुःखादींश्च स्वीयतयाऽनुसन्दध्यादिति व्यवस्थानुपपत्तिर्दुर्वारा। न च आध्यासिकतादात्म्यापन्ननानान्तःकरणगताऽनर्थजातस्येव तद्गतपरस्परभेदस्यापि अभिमानत आत्मीयतया आत्मनो यादृशमनर्थभाक्त्वमनुभवसिद्धम्, तादृशभेदेन तद्व्यवस्थितं भविष्यतीति वाच्यम्। देवदत्तस्यापरिचितयज्ञदत्तादिभेदाभिमानाभावकाले आभिमानिकतत्प्रतियोगिकभेदाभावेन तदीयान्तःकरणतद्गतविचित्रसुखदुःखादीनां स्वीयतयाऽप्यनुसन्धानप्रसङ्गात्।

यत्त्वन्तःकरणतादात्म्यापत्त्या तत्तदन्तःकरणभेदेन भेदवत एव साक्षिणस्तदन्तःकरणतद्गतविचित्रसुखदुःकाद्यनुभवरूपत्वेन तद्व्यवस्थासिद्धिरिति। तन्न। तथा सति देवदत्तजीवस्यापि स्वीयहस्तपादाद्यवच्छेदभेदेन भिन्नतया हस्तपादाद्यवच्छिन्नसुखदुःखाद्यनुसन्धानप्रसङ्गेनान्यभेदप्रयुक्तभेदवत्त्वस्य व्यवस्थाहेतुत्वानुपपत्तेरिति। एतेनात्मैक्येऽपि अन्तःकरणे चिदाभास एव बन्धाश्रयः। तस्य चासत्यस्य बिम्बाद्भिन्नस्य प्रत्यन्तःकरणभेदात् विद्वदविद्वत्सुखीदुःखीकर्तृत्वादि व्यवस्थासिद्धिः। न चैवं सत्यस्य बन्धाश्रयत्वे बन्धमोक्षयोर्वैयधिकरण्यापत्तिः। अस्य चिदाभासस्यान्तःकरणावच्छिन्ने स्वरूपतः एतस्य सत्यतया मुक्त्यन्वयिनि परमार्थजीवेऽध्यस्ततया कर्तृत्वाश्रयगतचिदाभासतादात्म्याध्यासाधिष्ठानभावस्तस्य बन्ध इत्यभ्युपगमादिति निरस्तम्। नीरूपस्यात्मनो नीरूपेऽन्तःकरणे प्रतिफलनादेश्चिदाभासजीवत्वनिरासप्रस्तावोक्तरीत्याऽयुक्तत्वेनोक्तरीत्या व्यवस्थाया अयोगात्।

यदपि चोक्तम् 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण' इति सहकारित्वेन देहेन्द्रियैस्तादात्म्येन मनसा च युक्तस्य चेतनस्य भोक्तृत्वाश्रवणात् अन्तःकरणभेदे तद्विशिष्टभेदाद्विशिष्टधर्मभूतसुखदुःखादेर्व्यवस्था। न चैवं विशिष्टस्य बन्धः शुद्धस्य मोक्ष इति वैयधिकरण्यम्। विशिष्टगतबन्धस्य

विशेषेऽप्यन्वयाद्विशिष्टस्य अनतिरेकादिति । तदपि न । अयोगिवद्योगिनामपि शरीरेन्द्रियादिविशेषणभेदेन प्रतिशरीरं विशिष्टभेदात् तद्धर्माणामपि व्यवस्थिततयाऽनुसन्धानाभावप्रसङ्गात् । यदि च विशिष्टभेदेऽपि तदनुसन्धातुः सौभरिप्रभृतितत्तद्योग्यात्मनामेकत्वेनानुसन्धानं तदा योग्ययोगिसर्वशरीराधिष्ठातुरात्मन एकत्वेन योगिनामिवाऽयोगिनामपि नियतानुसन्धानाभावप्रसङ्गात् । अत एवास्तु केवलश्चेतनः कर्तृत्वादिबन्धाश्रयः स्फटिकलोहित्यन्यायेनान्तःकरणस्यतद्विशिष्टस्य वा कर्तृत्वाद्याश्रयस्य सन्निधानाच्चेतने कर्तृत्वादिधर्मान्तराध्यासोपगमात् । न च तस्यैकत्वाद्व्यवस्थानुपपत्तिः । उपाधिभेदात्तदुपपत्तेः । न चान्यभेदादन्यत्र विरुद्धधर्मव्यवस्था नोपपद्यत इति वाच्यम् । मूलाग्ररूपोपाधिभेदमात्रेणैकस्मिन्नपि वृक्षे संयोगतदभावव्यवस्थादर्शनात् । तत्तत्पुरुषकर्णपुटोपाधिभेदेन श्रोत्रभावमुपगतस्याकाशस्य तत्र तत्र शब्दोपलम्भकत्वानुपलम्भकत्वतारमन्देष्टनिष्टशब्दोपलम्भकत्वादि वैचित्र्यदर्शनाच्चेति निरस्तम् । योगिनामपि विलक्षणतत्तद्देहावच्छिन्नसुखदुःखाद्यनुसन्धानाभावप्रसङ्गात् । आवयोः प्रतिशरीरं श्रोत्रेन्द्रियत्वाभिमताकाशस्य स्वत एवान्त्यन्तभिन्नत्वेन अनन्तत्वाच्च ।

ननु यद्याश्रयभेदादेव विरुद्धधर्मव्यवस्थोपपादननियमः । तदेकस्मिन्नपि जीवेऽन्तःकरणाद्युपाधिवशाद्भेदकल्पनाऽस्तु । अकल्पिताश्रयभेद एव व्यवस्थाप्रयोजक इति क्वाऽप्यसम्प्रतिपत्तेः । मणिमुकुरकृपाणाद्युपाधिकल्पितेन भेदेन मुखे श्यामावदातवर्तुलदीर्घभावादिधर्माणामङ्गुल्यवष्टम्भोपाधिकल्पितेन भेदेन दीपे पाश्चात्यपौरस्त्याभावादिधर्माणां च व्यवस्था सम्प्रतिपत्तेः । एवं च तत्तदन्तःकरणधर्मास्ते ते सुखादयस्तत्तदन्तःकरणावच्छिन्नचैतन्यरूपप्रमातृष्वन्तःकरणाद्युपाधिकल्पितभेदवत् स्वाध्यस्ताः तैस्तैरेव प्रमातृभिरनुसन्धीयन्त इति जीवैक्येऽपि प्रमातृभेदादेव सर्वव्यवस्थोपपत्तिः । अत एव योगिनां प्रमात्रैक्याद्विलक्षणात्तत्तच्छरीरावच्छिन्नसुखदुःखाद्यनुसन्धानम् । तेन नेतरेषामिति चेत् तर्हि प्रमातृभेदस्यावश्यकतया तस्यैव सुखदुःखादिभोक्तुरहमर्थस्य प्रमातृत्वेनाभिमतस्य जीवत्वं न्याय्यम् । न तु तदतिरिक्तस्य तत्सद्भाव एव मानाभावात् ।

इयांस्तु विशेषः— यत्तव भेदः प्रमातृचैतन्यभेद औपाधिकः । मम तु स्वाभाविक इति । वस्तुतस्तु प्रमातृभेदः स्वाभाविक एव । न त्वौपाधिकः । प्रतिशरीरं प्रमातृचैतन्यभेदस्यान्तःकरणभेदस्य च प्रत्यक्षादिप्रमाणसिद्धत्वाविशेषेण अन्तःकरणभेदस्येव प्रमातृचैतन्यभेदस्यापि विना विशेषहेतुं स्वाभाविकत्वस्यैव न्याय्यत्वात् । अन्यथा विनिगमकाभावेन प्रमातृचैतन्यभेद एव स्वाभाविकः । अन्तःकरणभेदस्तु तदुपाधिकः इति वैपरीत्यापत्तेः । न च "यथा ह्ययं ज्योतिरात्मा विवस्वान्", "एक एव हि भूतात्मा", [1]"एको देवः सर्वभूतेषु गूढः", "इन्द्रो मायाभिः पुरुरूप ईयते" इत्यादिश्रुत्या

१. श्वेता. ६-११

आत्मभेदौपाधिकत्वस्य तदैक्यस्य च प्रमितत्वाद्विनिगमकाभावोऽसिद्ध इति वाच्यम् । उदाहृतश्रुतीनां परमात्मभेदौपाधिकत्वप्रतिपादनपरत्वेन तदैक्यप्रतिपादानपरत्वेन च व्यवस्थापिततयात्ममात्रभेदौपाधिकत्वपरत्वासिद्धेस्तदैक्यपरत्वासिद्धेश्च । एकत्वसङ्ख्यायाः एकवचनेनैव लाभात् उदाहृदश्रुतौ [१]"आत्मा वा इदमेक एवाग्रे आसीदि"त्यादिश्रुतौ च एकशब्दस्यावैय्यर्थ्याय "एके मुख्यान्यकेवला" इत्याभिधानानुसारान्मुख्यार्थपरापरत्वावश्यम्भावेन तत्समभिव्याहृतात्मशब्दस्य मुख्यभूतपरमात्मपरत्वस्यैव न्याय्यत्वाच्च ।

किञ्चैकजीववादेऽनेकजीववादे वाऽनाद्यात्मान्तरस्य अनात्मभूतानाद्यविद्यादेश्च सत्त्वेन यथाश्रुतार्थस्यैकपदेन मुख्यत्वरूपविशेषणासमर्पणे बाधापत्तिः । मुख्यत्वविशेषणसमर्पणे च मुख्यात्मान्तरस्यैवैवकारव्यवच्छेद्यतया न बाधः । जीवान्तरस्यात्मत्वेऽप्यमुख्यत्वात् । अविद्यादेरनात्मत्वादमुख्यत्वाच्च ।

अपि च "यथा ह्ययं ज्योतिरात्मे"त्यादिश्रुतेरप्ययं प्रत्यक्षत उपलभ्यमानः ज्योतिरात्मा तेजः शरीरः विवस्वान् सूर्यः एकः स्वसमानजातीयद्वितीयरहितः सन् बहुधा भिन्नभिन्नव्यावर्तकधर्मेण भिन्ना अपः अनुगच्छन्नाधन्नाभिमुख्येन ताभिः सम्बन्धन् यथा ह्युपाधिना तादृशतत्तदप्यसम्बन्धरूपकारणविशेषेण भेदरूपः स्वभिन्नान्योन्यभिन्नप्रतिबिम्बवान् क्रियते तादृशविजातीयप्रतिबिम्बवत्तया ज्ञाप्यते । एवं देवः क्रीडादिगुणविशिष्टः अयं वेदैकसमधिगम्यत्वेन बुद्धिस्थः अजः जीवात्मवत् स्वकर्मोपार्जितशरीरसम्बन्धरूपजन्मनापि हीनः[२] आत्मा परमात्मा बहुधा भिन्नेषु क्षेत्रेषु शरीरेषु एकोऽनुगच्छन् अन्तर्यामित्वेन तैः सम्बध्नन् उपाधिना तत्तच्छरीरसम्बन्धरूपकारणविशेषेण भेदरूपं स्वभिन्नान्योन्यभिन्नजीवात्मरूपप्रतिबिम्बवान् क्रियते । तादृशस्वाभावकिभेदवत्प्रतिबिम्बवत्तया ज्ञाप्यत इत्यर्थपरत्वसम्भवेनात्मभेदौपाधिकत्वपरत्वमसिद्धमेव ।

परमतेऽप्यात्मभेदस्य कृतहानादिदोषप्रसङ्गेनाजन्यत्वेनोपाधिकृतत्वाभावस्यैव स्वीकर्तव्यत्वेनोक्तश्रुतौ 'विभेदजनके ज्ञान' इति स्मृतौ च क्रियत इत्यादेर्ज्ञाप्यत इत्याद्यर्थपरत्वस्यावश्यमङ्गीकर्तव्यत्वात् । अन्यथा "षडस्माकमनादय" इति तदनादित्वप्रतिपादकस्ववचनविरोधात् ।

परमते भेदरूप इत्यस्य भेदरूपधर्मवत्वप्रतिपादनपरत्वेन रूपवैयर्थ्यापत्तेः । अस्मन्मते तु भिद्यत इति भेदः रूप्यत इति रूपमिति कर्मव्युत्पत्त्या भेदरूपशब्दयोः सामानाधिकरण्येन स्वभिन्नान्योन्यभिन्नप्रतिबिम्बपरत्वसम्भवेन तदवैयर्थ्यात् ।

'एक एव तु भूतात्मे'त्यादिश्रुतेरपि तुशब्दो भिन्नक्रमः, जीवात्मनोर्वैलक्षण्यार्थः । भूतात्मा = परमात्मा । तु एक एव = स्वसमानजातीय द्वितीयरहित एव । न तु जीवात्मवत् प्रतिभूतमनेकविधः सन्

१. ऐत. १-१-१

मा हिंस्यात्सर्वा भूतानीति श्रुतेः भूते भूते प्रतिजीवं प्रति वस्तु वा व्यवस्थितस्तत्तन्नियमनार्थं नियत-विलक्षणानन्त्यव्यापारः एकव्यापारमात्मत्वाकारेणैकविधः बहुधा चैवोक्तरीत्या तादृशत्रिलक्षणानन्त-व्यापारवत्तया बहुविध एव च जलचन्द्रवद् दृश्यते तत्त्वदर्शिभिरित्यर्थपरत्वसम्भवेन चैतन्यभेदौपा-धिकत्वपरत्वमसिद्धं भेदस्य तदौपाधिकत्वस्य चाऽपदार्थत्वादवाक्यार्थत्वाच्च । बहुधाशब्देनाऽपि प्रकाराणामेव बहुलत्वलाभात् । [1]'सङ्ख्यायाः विधाऽर्थे धा' इति पाणिनिस्मरणात् ।

## जीवेश्वरयोः स्वाभाविकभेद इति युक्त्यन्तरेण समर्थनम्—

'इन्द्रो मायाभिरि'ति श्रुतेरपि 'मायां तु प्रकृतिं विद्यादि'त्यादि श्रुत्या मायाशब्दस्य स्वभावापर-नामकप्रकृत्यर्थकत्वेन व्याख्यानात् । प्रकृत्या चातुरीत्यादौ प्रकृतिशब्दजस्य स्वभावार्थकत्वदर्शनात् ।[2] इन्द्रः परमेश्वरो मायाभिः विलक्षणस्वभावैः विलक्षणसामर्थ्यैर्वा सहितः पुरुरूप ईयते कृष्णरामाद्यनेक-रूपः प्रमीयते । तत्त्वदर्शिभिरित्यर्थपरत्वस्यैव 'यदेकमव्यक्तमनन्तरूपमि'त्यादि श्रुत्यनुसारिणः सम्भवेन आत्मभेदौपाधिकत्वप्रतिपादनपरत्वमयुक्तम् । 'कार्योपाधिरयं जीव' इत्यादिश्रुतेरपि यथाविद्यान्तः-करणादेर्जपाकुसुमादेरिव नात्मभेदौपाधिकत्वमाह । तथोपपादितमधस्तात् । तस्मात् अविद्यान्तः-करणादेर्दर्पणजपाकुसुमघटमठादिवदुपाधित्वासम्भवेन जीवात्मेश्वरात्मभेदो वा जीवात्मनामन्योन्याभेदो वा प्रमातृचैतन्यानां परस्परभेदो वा न तदुपाधिकः सम्भवति । अन्यथा ममैवेदं मुखमित्यादिवत्स एवाहमित्यादि प्रत्यभिज्ञापत्तेः । न ह्यौपाधिको भेदः प्रत्यभिज्ञादिविरोधी क्वापि दृष्टचरः ।

एतेन यथा घटाद्युपाधिर्वस्तुतोऽपरिच्छिन्ने आकाशे स्वसम्बन्धात् तदपरिच्छेदं न स्फोरयति परिच्छेदमेव स्फोरयति यथा वा जपाकुसुमाद्युपाधिर्वस्तुतः शुक्ल एव स्फटिके स्वसम्बन्धाच्छौक्ल्यं न स्फोरयति लौहित्यमेव स्फोरयति तथाऽविद्याद्युपाधिरपि वस्तुतोऽशनायाद्यतीतापरिच्छिन्नानन्दादि-स्वरूपे आत्मनि स्वसम्बन्धात्तथात्वं न स्फोरयति । विपरीताकारमिदानीन्तनानुभवसिद्धं च स्फोरयति । अत एव न प्रत्यभिज्ञापत्तिरिति निरस्तम् ।

[3]असङ्गत्वश्रुतिविरोधेनोपाधिसम्बन्धस्यैवानभ्युपगन्तव्यत्वात् । आकाशापरिच्छेदं स्फटिक-शौक्ल्यं च प्रत्यक्षादिप्रमाणेन निश्चिन्वतः उपाध्यन्वयव्यतिरेकानुविधानेन परिच्छेदलौहित्याद्यनुभववत् जीवेश्वराभेदरूपापविच्छेदं जीवानां परस्पराभेदं च मानान्तरेण निश्चिन्वतोऽविद्याद्युपाध्यन्वयव्यतिरेका-नुविधानेन विपरीताकारनिश्चयाभावेन तत्र तस्योपाधित्व एव मानाभावाच्च । अन्यथाऽत्मसत्त्वादेरपि औपाधिकत्वापत्तेः । भेदग्राहिप्रत्यक्षादिविरुद्धतया योग्यताविरहेण श्रुतेरात्मैक्यानिश्चायकत्वात् ।

---

१. पा.सू. ५-३-४२ २. 'तान्वन्नस्य मायया' इत्यादौ मायाशब्दस्य सामर्थ्यार्थकत्वदर्शनात् ।

३. असङ्गश्रुत्यनुरोधेन

नन्वीश्वराभिधं परमात्मचैतन्यमेकं सर्वगतं चेत्यविवादं तस्य परिच्छिन्नाविद्यान्तःकरणादिनाऽऽकाशस्य परिच्छिन्नघटमठादिनेवावच्छिन्नत्वमावश्यकम् । तथा घटाद्यवच्छिन्नाकाशानाम् अन्योन्यभेदवन्महाकाशभेदवच्चाविद्यान्तःकरणाद्यवच्छिन्नचैतन्यानामपि अन्योन्यभेदोऽनवच्छिन्नचैतन्यभेदश्चावश्यकः । तथा तद्वत्परिच्छिन्नत्वादिकमप्यावश्यकम् । तथा च अवच्छिन्नचैतन्यानां जीवत्वं महाचैतन्यस्य चेश्वरत्वमिति जीवेश्वरविभागस्य बद्धमुक्तादिव्यवस्थायाश्चोपपत्तौ स्वाभाविकचैतन्यनानात्वकल्पने गौरवं प्रमाणाभावश्चेति चेन्न । उक्तरीत्याऽज्ञानाद्यन्तःकरणाद्यवच्छेदकभेदप्रयुक्तचैतन्यभेदादेरावश्यकत्वेऽपि तस्य हस्तपादाद्यवच्छेदकभेदप्रयुक्तदेवदत्तजीवचैतन्यभेदस्यैव चैतन्यैक्यप्रयुक्तदुःखाद्यनुसन्धानाप्रतिबन्धकतया देवदत्तदेहावच्छिन्नजीवचैतन्यस्य पादाद्यवच्छेदकभेदभिन्नतत्तदवच्छिन्नतज्जीवचैतन्योत्पन्नसुखदुःखाद्यनुसन्धानवदीश्वराभिधमहाचैतन्यस्यापि देवदत्तशरीरान्तःकरणाज्ञानाद्यवच्छेदकभेदभिन्नजीवाभिधतत्तच्चैतन्योत्पन्नदुःखाद्यनुसन्धानप्रसङ्गात् । कृष्णारामाद्यनेकदेहावच्छिन्नेश्वरचैतन्यस्येव देवदत्तादिदेहाद्यवच्छिन्नजीवचैतन्यस्यापि सर्वज्ञत्वसर्वशक्तित्वापत्तेः । पादावच्छिन्नदेवदत्तजीवचैतन्यस्य हस्तावच्छिन्नतज्जीवचैतन्योत्पन्नसुखदुःखाद्युनसन्धानवद्देवदत्तजीवचैतन्यस्य यज्ञादत्तादिजीवचैतन्योत्पन्नसुखदुःखाद्यनुसन्धानप्रसङ्गाच्च ।

नन्वस्त्येव तत्तज्जीवचैतन्योत्पन्नसुखदुःखाद्यनुसन्धानमीश्वरस्य । न चैवमीश्वरचैतन्यस्य जीवचैतन्यवद्दुःखादिभोक्तृत्वेनानीश्वरत्वप्रसङ्गः । ईश्वरस्य विशेषदर्शितया तद्गतसु(दुः)खाद्यनुसन्धानस्य निश्चिताप्रामाण्यत्वादगृहीताप्रामाण्यसुखदुःकाद्यनुसन्धानस्यैव भोगरूपतयाऽनीश्वरत्वापादकत्वादिति चेत् । न । [1]उक्तरीत्यौपाधिकत्वे च तस्य भेदस्याकिञ्चित्करतयेश्वरचैतन्यगतविशेषदर्शनस्यैव देवदत्तहस्तावच्छिन्नजीवचैतन्यगतदुःखाद्यनुसन्धानस्यैव देवदत्तापरहस्तावच्छिन्नचैतन्यगतदुःखाद्यनुसन्धानवत् जीवचैतन्यगतभोगेषु विशेषदर्शनत्वेन जीवगतदुःखाद्यनुसन्धानस्यापीश्वरीयाप्रामाण्यनिश्चयमादायैव निश्चितप्रमाण्यत्वेन जीवस्यापीश्वरत्वप्रसङ्गात् । अन्यथा देवदत्तापरहस्तावच्छिन्नजीवचैतन्यस्य तदितरहस्तावच्छिन्नचैतन्यगतदुःखाद्यनुसन्धानाभावेन तन्निवृत्त्याद्यर्थप्रवृत्तिप्रसङ्गात् ।

किञ्चैवमीश्वरस्य विशेषदर्शितया प्रपञ्चगोचरतज्ज्ञानस्य निश्चिताप्रामाण्यत्वनियमेव प्रपञ्चनिवृत्त्यर्थं वा तदन्तर्गतजीवचैतन्यगतदुःखादिजनिवृत्त्यर्थं वा प्रवृत्तिर्न स्यात् । न हि भूतले घटाभावं पश्यन् तत्राहार्यघटज्ञानमस्तीत्येतावता तन्निवृत्त्याद्यर्थं प्रवर्तमानो दृष्टचरः । अत एव स्वमुखप्रतिबिम्बगतश्यामिकादिदर्शी विशेषदर्शनकाले तन्निवृत्त्याद्यर्थं न प्रवर्तते । अन्यथा तन्निवृत्त्यर्थमपि स प्रवर्तेत ।

ननु मायावी स्वमायाकार्यस्य मिथ्यात्वं पश्यन्नपि तन्निवृत्त्याद्यर्थ यथा प्रवर्तते तथा महामायावी परमेश्वरः स्वमायाकार्यस्य प्रपञ्चस्य मिथ्यात्वं पश्यन्नपि तन्निवृत्त्याद्यर्थं प्रवर्तत इति न काप्य-

---

१. उक्तरीत्यौपाधिकचैतन्यभेदस्य

नुपपत्तिरिति चेत् न । तत्रापि मणिमन्त्रौषधादिरूपस्वमायाप्रयुक्तज्ञानस्य गजतुरगाशीविषादेर्मिथ्यात्वनिर्णयकाले गजादिज्ञानाभावेन तत एव तन्निवृत्त्याद्यर्थं मायाविनो प्रवृत्तेः । गजादिज्ञानसत्त्वे च तस्य विशेषदर्शनकालीनपीतशङ्खज्ञानवन्निश्चिताप्रामाण्यत्वेन तद्गजादि निवृत्त्याद्यर्थं मायाविनो द्रष्टुर्वा प्रवृत्त्यसिद्धेः । सत्यत्वेन निश्चितस्य गजादिगोचरभ्रमस्यैव निवृत्त्याद्यर्थः प्रवृत्तेश्च । न च प्रपञ्चस्येव जीवगततत्तद्भ्रमस्येश्वरो न मिथ्यात्वं पश्यति । येन सत्यपि प्रपञ्चमिथ्यात्वनिश्चये तद्भ्रममिथ्यात्वानिश्चयेन तद्भ्रमगोचरानिश्चताप्रामाण्यज्ञानात्तद्भ्रमनिवृत्त्याद्यर्थं प्रवर्तेत । अन्यथा 'यः सर्वज्ञः सर्ववित् तुरीयं तत्सर्वदृक् सदे'त्यादि श्रुतिसिद्धसर्वज्ञत्वमीश्वरस्य न स्यात् ।

नन्वीश्वरस्याप्रामाण्यशङ्काशून्यप्रपञ्चमिथ्यात्वनिश्चयेऽपि प्रपञ्चगोचरव्यावहारिकसत्त्वनिश्चयस्यापि सत्त्वेन तन्निवृत्त्याद्यर्थं प्रवृत्तिरुपपद्यत इति चेत् न । अप्रामाण्यशङ्काशून्यग्राह्याभावमात्रनिश्चयस्यैव लाघवेन तादृशप्रवृत्त्यादिजननसमर्थग्राह्यमात्रनिश्चयविरोधित्वेन प्रतिपन्नोपाधौ त्रैकालिकनिषेधप्रतियोगित्वरूपप्रपञ्चमिथ्यात्वं निश्चिन्वतः परमेश्वरस्य तादृशप्रपञ्चसत्त्वनिश्चयायोगात् । अन्यथा घटवति भूतले कपाले तादृशघटाभावनिश्चयवतोऽपि तादृशघटनिश्चयप्रसङ्गात् । तस्मात् स्वाभाविक एव जीवेश्वरभेदोऽङ्गीकर्तव्यः । गौरवं च प्रामाणिकमिति ।

किञ्चाविद्यान्तकरणादेः दर्पणघटादिवत् प्रतिबिम्बोद्ग्राहित्वेन अवच्छेदकत्वेन वा जीवेश्वरभेदोपाधित्वे जीववदीश्वरस्यापि वास्तवैक्यप्रयुक्तं संसारित्वं दुर्वारम् । न चोपाधेरुपहितपक्षपातितया दर्पणघटाद्युपरस्वोपहितप्रतिमुखघटाकाशादावेव स्वगतश्यामत्वपरिच्छिन्नत्वाद्याधायकत्ववदविद्यान्तःकरणाद्युपाधेरपि स्वोपहितजीव एव संसाराधायकत्वं न त्वीश्वर इति वाच्यम् । तथा सति दर्पणे सुग्रीवास्यमुखे बिम्बत्वप्रतियोगिकभेदातिरिक्तधर्मानाधायकत्ववत् घटादेर्महाकाशे स्वोपहिताकाशप्रतियोगिकभेदातिरिक्तधर्मानाधायकत्ववच्चाविद्याद्युपाधेरीश्वरे बिम्बत्वस्वोपहितजीवप्रतियोगिकभेदातिरिक्तधर्मानाधायकत्वापत्त्या सर्वज्ञत्वसर्वशक्तित्वसर्वेश्वरत्वादिधर्माणां वियदादिप्रपञ्चस्य चाविद्याद्युपाधिप्रयुक्तत्वासम्भवेन सत्यत्वापत्तेः ।

किञ्च चैतन्यभेदोपाधित्वेनाभिमताविद्यादेः तदुपाधिकचैतन्यभेदस्य च अहमज्ञो नाहमीश्वर इत्यपरोक्षप्रतीतिविषयत्वान्यथानुपपत्त्या परोक्षैकरसस्य चैतन्याभेदस्यावश्यकत्वे तादृशचैतन्याभिन्नाविद्यादेस्तादृशचैतन्यभिन्नचैतन्यभेदोपाधित्वमयुक्तम् । 'तदभिन्नाभिन्नस्य तदभिन्नत्वनियमेन तयोरभेदात् । न हि स्वयमेव स्वोपहितं दृष्टचरम् । तयोश्चैतन्याद्भेदोऽप्यङ्गीक्रियत इति चेत् तर्ह्यविद्यादेश्चैतन्यभेदस्य च चैतन्यप्रतियोगिकानौपाधिकभेदाभेदवत् जीवेश्वरयोरप्यनौपाधिकभेदाभेदसम्भवेन जीवेश्वरभेदौपाधिकत्ववर्णनं व्यर्थम् ।

किञ्चैवमीश्वरस्य जीवजडाभ्यां भेदाभेदे तद्भेदाभेदप्रमाणयोरुभयोरप्यविरोधेनानौपाधिकभेदाभेदविषयत्वसम्भवेन जीवचैतन्यस्यैश्वरेण तादृशैकान्ताभेदासिद्धिप्रसङ्गः । जडस्य बाधायां सामानाधिकरण्यासिद्धिप्रसङ्गश्च । 'तत्त्वमसि सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतीनां वैरूप्येणैव जीवजडयोरनौपाधिकेश्वरैक्यपरत्वसम्भवात् । जडेश्वरयोर्मृद्घटयोरिव भेदाभेदाभ्युपगमेऽपि भेदविशिष्टजस्वरूपस्य 'नेहनानास्ति किञ्चने'ति श्रुत्या निषेधात् । 'सर्वं खल्विदं ब्रह्मे'त्यादिश्रुतेर्बाधायां सामानाधिकरण्यपरत्वाभ्युपगमे भेदविशिष्टजीवचैतन्यस्वरूपस्यापि 'नान्योऽतोऽस्ति द्रष्टे'त्यादिश्रुत्या निषेधात् । 'तत्त्वमसी'त्यादि श्रुतेरपि विशेषहेत्वभावेन बाधायां सामानाधिकरण्यपरत्वाभ्युपगमप्रसङ्गात् । एतेनोपाधित्वेन अभिमतानां बिम्बत्वाभिमते स्वधर्मान्यबिम्बत्वरूपधर्माधायकत्ववत्तादृशधर्मान्तराधायकत्वाविरोधाद्बिम्बभूतेश्वरचैतन्ये उपाधित्वेनाभिमताविद्यान्तःकरणादे स्वधर्मान्यसर्वज्ञत्वादिरूपधर्माधायकत्वमविरुद्धम् ।

## ईश्वरसार्वज्ञत्वादिकमनौपाधिकमिति समर्थनम्—

एवं च मुखभेदमुखं प्रति मुखत्वप्रतिमुखश्यामत्वादिधर्माणां दर्पणाद्यौपाधिकत्ववन्मुखभेदस्थानाभिषिक्तचैतन्यभेदमुखप्रतिमुखत्वस्थानाभिषिक्तजीवेश्वरत्वप्रतिमुखश्यामत्वादिधर्मस्थानाभिषिक्तजीवसंसारित्वबिम्बमुखत्वस्थानाभिषिक्तेश्वरसर्वज्ञत्वादिधर्माणामप्यविद्याद्यौपादिकत्वसम्भवेन न तेषां सत्यत्वापत्तिः । तदौपाधिकत्वं च स्फटिकलौहित्यादिवत् योगक्षेमसाधारणमुपाध्यन्वयव्यतिरेकानुविधायित्वमात्रमिह विवक्षितम् । न तु अन्यत् । ततश्च चैतन्यस्य वस्तुतो निर्विशेषत्वेऽपि उपाधिप्रयुक्तसविशेषत्वाभ्युपगमेऽप्यस्माकं न काऽप्यनुपपत्तिरिति निरस्तम् ।

लोकसिद्धदर्पणाद्युपाधीनां बिम्बप्रतिबिम्बयोः यज्जातीयधर्माधाने एव सामर्थ्यं दृष्टम् । तदनुलङ्घनेनैव वेदसिद्धाविद्याद्युपाधीनामपि बिम्बप्रतिबिम्बयोस्तज्जातीयधर्माधान एव सामर्थ्यस्य कल्प्यत्वात् । कल्पनाया दृष्टानुसारित्वात् । अन्यथा वेदसिद्धोपाधीनां प्रतिबिम्ब एव पक्षपात इति लोकसिद्धमर्यादोल्लङ्घनेन वैपरीत्येनैव तत्कल्पनाप्रसङ्गात् । अपि चेश्वरसार्वज्ञादिकमनौपाधिकमेवाभ्युपेयम् । न त्वौपाधिकम् । तथात्वे "परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च" इति श्रुतिविरोधादित्युक्तम् । अपि च जीवेश्वरयोर्जीवानां चान्योन्यभेदो नौपाधिकः । तस्याविद्यान्तःकरणाद्युपाध्यन्वयव्यतिरेकानुविधायित्वाभावात् । "नित्यो नित्यानां चेतनश्चेतनानामि'त्यादि जीवेश्वरनित्यत्वचेतनबहुत्वैकत्वनियम्यनियामकभावावेदकश्रुतिविरोधाच्च । श्रुतिगतेन 'नित्यानां चेतनानामि'ति षष्ठीबहुवचनेन नृणां नृषु वा द्विजः श्रेष्ठः गवां गोषु वा कृष्णगौर्बहुक्षीरा गच्छतां गच्छत्सु वा यावच्छीघ्र इत्यादिनेव जातिगुणक्रियादिभिरेकदेशविवेचनस्य श्रेष्ठादिपादाभावेनाप्रतीयमानतया तस्य 'यतश्च निर्धारणमि'ति शास्त्रविहितनिर्धारणषष्ठीबहुवचनत्वासम्भवेन नियम्यनियामकभावरूपसम्बन्धार्थकत्वसम्भवेन च

तत्प्रतिपादकषष्ठीबहुवचनताया एव न्याय्यतया तत्प्रतिपद्यनियम्यनियामकभावस्य बहुत्वस्य च विनाऽनौपाधिकभेदमयोगात् । [1]"जक्षन्क्रीडन्नममाणस्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वाऽज्ञातिभिर्वा यत्प्रयन्त्यभिसंविशन्ति, इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः", "सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्ति चे" त्यादिश्रुतिस्मृतिभिर्मुक्तिदशायामपि मुक्तबहुत्वावेदनेन तस्य च भेदं विनाऽयोगेन मुक्तभेदस्वाभाविकताया दुर्निवारत्वाच्च ।

किञ्च प्रतियोग्यनुयोगिनोर्विद्यमानत्वदशायां तत्प्रतियोगिकानुयोगिकान्योन्यभेद उपाधित्वाभिमतनिवृत्त्यानिवर्तमानो न क्वचिद्दृष्टः । येन प्रतियोग्यनुयोगिनोर्जीवेश्वरयोर्विद्यमानत्वेऽपि तद्भेदस्याविद्याद्यौपाधिकत्वमङ्गीकृत्याविद्याद्युपाधिनिवृत्त्या निवृत्तिरङ्गीक्रियते ।

ननु घटाकाशमठाकाशयोर्भेदः तादृशो दृष्ट इति चेन्न । विशिष्टं पदार्थान्तरमिति मते घटाकाशमठाकाशयोर्विद्यमानतादशायां भेदस्यैव सत्त्वेन घटनिवृत्त्या तन्निवृत्तेरेवाभावात् । मतान्तरे तु घटाकाशमठाकाशयोरैक्यग्राहकप्रमाणविरोधेन भेदप्रतीतेरेवासम्भवात् । कदाचिज्जायमानाया भेदप्रतीतेर्वर्णभेदप्रतीतिवत् परम्परासम्बन्धेनोपाधित्वाभिमतघटादिभेदविषयत्वात् घटाकाशमठाकाशयोरैक्यग्राहकप्रमाणानवतारदशायां जायमानभेदप्रतीतेर्विभ्रमत्वात् । तथा च यद्यविद्यान्तःकरणादिविशिष्टो जीवः विशिष्टं च पदार्थान्तरं तदा जीवेश्वरयोः प्रतियोग्यनुयोगिनोर्यावत्सत्त्वं भेदस्यैव सत्त्वेन न कस्यचिन्निवृत्त्या तन्निवृत्तिः विशिष्टस्य जीवत्वे मुक्त्यन्वयाद्यनुपपत्तिश्च ।

यदि चान्तःकरणाद्युपहितस्तदुपलक्षितो वा जीवस्तदा जीवेश्वरैक्यग्राहिप्रमाणविरोधेन भेदप्रत्यय एव दुर्लभः । कथञ्चित्सुलभत्वे वर्णभेदप्रत्ययवत्परम्परासम्बन्धेनोपाधिभेदविषय एव स्यात् । जीवेश्वरयोरैक्यग्राहिप्रमाणानवतारदशायां जायमानस्तद्भेदप्रत्ययो विभ्रम एवेति सर्वथा प्रतियोगित्वानुयोगित्वाभिमतजीवेश्वरयोस्सत्त्वदशायां तद्भेदस्य न तदुपाधित्वाभिमतस्य निवृत्त्या निवृत्तिरिति नित्य एव जीवेश्वरभेदोऽङ्गीकार्यः । न च निवृत्तिप्रतियोगित्वरहितत्वे सति प्रामाणिकत्वादन्यन्नित्यत्वं नामास्ति ।

किञ्च 'एष नित्यो महिमा ब्राह्मणस्य, ज्ञानं नित्यं बलं नित्यं क्रिया नित्या परात्मन' इत्यादि श्रुत्या सर्वनियामकत्वरूपोत्कर्षापरनामकेश्वरमहिम्नः तत्समनियतेश्वरज्ञानादेश्च नित्यत्वेनावगतस्य स्वप्रयोजकनियम्यनियामकभेदनित्यत्वं विनाऽयोगः ।

न च "विभेदजनके ज्ञाने" इति स्मृत्या जीवेश्वरभेदस्य योगक्षेमसाधारणज्ञानजन्यतायास्तन्निवृत्त्या निवृत्तेश्च । प्रतीतेस्तस्याज्ञानं निवृत्त्यधीननिवृत्तिप्रतियोगितया तदुपाधिकत्वमेवाङ्गीकार्यमिति वाच्यम् । 'नित्यो नित्यानामि'ति श्रुतिप्रतिपन्ननित्यचैतन्यबहुत्वान्यथानुपपत्तिप्राप्तनित्य-

१. छां. ८-१२-३

भेदस्य दुर्निवारतया तदविरोधाय 'विःपक्षिपरमात्मनोरि'त्यभिधानाद्भिभेदजनके कृष्णरामादिपरमात्म-स्वरूपभेदजनके तद्भेदभ्रमजनकेऽज्ञाने विशेषादर्शने विशेषदर्शनेनैत्यन्तिकं नाशं गते सति ब्रह्मणो देशतः कालतो गुणतश्च परिच्छेदरहितस्यात्मनः उक्तविशेषणबलात्परमात्मनो भेदं भेदभ्रमं कः करिष्यति को वा दोषः करिष्यति विशेषादर्शनरूपदोषस्य भ्रमब्रह्ममात्रानुगतस्य तद्भेदभ्रमजनकस्य विशेषदर्शनेनात्यन्तिकं सवासनं नाशादित्यर्थपरताया एवाश्रयितव्यत्वेन तत्स्मृतेर्जीवेश्वरभेदाज्ञानो-पाधिकत्वप्रतिपादनपरत्वासम्भवात् ।

"प्रपञ्चो यदि विद्येत निवर्तेत न संशय" इत्यादि तर्कात्मकश्रुत्योक्तरीत्या भेदप्रपञ्चस्य विप-र्ययपर्यवसानमुखेन औपाधिकत्वं निराकृत्यानिवर्त्यत्वस्यैव व्यवस्थापितत्वाच्च । 'अविद्यायामन्तरे वर्तमानाः नान्यच्छ्रेयो वेदयन्ते' इत्यादिश्रुतिबलात्संसारदशापन्नश्रेयो विलक्षणश्रेयसो मुक्तिदशायामपि प्रतीत्या मुक्तिदशापन्नात्मस्वरूपवच्छ्रेयोऽन्यत्वस्य तद्भेदस्यानौपाधिकताया दुर्निवारत्वाच्च ।

'सायं गोष्ठे सर्वे गाव एकीभवन्ती'तिवत् 'परेऽव्यये सर्व एकीभवन्ती'ति श्रुत्या स्थानैक्यप्रयुक्ता-मुख्यैक्यप्रतीतेराधाराधेयभावप्रतीतेश्च । इदानीमिव मुक्तिदशायामपि जीवपरमात्मनोर्जीवानां च परस्पर-भेदस्यावश्यकत्वाच्च । 'सङ्घीभवन्ति ब्राह्मणा' इत्यादाविव मुख्यप्रकृतिविकारभावाभावेऽपि च्विप्रत्ययो-पपत्तेः । न हि परेणापि जीवब्रह्मणोर्मुख्यप्रकृतिविकारभावः स्वीकृतः । एतेन जीवेश्वरभेदस्तत्प्रतिभास-श्चाविद्याद्यौपाधिक एव । तदुपाधिकत्वं च तयोरविद्यानिवृत्तिनियतनिवृत्तियोगित्वमिति निरस्तम् ।

'नाहमीश्वरो नाहं सर्वदृगि'त्यादिजीवेश्वरभेदप्रतिभासस्य नित्यनिर्दोषसाक्षिप्रत्यक्षरूपत्वेनौपा-धिकत्वायोगात् । क्षराक्षरभिन्नत्वेन स्वात्मदृष्टतया "द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः" इत्यादिस्मृतिप्रतिपन्नस्य भागवतः श्रीकृष्णस्य भ्रान्तत्वापातेनौपाधिकभेददर्शिताया अनभ्युपगन्तव्यत्वाच्च । जीवेश्वरयोः स्वाभाविक-भेदाभावे विशेषदर्शिनः कृष्णस्य स्वव्यतिरिक्तासत्त्वदर्शितार्जुनं प्रति "द्वाविमौ पुरुषौ लोक" इत्यादि "सर्वभावेन भारते"त्यन्तं उपदेष्टृत्वानुपपत्तेश्च । तदेवं जीवेश्वरभेदस्यौपाधिकत्वासम्भवात् तद्भेदः स्वाभाविक एव वाच्यः । एवं नियतजीवत्वेश्वरत्वासर्वज्ञत्वसर्वज्ञत्वादिधर्मा अपि स्वाभाविक एव वाच्याः । तथा च वह्निरनुष्णो नेति त्वचा, तेजस्तिमिरं नेति चक्षुषा, वानुष्णभिन्नत्वं तमोभिन्नत्वं वा निश्चिन्वतः पदार्थत्वादिहेतुना स्वसमानविषयकप्रत्यक्षेण बाधितविषयतया यथा तत्रानुष्णजलाभेद-स्तिमिराभेदो वा न सिद्ध्यति ।

एवं 'तुरीयं तत्सर्वदृक्सदा', 'यस्सर्वज्ञः सर्ववित्', 'सत्यकामः सत्यसङ्कल्पः', 'परास्य शक्तिर्विविधैव श्रूयते', 'विचित्रशक्तिः पुरुषः पुराणो', 'न चान्येषां शक्तयस्तादृशाः स्युः', 'यतो वा

इमानि भूतानि जायन्ते', 'तद्ब्रह्मे'त्यादि श्रुतिभिः सर्वदृक्त्वादिरूपेण प्रतियोगिभूतमीश्वरं जानतो नाहं सर्वदृक् नाहं सर्वज्ञ इत्याद्याकारकनित्यनिर्दोषस्वतःप्रमाणभूतपरीक्षितसाक्षिप्रत्यक्षेण स्वस्मिन्नीश्वर-प्रतियोगिकानौपाधिकभेदं निश्चिन्वतश्चेतनत्वादिहेतुना स्वसमानविषयकसाक्षिप्रत्यक्षेण बाधितविषय-तया जीवेश्वराभेदो न सिद्ध्यतीति स्थितम् । तदुक्तम्— "तत्त्वम्पदार्थयोर्भेदे प्रत्यक्षप्रमिते सति । तयोरभेदबोधाय न शक्ता बाधितानुमे"ति ॥

यत्त्वत्र नवीनैरुक्तम् । नाहमीश्वरो नाहं सर्वज्ञ इति जीवेश्वरभेदज्ञानं न तावत्प्रत्यक्षं, तद्धि न तावच्चक्षुरादिबहिरिन्द्रियजन्यप्रत्यक्षम् । चक्षुरादेरात्मधर्मग्रहे सामर्थ्याभावात् । अनभ्युपगमाच्च । नापि मनोजन्यप्रत्यक्षम् । तस्य कालादिवत्प्रमाणसहकारित्वेन प्रमाणत्वासम्भवात् । न च सुखदुःखद्युपलब्धेः प्रमाणान्तराजन्यतया परिशेषान्मनसः एव तत्र कारणत्वकल्पनात् प्रामाण्यमवर्जनीयमिति वाच्यम् । तस्याः साक्षिप्रत्यक्षानुभवरूपत्वेन परिशेषानवतारात् । मनसः जीवधर्मिकेश्वरप्रतियोगिकभेदेन सन्नि-कर्षानिरूपणाच्च । संयोगादेरसम्भवात् । न च विशेषणतासन्निकर्षः व्यवहितप्रदेशेऽप्यभावप्रत्यक्ष-प्रसङ्गात् । न चाधिकरणेन्द्रियसन्निकर्षोऽपि तत्र कारणम् । परमते शब्दाभावस्याप्रत्यक्षत्वप्रसङ्गात् । न च यत्र प्रतियोगिनः सत्त्वं तर्कितं सत् तदुपलब्धिमापादयति । तद्विशेषणताभावस्येन्द्रियप्रत्या-सत्तिरिति वाच्यम् । कदाचित्प्रतियोगिभूतघटाद्युपलम्भापादनस्य व्यवहितदेशेऽपि सम्भवेन तत्रापि तदभावप्रत्यक्षप्रसङ्गात् । नियमेन तदुपलम्भापादनस्य श्रोत्रे मन्दशब्दसत्त्वेऽपि तारशब्दादिना प्रति-बन्धादनुपलम्भदर्शनेन शब्दाभावप्रत्यक्षस्थलेऽप्यभावात् । विशेषणताया इन्द्रियप्रत्यासत्तित्वे माना-भावाच्च । भूतले घटाद्यभावप्रतीतेरनुपलब्धिमात्रादप्युपपत्तेः ।

न च एवं ज्ञानाकरणकत्वेन प्रत्यक्षस्यावश्यकत्वेन तस्येन्द्रियजन्यत्वमपि आवश्यकमिति वाच्यम् । प्रत्यक्षत्वे ज्ञानाकरणत्वस्याप्रयोजकत्वात् । ज्ञानकरणकस्याप्यनुमित्यादेः शाब्दत्वव-ज्ज्ञानाकरणकस्याप्यभावज्ञानस्य परोक्षत्वोपपत्तेः । न चैवं प्रमाणान्तरकल्पनागौरवम् । घटाद्यभाव-प्रमायां कारणत्वेन त्वदभ्युपगतानुपलब्धिमात्रस्य तद्विशेषकरणत्वकल्पने लाघवात् । प्रत्युताक्लृप्तेन्द्रिय-कारणत्वतद्विशेषकारणत्वयोः कल्पने विशेषणताया अक्लृप्तेन्द्रियप्रत्यासत्तित्वज्ञानहेतुत्वयोः कल्पने एव च बहुगौरवात् । न च समवायस्थल एव तत्कल्पनं, तस्याप्रामाणिकत्वात् । तादात्म्ये च न प्रत्या-सत्यन्तरापेक्षा । तस्य साक्षिभास्यत्वाभ्युपगमात् । निरवयवस्यात्मनः संयोगासम्भवान्न तत्र भेद-स्येन्द्रियसंयुक्तविशेषणताप्रत्यासत्तिः । संयोगस्य व्याप्यवृत्तित्वानभ्युपगमात् । एकत्र भावाभावयो-र्विरोधेनाव्याप्यवृत्तिसंयोगस्याप्यसम्भवात् । आत्मनो निरवयवत्वेन तत्र मनःसंयोगतदभावौ प्रत्यव-च्छेदकस्य कस्यचिदवयवस्य वृक्षे कपिसंयोगतदभावौ प्रत्यवच्छेदकस्य मूलादिरूपस्येवाभावात् ।

वस्तुतस्तु न वृक्षे कपिसंयोगतदभावौ विरोधात् । किन्तु शाखाग्रादिरूपोपाधिकृतभेदवति तत्तत्प्रदेशविशेष एवाग्रे वृक्षः कपिसंयोगवान् मूले नेत्युपहिततत्प्रदेश एव तयोरनुभवात् । न च शाखाग्रादेः संयोगतदभावावच्छेदकतया तयोर्भिन्नाभिन्नावच्छेदेनैकत्रैव वृक्षे सत्त्वेऽप्यविरोध इति वाच्यम् । एकत्रैव तत्तदभावयोः सत्त्वे शाखादेरवच्छेदकत्वेनाभिमतस्य अवच्छेद्यत्वेनाभिमतसंयोगाद्य-भाववद् अवृत्तित्वगर्भस्य तत्परिचायित स्वरूपसम्बन्धरूपस्य वाऽवच्छेदकत्वस्यासम्भवात् ।

न च एवमात्मनि निरवयवेऽवयवत्वरूपोपाधिकृतप्रदेशभेदः सम्भवति एकत्रैवात्मनि संयोग-तदभावयोरवच्छेदभेदेन वृत्तिरविरुद्धेत्युच्यते । तस्मान्न मनसो 'न' जीवेश्वरभेदेन सम्बन्धः । नापि मनसः सहकारियोग्यानुपलम्भोऽस्ति । ईश्वरस्य प्रत्यक्षायोग्यत्वात् । प्रत्यक्षयोग्यस्यानुपलब्धिर्हि योग्या-नुपलब्धिः प्रतियोगितद्व्याप्येतरयावत्तदुपलम्भकसमवधानकालीनत्वरूपयोग्यत्वस्यानुपलब्धिविशेषण-त्वेऽपि उपलम्भकपदस्य प्रत्यक्षरूपोपलम्भहेतुपरताया आवश्यकत्वेनोक्तयोग्यत्वविशिष्टानुपलब्धेरपि प्रत्यक्षयोग्यप्रतियोगिकाभावस्थल एव सत्त्वेनान्यत्र तदभावात् ।

उपलम्भकपदस्य प्रत्यक्षपरोक्षसाधारणज्ञानहेतुमात्रपरत्वेऽन्धकारे घटानुमित्यादिसामग्रीसत्त्व-कालेऽपि घटाभावप्रत्यक्षप्रसङ्गात् । अत एवोपलम्भकपदस्य प्रत्यक्षरूपोपलम्भहेतुमात्रपरत्वादेव अती-न्द्रिये घटत्वाद्यभावो न प्रत्यक्षः । घटे मनस्त्वाभावज्ञानं च परमाणुत्वं नास्तीति ज्ञानवन्न प्रत्यक्षम् । न च प्रकृते नाहमीश्वर इति भेदप्रतीतिदशायामीश्वरप्रत्यक्षहेतुसकलसमवधानमस्ति । त्वन्मतेऽन्या-त्मनोऽन्यात्मानं प्रत्ययोग्यत्वात् । मन्मतेऽपि तत्कालीन मन आदेस्तत्प्रत्यक्षजननायोग्यत्वात् ।

यत्तु 'यत्र यत्सत्त्वमनुपलब्धिविरोधि तत्र तदभावः प्रत्यक्ष इति योग्यानुपलब्धिनिर्वचनम्' तदसत्। प्रतियोगिसत्त्वस्यानुपलब्धिविरोधित्वं हि अभावदेशे प्रतियोग्युपलम्भव्याप्यत्वम् । एवं च यत्र क्वचित्प्रतियोगिसत्वस्याभावदेशीयप्रतियोग्युपलम्भव्याप्यत्वासम्भवेनाभावदेशीयं प्रतियोगिसत्त्वं तत्र तदुपलम्भव्याप्यं वक्तव्यम् । तच्च न सम्भवति । 'अभावाधिकरणे प्रतियोगिवैशिष्ट्यसत्त्वेऽभावप्रमा-नुपपत्तेः । तर्कितं तत्र तत्सत्त्वमनुपलब्धिविरोधीति चेत् । तर्कितस्यापि प्रतियोगिसत्त्वस्य तस्य वास्तवत्वे पूर्वोक्तदोषात् । अवास्तवत्वे च तस्य नृशृङ्गादिवदत्यन्तासत्त्वेनोपलम्भव्याप्यत्वासम्भवात् ।

न च तस्य अभावदेशेऽसत्त्वेऽपि अन्यत्र सत्त्वाद्दोष इति वाच्यम् । तर्हि तत्रैव तत्सत्त्वनुप-लब्धिविरोधि न त्वभावाधिकरणे । न च प्रतियोगिसत्त्वस्य स्वधिकरणे प्रतियोग्यनुपलम्भविरोधित्व-मस्तीत्येतावताऽन्यत्राभावप्रत्यक्षं सम्भवति । अतीन्द्रियपरमाण्वादिष्वपि घटाद्यभावप्रत्यक्षप्रसङ्गात् । न च यत्र यत्सत्त्वापादनेन यदुपलम्भ आपादयितुं शक्यते तत्र तदभावः प्रत्यक्ष इति वाच्यम् । असताऽऽपादितेन प्रतियोगिवैशिष्ट्यरूपसत्त्वेन प्रतियोग्युपलम्भव्याप्तिरहितेन तदापादनायोगात् ।

अन्यत्र सता प्रतियोगिवैशिष्ट्येनाभावाधिकरणे तदुपलम्भप्रसङ्गनाऽयोगात् । अभावग्राहकेण पुंसाऽन्यदेशीयप्रतियोगिवैशिष्ट्यस्याग्रहणेन तस्यानुपलब्धिविरोधानुपस्थितेश्च ।

किञ्चापादनशक्तिः प्रमेयगतव्याप्तिरूपा वा तज्ज्ञानरूपा वा । न चासद्वैशिष्ट्यनिरूपिताव्याप्तिरस्तीति तज्ज्ञानरूपैव प्रकृते वाच्या । ततश्चाभावधीपूर्वं नियमेन व्यतिरेकव्याप्तिर्ज्ञातेति वह्न्यादाविवाभावेऽनुमितिरेव स्यात् न प्रत्यक्षम् । किञ्चैवमपि प्रत्यक्षयोग्यशब्दादेरेवाभावः प्रत्यक्षोऽस्तु न त्वतीन्द्रिये मनस्त्वाद्यभावः । मनस्त्वादेर्घटे तर्कितसत्त्वस्य तद्व्यापकाणुत्वापादने तदुपलम्भाविरोधित्वात् । किञ्च सहकार्यभावेन सतोऽपि ब्राह्मणत्वादेरनुपलम्भवत् जीवे ब्रह्माभेदस्य सतोऽपि सहकार्यभावादनुपलम्भोऽस्तु । तत्र लौकिकोपदेशादिवदत्रापि 'आचार्यवान् पुरुषो वेद श्रोतव्यो मन्तव्य' इत्यादिना सहकारिणः प्रमितत्वात् ।

न च जीवाभेद इव जीवे विद्यमानब्रह्माभेदेऽपि मनसः सहकार्यपेक्षैव न स्यादिति वाच्यम् । जीवत्वादेर्मनोमात्रयोग्यतया तद्विशिष्टाभेदस्य सहकारिनिरपेक्षमनोग्राह्यत्वेऽपि सर्वात्मत्वयोग्यत्वादेस्तदयोग्यतया तदात्मकब्रह्माभेदे सहकार्यन्तरापेक्षोपपत्तेः । अन्यथा जीवेऽदृष्टवदभेदानुपलम्भात्तद्भेदोऽपि न स्यात् । अपि च तमसा घटस्येव [1]"मायया ऽपहृतज्ञाना [2]अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः । भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेदि"त्यादिस्मृत्या, "नीहारेण प्रावृता जल्प्या च, अनृतेन हि प्रत्यूढा" इत्यादिश्रुत्या चाज्ञानेनावृतत्वप्रतीतेः जीवब्रह्माभेदस्य नानुपलम्भः सत्त्वविरोधी ।

किञ्च "मनो न जीवब्रह्माभेदग्रहणयोग्यं [3]यन्मनसा न मनुते" इत्यादिश्रुतेः । किन्तु तत्त्वोपनिषदं पुरुषं "सर्वे वेदा यत्पदमामनन्ती"त्यादि श्रुत्या "वेदैकसमधिगम्यं ब्रह्मे"ति तदभेदोऽपि तत्स्वरूपमात्ररूपत्वान्न मनोग्रहणयोग्यम् । तथा चादृष्टवद्भेदवत् ब्रह्मभेदोऽपि न प्रत्यक्षः ।

## ईश्वरत्वं नाम किमिति विचारः—

किञ्च किमिदमीश्वरत्वं यद्विशिष्टाभेदानुपलम्भात् तद्भेदो जीवे मानसप्रत्यक्ष इत्युच्यते । न तावज्जातिः । एकव्यक्तौ तदभावात् । न च लौकिकेश्वरसाधारणमीश्वरत्वं जातिरिति वाच्यम् । समयभेदेन चेतनमात्रे तदस्तीति आत्मत्वात्तस्य भेदानुपपत्तेः । लौकिकेश्वराणां तद्भेदाननुभवप्रसङ्गाच्च ।

नापि द्व्यणुकादिकर्तृत्वं तद्विशिष्टस्य अतीन्द्रियतया तद्भेदस्य सत्त्वेऽप्यनुपलम्भोपपत्तेः । नापि नित्यज्ञानवत्त्वं स्वनित्यताया इव ज्ञाननित्यताया अपि प्रत्यक्षायोग्यत्वात् । नापि सर्वज्ञत्वम् । सर्वविषयकज्ञानवत्त्वरूपस्य तस्य जीवेऽप्युपलम्भात् । नित्यसर्वविषयकज्ञानवत्त्वं नोपलभ्यते इति चेत् तदत्रोत्तरत्वात् । जीवज्ञाने नित्यत्वभ्रमदशायां तद्वैशिष्ट्यस्यापि जीवेन स्वस्मिन्नुपलभ्यमानत्वाच्च ।

---

१. भ.गी. ५-१५ २. केन १-५ ३. भ.गी. ५-१५

ज्ञानार्थयोर्विषयविषयिभावसम्बन्धः स्वरूपमात्रमिति पक्षे सर्वं ज्ञानं सर्वविषयमेवेति निश्चयदशायां तदनुपलम्भाभवेन ईश्वरभेदग्रहो न स्यात् । अस्ति च तदापि सः किञ्च *ज्ञानस्याव्याप्यवृत्तित्वात् सर्वज्ञत्वादेः जीवात्मरूपेश्वरप्रदेशावृत्तित्वेनाप्यनुपलम्भोपपत्तेर्न तदधिकरणे भेदग्रहः सम्भवति । न हि मूलावच्छेदेनाग्रभागो न सम्भवतीति तदुभयाधिकरणभेदप्रमा सम्भवति ।

किञ्चाहमिहैवास्मीति परिच्छिन्नतयानुभूयमाने जीवे भेदोऽनुभूयते नाहमीश्वर इति । न च निरुपाध्यात्मनः परिच्छेदः सम्भवति । अणुत्वे आत्मनः सर्वशरीरव्यापि सुखाद्युनुपलम्भप्रसङ्गात् विरुद्धदेशद्वये युगपत्सुखाद्युपलम्भप्रसङ्गाच्च ।

स्वाभाविक**मध्यमपरिमाणवत्त्वे चानित्यत्वाद्यापत्तिः । अतो घटाकाशवदौपाधिक एव परिच्छेद इति तद्गतभेदोऽप्यौपाधिक इति न तस्य सत्त्वं न वा निरुपाधिता अपि चाहङ्कारः अनात्मा दृश्यत्वात् घटवत् । न चाप्रयोजकत्वं लाघवेन दृश्यत्वस्यैवानात्मत्वेन व्याप्तत्वादिति पक्षधर्मताबलादतिरिक्तात्मसिद्धिः । तथाचानात्मरूपाहङ्कारविशिष्टस्तदुपहितो वा भिन्नतया प्रतीयत इति नाहमीश्वर इति प्रत्यक्षं न निरुपाधिकजीवभेद प्रामाणमिति तन्न । नाहमीश्वर इत्यादि प्रतीतेरावाभ्यां साक्षिप्रत्यक्षरूपत्वाङ्गीकारेण इन्द्रियजन्यत्वाभावेनोक्तदोषानवकाशात् ।

अस्तु वा मानसप्रत्यक्षरूपत्वं तस्याः तथापि नोक्तदोषावकाशः । तथा हि । तत्र यदुक्तं मनसः कालादिवत् प्रमाणसहकारितया न प्रमाणत्वमिति, तन्न । ज्ञातं लिङ्गं करणामिति पक्षे चक्षुरूपप्रत्यक्षसकारित्वेऽपि आलोकस्यानुमितिरूपप्रमितिकरणत्वेनानुमानरूपप्रमाणत्ववत् लिङ्गज्ञानं करणमिति पक्षेऽपि लिङ्गपरामर्शस्य स्वजन्यानुमित्यव्यवहितोत्तरक्षणभाविसमानविषयकपरामर्शजनकचक्षूरूपप्रत्यक्षप्रमाणं प्रति विशेषणज्ञानत्वेन सहकारित्वेऽप्यनुमानरूपप्रमाणत्ववच्च मनसश्चक्षुरादिरूपप्रमाणान्तरसहकारित्वेऽपि प्रमाणत्वाविरोधात् ।

ननु प्रमाणान्तरसहकारिणोऽपि ज्ञातलिङ्गलिङ्गिज्ञानादेरनन्यथासिद्धानुमित्यादिरूपप्रतीत्यन्तरस्य तत्प्रामाण्योपपादकस्य सत्त्वेनास्तु प्रामाण्यं, मनसस्तु कथं प्रामाण्यम् । तदुपपादकानन्यथासिद्धप्रमितेरभावात् । सुखदुःखादिसाक्षात्कारस्य साक्षिरूपतया करणनिरपेक्षत्वादहमित्याद्यात्मानुभवस्यापि स्वप्रकाशात्मस्वरूपज्ञानत्वेन प्रमाकरणत्वरूपमनःप्रामाण्यानुपपादकत्वाच्चेति चेत् । तर्हि तदेवोच्यताम् । किं प्रमाणान्तरसहकारित्वोपन्यासेनानन्यथासिद्धप्रमितिरूपफलसत्त्वासत्त्वयोरेव प्रामाण्यतदभावौ प्रति प्रयोजकत्वेन प्रमाणान्तरसहकारित्वतदभावयोस्तत्राप्रयोजकत्वात् । अस्त्वेवमिति चेत् न ।

* स्वात्यन्ताभावसमानाधिकरणत्वात् । तच्च आत्मनि शरीरावच्छेदेन ज्ञानं घटाद्यवच्छेदेन तदभावः ।

** यन्मध्यमपरिमाणं तदनित्यमिति व्याप्तेः सत्त्वात् ।

मोक्षसाधनीभूतात्मतत्त्वसाक्षात्कारस्यैवानन्तथासिद्धस्य मनःप्रामाण्योपपादकस्य सत्त्वेन तत्प्रामाण्यस्य दुर्निवारत्वात् । न च तस्यापि शब्दकरणत्वेनान्यथासिद्धत्वं शब्दस्य, यवाङ्कुरं प्रति कलमबीजस्येवा-परोक्षप्रमां प्रत्येव स्वरूपायोग्यत्वात्। अन्यथा तस्य प्रत्यक्षरूपप्रमाकरणत्वेन प्रत्यक्षप्रमाण एवा-न्तर्भावापत्तेः।

ननु परोक्षज्ञानकरणत्वाविशेषेऽपि शब्दानुमानयोरन्यतरस्य यथा नान्यस्मिन्नन्तर्भावः एवं शब्दस्य प्रत्यक्षवदपरोक्षवदपरोक्षज्ञानकणत्वाविशेषेऽपि न प्रत्यक्षेऽन्तर्भावः । अन्यथा शब्दानुमानयोरपि परोक्ष-ज्ञानकरणत्वेन एकप्रमाणविभाजकोपाध्यवच्छिन्नत्वापत्तेः । न च शब्दानुमानयोः परोक्षज्ञानकरणत्वस्य तुल्यत्वेऽपि शाब्दानुमितिरूपविजातीयप्रमितिकरणत्वे न परस्परानन्तर्भावो युक्तः । शब्दस्य तु परोक्षज्ञानजनकत्वमात्रस्याभावस्यापरोक्षप्रमितिकरणत्वाङ्गीकारे विजातीयप्रमितिकरणत्वाभावेन प्रत्यक्षेऽन्तर्भावो दुर्वार इति वाच्यम् । गेहे घटोऽस्तीत्यादिशब्दकरणकज्ञानस्य परोक्षत्वेऽपि शाब्दत्व-वद्वेदान्तरूपशब्दजन्यज्ञानस्यापरोक्षत्वेऽपि शाब्दत्वसम्भवेन तादृशविजातीयप्रमितिकरणत्वेन ज्ञेय-ब्रह्मपरवेदान्तस्यापि प्रमाणान्तरत्वाविरोधादिति चेत् न । शब्दस्यापरोक्षज्ञानकरणत्वे मानाभावात् मोक्षसाधनीभूतात्मापरोक्षज्ञानस्य जन्यापरोक्षज्ञानत्वेन इन्द्रियकरणकत्वस्य सिद्धौ परिशेषात् श्रुति-स्मृत्यावेदितेन्द्रियभावस्य मनस एव तत्र कारणत्वसिद्धेः 'नेन्द्रियाणि नानुमानमि'त्यादीन्द्रिय-गम्यत्वनिषेधश्रुतेर्बहिरिन्द्रियगम्यत्वनिषेधपरत्वात् । 'यन्मनसा न मनुते अप्राप्य मनसा सहे'त्यादि मनोगम्यत्वनिषेधश्रुतेश्चानवहितमनोगम्यत्वनिषेधपरत्वात् । अन्यथा 'दृश्यते त्वग्र्यया बुद्ध्या मनसैवा-नुदृष्टव्यम्, एषोऽणुरात्मा चेतसा वेदितव्यः' इत्यादिश्रुतिविरोधात् । न चैवं 'तत्त्वौपनिषदं पुरुषं पृच्छामि औपनिषदः पुरुषः' इत्याद्युपनिषदैकगम्यत्वपरश्रुतिविरोधः । एतच्छ्रुतेरुपनिषदनुपजीविप्रमाणगम्यत्व-परतया तदुपजीविमनोरूपेन्द्रियगम्यत्वे विरोधाभावात् । अन्यथा ज्योतिष्टोमः स्वर्गसाधनं तथा वेदे न बोधनादित्याद्यनुमानगम्यत्वेन अलौकिकश्रेयःसाधनरूपस्य यागादेर्धर्मस्य चोदनादक्षणोऽर्थो धर्म इति सूत्रोक्तवैदिकप्रमाणगम्यत्वरूपधर्मलक्षणरहितत्वप्रसङ्गात् ।

किञ्च शब्दस्यापरोक्षज्ञानजनकत्वं न तावच्छब्दत्वेन प्रमाणशब्दत्वेनापौरुषेयशब्दत्वेन वाऽति-प्रसङ्गात् । नाप्यपरोक्षवस्तुविषयकशब्दत्वेन तादृशप्रमाणत्वेन वा इन्द्रियासन्निकृष्टे घटादौ परात्म-तज्ज्ञानादौ च प्रवर्तमानस्य गेहे घटोऽस्ति देवदत्तात्मा ज्ञानवान् प्रवृत्तिमत्वादित्यादि शब्दानुमानादे-रप्यपरोक्षज्ञानजनकत्वप्रसङ्गात् । न च यं प्रति यदा यदपरोक्षं तद्वस्तुविषयकं प्रमाणं तं प्रति तदा तदपरोक्षज्ञानजनकमिति वाच्यम् । एवंविधे विषयेन्द्रियसन्निकर्षादिघटितापरोक्षज्ञानसामग्र्या आवश्य-कत्वेन तत एव तदुपपत्तावपरोक्षज्ञानजकत्वेनाक्लृप्तस्य शब्दानुमानादेस्तदपरोक्षज्ञानं प्रति जनकत्व एव मानाभावात् ।

ननु तादृशवस्तुविषयकाकाङ्क्षादिमच्छब्दस्य तद्वस्तुविषयकज्ञानजनकताया आवश्यकत्वेन ततो जायमानं तत्र ज्ञानं विषयस्वाभाव्यादपरोक्षमेव जायते । तथा च यत्र लोके इन्द्रियसन्निकर्षादिः शब्दादेश्च सम्भवः तत्रोभाभ्यामपि जायमानपमरोक्षज्ञानमेव । आत्मनि तु शब्दैकसमधिगम्येऽपरोक्षैकरसे प्रमाणान्तरप्रवृत्त्यसम्भवेन शब्दमात्रात् जायमानं, ज्ञानमपरोक्षमेव । न चैवं शब्दस्यापरोक्षज्ञानजनकत्वे शाब्दत्वापरोक्षत्वजात्योः सङ्करप्रसङ्गः । ज्ञानगतापरोक्षत्वस्यापरोक्षवस्तुविषयकत्वरूपोपाधिरूपतया तदनवकाशात् । उपाधिसाङ्कर्यवत् जातिसाङ्कर्यस्यादोषत्वाद्वा गुणवज्जातेरपि व्याप्यवृत्तित्वनियमासिद्धेश्च । अत एवेन्द्रियसन्निकृष्टपर्वतविशेष्यकवह्न्यनुमितेस्तादृशवस्तुविषयकप्रत्यभिज्ञानस्य च प्रत्यक्षत्वानुमितित्वे प्रत्यक्षत्वस्मृतित्वे च जातिरूपे न विरुद्धे इति चेत् न । ज्ञानगतापरोक्षत्वस्यापरोक्षवस्तुविषयत्वरूपोपाधिरूपत्वे स्वरूपसुखसाक्षात्कारात्मनः स्वरूपज्ञानस्य तत्सुखापरोक्षज्ञानत्वाभावप्रसङ्गात् । स्वविषयत्वलक्षणस्वप्रकाशत्वस्यानभ्युपगमेन तस्य तत्सुखविषयकत्वानभ्युपगमात् । वस्तुगतापरोक्षत्वस्य चापरोक्षज्ञानविषयत्वादनन्यत्वेन ज्ञानवस्तुगतापरोक्षत्वयोरन्योन्यं निरूप्यत्वेनान्योन्याश्रयात् ।

नन्वपरोक्षार्थविषयत्वमेव ज्ञानस्यापरोक्षत्वं वस्तुनस्त्वनावृतसंविदभिन्नत्वमेव तत्, न त्वपरोक्षज्ञानविषयत्वम् । यद्वा ज्ञानवस्तुनोरुभयोरप्यनावृतसंविदभिन्नत्वमेवापरोक्षत्वमतो नोक्तदोष इति चेत् न । आत्मचैतन्यस्वरूपस्यासंसारमूलाज्ञानावृतत्वेन कुत्राप्यनावृतसंविदभेदस्यासम्भवेनापरोक्षाभावप्रसङ्गात् । अनावृतत्वे च तत्राध्यासायोगात् । अज्ञानेनानन्दांश एवावृतो न स्फुरणांश इति चेत् न । आत्मनो निरंशत्वात् कल्पितांशभेदमादाय स्फुरणांशस्यानावृतत्वे च तदभेदस्य सर्वस्मिन्नप्यविशेषेण सर्वं प्रति सर्वस्याप्यापरोक्ष्यप्रसङ्गात् । स्वरूपचैतन्यस्य वस्तुत एकत्वेऽप्यौपाधिकभेदस्यापि सत्त्वेन चैतन्यं यं प्रमातारं प्रत्यनावृतं तदभेद एव तं प्रत्यपरोक्षत्वमतो नोक्तदोष इति चेत् न । तथापि वास्तवतादृशचैतन्याभेदस्यानपायेनोक्तदोषतादवस्थ्यात् । 'अधिकं प्रविष्टमि'ति न्यायात् औपाधिकभेदाभावसहकृतस्य तादृशचैतन्याभेदरूपस्यापरोक्ष्यस्य चासम्भवात् । ईश्वरं प्रति सर्वापरोक्षत्वानुरोधेन सर्वत्रानावृतेश्वरचैतन्याभेदस्यावश्यकतया तं प्रतीवास्मदादिप्रमातॄन्प्रत्यपि सर्वस्यापरोक्ष्युपपत्तेश्च ।

एतेन तत्तदर्थस्याज्ञानान्तःकरणघटादेस्तत्तत्पुरुषीयचैतन्याभेद एव तत्तत्पुरुषं प्रत्यपरोक्षत्वम् । तथा च आज्ञानान्तःकरणादेः साक्षिणि कल्पिततया तदभेदसत्त्वात् बाह्यचैतन्ये कल्पितानामपि घटादीनां बाह्यचैतन्ये वृत्तिकृततत्तच्चैतन्याभेदाभिव्यक्त्या तदभेदसत्त्वाच्च न क्वाप्यव्याप्तिरिति निरस्तम् । देवदत्तीयाज्ञानादिभासकसाक्षिचैतन्याभेदस्य वस्तुतो वस्तुमात्रेपपि सत्त्वेन तं प्रति वस्तुमात्रस्याप्यपरोक्षत्वप्रसङ्गात् । अन्तःकरणधर्माणामज्ञानादीनामिव धर्माधर्मसंस्कारादीनामपि साक्षिण्यध्यस्तत्वेन

तदभेदस्यावश्यकतया परोक्षत्वप्रसङ्गाच्च । ननूद्भूतस्यैव जडस्य चैतन्याभेद आपरोक्ष्यं धर्मादिकं त्वनुद्भूतमेवेति चेत्तर्हि धर्मादिकमीश्वरं प्रत्यप्यपरोक्षं तस्यानुद्भूतत्वाविशेषात् *उद्भूतत्वस्य सामान्यादि-साधारणस्य जातित्वासम्भवात् निर्वक्तुमशक्यत्वेनोपाधित्वायोगात् अप्रामाणिकत्वादर्थापरोक्षस्य प्रकारान्तरेण निर्वक्तव्यत्वाच्च ।

किञ्चैवं घटादेरप्यापरोक्ष्यानुपपत्तिः । तस्य बिम्बभूतकापालाद्यवच्छिन्नेश्वरचैतन्य एवाध्यस्त-तया प्रतिबिम्बभूतदेवदत्तादि चैतन्याभेदासम्भवात् अविद्यादिरूपजीवेश्वरभेदोपाधौ सति इन्द्रियद्वारा निर्गतेनापि तत्तदाकारतया परिणतेन तदीयान्तःकरणेन बिम्बप्रतिबिम्बभूतजीवेश्वरभेदस्य कर्तुमशक्य-त्वात् न हि दर्पणाद्युपादौ सति मुखप्रतिमुखयोस्तेनापि कारणेनाभेदः क्रियमाणो दृष्टचरः । अत एव स्वव्यवहारानुकूलचैतन्याभेद एवार्थस्यापरोक्ष्यम् । अस्ति हि स्वरूपसुखस्य स्वव्यवहारहेतुस्वरूप-चैतन्याभेदः । अस्ति चान्तःकरणादेः स्वव्यवहारानुकूलस्वभावससाक्षिचैतन्याभेदः ।

एवं बहिरर्थस्य घटादेरप्यपरोक्षतादशायां स्वव्यवहारहेतुतत्तदाकारान्तःकरणवृत्त्याभिव्यक्तविषया-धिष्ठानचैतन्याभेदोऽस्तीति न क्वाप्यव्याप्तिः । परोक्षस्थले तु तदाकारवृत्तेर्बहिर्निर्गमनाभावेन विषया-धिष्ठानचैतन्यस्याभिव्यक्त्यभावेन तद्व्यवहाराहेतुत्वात् अन्तरवस्थितपरोक्षतदाकारवृत्त्यवच्छिन्नचैत-न्यस्य बहिरर्थव्यवहारे हेतुत्वेऽपि तस्य तादृशचैतन्याभेदाभावाच्च । स्वव्यवहारानुकूलचैतन्याभेदाभावः परोक्षस्थले सर्वत्रास्तीति नातिप्रसङ्गः । ज्ञानापरोक्ष्यमपि तत्तत्पुरुषीयतत्तदर्थव्यवहारगोचरहेतुचैतन्यस्य तत्तदर्थाभेद एव । अस्ति हि स्वरूपसुखव्यवहारहेतोः स्वरूपचैतन्यस्य स्वरूपार्थभेदः । अस्ति चान्तःकरणादिगोचरव्यवहारहेतोः साक्षिचैतन्यस्य स्वाध्यस्तान्तःकरणादिरूपार्थभेदः ।

एवं बहिरर्थस्वरूपघटादिगोचरव्यवहारहेतोः घटाद्याकारवृत्त्यभिव्यक्ततत्तद्विषयाधिष्ठानचैतन्यस्य तत्तद्घटादिरूपार्थभेदोऽस्तीति न क्वाप्यव्याप्तिः । परोक्षस्थले तु सर्वत्र वह्न्यादिगोचरव्यवहारहेतोस्तत्त-दाकारानुमित्यादिरूपान्तरवस्थितपरोक्षवृत्त्यवच्छिन्नचैतन्यस्य व्यवहितवह्न्यादिरूपार्थभेदाभावान्नाति-व्याप्तिः । तथा च चैतन्यधर्म एव ज्ञानापरोक्ष्यं न त्वनुमितित्वेच्छात्वादिवदन्तः करणवृत्तिधर्मः ।

अत एव तत्तदाकारवृत्त्यादि साक्षिणि स्वरूपसुखप्रकाशरूपे स्वरूपचैतन्ये च तत्तदाकार-ज्ञानरूपान्तःकरणावृत्त्यभावेऽप्यापरोक्ष्यम् । ऐन्द्रियकघटाद्याकारवृत्तावापरोक्ष्यानुभवस्य वृत्त्यवच्छिन्न-चैतन्यगतापरोक्ष्यविषयत्वेनैवान्यथासिद्धतया तदापरोक्ष्यासाधकत्वादिति निरस्तम् । अपरोक्षत्वे-नाभिमतयोरर्थज्ञानयोरभेदो न तावज्जीवेश्वरभेदयोरिवैक्ये सम्भवति । स्वरूपसुखतज्ज्ञानयोरैक्यसम्भवे-ऽप्यन्तःकरणादेः 'इदं सर्वं यदयमात्मे'त्यादौ 'तत्त्वमसी'त्यादाविव वास्तवाभेदेनैव सामानाधिकर-

* उद्भूतत्वं नाम प्रत्यक्षत्वप्रयोजको धर्मविशेषः । तदभावः अनुद्भूतत्वम् ।

ण्योपपत्तौ बाधायां सामानाधिकरण्यानभ्युपगमप्रसङ्गात् । नापि भेदाभावः जडजडयोस्तमःप्रकाशयोरिव विरुद्धस्वभावत्वेन भेदावश्यकत्वात् । त्वयाऽपि तयोर्मिथ्याभेदस्याभ्युपगमाच्च । नापि भेदाभेदः विरोधात् । उपादानोपादेययोर्भेदाभेदस्य कथञ्चित्सम्भवेऽप्युक्तरीत्या ब्रह्मचैतन्यस्य जगदुपादानत्वासम्भवेनात्यन्तभेदस्यैव वक्तव्यत्वाच्च ।

किञ्च स्वव्यवहारहेतुत्वं न तावत् स्वव्यवहाररूपफलोपहितत्वं, सर्वत्राभिज्ञाभिलापादिरूपव्यवहारासामग्रीनियमाभावेनाव्याप्तेः । नापि तत्स्वरूपयोग्यत्वं, घटादौ बहिरर्थे परोक्षतादशायामपि ब्रह्मणोऽप्यपरोक्षत्वप्रसङ्गात् । न चाभिव्यक्तत्वं चैतन्याभेदे विशेषणं, तथा सति स्वव्यवहारहेतुत्वविशेषणस्य वैयर्थ्यप्रसङ्गात् । यस्मिन्नर्थे चैतन्येवान्योन्याभेदो यं प्रत्यभिव्यक्तः सोऽर्थस्तच्चैतन्यं वा तं प्रत्यपरोक्षमित्यर्थज्ञानापरोक्षत्वव्यवस्थोपपत्तेः । एवमस्त्विति चेत् न अन्योन्याश्रयात् । अभिव्यक्तेरावरणाभिभवरूपत्वेन ज्ञानापरोक्ष्याधीनत्वात् । ज्ञानापरोक्ष्यस्य चावरणाभिभवरूपाभिव्यक्त्यधीनत्वात् । न च आवरणाभिभवस्य वृत्तिमात्राधीनत्वेन चैतन्यापरोक्ष्याधीनतैव नेति वाच्यम् । वृत्तिमात्रस्य आवरणाभिभावकत्वे परोक्षस्थलेऽपि तत्सत्त्वेन आवरणाभिभवप्रसङ्गात् । वृत्तिगतापरोक्ष्यस्य त्वयाऽनभ्युपगमात् न च इन्द्रियजन्यवृत्तित्वेन तदभिभावकत्वम् । तथा सति वेदान्तजन्यचरमवृत्तेरावरणानभिभावकत्वापत्तेः । न च प्रमाणवृत्तित्वेनैव तदभिभावकत्वम् ।

परोक्षवृत्तेस्तु विषयचैतन्यसम्बन्धरूपसहकार्यभावादेव तदनभिभावकत्वमिति न तत्रातिप्रसङ्ग इति वाच्यम् । अन्तःकरणसंसृष्टहृतयादिगोचरपरोक्षवृत्तेर्जीवब्रह्मैक्यगोचरानुमानिकवृत्तेश्च वेदान्तजन्यपरोक्षवृत्तिवत् बहिर्निर्गमनं विनापि हृदयाद्यधिष्ठानचैतन्यसंसर्गस्य सर्वगतब्रह्मचैतन्यसंसर्गस्य च सत्त्वेन ततोऽपि तदुभयावरणाभिभवप्रसङ्गात् ।

एतेन यज्ज्ञानमुत्पद्यमानं स्वकारणमहिम्ना विषयसंसृष्टमेवोत्पद्यते तदेव आवरणाभिभावकम् । परोक्षवृत्तेस्तु क्वचिद्विषयसंसर्गित्वेऽपि न तन्नियम इति नोक्तदोष इति निरस्तम् । व्यक्त्यपेक्षया नियमस्य हृदयादिगोचरपरोक्षकृत्तावपि सत्त्वात् अपरोक्षत्वजातेश्च त्वयानभ्युपगमेन जात्यपेक्षयापि नियमस्य वक्तुमशक्यत्वात् । विषयसंसर्गनियमप्रयोजकोपाधेरपि दुर्वचत्वात् । विषयसंसृष्टापरोक्षवृत्तिष्वप्यन्यतमत्वादिरूपोपाधेः तन्नियमप्रयोजकत्वसम्भवोनोक्तदोषतादवस्थ्याच्च ।

एतेन समानविषयकसमानाश्रयज्ञानत्वेन तदभिभावकत्वमिति निरस्तम् ।

किञ्चापरोक्षस्थल इव परोक्षस्थलेऽपि प्रागनुभवसिद्धस्याज्ञानस्य परोक्षनिर्णयान्तरं ममाज्ञानं नष्टमित्यनुभवबलेनावरणाभिभवरूपचैतन्याभेदाभिव्यक्तेरावश्यकतयोक्तरूपज्ञानार्थापरोक्ष्येऽतिव्याप्तिः । न चापरोक्षस्थलेऽप्यावरणाभिभवे उक्तानुभवादन्यं मानमस्ति । अन्यथा वैपरीत्यापातात् । ज्ञानार्थयोरापरोक्ष्यानुरोधेनापरोक्ष्यस्थल एवावरणाभिभवाभ्युपगमेऽन्योन्याश्रयात् । उक्तानुभवबलेनावरणाभि-

भवरूपचैतन्याभेदाभिव्यक्तेः परोक्षस्थलेऽतिप्रसक्तत्वेनापरोक्षत्वमेवानुपपन्नमिति वदन्तं प्रति तदतिरिक्तस्यैवापरोक्ष्यस्य वक्तव्यत्वाच्च ।

ननु परोक्षस्थले वृत्तिनिर्गमाभावेन विषयचैतन्यसम्बन्धाभावात् समानाश्रयत्वाभावेन विषयचैतन्यगताज्ञानमेव तत्र न निवर्तत इति चेत् अज्ञाननिवृत्तौ लाघवेन समानविषयत्वस्यैव तन्त्रतया समानाश्रयत्वस्यापि तत्र तन्त्रत्वे गौरवात् । न च तथा सति देवदत्तीयघटज्ञानेन यज्ञदत्तीयघटाज्ञानस्य निवृत्तिप्रसङ्गः । समानाश्रयत्वविशेषणेऽपीन्द्रियद्वारा निर्गतघटावच्छिन्नचैतन्यसंसृष्टदेवदत्तीयघटाकारवृत्तेर्यज्ञदत्तीयघटावच्छिन्नचैतन्यविषयकतत्तद्गताज्ञानस्य च घटावच्छिन्नचैतन्याश्रितत्वेन समानाश्रयत्वसत्त्वेन अतिप्रसङ्गतादवस्थ्ये तत्परिहाराय यदज्ञानं यं पुरुषं प्रति यद्विषयावरकं तत्तदीयतद्विषयकज्ञाननिवर्त्यमित्येवावश्यमङ्गीकर्तव्यतया समानाश्रयत्वस्य व्यर्थत्वात् । अपरोक्षस्थलेऽपि परोक्षस्थल इवानिर्गतवृत्त्यैवाज्ञाननिवृत्तिसम्भवेन वृत्तिनिर्गमे प्रमाणाभावेन तत्र समानाश्रयत्वासम्भवाच्च ।

ननु द्विविधं विषयावरणम् अज्ञानमेकं विषयाश्रितं रज्ज्वादिगतसर्पादिविक्षेपोपादानभूतं कार्यकल्प्यम् । अन्यच्च पुरुषाश्रितमिदमहं न जानामीत्यनुभवसिद्धं पुरुषाश्रितस्य विषयसम्भिन्नविक्षेपोपादानत्वासम्भवेन विषयाश्रितस्येदमहं न जानामीति साक्षिरूपप्रकाशसंसर्गायोगेन चाज्ञानद्वयस्याप्यावश्यकत्वात् । एवं च परोक्षस्थले प्रमातृचैतन्यगताज्ञानस्यानिवृत्तावपि न विषयचैतन्यगततदावरकाज्ञाननिवृत्तिः । ममाज्ञानं नष्टमित्यनुभवस्य प्रमातृचैतन्यगताज्ञाननिवृत्तिविषयत्वेनैवोपपत्तेः । अन्यथा परोक्षवृत्त्या विषयचैतन्यगताज्ञानस्य निवृत्त्यभ्युपगमे दूरस्थवृक्षे आप्तवाक्यात्परिमाणविशेषावगतौ विषयचैतन्यगततदावरकाज्ञानस्य निवृत्त्यवश्यम्भावेन तदुपादानकतद्विरुद्धपरिमाणभूतविक्षेपानुदयप्रसङ्गात् ।

तथा च तत्रैवातिप्रसङ्गवारणायाज्ञाननिवर्तकवृत्तौ समानविषयत्ववत्समानाशयत्वमप्यावश्यकम् । तच्च वृत्तिनिर्गमं विना न सम्भवतीत्यपरोक्षस्थले सोऽप्यावश्यक इति चेत् न । अहमिदं न जानामीत्यनुभवसिद्धात्प्रमातृचैतन्याश्रितविषयावरणभूतादज्ञानादन्यस्मिन् विषयगताज्ञाने मानाभावात् । नयनपटलवद्विषयगतत्वाभावेऽपि पुरुषाश्रितस्यापि विषयावरकत्वसम्भवात् । न च सर्पादिविक्षेपान्यथानुपपत्तिरेव तत्र मानम् । वाचस्पतिमते सर्वस्य प्रपञ्चस्य जीवाश्रिताज्ञानविषयीकृतब्रह्मविवर्तत्ववद्रज्जुसर्पादिविक्षेपस्यापि पुरुषाश्रिताज्ञानविषयीकृतब्रह्मविवर्तत्वोपपत्तेः । न च परोक्षवृत्त्या पुरुषगताज्ञानस्यापि निवृत्तेः तदपि कथमिति वाच्यम् । एकावस्थाज्ञाननिवृत्तावप्यपरावस्थाज्ञानसत्त्वेन तदुपपत्तेः । किञ्च सर्पादि विक्षेपं प्रति रज्ज्वादेस्तदवच्छिन्नचैतन्यस्य चोपादानत्वसम्भवेन तस्य स्वोपादानतया विषयगताज्ञानानाक्षेपकत्वात् । न चैवं मिथ्याभूतसर्पादिरूपविक्षेपस्य सत्यभूतरज्ज्वाद्युपादानकत्वे उपादेयस्योपादानस्वभावत्वनियमेन सत्यत्वापत्तिरिति वाच्यम् । ब्रह्मणः उपादानत्वपक्षे

परमार्थसत्यभूतब्रह्मोपादानकत्वेऽपि वियदादेरसत्यत्वेन नियमासिद्धे । न्यूनपरिमाणत्वरूपस्वभावस्य त्रुट्याद्युपादानगतस्य तदुपादेयेऽनुपलब्धेश्च । यत्किञ्चिदुपादानगतस्वभावानुवृत्तेः प्रकृतेऽपि सत्त्वात् ।

न हि रज्जुसर्पादौ रूपपरिमाणाद्युपादानस्वभावाननुवृत्तिरस्ति । एतावन्तं कालं रज्ज्वाद्यज्ञानमासीदित्याद्यनुभवेन तम आसीदित्यादि श्रुत्या [१]चाज्ञानसत्यत्वेन तदुपादानकत्वेऽप्युक्तदोषतादवस्थ्याच्च । विषयगताज्ञानस्योपादानत्वपक्षेऽपि विषयगतावस्थाज्ञानानामनेकत्वेनाप्तवाक्यजन्यपरोक्षवृत्त्यैकावस्थाज्ञाननाशेऽप्यपरावस्थाज्ञानसत्त्वेन दूरस्थवृक्षे विरुद्धपरिमाणरूपविक्षेपोपपत्तेश्च । अन्यथा बाधावतारानन्तरं तस्यैव पुरुषस्य तत्रैव कालान्तरे सर्पादिविक्षेपानुपपत्तेः । यत्तु शुक्तिरजतादिविक्षेपान्यथानुपपत्त्या कल्प्यमानमज्ञानं विषयगतमेव न प्रमातृगतम् । तच्च विषयावकुण्ठनपटवद्विषयचैतन्यावरकम् । न चैवं तस्यान्तःकरणोपहितसाक्ष्यसंसृष्टतयाहमिदं न जानामीति तत्साक्षिसंसृष्टतयाऽनुभवो न स्यादिति वाच्यम् ।

अहमिदं न जानामीत्यनुभवस्य मूलाज्ञानविषयतया विषयगतावस्थाज्ञानविषयकत्वाभावात् । तस्य विक्षेपान्यथानुपपत्तिमात्रकल्प्यत्वात् । न चैवं मूलाज्ञानस्य शुद्धचैतन्यमात्रविषयतया शुक्त्यादिविषयकत्वानुभवविरोधः । मूलाज्ञानविषयचैतन्यस्यैव शुक्त्याद्यवच्छिन्नतया तद्विषयत्वानुभवसम्भवात् । अहमज्ञ इति सामान्यतो ज्ञानानुभव एव मूलाज्ञानविषयकः । विषयविशेषिताज्ञानानुभवस्तु अवस्थाज्ञानविषयक इति विशेषाभ्युपगमेऽप्यवस्था तद्वतोरभेदेन मूलाज्ञानस्य साक्षिसंसर्ग एवावस्थाज्ञानसाक्षिसंसर्ग इति कृत्वा वा साक्षिविषयचैतन्ययोर्वास्तवैक्यात्तत्संसर्ग एव तत्संसर्ग इति कृत्वा चाविषयगतस्याप्यवस्थाज्ञानस्य साक्षिविषयत्वोपपत्तेः ।

न च भिन्नाश्रयत्वेन विषयगताज्ञानस्यानिर्गतप्रमातृचैतन्यमात्रगतपरोक्षवृत्त्या निवृत्त्यभावप्रसङ्गः । न चेष्टापत्तिः । परोक्षज्ञानानन्तरं मम वह्न्याद्यज्ञानं नष्टमित्यनुभवविरोधादिति वाच्यम् । परोक्षज्ञानादज्ञाननिवृत्त्यभावेऽपि ततस्तन्निवृत्त्यनुभवस्य तत्सत्तानिश्चयरूपपरोक्षवृत्तिप्रतिबन्धप्रयुक्ततदननुभवनिबन्धनभ्रान्तिमात्रत्वेनैवोपपत्तेः । अपरोक्षज्ञानस्यैवाज्ञाननिवर्तकत्वाभ्युपगमादिति तदप्यत एव निरस्तम् ।

अहमिदं न जानामीत्यनुभवबलेन अवस्थाज्ञानस्यापि प्रमातृगतत्वेनैव सिद्धेः । तस्य चोक्तरीत्या नयनपटलवद्विषयगतत्वाभावेऽपि तदावरकत्वसम्भवेन वाचस्पतिमत इवावस्थाज्ञानविषयशुक्त्याद्यवच्छिन्नब्रह्मचैतन्यस्य वा सत्यभूतशुक्त्यादेस्तदवच्छिन्नचैतन्यस्य चोपादानत्वसम्भवेन रज्ज्वादिविक्षेपस्यान्यथैवोपपन्नतया विषयगताज्ञानकल्पकार्थापत्तेरेवानुदयात् । परोक्षज्ञानानन्तरं "ममाज्ञानं नष्टमि"-

१. ज्ञानस्यापि सत्यत्वेन

त्यबाधितानुभवबलेन लाघवेन तस्य बाधकं विना भ्रमत्वकल्पनानुपपत्तेः । अन्यथा परोक्षस्थलेऽपि तन्निवृत्त्यनुभवस्य भ्रमत्वप्रसङ्गात् । न च अपरोक्षज्ञानस्याज्ञाननिवर्तकत्वनियम एव बाधक इति वाच्यम् । अपरोक्षस्थल इव परोक्षस्थलेऽपि ममाज्ञानं नष्टमित्यबाधितानुभवबलेन लाघवेन च परोक्षापरोक्षसाधारणज्ञानमात्रस्यैवाज्ञाननिवर्तकत्वनियम एव बाधकेति वाच्यम् । कल्पनेनोक्तनियमासिद्धेः । अत एवेदमहं न जानामीत्यनुभवस्य मूलाज्ञानमेव विषय इति प्रत्युक्तम् । तथा सत्यवस्थाज्ञानासिद्धिप्रसङ्गात् । शुक्तिरूप्यादिविक्षेपरूपकार्यस्य तदवच्छिन्नचैतन्यविषयकमूलाज्ञानादेवोपपत्तेश्च । एतेनैवावस्था तद्वतोर्वा साक्षिविषयचैतन्ययोर्वाऽभेदादवस्थाज्ञानस्य तदभेदप्रयुक्तसाक्षिसंसर्गसम्भवेन तस्यैवोक्तानुभवविषयत्वमित्यपि प्रत्युक्तम् ।

एवंविधसंसर्गस्यान्तःकरणोपस्थितसाक्षिणा सह सर्वस्मिन्नपि सम्भवेन सर्वस्य साक्षात्साक्षिभास्यत्वापत्त्याऽऽवृत्तितन्निर्गमाद्यभ्युपगमवैयर्थ्यप्रसङ्गात् । अज्ञानमात्रस्याहमज्ञः मामन्यं च न जानामि शास्त्रार्थं न जानामीदमहं न जानामीत्याद्यनुभवबलेन 'तमसा गूढमग्रे' इत्यादिश्रुतिबलेन च प्रमातृचैतन्यमात्रनिष्ठत्वसिद्धेः । तस्य विषयचैतन्यनिष्ठत्वादिकल्पनायां मानाभावाच्च । उक्तश्रुत्यनुभवविरोधेन 'मायिनं तु महेश्वरमि'त्यादौ सम्बन्धसामान्यवाचि-इन्प्रत्ययस्याश्रयाश्रयीभावसम्बन्धपरत्वानुपपत्त्या विषयविषयीभावसम्बन्धपरत्वस्यैव कल्पनाच्च ।

अत एव चिन्मात्राश्रितं तद्विषयं च ज्ञानमिति निरस्तम् । प्रमाणाभावात् । उक्तश्रुत्यनुभवानुसारेण प्रमातृचैतन्याश्रितत्वेनैव तत्सिद्धेश्च । किञ्चाऽपरोक्षवृत्त्येव परोक्षवृत्त्या विषयगताज्ञाननिवृत्त्यनभ्युपगमेऽर्थसत्तानिश्चयरूपापरोक्षवृत्त्याऽपि तन्निवृत्त्यनभ्युपगमप्रसङ्गः । मम घटादिविषयेऽज्ञानं नष्टमित्यनुभवस्य परोक्षस्थल इव प्रमातृगतविषयावरकाज्ञाननिवृत्तिविषयत्वेन वा विषयमात्रगतमेवाज्ञानमिति पक्षे सत्तानिश्चयरूपापरोक्षवृत्तिप्रतिबन्धप्रयुक्तावस्थाज्ञानानुभवनिबन्धनभ्रान्तिमात्रत्वेनैव उपपत्तेः । न चेष्टापत्तिः । त्वदभ्युपगतज्ञानापरोक्षविषयापरोक्षयोस्तत्राभावप्रसङ्गात् । यज्ज्ञानार्थयोरापरोक्ष्यस्य जातिविशेषतदाश्रयज्ञानविषयत्वरूपत्वेनान्यथैवोपपत्तेश्च । न च ज्ञानापरोक्षत्वस्य जातिरूपत्वे द्रव्यत्वगुणत्वादिना सङ्करप्रसङ्गः । अपरोक्षत्वगुणत्वयोः द्रव्यत्वापरोक्षत्वयोश्च परस्परपरिहारेणात्मस्वरूपे साक्षिणि द्रव्ये रूपादौ गुणे च वर्तमानयोर्घटाद्याकारापरोक्षज्ञाने गुणेघटादौ द्रव्ये च वर्तमानयोश्च घटाद्यपरोक्षज्ञाने साक्षिणि च समावेशादिति वाच्यम् । उपाधिसाङ्कर्यवज्जातिसाङ्कर्यस्यादोषत्वात् । जन्यज्ञानस्यान्तःकरणपरिणामतया मृत्परिणामघटादिवद्द्रव्यरूपत्वेनापरोक्षत्वजातेः द्रव्यत्वव्याप्यत्वेन साङ्कर्यप्रसङ्गाभावाच्च । न चान्तःकरणपरिणामत्वे ज्ञानादेरात्मधर्मत्वानुपपत्तिः ।

धनादेरन्यपरिणामस्यापि धनी देवदत्त इत्यादि प्रतीत्या सम्बन्धान्तरेणैव देवदत्तादिधर्मत्ववज्ज्ञानादेरन्यपरिणामत्वेऽपि जानामीत्याद्यनुभवेन संयोगादिरूपसम्बन्धान्तरेणैवात्मधर्मत्वोपपत्तेः ।

गुणवज्जातेरपि अव्याप्यवृत्तित्वस्येष्टतया प्रत्यभिज्ञादावंशे परोक्षत्वस्य स्थित्यभ्युपगमेऽपि जातित्वा-विरोधाच्च । न च कपिसंयोगादिरूपगुणस्यापि शाखामूलादिरूपवृक्षप्रदेशविशेषवृत्तित्वेनैवानुभूयमानतया व्याप्यवृत्तित्वात् दृष्टान्त एव असम्प्रतिपन्न इति वाच्यम् ।

कपिसंयोगस्य वृक्षप्रदेशविशेषमात्रवृत्तित्वानुभवबलेन वृक्षे कपिसंयोगानभ्युपगमे तदभावस्यापि तत्प्रदेशविशेषमात्रवृत्तित्वानुभवबलेन वृक्षे कपिसंयोगाभावानभ्युपगमापत्तेः । न चेष्टापत्तिः, सर्वस्य भावाभावान्यतराधिकरणत्वनियमेन वृक्षे तदुभयाधिकरणत्वस्य विरुद्धत्वात् तदुभयानधिकरणत्वस्य तदुभयाभावाधिकरणत्वस्य पर्यवसिततया तदुभयाधिकरणत्वस्यावर्जनीयत्वाच्च । शाखायां कपिसंयोगो मूले नेत्यबाधितप्रतीत्या शाखामूलयोरिव वृक्षे शाखायां कपिसंयोगः मूले नेत्यबाधितप्रतीत्या वृक्षस्यापि तदुभयाधिकरणत्वावश्यम्भावाच्च । न च तदनुभवस्य साक्षात्सम्बन्धेन कपिसंयोगाभावविषयत्वम् । कपिसंयोगविषयत्वं तु परम्परासम्बन्धेनेति न साक्षात्सम्बन्धेन उभयाधिकरणत्वमिति वाच्यम् । विनिगमकाभावाद्वैपरीत्यापत्तेश्च ।

ननु प्राक्कपिसंयोगोत्पत्तेर्वृक्षे क्वापि कपिसंयोगो नेति प्रतीत्या तत्संयोगाभावस्य साक्षात्सम्बन्धेनैव वृक्षे व्याप्यवृत्तित्वसिद्धेः । तत्संयोगोत्पत्त्यनन्तरमपि तदभावप्रतीतेः । प्राग्विद्यमानसंयोगाभावविष-यत्वकल्पनात्तद्विरोधेन साक्षात्सम्बन्धेन प्रदेशवृत्तिसंयोगस्यैव परम्परासम्बन्धेन वृक्षवृत्तित्वं कल्प्यते । किञ्च सामग्रीबलेन प्रदेशवृत्तिकपिसंयोगस्यावश्याभ्युपगन्तव्यत्वेन तेनैव संयोगेन वृक्षे संयोगप्रती-त्युपपत्तेः संयोगान्तरकल्पने गौरवमिति चेन्न । तथा सति संयोगकालेऽपि पूर्वपदेन वृक्षे साक्षात्सम्ब-न्धावच्छिन्नसंयोगाभावस्य सत्त्वेन वृक्षे कपिसंयोगे नेति प्रतीत्यापत्तेः । अपि च यत्र संयोगविशिष्ट-योरेव द्रव्ययोर्युगपदुत्पत्तिः तत्र प्राक् सर्वावच्छेदेन संयोगाभावप्रतीतेरसिद्ध्या विनिगमकाभावताद-वस्थ्यम् ।

एवञ्च संयोगान्तरकल्पनस्य संयोगसामग्र्यविशेषणावर्जनीयतया गौरवं प्रामाणिकमेवेति । न चैकत्रैकदा भावाभावसत्त्वं विरुद्धमिति वाच्यम् । एकत्रैकदाप्यवच्छेदसत्त्वेन भावाभावसत्त्वविषयका-बाधितानुभवबलेनैकावच्छेदेनैव तयोर्विरोधकल्पनेन विरोधात् । न चैवं वृक्षः कपिसंयोगीति ज्ञानस्य तद्वति तदभाववति च तत्प्रकारकत्वेन प्रमाऽप्रमोभयरूपत्वापत्तिः । यदवच्छेदेन यत्र यदस्ति तद्विरुद्ध-धर्मानवच्छेदेन तत्प्रकारकं ज्ञानं प्रमा तदन्यज्ञानं भ्रम इत्यव्याप्यवृत्तिप्रकारकस्य वृक्षः संयोगीत्यादि-ज्ञानस्य प्रमालक्षणलक्षितत्वेन तदन्यत्वाभावेन न च प्रमाऽप्रमोभयरूपत्वानापत्तेः । तस्माद्वृक्षे संयोग-तदाभावान्यतराधिकरणत्वस्यावश्यकत्वादेकतरपरिशेषस्य कर्तुमशक्यत्वात् अबाधितोभयाधिकरण-त्वप्रतीतेश्च । संयोगतदाभावयोरव्याप्यवृत्तित्वस्यावश्यकतया न दृष्टान्तासम्प्रतिपत्तिरित्यपरोक्षत्वजाते-रप्यव्याप्यवृत्तित्वं विरुद्धम् ।

न च परोक्षत्वस्याव्याप्यवृत्तित्वे तदभाववत्यवच्छेदकमन्यद्वाच्यम् । अवच्छेदकभेदं विना विरुद्धयोरेकत्रासमावेशात् तच्चावच्छेदकमव्याप्यवृत्त्येव वाच्यम् । व्याप्यवृत्तित्वे तस्यातिप्रसक्ततयावच्छेदकत्वानुपपत्तेः । एवं च तत्राप्यव्याप्यवृत्त्यवच्छेदकान्तरमावश्यकम् । तत्राप्येवमिति तादृशावच्छेदकपरम्पराङ्गीकारेऽनवस्थाप्रसङ्ग इति चेन्न । प्रत्यभिज्ञानायामिन्द्रियजन्यत्वतदभावादेरेव वापरोक्षत्वतदभाववृत्त्यच्छेदकत्वात् । जन्यापरोक्षत्वतदभावादेरेवेन्द्रियजन्यत्वतदभाववृत्त्यवच्छेदकत्वाच्च अनवस्थाप्रसङ्गानुदयात् । न चैवमन्योन्याश्रयः । अन्योन्यवृत्त्यवच्छेदकत्वस्यान्योन्यानतिरिक्तदेशकत्वस्वरूपसम्बन्धविशेषान्यतररूपत्वे नोत्पत्त्यादावन्योन्यसापेक्षत्वाभावेन तदनवकाशात् । अवच्छेद्यावच्छेदकयोरेकव्यक्तित्वेद्यत्वाङ्गीकारेण अन्यतरज्ञप्तावपि परस्परसापेक्षत्वाभावेन तदनवकाशाच्च । अन्यथा तस्योपाधित्वेऽपि अव्याप्यवृत्तित्वेनावच्छेदकसापेक्षत्वनियमेन अनवस्थादिदोषसाम्यात् ।

घटं साक्षात्करोमि पटं साक्षात्करोमीत्यनुगतप्रतीत्या साक्षात्कारपदप्रवृत्तिनिमित्तत्वेन इन्द्रियजन्यतावच्छेदकत्वेन चापरोक्षत्वजातेरावश्यकत्वाच्च । न चेन्द्रियजन्यज्ञानत्वेन अन्यथासिद्धिः । तस्यातीन्द्रियत्वेन साक्षात्करोमीत्यनुगतापरोक्षप्रतीतिविषयत्वानुपपत्तेः । उपानायकस्य सर्वत्रानावश्यकत्वात् गौरवेण साक्षात्कारपदप्रवृत्तिनिमित्तत्वानुपपत्तेश्च । न च उपाधेरिन्द्रियजन्यत्वरूपस्यावश्यकतयोभयसम्प्रतिपन्नत्वेन च अपरोक्षत्वजातेश्च तथात्वेन विपरीतमेव गौरवमिति वाच्यम् । इन्द्रियजन्यत्ववत् तदवच्छेदकतया अपरोक्षत्वजातेरप्यावश्यकत्वात् । अन्यथोभयसम्प्रतिपन्नेन्द्रियजन्यत्वेनापरोक्षत्वजात्यपलापे घटत्वादिजातेरप्यपलापप्रसङ्गात् । तत्राप्युभयसम्प्रतिपन्नकारणविशेषजन्यत्वाद्युपाधेः सत्त्वात् तादृशोपाधीनामनेकत्वेन विनिगमनाविरहेणानेकपदार्थघटितमूर्तित्वेन विलम्बितोपस्थितिकत्वेन कारणविशेषजन्यतावच्छेदत्वादिना च घटत्वादिजातीनामङ्गीकारे च प्रकृतेऽपीन्द्रियजन्यत्वानुमित्यादि त्रितयान्यानुभवत्वाद्युपाधीनामपि तथात्वेनापरोक्षत्वजातेरप्यङ्गीकार्यत्वेन साम्यात् इन्द्रियजन्यत्वस्याजन्यात्मस्वरूपानुभवे व्याप्तेश्च ।

न च अपरोक्षज्ञानविषयत्वरूपार्थापरोक्षत्वस्य स्वरूपसुखे व्याप्तिः । तस्येन्द्रियाग्राह्यतया जन्यापरोक्षविषयत्वाभावात् । कर्तृकर्मभावादिविरोधेन स्वस्य स्वविषयत्वानुपपत्त्या स्वाभिन्नात्मस्वरूपानुभवविषयत्वाभावाच्चेति वाच्यम् । स्वरूपसुखस्य बहिरिन्द्रियाग्राह्यत्वेऽपि मनोरूपेन्द्रियग्राह्यत्वेन जन्यापरोक्षविषयत्वसत्त्वात् । स्वप्रकाशत्वस्य स्वविषयत्वरूपतया स्वरूपसुखस्यापि स्वाभिन्नात्मस्वरूपानुभवविषयत्वाच्च ।

न चैवं कर्तृकर्मभावादिविरोधः । स्वात्मगोचरापरोक्षानुभवं प्रत्येकस्यैवात्मनोऽनुमितिक्रियां प्रति कर्मत्वकर्तृत्वादिदर्शनेन कर्मत्वकर्तृत्वयोरविरोधात् । विरोधाविरोधयोः यथा प्रमाणमेव स्वीकरणी-

यत्वात् । परसमवेतक्रियाफलशालित्वस्य परोक्षज्ञानकर्मणि आत्मन्यतीतादौ चापरोक्षज्ञानकर्मण्युपेक्षणीयार्थे चाव्याप्तत्वेन कर्मत्वस्य लाघवात् सर्वत्रानुगतत्वाच्च क्रियाविषयत्वरूपतैव निर्वक्तव्यत्वात् ।

तस्य च स्वरूपसम्बन्धविशेषात्मकस्याभेदेऽपि स्वाभिन्नज्ञानक्रियां प्रतीश्वरज्ञान इव सर्वं ज्ञानं गुण इत्यादि ज्ञान इव च स्वरूपसुखेऽपि सम्भवात् । तस्माज्जातिविशेष तदाश्रयज्ञानविषयत्वरूपमेव ज्ञानार्थयोरापरोक्ष्यम् । न तु परीत्या निरुक्तरूपमिति न तदुपपादकत्वेनापरोक्षस्थल एवावरणभङ्गवृत्तिनिर्गमादकल्पनमिति ।

ननु शब्दानुमानावगतेभ्यः प्रत्यक्षावगतेऽर्थे स्पष्टता तावदनुभूयते । न हि रसालफलादिगतरसपरिमलादिविशेषे शतवारमाप्तोपदिष्टेऽपि प्रत्यक्षावगत इव स्पष्टता अस्ति । तदनन्तरमपि कथं तदिति जिज्ञासानुवृत्तेः । न च शब्दान्माधुर्यादिमात्रावगमेऽपि रसालमाधुर्यादिवृत्त्यवान्तरजातिविशेषवाचिशब्दाभावात्तत्सत्त्वेऽपि वातस्य अगृहीतसङ्गतिकत्वात् । अतः शब्दादसाधारणजातिविशेषावच्छिन्नमाधुर्यावगमो नास्तीति जिज्ञासानुवृत्तिर्युक्तेति शङ्क्यम् । रसाले सर्वातिशायिमाधुर्यविशेषोऽस्तीति अस्माच्छब्दात्तद्गतावान्तरजातिविशेषस्याप्यवगमात् । न च तद्गतमेव विशेषं विशेषत्वेन सामान्येन रूपेण शब्दो बोधयति । विशेष्येति जिज्ञासेति वाच्यम् । प्रत्यक्षेणापि मधुररसगतविशेषस्य जातिविशेषरूपस्य स्वरूपतः एव विषयीकरणेन जातिविशेषगतविशेषान्तरादिविषयीकरणात् जिज्ञासानुवृत्तिप्रसङ्गात् । तस्मात्प्रत्यक्षग्राह्येऽर्थेऽभिव्यक्तापरोक्षैकरसचैतन्यावकुण्ठनरूपैव स्पष्टता जिज्ञासा निवर्तनक्षमा । शब्दादिगम्ये तदभावादस्पष्टतेति व्यवस्थाभ्युपगन्तव्या । अत एव साक्षिवेद्यस्य सुखादेः स्पष्टता ब्रह्मणः शाब्दवृत्तिवेद्यत्वस्यापि मननादेः प्रागज्ञानानुवृत्तावस्पष्टता तदनन्तरं तन्निवृत्तौ च स्पष्टतेति घटादेरपरोक्षतादशायां स्पष्टत्वान्यथानुपपत्त्याऽपरोक्षस्थल एवाज्ञानविवृत्तिरिति तदर्थं वृत्तिनिर्गमोऽपि तत्रैव स्वीक्रियत इति चेत् । अस्तूक्तरीत्याऽपरोक्षस्थल एव स्पष्टता । तथाप्यपरोक्षत्वरूपजातिविशेषाश्रयज्ञानविषयतैव सा नान्या । मानाभावात् । न चापरोक्षैकरसचैतन्यस्यैकव्यक्तित्वेन नापरोक्ष्यं जातिः । किन्तूक्त उपाधिरूपमेव तदिति वाच्यम् । वस्तुतस्तस्यैकत्वेप्यौपाधिकव्यक्तिभेदस्य त्वन्मतेऽपि सत्त्वात् । कल्पिताकल्पितसाधारणव्यक्तिभेदमात्रस्यैव जातित्वे तन्त्रत्वात् । अन्यथा सत्यत्वज्ञानत्वानन्दत्वानामपि जातित्वाभावप्रसङ्गात् । तदुक्तं जन्मादिसूत्रे कल्पतरुकारैः । 'सत्यादिशब्दैर्जातिवचनैरेकानन्दव्यक्तिर्लक्ष्यते' इति । न चैवं जातिव्यक्तिभेदादनन्तपदबोधिताद्वैतहानिः । एकस्मिन्नेव तत्त्वे कल्पितभेदेन जातिकल्पनोपपत्तेरिति । वस्तुतस्तु अपरोक्षत्वस्य गुणत्ववत् सत्त्ववच्च जन्याजन्यज्ञानसाधरणजातित्वसम्भवान्नोक्तदोषावकाश इति ।

न च स्पष्टत्वस्योक्तज्ञानविषयत्वरूपत्वे तस्यापरोक्षस्थले सर्वत्रैकरूपतया इदं स्पष्टं स्पष्टतरं स्पष्टतमं स्फुरतीति तारतम्यप्रतीत्यनुपपत्तिरिति वाच्यम् । अभिव्यक्तचैतन्यावकुण्ठनरूपस्यापि

त्वदभिमतस्पष्टत्वस्यापरोक्षस्थले सर्वत्रैकरूपतया दोषसाम्यात् अभिव्यक्तितारतम्यमादाय तदुपपादने परोक्षत्वावान्तरजातिविशेषाश्रयतत्तज्ज्ञानविषयत्वमादाय मयापि तदुपपादनस्य कर्तुं शक्यत्वात् । एवंविधज्ञानविषयत्वाभावेनैव परोक्षस्थले सर्वत्रास्पष्टत्वोपपत्तेर्जिज्ञासोपपत्तेश्च परोक्षतया ज्ञाते ज्ञानसामान्येच्छायाः अयोगेऽपि अपरोक्षज्ञानविषयाया तस्यापरोक्षज्ञानभावमात्रप्रयुक्तत्वेन सम्भवाच्च । तदुक्तं 'परोक्षतया ज्ञातेऽपरोक्षतया ज्ञानमिष्यते सन्दिग्धे च निर्णयः फलमि'ति ।

## अर्थापरोक्ष्यं नाम किमिति विचारः—

अत्र नवीनाः । अर्थापरोक्ष्यत्वं नाम न तावदपरोक्षज्ञानविषयत्वम् । अपरोक्षत्वस्य दुर्निरूपत्वात् । तथाहि । अपरोक्षत्वं न चैतन्यमात्रगता जातिः, चैतन्यस्यैकव्यक्तिकत्वात् । नापि वृत्तिमात्रगता जातिः । अयं दण्ड्यासीदित्यादिज्ञाने दण्डीत्यंशेऽपरोक्षत्वाननुभावेन प्रत्युत परोक्षत्वानुभवेनाव्याप्यवृत्तित्वात् । 'दशमस्त्वमसी'त्यादिवाक्यजन्यज्ञानस्य ज्ञेयब्रह्मनिष्ठवेदान्तजन्यज्ञानस्य च अपरोक्षत्वाभ्युपगमेन शाब्दत्वाभ्युपगमेन च शाब्दत्वेन सङ्करप्रसङ्गात् । वृत्तेरपरोक्षत्वजातिमद्वृत्तिविषयत्वाभावेन तद्विषयत्वरूपार्थापरोक्षत्वाभावप्रसङ्गाच्च । नापि वृत्तिचैतन्यसाधारणजातिरपरोक्षत्वम् । तथा च वृत्तेरपरोक्षत्वजातिमत्साक्षिचैतन्यविषयत्वेन अपरोक्षत्वसम्भवान्नाव्याप्तिरिति युक्तम् । वृत्तेः सद्विलक्षणत्वेन चैतन्यस्य च सद्रूपत्वेन सदसत्साधारणजात्ययोगात् । सौषुप्तिकस्वरूपसुखेऽव्याप्तेश्च । नापीन्द्रियत्वेनेन्द्रियजन्यत्वोपाधिरूपं, तत्स्वरूपचैतन्यस्य स्वप्रकाशत्वेनाज्ञानान्तःकरणतद्धर्माणां साक्षिभाग्यत्वेनेन्द्रियजन्यज्ञानाविषयतयाऽपरोक्षत्वाभावप्रसङ्गात् । इन्द्रियजन्यत्वस्यावच्छेदकग्रहाधीनग्रहत्वेन स्वावच्छेदकस्यावश्यकत्वे तस्यैवापरोक्षत्वरूपत्वापत्तेश्च ।

नाप्यपरोक्षव्यवहारविषयत्वमर्थापरोक्षत्वम् । व्यवहारगतापरोक्षत्वस्यापरोक्षार्थविषयत्वादन्यस्याभावेनान्योन्याश्रयात् । मुक्तिकाले व्यवहारमात्राभावेन शुद्धचैतन्यस्यापरोक्षविषयत्वाभावप्रसङ्गाच्च । व्यवहारस्याभिलपनरूपत्वे मूकाद्यपरोक्षार्थेषु तदभावेनापरोक्षाभावापत्तेश्च । तादृशव्यवहारयोग्यत्वस्याप्यनिरूपणाच्च । तस्मान्नापरोक्षज्ञानविषयत्वमर्थापरोक्षत्वम् । किन्त्वात्मस्वरूपसंविदेव । न च घटाद्यपरोक्षार्थेष्वव्याप्तिः । तदपरोक्षत्वस्य तत्सत्त्वस्यैवात्ममात्रत्वात् । तथाहि आत्मा तावत् स्वत एवापरोक्षः । यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेः ।

तत्र साक्षादिति ज्ञानक्रियाव्यवधानेनापरोक्षत्वस्य निषिद्धत्वात् । आत्मनः स्वप्रकाशत्वेन घटादिवद्वृत्तिव्यवधानेनापरोक्षत्वासम्भवाच्च । घटादिकं चापरोक्षात्मन्यध्यस्तमिति स एव तदपरोक्षता । ततो भेदे प्रमाणाभावात् । घटाद्यपरोक्षत्वानुभवस्य तत्सत्त्वानुभववत् तदधिष्ठानात्मगोचरत्वात् लाघवेन

प्रपञ्चमात्रगतापरोक्षत्वैकत्वस्याद्वितीयात्ममात्ररूपत्वेनोपपाद्यत्वाच्च । आत्मातिरिक्तापरोक्षत्वं नैव घटादेरपरोक्षत्वानुभवनिर्वाहसम्भवेनानौपाधिकतद्भेदस्वीकारायोगाच्च । न च घटादिधर्मतयाऽनुभूयमानापरोक्षत्वस्य कथमवृत्त्यात्मसंवित्स्वरूपत्वमिति वाच्यम् । शुक्तिरजते इदमंशतादात्म्यस्येव घटार्थे आत्मसंवित्स्वरूपापरोक्षतादात्म्यमात्रस्यैवानुभवात् । तस्य च तदधिष्ठानत्वेऽप्युपपत्तेः । घटेऽपरोक्षत्वमित्यनुभवस्य नैयायिकादीनामिह तन्तुषु पटसमवाय इत्यनुभववत् अप्रमाणिकत्वात् । प्रामाणिकत्वे वा आत्मसंवित्स्वरूपातिरिक्तस्यापरोक्षत्वस्य जडेऽसम्भवेन तस्य भ्रान्तित्वात् । तस्माज्जडे सत्त्ववत् तदपरोक्षत्वमप्यपरोक्षैकरसात्मस्वरूपसंविदेव । तदाहुराचार्याः । 'प्रमाणज्ञानादन्तरपरोक्षानुभावान् न विषयस्थापरोक्षता भिद्यत' इति तर्हि सत्वमिव घटादेरपरोक्षत्वमपि सर्वदा स्यादिति चेन्न । प्रमातृचैतन्यतादात्म्यस्य सर्वदाऽसत्त्वात् । अत एव देवदत्तस्य घटाद्यपरोक्षतादशायां सर्वस्यापि घटादिरपरोक्षं स्यदिति निरस्तम् । तदवच्छिन्नचैतन्यस्यान्यं प्रति भिन्नत्वात् । अत एव देवदत्तस्य घटाद्यपरोक्षतादशायां रसो गुरुत्वादिकं चापरोक्षं स्यादिति निरस्तम् । चक्षुर्जन्यवृत्ते रसाद्यवच्छिन्नचैतन्यानभिव्यञ्जकत्वात् । तत्तदिन्द्रियतज्जन्याया अभिव्यञ्जकत्वादेव वृत्तेस्तदपरोक्षताव्यञ्जकत्वात् ।

एवं पर्वते वह्न्यादिरपि नापरोक्षः । तत्र वृत्तेरनिर्गमेन चैतन्याभिव्यक्तेरभावात् । सुखाद्यवच्छिन्नचैतन्यं च वृत्तिं विनैवाभिव्यक्तम् । सुखादेरनावृतसाक्षिण्यध्यासात् । तर्हि धर्मादिकमपि तत्रैवाध्यस्तमित्यपरोक्षं स्यादिति चेन्न । तस्यानुद्भूतत्वात् । यज्जडमुद्भूतं यदा यत्प्रमातृचैतन्याभिन्नं तत्तदा तस्याप्यपरोक्ष तत्तादात्म्यात् भवत्यपरोक्षम् । अत एव तत्सर्वज्ञत्वादि न जीवस्यापरोक्षम् । संसारदशायां जीवस्य सर्वज्ञेश्वरचैतन्याभेदाभिव्यक्त्यभावात् । ईश्वरस्य तु सर्वं परोक्षमेव, ज्ञानापरोक्षत्वं तु चैतन्यस्य स्वरूपेणैव, वृत्तेस्त्वपरोक्षार्थविषयत्वेन । न चापरोक्षार्थविषत्वरूपमेव ज्ञानापरोक्षत्वं वृत्तिचैतन्यसाधारणमस्त्विति वाच्यम् । चैतन्यस्य स्वप्रकाशस्वरूपसुखापरोक्षत्वाभावप्रसङ्गात् । तस्मात् तत्त्वमस्यादि वाक्यतात्पर्यविषयं ज्ञानं च परोक्षम् अपरोक्षार्थविषयत्वात् घटादिप्रत्यक्षवदिति ।

अत्र ब्रूमः । यदुक्तं ज्ञानापरोक्षत्वं दुर्निरूपमिति तन्न । तस्य जातिरूपत्वाङ्गीकारात् । यदपि चोक्तम् । एकव्यक्तिकत्वान्न तस्य चैतन्यमात्रगतजातित्वमिति । तदपि न । वस्तुतो व्यक्त्यैक्येऽपि औपाधिकभेदमादाय सत्यत्वज्ञानत्वानन्दत्वादीनामिवापरोक्षत्वस्यापि त्वन्नये जातित्वोपपत्तेः ।

एकव्यक्तिकत्वेऽपि तस्यापरोक्षादिपदप्रवृत्तिनिमित्ततया लाघवेनाखण्डजातिरूपत्वस्यैव वक्तुमुचितत्वाच्च । कारणतावच्छेदकत्वादिवच्छक्यतावच्छेदकत्वरूपपदप्रवृत्तिनिमित्तत्वत्तत्वस्याप्यखण्डधर्मविशेषत्वरूपजातित्वसाधकत्वात् क्लृप्तत्वेनोपाधेरेव तथात्वे च व्यक्त्यनेकत्वेऽपि क्लृप्त सास्नादिमत्वाद्युपाधित एवानुगतबुद्ध्याद्युपपत्तौ गोत्वाद्यखण्डधर्मविशेषरूपजात्यनभ्युपगमप्रसङ्गात् ।

न चैवं नित्यत्वे सत्यनेकव्यक्तिसमवेतत्वरूपजातिलक्षणाभावात् कथमपरोक्षत्वस्य जातित्वमिति वाच्यम् । त्वन्नये ब्रह्मभिन्नस्य सर्वस्यानित्यत्वाभ्युपगमेन समवायानभ्युपगमेन च तल्लक्षणस्य अन्यथैव निर्वक्तव्यत्वात् । अबाधितानुभवबलेन जातेरपि संयोगादिवदव्याप्यवृत्तित्वोपपत्त्या उपाधिकाङ्कर्यस्येव जातिसाङ्कर्यस्यादोषतया चापरोक्षत्वस्य वृत्तिमात्रगतजातित्वोपपत्तेश्च । वृत्तेवृत्त्यन्तराविषयत्वेऽपि प्राभाकरमत इवापरोक्षत्वजातिमत्स्वविषयत्वसम्भवेन अर्थापरोक्षत्वस्य सुवचत्वाच्च । सुखदुःखाद्यन्तः-करणवृत्तिविशेषाणामप्यपरोक्षज्ञानविशेषात्मकत्वस्य स्वविषयत्वरूपस्य स्वप्रकाशत्वस्य च सम्भवेन तद्गतार्थापरोक्षत्वस्यापि सूपपादत्वात् । अनुमित्यादि परोक्षवृत्तेरपि प्राभाकरमत इव स्वविषयत्वेन स्वांशे परोक्षत्वेन चोक्तार्थापरोक्षत्वस्य सुवचत्वात् । अविद्यान्तःकरणयोरपि प्राचीनरीत्याऽपरोक्षतत्तदाकार-स्वप्रकाशाविद्यावृत्तिमादायार्थापरोक्षत्वसम्भवात् । स्वरूपसुखस्यापि संसारदशायां तदाकारतादृशा-विद्यावृत्तिमादायार्थापरोक्षत्वनिर्वाहसम्भवाच्च । मोक्षदशायां न्यायनय इव त्वन्नये तादृशार्थापरोक्षत्व-स्यानङ्गीकारेऽप्यक्षतेश्च ।

वस्तुतस्तूक्तरीत्या परोक्षत्वस्य वृत्तिस्वरूपचैतन्योभयसाधारणजातिरूपत्वाङ्गीकारेण घटादि-बहिरर्थेषु वृत्तिविशेषमादायात्मज्ञानान्तःकरणतद्धर्मरूपार्थान्तरेष्वपि स्वप्रकाशापरोक्षस्वरूपचैतन्य-विषयत्वमादाय चोक्तार्थापरोक्षत्वसम्भवेन न कोऽपि दोष इति । न च सदसत्साधारणजात्यसम्भवो दोषः । ज्ञेयत्वाभिधेयत्वाद्युपाधिवज्जातित्वस्य अप्रयोजकतया जातेरपि सदसद्वृत्तित्वसम्भवात् ।

वस्तुतस्तु वृत्तिज्ञानस्यापि स्वरूपचैतन्यवत्सत्यत्वेन नोक्तदोषावकाश इति । एतेनार्थापरोक्षत्व-मात्मस्वरूपसंविदैवेत्यादि प्रत्युक्तम् । उक्तविधया तादृशजातिमज्ज्ञानविषयत्वस्यैवार्थापरोक्षत्व-रूपत्वसम्भवे तस्यात्मस्वरूपसंविद्रूपत्वे मानाभावात् । 'यत्साक्षादपरोक्षाद्ब्रह्मे'ति श्रुतेश्च घटादिवद्वस्तुतः स्वातिरिक्त संविद्विषयत्वरूपापरोक्षत्वनिषेधपरत्वेनाप्युपपत्तेः । अवृत्त्यात्मस्वरूपसंविदो घटादिधर्मत्वा-योगेन तदापरोक्ष्याभावप्रसङ्गात् । न च घटादेः सद्रूपात्मन्यध्यस्ततया यथा तत्तादात्म्यमेव तथाऽपरो-क्षात्मन्यध्यस्तया तत्तादात्म्यमेवेति वाच्यम् । सत्त्वस्यापि घटत्वादिवद्घटादिधर्मत्वेन दृष्टान्तेऽसम्प्रति-पत्तेः । अपरोक्षत्वस्यापरोक्षो घट इत्यबाधितानुभवबलेन घटत्वादिवद्घटादिधर्मताया दुरपह्नवत्वाच्च ।

न च लाघवादावश्यकत्वात् "सत्यं ज्ञानमनन्तं ब्रह्म, यत्साक्षादपरोक्षाद्ब्रह्मे"ति श्रुतेश्च तयो-र्ब्रह्मधर्मत्वमेव न घटादिधर्मत्वम् । घटः सन् पटोऽपरोक्ष इति सामानाधिकरण्यव्यपदेशस्तु शुक्ताविदं रजतमिति सामानाधिकरण्यव्यपदेशवदाध्यासिकाधिष्ठानतादात्म्यसम्बन्धेनैवोपपन्नः । न हि शुक्तीदन्त्वं शुक्ताविव तत्राध्यस्तरजतेऽस्तीति कस्याप्यभ्युपगम इति वाच्यम् । सत्त्वापरोक्षत्वयोः वेदैकसमधि-

गम्यब्रह्ममात्रत्वेन चक्षुरादीन्द्रियजन्यप्रतीतिविषयत्वानुपपत्तेः । अन्यथा [1]'नेन्द्रियाणि, नानुमानं, न चक्षुषा पश्यति कश्चनैनमि'त्यादि श्रुत्यप्रामाण्यप्रसङ्गात् । न च शुद्धचैतन्यस्वरूपस्येन्द्रियाद्यविषयत्वेऽपि योग्योपहितस्य तदविरुद्धमिति वाच्यम् । अतीन्द्रियपरमाण्वादीनामपि ऐन्द्रियकघटाद्युपाधानेनैन्द्रियकत्वापत्तेः । न च तत्तद्योग्यतादात्म्यमेव तत्तद्योग्यत्वे प्रयोजकमिति वाच्यम् । तथा सति गुरुत्वादेरपि चक्षुरादिग्राह्यत्वापत्तेः ।

किञ्च घटादिगतत्वेन प्रतीयमानसत्त्वापरोक्षत्वयोर्लाघवमात्रादरेण ब्रह्मगतत्वमङ्गीकृत्य तत्तादात्म्येनैव घटादौ तत्प्रतीत्युपपादने तुल्यन्यायतया घटादिगतधर्ममात्रस्यापि ब्रह्मगतत्वप्रसङ्गः । तद्धर्मकब्रह्मतादात्म्येनैव घटादौ तत्प्रतीत्युपपादनसम्भवात् । न च सत्त्वापरोक्षत्वयोर्ब्रह्मधर्मत्वे "सत्यं ज्ञानमनन्तं ब्रह्म यत्साक्षादपरोक्षाद्ब्रह्मे"त्यादि श्रुतिवत् द्रव्यत्वादीनां ब्रह्मधर्मत्वे मानाभावान्नैवमिति वाच्यम् । [2]"'सर्वकर्मा सर्वगन्धः सर्वरसः, [3]मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"त्यादि श्रुतिस्मृतिभिः सर्वेषां ब्रह्मधर्मत्वावगमात् । "विश्वं सत्यम्" इत्यादिश्रुत्या, घटादिरपरोक्ष इति प्रत्यक्षेण च सत्त्वापरोक्षत्वयोरपि घटादिप्रपञ्चधर्मत्वावगतेश्च ।

ननु सत्त्वापरोक्षत्वयो ब्रह्मघटादिषु श्रौतसामानाधिकरण्यव्यपदेशस्य ब्रह्मधर्मत्वेन घटादिधर्मत्वेन वोपपादनसम्भवेन नोभयधर्मत्वं कल्प्यम्, गौरवात् । एवं च ब्रह्मधर्मत्वमेव कल्प्यम् । ब्रह्मण एकत्वेन तद्धर्मत्वकल्पने लाघवरूपविनिगमकसत्त्वात् । न तु घटादिधर्मत्वं तेषामानन्त्येन गौरवादिति चेन्न । 'विश्वं सत्यमि'ति श्रौतसामानाधिकरण्यव्यपदेशस्यारोपितसदपरोक्षब्रह्मदातात्म्यमादायोपपादने शुक्ताविदं रजतमिति व्यपदेशस्येवाप्रमाण्यप्रसङ्गात् । अनारोपिततत्तादात्म्यस्य चानभ्युपगमात् ।

किञ्च लाघवात् तत्सत्त्वापरोक्षत्वयोर्ब्रह्मधर्मत्वाभ्युपगमे 'आकाशवत्सर्वगतश्च नित्य' इत्यादि श्रुतौ दृष्टान्तत्वेनोपात्ताकाशस्य नित्यत्वसर्वगतत्वयोरावश्यकत्वेन ब्रह्मवत्तस्यैकत्वेन सत्त्वापरोक्षत्वयोस्तद्धर्मत्वमेव किं न स्यात् । विनिगमकाभावात् । आरोपिततत्तादात्म्यमादाय ब्रह्मणि घटादौ च [4]'सत्यं ब्रह्म यत्साक्षादपरोक्षाद्ब्रह्म विश्वं सत्यं घटादिरपरोक्ष' इत्यादि श्रौतलौकिकसामानाधिकरण्यव्यपदेशस्य सूपपादत्वात् । 'विश्वं सत्यमि'ति श्रौतसामानाधिकरण्यव्यपदेशस्यैव विश्वान्तःपात्याकाशसत्यत्वे मानत्वात् । चक्षुरादिना घटादेरिव साक्षिणाऽकाशस्य सत्त्वेनैव ग्रहणाच्च । साक्षिवेद्यत्वेनाकाशापरोक्षत्वस्योभयवादिसम्प्रतिपन्नत्वाच्च ।

१. पिप्पला.श्रुति (श्री.वि.त.नि.उ.श्रु.पृष्ठ ११)    २. छां. ३-१४-४
३. कैव. १९    ४. बृह. ५-४-१

## ''नेति नेति' इत्यादश्रिुतीनां न तत् सद्रूपत्वनिषेधपरत्वमिति निरूपणम्—

यद्वा ''एकत्वेनाजामेकामि'त्यादि श्रुतिसिद्धाया अविद्यायाः 'तम आसीदि'त्यादिश्रुत्या सत्यत्वावगतेरुभयवादिसिद्धसाक्षिवेद्यत्वेनापरोक्षत्वाच्च । सत्त्वापरोक्षत्वयोरविद्याधर्मत्वमेवाङ्गीकृत्य ''सत्यं ब्रह्मापरोक्षाद्ब्रह्म, विश्वं सत्यं, घटादिरपरोक्ष'' इत्यादि श्रौतलौकिकसामानाधिकरण्यव्यपदेशोपपत्तेस्तयोर्ब्रह्मधर्मत्वमपि नोपेयं स्यात् । ''नेति नेति एकमेवाद्वितीयं नेहनानास्ति किञ्चने''त्यादि श्रुत्या ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मणि निषेधान्मिथ्यात्वावश्यम्भावेन, ''विश्वं तत्स्यं तम आसीदि''त्यादिश्रुतेस्तद्विरुद्धं सत्यत्वपरत्वमेवानुपपन्नमित्याकाशस्याविद्याया वा एकत्वेऽपि न सत्यत्वमुपपद्यत इति चेत् । तर्हि ''सदेव सौम्येदमग्र आसीदात्मा वा इदमेकमेवाग्र आसीदि''त्यादिश्रुत्या सप्रपञ्चस्य ब्राह्मण अग्रशब्दप्रतिपाद्यकालत्वलक्षणप्रतिपन्नोपाधौ सत्त्वमनूद्येदं वाग्रे नैव किञ्चनासीद्'', ''असदेव इदमग्र आसीन्नासदासीन्नोसदासीत् तदानीम् अलक्षणमव्यपदेश्यमि''त्यादिश्रुतिभिर्निषेधात्, ''ब्रह्मणोऽपि मिथ्यात्वावश्यम्भावेन सत्यं ज्ञानमनन्तं ब्रह्म, तत्सत्यं, स आत्मे''ति श्रुतेस्तद्विरुद्धसत्यत्वपरत्वमेवानुपपन्नमिति ब्रह्मण एकत्वेऽपि न वास्तवसद्रूपत्वमुपपद्यत इति समम् ।

यदि ''सत्यं ज्ञानं, तत्सत्यम्'' इत्यादिश्रुत्या ब्रह्मणः सद्रूपत्वावगमात् स्वतस्त्वाच्च प्रामाण्यस्य ''इदं वाग्रे नैव किञ्चने''त्यादि श्रुतीनां तन्निषेधपरत्वं, तर्हि ''विश्वं सत्यं यच्चिकेत सत्यं याथातथ्यतोऽर्थान्व्यदधात्, तम आसीदि''त्यादि श्रुतिभिराकाशस्याविद्यायाः कार्यप्रपञ्चस्य च सद्रूपत्वावगमात् । ''असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि''त्यादि स्मृतिभिस्तदसद्रूपत्ववादनिन्दावगमात् स्वतस्त्वाच्च प्रामाण्यस्य ''नेति नेती''त्यादि श्रुतीनां न तत्सद्रूपत्वनिषेधपरत्वमित्यपि समम् ।

किञ्च घटादिप्रपञ्चे तमसीव प्रत्यक्षेण श्रुत्या च प्रतिपन्नसत्यत्वस्यैव 'अहमस्मि सत्यं ज्ञानमि'ति प्रत्यक्षेण श्रुत्या च जीवात्मपरमात्मनोः प्रतिपन्नसत्यत्वस्य व्यावहारिकत्वाविशेषे तत्र प्रपञ्च एवासत्यः जीवपरमात्मानौ तु नासत्यावित्ययुक्तम् । तस्माद् विनिगमकाभावात् सत्यत्वस्य ब्रह्मधर्मत्ववदाकाशाविद्यादिप्रञ्चधर्मत्वमपि दुर्निवारम् । एवं अपरोक्षत्वस्याप्याकाशाविद्यादिप्रपञ्चधर्मत्वं दुर्निवारमिति न तस्यावृत्त्यात्मस्वरूपसंविद्रूपत्वमिति ।

किञ्च सद्रूपब्रह्मतादात्म्यवत्प्रपञ्चमात्रेऽपरोक्षतत्तादात्म्यस्य सर्वदा सत्त्वेन प्रपञ्चमात्रस्य सर्वदा सर्वं प्रति सत्त्ववत्तस्य सर्वदा सर्वं प्रत्यपरोक्षत्वप्रसङ्गः । 'यः प्रमातृचैतन्यतादात्म्यं यस्य वस्तुनो यदा तदैव तद्वस्तुचैतन्यं प्रत्यपरोक्षमि'ति नोक्तातिप्रसङ्ग इति चेत्तर्ह्यविद्यादेर्वियदादिप्रपञ्चस्य च शुद्धचैतन्ये बिम्बभूते ब्रह्मचैतन्ये वाध्यासेन तत्तादात्म्यसत्त्वेऽपि तद्भिन्नान्तःकरणोपहितप्रतिबिम्बभूतप्रमातृचैतन्ये अनभ्यस्ततया तत्तादात्म्यासम्भवेन तादृशप्रमातृचैतन्यं प्रति कदाप्यविद्यादेर्वियदादेश्च अपरोक्षत्वं

गम्यब्रह्ममात्रत्वेन चक्षुरादीन्द्रियजन्यप्रतीतिविषयत्वानुपपत्तेः । अन्यथा [1]नेन्द्रियाणि, नानुमानं, न चक्षुषा पश्यति कश्चनैनमि'त्यादि श्रुत्यप्रामाण्यप्रसङ्गात् । न च शुद्धचैतन्यस्वरूपस्येन्द्रियाद्यविषयत्वेऽपि योग्योपहितस्य तदविरुद्धमिति वाच्यम् । अतीन्द्रियपरमाण्वादीनामपि ऐन्द्रियकघटाद्युपाधानेनैन्द्रियकत्वापत्तेः । न च तत्तद्योग्यतादात्म्यमेव तत्तद्योग्यत्वे प्रयोजकमिति वाच्यम् । तथा सति गुरुत्वादेरपि चक्षुरादिग्राह्यत्वापत्तेः ।

किञ्च घटादिगतत्वेन प्रतीयमानसत्त्वापरोक्षत्वयोर्लाघवमात्रादरेण ब्रह्मगतत्वमङ्गीकृत्य तत्तादात्म्येनैव घटादौ तत्प्रतीत्युपपादने तुल्यन्यायतया घटादिगतधर्ममात्रस्यापि ब्रह्मगतत्वप्रसङ्गः । तद्धर्मकब्रह्मतादात्म्येनैव घटादौ तत्प्रतीत्युपपादनसम्भवात् । न च सत्त्वापरोक्षत्वयोर्ब्रह्मधर्मत्वे "सत्यं ज्ञानमनन्तं ब्रह्म यत्साक्षादपरोक्षाद्ब्रह्मे"त्यादि श्रुतिवत् द्रव्यत्वादीनां ब्रह्मधर्मत्वे मानाभावान्नैवमिति वाच्यम् । [2]"सर्वकर्मा सर्वगन्धः सर्वरसः, [3]मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् । मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इवे"त्यादि श्रुतिस्मृतिभिः सर्वेषां ब्रह्मधर्मत्वावगमात् । "विश्वं सत्यम्" इत्यादिश्रुत्या, घटादिरपरोक्ष इति प्रत्यक्षेण च सत्त्वापरोक्षत्वयोरपि घटादिप्रपञ्चधर्मत्वावगतेश्च ।

ननु सत्त्वापरोक्षत्वयो ब्रह्मघटादिषु श्रौतसामानाधिकरण्यव्यपदेशस्य ब्रह्मधर्मत्वेन घटादिधर्मत्वेन वोपपादनसम्भवेन नोभयधर्मत्वं कल्प्यम्, गौरवात् । एवं च ब्रह्मधर्मत्वमेव कल्प्यम् । ब्रह्मण एकत्वेन तद्धर्मत्वकल्पने लाघवरूपविनिगमकसत्त्वात् । न तु घटादिधर्मत्वं तेषामानन्त्येन गौरवादिति चेन्न । 'विश्वं सत्यमि'ति श्रौतसामानाधिकरण्यव्यपदेशस्यारोपितसदपरोक्षब्रह्मदातात्म्यमादायोपपादने शुक्ताविदं रजतमिति व्यपदेशस्येवाप्रामाण्यप्रसङ्गात् । अनारोपिततत्तादात्म्यस्य चानभ्युपगमात् ।

किञ्च लाघवात् तत्सत्त्वापरोक्षत्वयोर्ब्रह्मधर्मत्वाभ्युपगमे 'आकाशवत्सर्वगतश्च नित्य' इत्यादि श्रुतौ दृष्टान्तत्वेनोपात्ताकाशस्य नित्यत्वसर्वगतत्वयोरावश्यकत्वेन ब्रह्मवत्तस्यैकत्वेन सत्त्वापरोक्षत्वयोस्तद्धर्मत्वमेव किं न स्यात् । विनिगमकाभावात् । आरोपिततत्तादात्म्यमादाय ब्रह्मणि घटादौ च [4]"सत्यं ब्रह्म यत्साक्षादपरोक्षाद्ब्रह्म विश्वं सत्यं घटादिरपरोक्ष' इत्यादि श्रौतलौकिकसामानाधिकरण्यव्यपदेशस्य सूपपादत्वात् । 'विश्वं सत्यमि'ति श्रौतसामानाधिकरण्यव्यपदेशस्यैव विश्वान्तःपात्याकाशसत्यत्वे मानत्वात् । चक्षुरादिना घटादेरिव साक्षिणाऽकाशस्य सत्त्वेनैव ग्रहणाच्च । साक्षिवेद्यत्वेनाकाशापरोक्षत्वस्योभयवादिसम्प्रतिपन्नत्वाच्च ।

---

१. पिप्पला.श्रुति (श्री.वि.त.नि.उ.श्रु.पृष्ठ ११)  २. छां. ३-१४-४
३. कैव. १९  ४. बृह. ५-४-१

## "नेति नेति' इत्यादश्रुतीनां न तत् सद्रूपत्वनिषेधपरत्वमिति निरूपणम्—

यद्वा "एकत्वेनाजामेकामि'त्यादि श्रुतिसिद्धाया अविद्यायाः 'तम आसीदि'त्यादिश्रुत्या सत्यत्वावगतेरुभयवादिसिद्धसाक्षिवेद्यत्वेनापरोक्षत्वाच्च । सत्त्वापरोक्षत्वयोरविद्याधर्मत्वमेवाङ्गीकृत्य "सत्यं ब्रह्मापरोक्षाद्ब्रह्म, विश्वं सत्यं, घटादिरपरोक्ष" इत्यादि श्रौतलौकिकसामानाधिकरण्यव्यपदेशोपपत्तेरन्योन्यब्रह्मधर्मत्वमपि नोपेयं स्यात् । "नेति नेति एकमेवाद्वितीयं नेहनानास्ति किञ्चने"त्यादि श्रुत्या ब्रह्मव्यतिरिक्तस्य सर्वस्य ब्रह्मणि निषेधान्मिथ्यात्वावश्यम्भावेन, "विश्वं तथ्यं तम आसीदि"त्यादिश्रुतेस्तद्विरुद्धं सत्यत्वपरत्वमेवानुपपन्नमित्याकाशस्याविद्याया वा एकत्वेऽपि न सत्यत्वमुपपद्यत इति चेत् । तर्हि "सदेव सौम्येदमग्र आसीदात्मा वा इदमेकमेवाग्र आसीदि"त्यादिश्रुत्या सप्रपञ्चस्य ब्राह्मण अग्रशब्दप्रतिपाद्यकाललक्षणप्रतिपन्नोपाधौ सत्त्वमनूद्येदं वाग्रे नैव किञ्चनासीद्", "असदेव इदमग्र आसीन्नासदासीन्नोसदासीत् तदानीम् अलक्षणमव्यपदेश्यमि"त्यादिश्रुतिभिर्निषेधात्, "ब्रह्मणोऽपि मिथ्यात्वावश्यम्भावेन सत्यं ज्ञानमनन्तं ब्रह्म, तत्सत्यं, स आत्मे"ति श्रुतेस्तद्विरुद्धसत्यत्वपरत्वमेवानुपपन्नमिति ब्रह्मण एकत्वेऽपि न वास्तवसद्रूपत्वमुपपद्यत इति समम् ।

यदि "सत्यं ज्ञानं, तत्सत्यम्" इत्यादिश्रुत्या ब्रह्मणः सद्रूपत्वावगमात् स्वतस्त्वाच्च प्रामाण्यस्य "इदं वाग्रे नैव किञ्चने"त्यादि श्रुतीनां तन्निषेधपरत्वं, तर्हि "विश्वं सत्यं यच्चिकेत सत्यं याथातथ्यतोऽर्थान्व्यदधात्, तम आसीदि"त्यादि श्रुतिभिराकाशस्याविद्यायाः कार्यप्रपञ्चस्य च सद्रूपत्वावगमात् । "असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरमि"त्यादि स्मृतिभिरसदसद्रूपत्ववादनिन्दावगमात् स्वतस्त्वाच्च प्रामाण्यस्य "नेति नेती"त्यादि श्रुतीनां न तत्सद्रूपत्वनिषेधपरत्वमित्यपि समम् ।

किञ्च घटादिप्रपञ्चे तमसीव प्रत्यक्षेण श्रुत्या च प्रतिपन्नसत्यत्वस्यैव 'अहमस्मि सत्यं ज्ञानमि'ति प्रत्यक्षेण श्रुत्या च जीवात्मपरमात्मनोः प्रतिपन्नसत्यत्वस्य व्यावहारिकत्वाविशेषे तत्र प्रपञ्च एवासत्यः जीवपरमात्मानौ तु नासत्यावित्ययुक्तम् । तस्माद् विनिगमकाभावात् सत्यत्वस्य ब्रह्मधर्मत्ववदाकाशाविद्यादिप्रञ्चधर्मत्वमपि दुर्निवारम् । एवं अपरोक्षत्वस्याप्याकाशाविद्यादिप्रपञ्चधर्मत्वं दुर्निवारमिति न तस्यावृत्त्यात्मस्वरूपसंविद्रूपत्वमिति ।

किञ्च सद्रूपब्रह्मतादात्म्यवत्प्रपञ्चमात्रेऽपरोक्षतत्तादात्म्यस्य सर्वदा सत्त्वेन प्रपञ्चमात्रस्य सर्वदा सर्वं प्रति सत्त्ववत्तस्य सर्वदा सर्वं प्रत्यपरोक्षत्वप्रसङ्गः । 'यः प्रमातृचैतन्यतादात्म्यं यस्य वस्तुनो यदा तदैव तद्वस्तुचैतन्यं प्रत्यपरोक्षमि'ति नोक्तातिप्रसङ्ग इति चेत्तर्ह्यविद्यादेर्वियदादिप्रपञ्चस्य च शुद्धचैतन्ये बिम्बभूते ब्रह्मचैतन्ये वाध्यासेन तत्तादात्म्यसत्त्वेऽपि तद्भिन्नान्तःकरणोपहितप्रतिबिम्बभूतप्रमातृचैतन्ये अनध्यस्ततया तत्तादात्म्यासम्भवेन तादृशप्रमातृचैतन्यं प्रति कदाप्यविद्यादेर्वियदादेश्च अपरोक्षत्वं

न स्यात् । न च घटाद्यधिष्ठानबिम्बभूतब्रह्मचैतन्यस्यान्तःकरणोपहितप्रतिबिम्बभूतप्रमातृचैतन्येन सहेन्द्रियद्वारा निस्सृततत्तदाकारान्तःकरणवृत्त्या तटाकस्थजलस्य केदारस्थजलेन सह कूल्याद्वारा निस्सृतजलेनैव तादात्म्यसम्पादनात् घटादेरैन्द्रियकस्वाकारतत्तदन्तःकरणवृत्तिकाले तत्तदन्तःकरणोपहिततत्तत्प्रमातृचैतन्यं प्रत्यपरोक्षत्वमविकलम् । अन्तःकरणस्य साक्षात्प्रमातृचैतन्य एवाध्यस्ततया तत्तादात्म्यसत्त्वेनापरोक्षत्वं अविद्यायाः । शुद्धचैतन्येऽध्यस्तत्वेऽपि तस्य सर्वानुस्यूततया प्रमातृचैतन्यतादात्म्यस्य सत्त्वेन तत्प्रति तस्याप्यपरोक्षत्वमविकलम् ।

एवमाकाशाधिष्ठानबिम्बभूतचैतन्यस्य व्यापकतया प्रतिबिम्बभूतप्रमातृचैतन्यानुस्यूतिसम्भवेन तत्तादात्म्यसत्त्वात् प्रतिबिम्बभूतप्रमातृचैतन्यं प्रत्याकाशस्यापरोक्षत्वमविकलमिति वाच्यम् । घटाद्यधिष्ठानबिम्बचैतन्यस्य प्रतिबिम्बभूतप्रमातृचैतन्यस्य वा आसंसारं भेदकाविद्याद्युपाधेः सत्त्वेनेन्द्रियद्वारा निःसृततत्तदाकारान्तःकरणवृत्त्योपाधिकभेदाभावरूपतादात्म्यस्य सम्पादनायोगात् । वास्तवतदभेदस्यातिप्रसञ्जकत्वात् । तस्य वृत्त्यकार्यत्वेन तदर्थं वृत्तिनिर्गमस्वीकारायोगाच्च । कुल्याद्वारा निःसृततटाकजलेन तटाककेदारस्थजलयोर्न भेदः क्रियते । तथा सति नियतदेशस्थ घटपटसम्बद्धदीर्घदण्डेनापि तदभेदकरणप्रसङ्गात् । किन्तु तथाविधद्रव्यान्तरमेवोत्पाद्यते । केदारोदकं तटाकोदकेन सहैकं जातमिति व्यपदेशोऽपि तद्विषय एव मिलितनीरक्षीरयोरिव भेदाग्रहनिबन्धनो वा 'सायं गोष्ठे सर्वे गाव एकीभूता जाता' इतिवत् तावद्देशरूपैकावच्छेदकावच्छिन्नत्वनिबन्धनौपचारिको वेति वैषम्यसत्त्वेन तस्य दृष्टान्तत्वानुपपत्तेश्च ।

एवञ्च घटादेः प्रामातृतादात्म्यसम्भवे कथमपरोक्षत्वावैकल्यम् । एवमन्तःकरणस्यापि प्रतिबिम्बचैतन्ये तादात्म्याध्यासे मानाभावेनापरोक्षत्वानुपपत्तिः । न चेदं रजतमिति वह्न्याकारावभासाभावेऽहमिति प्रत्ययस्येदमनिदमर्थतादात्म्यविषयत्वमभ्युपगमार्हम् । अन्यथा तद्भेदविषयत्वाभ्युपगमप्रसङ्गात् ।

मम मनो ममान्तःकरणमित्यन्तःकरणस्याहमर्थाभिन्नत्वेन तत्सम्बन्धित्वेन चानुभवत् कथं तस्य अहमर्थकुक्षौ निक्षेपः । न ह्यहं मनोऽहमन्तःकरणमिति च कस्याप्यनुभवोऽस्ति । प्रत्युताहं मनसा जानामीत्येव कर्तृकरणभावेन तयोर्भेदस्यैवानुभवः । न चैवमहमर्थे तद्भिन्नत्वेन गृहीतान्तःकरणधर्मभूतसुखदुःखाध्यासानुपपत्तिः । अहं सुखीत्याद्यनुभवस्य घटवद्भूतलं धनी देवदत्तः इत्यादि प्रत्ययवत्तादात्म्यान्याबाधितसम्बन्धविषयत्वेनानध्याससत्त्वात् ।

न चैवं दुःखादीनामन्तःकरणपरिणामित्वे तन्निष्ठतयापि तत्प्रतीतिप्रसङ्ग इति वाच्यम् । इष्टापत्तेः। इदानीं मम मनोऽतीव दुःखितमित्याद्यनुभवात् । एवमविद्याकाशयोरप्यपरोक्षत्वमनुपपन्नम् । अविद्यायाः

शुद्धचैतन्ये आकाशस्य बिम्बभूतब्रह्मचैतन्येऽध्यस्तत्वेन तयोः प्रमातृचैतन्यतादात्म्यासम्भवात् । अविद्याकाशाधिष्ठानभूतशुद्धबिम्बचैतन्ययोः प्रतिबिम्बभूतप्रमातृचैतन्यस्य च परस्परभेदकाविद्याद्युपाधिसत्त्वेन तादात्म्यासम्भवात् । वास्तवाभेदस्यातिप्रसञ्जकत्वाच्च अविद्याया जीवाश्रितत्वपक्षेऽप्यहमज्ञो ममाज्ञानमित्यविद्याया जीवाश्रितत्वेन तत्सम्बन्धित्वेन चानुभवात् । जीवापरनामकप्रमातृचैतन्यतादात्म्ये मानाभावेन न तस्यापरोक्षत्वं युक्तम् । नह्यहमज्ञानामिति कस्याप्यनुभवोऽस्ति ।

किञ्च देवदत्तं प्रति यदा घटापरोक्षस्तदैव यज्ञदत्तादीन् प्रत्यपि सोऽपरोक्षः स्यात् । यज्ञदत्तप्रमातृचैत्यस्य देवदत्तप्रमातृचैतन्यस्येव घटाधिष्ठानचैतन्येन वास्तवैक्यसत्त्वात् । औपाधिकभेदस्यैवोपाधिनिवृत्तिमात्राधीननिवृत्तिकत्वेन यज्ञदत्तादीन् प्रतीव यावदुपाधिसत्त्वं देवदत्तं प्रत्यपि प्रमातृचैतन्यभेदसत्त्वेन वृत्तिकृतविशेषाभावेन च तं प्रत्यपि घटस्यापरोक्षत्वाभावप्रसङ्गात् ।

एतेन यत्प्रमातृचैतन्याभिन्नतया यद्विषयचैतन्यं यदीयान्तःकरणवृत्त्याभिव्यज्यते तत्तस्यापरोक्षमिति व्यवस्थेति निरस्तम् । तदैक्यस्य चैतन्यस्वरूपमात्रत्वेन तस्य देवदत्तं प्रत्यभिव्यक्तिदशायां यज्ञदत्तादीन् प्रत्यभिव्यक्तेरवारणात् घटाकारवृत्तेश्चैतन्यैक्याकारत्वाभावेन देवदत्तं प्रत्यपि विषयाधिष्ठानचैतन्येन स्वीयप्रमातृचैतन्यविषयकाज्ञाननिवृत्तिरूपाभिव्यक्तिजनकत्वानुपपत्तेश्च । अन्यथा घटाकारवृत्त्यैव जीवब्रह्मैक्यविषयकाज्ञाननिवृत्तिसम्भवे तदर्थकतदैक्याकारवृत्त्यर्थं तत्त्वमसीत्यादिमहावाक्योपासनानुपपत्तेः ।

नन्विन्द्रियद्वारा निर्गतघटाद्याकारकवृत्तिरूपेण परिणतदेवदत्तीयान्तःकरणसम्बन्धेन घटाद्यधिष्ठानचैतन्यस्य तदन्त करणावच्छिन्नत्वरूपदेवदत्तप्रमातृभेदसत्त्वेन घटादेः तदन्तःकरणवत् तदन्तःकरणधर्मवच्च तत्प्रमातृचैतन्याभेदरूपमापरोक्ष्यं देवदत्तप्रमातृचैतन्यं प्रत्येव न यज्ञदत्तादिप्रमातृचैतन्यं प्रत्यपीति व्यवस्था युक्तेति चेन्न । वृत्तिनिर्गमे प्रमाणाभावस्योक्तत्वात् । अर्थापरोक्ष्यस्यान्यथैवोपपादितत्वाच्च । अन्यथान्योन्याश्रयात् । अन्तःकरणतद्धर्मादीनां जीवभिन्नतया तदभिन्नत्वरूपापरोक्ष्यासम्भवेन दृष्टान्तासम्प्रतिपत्तेश्च । न ह्यन्तःकरणादीनां जीवभिन्नत्व इव तदभिन्नत्वे मानमस्ति ।

किञ्च घटादीनामुक्तरीत्या प्रमातृचैतन्याभेदे घटोऽहं श्यामो गच्छामिति प्रतीतिप्रसङ्गः । सौवर्णघटादिषु नष्टेष्वहमेव नष्ट इति व्यपदेशस्य गौणत्वात् तथाविधप्रतीतेश्चाभावात् । भावे वा तस्याः घटनाशप्रयुक्तस्वाम्यविशिष्टनाशविषयत्वेनोपपत्तेः । विशिष्टस्यावयविवत्पदार्थान्तरत्वात् । अन्यथा अवयवतत्सम्बन्धव्यतिरिक्तावयव्यसिध्यापत्तेः । किञ्च घटाद्यधिष्ठानचैतन्ये दीर्घप्रभाकारेण परिणममानान्तःकरणस्य अनध्यस्ततया त्वन्मतेऽपि न प्रमातृचैतन्य इव तादात्म्यं सम्भवति किन्तु संयोग

एव। तथा च मृत्परिणामघटसंयुक्ते पटे मृद्वत् प्रमातृचैतन्यनादात्म्यापन्नान्तःकरणसंयुक्तघटाद्यधिष्ठान-चैतन्येष्वपि न प्रमातृचैतन्याभेदः सम्भवति। अतः कथं घटादेः प्रमातृचैतन्याभेदप्रयुक्तापरोक्ष्यनिर्वाहः। किञ्च देवदत्तस्य घटाकारापरोक्षवृत्तिदशायां घटगतरूपादिवद्गन्धगुरुत्वादेरप्यापरोक्ष्यप्रसङ्गः । एवमिदं रजतमिति भ्रमस्थले तत्काले शुक्तित्वादेरप्यपरोक्षत्वप्रसङ्गः । न चावृतत्वादेव न तदापरोक्ष्यमिति वाच्यम् । तथापि प्रमातृचैतन्याभेदरूपार्थापरोक्ष्यातिप्रसक्तेरनिस्तारात् । अनावृतत्वस्य तदापरोक्ष्य-विशेषणं चावश्यकत्वात्। लाघवाच्च तस्यैवार्थापरोक्षत्वरूपत्वेन शेषवैयर्थ्यापत्तेः। यं प्रति यदनावृतं तं प्रति तदपरोक्षमिति तद्विशेषव्यवस्थोपपत्तेः ।

किञ्च रसगन्धगुरुत्वादीनां जडत्वेन साक्षादावृतत्वायोगेन तदधिष्ठानभूतचैतन्यावरणेनैव तेषा-मावृतत्वं वाच्यम्। एवञ्च सति रूपसङ्ख्यापरिणामाद्यापरोक्ष्यसमये तत्समानाधिकरणरसगन्धगुरुत्वा-दीनामापरोक्ष्यं दुर्वारम् । तेषामेकचैतन्याध्यस्तत्वेन रूपादीनामिवानावृतचैतन्यसम्भेदादिविशेषात् । अन्यथा रसगन्धादिवद्रूपादीनामप्यपरोक्ष्याभावप्रसङ्गात्। एतेन परोक्षस्थले वह्न्यादेर्नापरोक्षत्वम्। तत्र वृत्तेरनिर्गमेन प्रमातृचैतन्याभिन्नतया वह्न्यादिविषयाधिष्ठानचैतन्याभिव्यक्त्यभावादिति निरस्तम् । पर्वतादिना व्यवहितवह्न्यादेस्तथात्वेऽपि चक्षुःसन्निकृष्टपक्वपतच्चूतफलादौ यत्र गुरुत्वानुमितिर्यत्र च अन्तःकरणसंसृष्टहृदयादिगोचरानुमित्यादिरूपपरोक्षवृत्तिस्तत्रोभयत्र गुरुत्वस्य हृदयादेश्चापरोक्ष्यप्रसङ्ग-वारणात् । रूपिचक्षुःसन्निकृष्टपतच्चूतफलापरोक्ष्यानुसारेण गुरुत्वविशिष्टपतच्चूतफलविषयकवृत्तेरेकत्वेन तन्निर्गमस्यावश्यकतया गुरुत्वाधिष्ठानचैतन्यस्य चूतफलाधिष्ठानचैतन्यस्यैव प्रमातृचैतन्याभिव्यक्ते-रावश्यकत्वात्। अन्यथा गुरुत्वसमानाधिकरणचूतफलरूपादेरप्यापरोक्ष्याभावप्रसङ्गात्। एवं हृदयादे-र्वृत्तिनिर्गमनं विनाऽपि स्वत एवान्तःकरणसंसृष्टतया हृदयाद्याकारपरोक्षवृत्त्यापि तदधिष्ठानचैतन्यस्य प्रमातृचैतन्याभिन्नतयाभिव्यक्त्यवश्यम्भावाच्च । न हि वृत्तिगतमपरोक्षत्वमप्यभिव्यञ्जकत्वे तन्त्रमिति त्वदभ्युपगमः। येन परोक्षवृत्तिरभिव्यञ्जिका न स्यात्।

किन्तु निवृत्त्याज्ञानसमानाधिकृतत्वे सति तत्समानविषयत्वमेव । तच्च प्रकृतेऽप्यक्षतमिति । एतेनैवान्तःकरणतद्धर्माणां वृत्तिं विनैव प्रमातृचैतन्येऽध्यस्ततया तदभेदसत्त्वादपरोक्षत्वमिति निरस्तम्। अन्तःकरणतद्धर्मणामहमर्थभूतप्रमातृचैतन्यान्ममान्तःकरणं मम मनः, अहं दुःखीत्यबाधितानुभवबलेन भेदस्यैव स्वीकार्यत्वेन तत्र तदध्यासस्यैवासम्भवात्।

किञ्चैवं धर्मादेरपि साक्षात्प्रमातृचैतन्य एवाध्यस्तत्वेन सुखादिवदपरोक्षत्वप्रसङ्गः। न चानुद्भूत-त्वादेव तस्य नापरोक्षत्वमिति वाच्यम्। उद्भूतत्वस्य जडचैतन्यसाधारणस्य जातिरूपस्योपाधिरूपस्य वा दुर्वचत्वात्। मुक्तिदशायामुद्भूतत्वस्यैव तादृशस्याभावेन शुद्धचैतन्यस्य तत्स्वरूपसुखस्य चापरो-

क्षत्वाभावप्रसङ्गात् । न चोद्भूतत्वं जडस्यैवापरोक्ष्ये तन्त्रं न चैतन्यस्येति युक्तम् । तथा सत्यननुगमप्रसङ्गात् । अस्मदुक्तरीत्याऽनुगमस्यैव सम्भवे त्यागायोगाच्च । अत एव सर्वज्ञत्वादिजीवस्यापरोक्षसंसारदशायां जीवस्य प्रतिबिम्बभूतस्य बिम्बभूतसर्वज्ञेश्वरचैतन्याभेदाभिव्यक्त्यभावात् । ईश्वरस्य तु सर्वमपरोक्षमेव । ईश्वरचैतन्यस्यावरणाभावेन सर्वप्रपञ्चाधिष्ठानभूतस्वात्मनोऽभेदाभिव्यक्तिसद्भावादिति निरस्तम् ।

सर्वज्ञेश्वरचैतन्याभेदस्य जीवचैतन्यस्वरूपानतिरिकेण संसारदशायामपि तदभिव्यक्तेरावश्यकत्वात् । अन्यथा जीवचैतन्यस्वरूपस्याप्यावृतत्वापत्त्यान्तःकरणादेरनवभासप्रसङ्गात् । वस्तुतस्तदभेदस्य जीवस्वरूपानतिरेकेऽप्यौपाधिकभेदमादायावृतत्वानावृतत्वव्यवस्थोपपद्यत इति चेत् न । अन्तःकरणस्य सुषुप्तिप्रलयमूर्छासु लयाभ्युपगमेन तदुपाधिकभेदलये जीवस्य ब्रह्मभावापत्तिः । कृतहानाकृताभ्यागमप्रसङ्गश्चेत्युक्तत्वात् ।

ननु तदानीमन्तःकरणादिलयेऽप्यविद्यासत्त्वेन तदुपाधिकभेदोऽस्त्येवेति न जीवस्य ब्रह्मभावापत्तिरिति चेत् न । नित्यनिर्दोषसाक्षिसिद्धस्य जीवेश्वरभेदस्यारोपितत्वपर्यवसितौपाधिकत्वानुपपत्तेः । अन्यथा जीवेश्वरयोः परस्परधर्मसाङ्कर्यादिदोषस्योक्तत्वात् । किञ्चाविद्याया मिथ्यात्वानुरोधेन प्रतिपन्नोपाधिस्थात्वासम्भवेन व्यावहारिकत्वे वाच्ये कथं तन्निषेधकाले चैतन्ये व्यावहारिकाविद्यासम्बन्धः । समसत्ताकयोर्निषेधप्रतियोगिनोरस्त्वयैव विरोधाभ्युपगमात् । न च परमार्थसच्चिन्मात्ररूपत्वेऽप्यविद्यानिषेधस्य कल्पिताधाराधेयभावमादायोक्तप्रतिपन्नोपाधिस्थत्वमुपपद्यत इति वाच्यम् । तथा सति "नेह नानेति" तादृशाधाराधेयभावपरश्रुतेरतत्त्वावेदकत्वापत्तेः ।

चैतन्ये तन्मात्ररूपाविद्यानिषेधाधारत्ववदविद्यादिप्रपञ्चे तादृशनिषेधप्रतियोगित्वस्यापि कल्पितत्वेन चैतन्यवदविद्यादेरपि पारमार्थिकसत्यत्वापत्तेश्च । तदेवं जीवस्येश्वरप्रतियोगिकवास्तवाभेदाभ्युपगमे तस्य जीवस्वरूपरूपत्वेन संसारदशायामप्यनावृततया आपरोक्ष्यं दुर्वारमिति । यच्चोक्तं ज्ञानस्यापरोक्षत्वं स्वरूपेणैव । वृत्तेस्त्वपरोक्षार्थविषयत्वेनैवापरोक्षत्वमिति । तन्न । अननुगमात् । उक्तरीत्या वृत्तिस्वरूपज्ञानसाधारणजातिस्वरूपस्यैवापरोक्षत्वस्य स्वीकर्तुमुचितत्वाच्च ।

यदपि चोक्तम् । अपरोक्षार्थविषयत्वस्यैव वृत्तिस्वरूपज्ञानसाधारणापरोक्षत्वरूपत्वाभ्युपगमे चैतन्यस्य स्वप्रकाशस्वरूपसुखापरोक्षरूपत्वाभावप्रसङ्ग इति । तदपि न । स्वरूपचैतन्यस्यापि कल्पितभेदमादायाज्ञानान्तःकरणादिविषयकत्ववत्स्वरूपसुखविषयत्वस्यापि सम्भवात् । "सर्वं ज्ञानं गुण" इत्यादि शाब्दज्ञानस्येवाभेदेऽपि विषयविषयिताभावसम्भवेन स्वविषयत्वरूपस्वप्रकाशत्वाभ्युपगमे बाधकाभावाच्च ।

एतेन 'तत्त्वमस्या'दिवाक्यतात्पर्यविषयविषयं ज्ञानं न परोक्षम्, अपरोक्षार्थविषयत्वात् घटादि प्रत्यक्षवदित्यनुमानमपि निरस्तम् । अतीतानागतव्यवहितविषयके घट आसीदित्यादिशाब्दज्ञाने कदाचित् किञ्चित्प्रत्यपरोक्षो यो घटस्तद्विषये परोक्षे च व्यभिचारात् । न च तदा तं प्रत्यपरोक्षार्थविषयत्वं हेतुः । असिद्धेः । मया निदिध्यासनात्प्राक् ब्रह्मणोऽपरोक्षत्वानभ्युपगमेन तत्कालीनब्रह्मज्ञानस्यापरोक्षार्थविषयत्वानभ्युपगमात् । त्वयाऽप्यनावृतसंविदभेदरूपस्यार्थापरोक्षत्वस्य निदिध्यासनात्प्राक् जीवब्रह्मैक्यस्यावृततयाऽनभ्युपगमेन तत्कालीनवेदान्तजन्यतज्ज्ञानस्यापरोक्षार्थविषयत्वानभ्युपगमाच्च । न च निदिध्यासनोत्तरकालीनमविद्यानिवर्तनक्षमम् । ब्रह्मज्ञानं पक्षः तस्य निदिध्यासनजन्यवासनाप्रचयसहकृतमनोजन्यस्य मानसापरोक्षरूपस्य मयाऽभ्युपगमेन सिद्धसाधनात् । वेदान्तवाक्यजन्यस्य तादृशज्ञानस्य पक्षत्वे च निदिध्यासनोत्तरकालीनाविद्यानिवर्तनक्षमज्ञानस्य मानससाक्षात्काररूपतया वेदान्तजन्यत्वरूपविशेषणासिद्ध्या मां प्रत्याश्रयासिद्धेः ।

ननु [1]"नेन्द्रियाणि नानुमानं पराञ्चि खानि [2]व्यतृणात्स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन्, "यन्मनसा न मनुत" इत्यादिश्रुतेः । "तत्त्वोपनिषदमि"ति श्रुतेश्च मानान्तरागोचरस्य वेदान्तैकसमधिगम्यस्य ब्रह्मणोऽविद्यानिवर्तनक्षमं ज्ञानं वेदान्तजन्यमेवेति नियमस्यावश्याभ्युपगन्तव्यतया नोक्तदोष इति चेन्न । "तत्त्वोपनिषदं वेदैरनेकैरहमेव वेद्यो, वेदैश्च सर्वैरहमेव वेद्यः" इत्यादि श्रुतिस्मृत्यनुरोधेन "यतो वाचो निवर्तन्त" इत्यादिश्रुतेः शक्त्या साकल्येन वा वाङ्मनोगोचरत्वनिषेधपरत्वेन सङ्कोचवत् "दृष्यते त्वग्रया बुद्ध्या", "मनसैवानुद्रष्टव्यः", [3]"एषोऽणुरात्मा चेतसा वेदितव्यः" इत्यादिश्रुत्यनुरोधेन "नेन्द्रियाणी"त्यादिश्रुतेरप्यसंस्कृतेन्द्रियश्रुत्यनुपजीव्यनुमानगम्यत्वनिषेधपरत्वेन सङ्कोचस्यावश्याभ्युपगन्तव्यतया उक्तनियमासिद्धेः । प्रमातृकोटिनिविष्टस्य मनसः प्रमां प्रत्यकरणत्वेन प्रमाणत्वमेव नेति चेत् न । आत्ममात्रस्यैवाहमर्थत्वेन प्रमातृतया मनसस्तथात्वासिद्धेः करणत्वाभावेऽन्तःकरणत्वरूपतद्विशेषप्रसिद्ध्यनुपपत्तेश्च । "दृश्यते त्वग्रया बुद्ध्या" इति तृतीया श्रुत्या साक्षात्तत्करणत्वावेदनात् । न च कर्तृत्वमेव तदर्थः । सूक्ष्मदर्शिभिरिति वाक्यशेषेऽप्यर्थककर्तृनिर्देशात् । न च मानान्तरसहकारित्वेन मनसः कालादिवत्प्रमाणत्वानुपपत्तिः । स्वगोचरप्रत्यक्षसहकारिणोऽपि परामर्शपदज्ञानादेः प्रमाणत्वदर्शनात् ।

किञ्चात्र न स्वरूपज्ञानं पक्षः । तस्य च स्वप्रकाशत्वेन वेदान्ततात्पर्यविषयविषयकत्वरूपपक्षविशेषणासिद्धेः । अपरोक्षार्थविषयत्वरूपहेत्वसिद्धेश्च । वृत्तिज्ञानस्य पक्षत्वे च स्वरूपज्ञाने परोक्षत्वा-

१. कठ. २-१-१ २. कठ. ४-१ ३. मुं. ३-१-९

भावरूपसाध्यासिद्धिप्रसङ्गात् । अपरोक्षत्ववत्परोक्षत्वस्याप्यव्याप्यवृत्तितया जातित्वाभावेनापरोक्षत्वाभावरूपत्वेन तदभावस्य चापरोक्षत्वपर्यवसितस्य साध्यस्य हेतुकृतापरोक्षार्थविषयत्वरूपत्वपर्यवसानेन साध्याविशेषाच्च । किञ्चापरोक्षार्थविषयत्वं नानुगतं सम्भवति । त्वद्रीत्यार्थापरोक्षत्वस्यानावृतसंविद्भेदरूपत्वात् । अस्मद्रीत्या तस्यापरोक्षत्वरूपजातिमज्ज्ञानविषयत्वरूपत्वात् । अपरोक्षपदप्रतिपाद्यत्वेन चानुगमे देवदत्तादिपदवदाधुनिकसङ्केतितापरोक्षपदप्रतिपाद्यमनुष्यव्यक्तिविशेषविषयकस्मृत्यादिपरोक्षज्ञाने व्यभिचारात् ।

किञ्च जन्यज्ञानत्वरूपपक्षधर्मावच्छिन्नपरोक्षत्वाभावरूपसाध्यव्यापकमिन्द्रियजन्यत्वमुपाधिः । न च जन्यज्ञानस्य परोक्षत्वे लिङ्गजन्यत्ववत्परोक्षत्वाभावरूपसाध्येऽपीन्द्रियजन्यत्वं प्रयोजकमिति वाच्यम् । परोक्षज्ञानस्य अनुमितिशाब्दादिरूपतया व्यभिचारेण तत्र लिङ्गजन्यत्वस्य अप्रयोजकत्वेऽपि जन्यापरोक्षत्वस्येन्द्रियजन्यतावच्छेदकत्वेन तद्व्यापकस्येन्द्रियजन्यत्वस्य तद्व्याप्यजन्यज्ञानत्वावच्छिन्नपरोक्षत्वाभावव्यापकत्वनियमात् । न च परोक्षत्वाभावव्याप्तत्वेन सम्प्रतिपन्नस्य जन्यज्ञाननिष्ठापरोक्षत्वस्य हेतूकृतापरोक्षार्थविषयत्वादनन्यत्वेन हेत्वोः साध्यव्याप्यतया तदव्यापकोपाधेर्न साध्यव्यापकत्वमिति वाच्यम् । अपरोक्षत्वस्योक्तरीत्या जातिरूपत्वेन हेतूकृतापरोक्षार्थविषयत्वादनन्यत्वासिद्धेः । परोक्षत्वेऽनुमेयार्थविषयकत्वादिवत्तदभावे परोक्षार्थविषयत्वस्याप्यप्रयोजकत्वाच्च । न चैवं 'तत्त्वमस्यादि'वाक्यजन्यज्ञानस्य परोक्षत्वे ततोऽविद्यानिवृत्तिर्न स्यादिति वाच्यम् । परोक्षस्थलेऽपि ममाज्ञानं नष्टमित्यनुभवबलेन परोक्षज्ञानस्याप्यविद्यानिवर्तकत्वाभ्युपगमे बाधकाभावात् । समानविषयकसमानाधिकृतार्थसत्तानिश्चयत्वेनैव ज्ञानस्याविद्यानिवर्तकत्वोपपत्त्या तत्र ज्ञानकृतापरोक्षत्वस्य परोक्षत्वाभावस्य वोक्तरीत्यान्योन्याश्रयेण गौरवेण चाप्रयोजकत्वात् ।

निदिध्यासनजन्यमानसब्रह्मापरोक्षज्ञानस्यैवाविद्यानिवर्तकत्वाभ्युपगमेनेष्टापत्तेश्च । तत्त्वमस्यादिवाक्यजन्यज्ञानं परोक्षम् । वाक्यजन्यज्ञानत्वात् । "स्वर्गकामो यजेत" इति वाक्यजन्यज्ञानवदित्यनुमानेन बाधितविषयं चेदमनुमानम् । न चाप्रयोजकता । यदीदं ज्ञानं सत् परोक्षं न स्यात् अपरोक्षं स्यात् । यदि च जन्यत्वे सत्यपरोक्षं स्यात् । तदा इन्द्रियजन्यं स्यात् । इत्यनुकुलतर्कसत्त्वात् । यदीदं परोक्षं स्यात् अविद्यानिवर्तकं न स्यादिति प्रतिकूलतर्कस्य च निरस्तत्वात् । न च 'दशमस्त्वमसी'त्यादिवाक्यजन्यज्ञाने व्यभिचारः । तस्य पक्षसमत्वात् ।

ननु "दशमस्त्वमसी"त्यादिवाक्यश्रवणानन्तरमेव तत्राज्ञाननिवृत्तिस्ततपूर्वं नेत्यनुभवसिद्धम् । अपरोक्षज्ञानमेवाज्ञाननिवर्तकमित्यपि सिद्धम् । एवञ्च तत्राविद्यानिवर्तकपरोक्षज्ञानं "दशमस्त्वमसी"-त्यादि वाक्यजन्यमेव । नेन्द्रियजन्यमन्यथा वाक्यवैयर्थ्यापत्तेः । वाक्यश्रवणाय यत्नानुपपत्तेश्च ।

वाक्यार्थज्ञानसहकृतमिन्द्रियं तद्धेतुरिति चेत् न, वाक्यार्थज्ञानं विनापि क्वचित्तद्दर्शनेन व्यभिचारेण तत्र तस्याहेतुत्वात् । शाब्दसाक्षात्कारश्च न शब्दव्यभिचारी । अथ विशिष्टज्ञानस्य विशेषणज्ञानाजन्यतया वाक्यार्थज्ञानमपि तत्र हेतुरिति चेत् तर्हि "दशम" इत्येतावन्मात्रश्रवणेऽपि विशिष्टधीप्रसङ्गः । प्रकारान्तरेण तज्ज्ञानेऽपि स्वस्मिन्दशमत्वज्ञानापत्तिश्च । तस्माद्वाक्यादेव तत्रापरोक्षानुभव इति कथं न तत्र व्यभिचार इति चेन्न । उक्तरीत्या परोक्षसाधारणार्थसत्तानिश्चयमात्रस्याज्ञाननिवर्तकत्वसम्भवेन "दशमस्त्वमसी"तिवाक्यजन्यपरोक्षज्ञानादेव अज्ञाननिवृत्त्युपपत्तौ तज्जन्यज्ञानस्यापरोक्षत्वे माना-भावात् । अत एव न शब्दवैयर्थ्यम् ।

किञ्च दशमस्त्वमसीत्यादि शब्दजन्यपरोक्षज्ञानेनानुमित्यादि परोक्षज्ञानेन च प्रमातृगताज्ञान-निवर्तने सुषुप्तिव्यावृत्तिमात्रकरणेऽपि प्रमेयगताज्ञाननिवृत्तौ मानाभावः । न च विषयापरोक्षत्वा-न्यथानुपपत्तिस्तत्र मानमिति वाच्यम् । विषयापरोक्षत्वस्यैवाद्याप्यसिद्धेः । विषयाज्ञाननिवृत्त्यैव तत्कल्पनेऽन्योन्याश्रयात् । "दशमस्त्वमसी"तिवाक्यजन्यज्ञानानन्तरं ममाज्ञानं नष्टमित्यनुभवस्यानु-मितिस्थलीयाज्ञाननाशानुभववदुपपत्तेः । अनुमित्यादेर्निर्गत्यसम्भवेन विषयगताज्ञाननिवर्तकत्वे दशम-स्त्वमसीति शब्दजन्यवृत्तेरपि तथात्वेन विषयगताज्ञाननिवर्तकत्वानुपपत्तेः । "दशमस्त्वमसी"ति वाक्यस्थत्वं शब्दस्य दशमत्वविशिष्टशरीरादिरूपत्वहिरर्थपरतया तदज्ञाननिवृत्त्यर्थं वृत्तिनिर्गमस्या-वश्यकत्वात् । ज्ञानगतापरोक्षत्वस्य अप्रयोजकत्वापत्तेश्च । न च परोक्षज्ञानस्याज्ञाननिवर्तकत्वपक्षे ब्रह्मसाक्षात्काराय यत्नो व्यर्थ इति वाच्यम् । साक्षात्कारस्यैव भगवत्प्रसादद्वारा सालोक्यादि-रूपमोक्षहेतुत्वश्रवणात् । हृदयग्रन्थ्यनिवर्तकत्वश्रवणाच्च । तथा च श्रुतिः [1]"तमक्रतुं पश्यति वीतशोको धातुः प्रसादात्", [2]"यमेवैष वृणुते तेन लभ्यः", "आत्मा वा अरे द्रष्टव्यः", "भिद्यते हृदयग्रन्थिः" इत्यादि ।

एतेन "तत्त्वमस्या"दिवाक्यजन्यं ज्ञानमपरोक्षम् । अविद्यानिवर्तकत्वात् सम्प्रतिपन्नवदिति प्रत्युक्तम् । अपरोक्षज्ञानमेवाविद्यानिवर्तकमिति पक्षे शब्दजन्यमानससाक्षात्कारस्यैवाविद्यानिवर्तकत्व-सम्भवेन असिद्धेः । उक्तरीत्या परोक्षज्ञानमप्यविद्यानिवर्तकमिति पक्षेऽनुमित्यादौ व्यभिचाराच्च । न च "यन्मनसा न मनुत" इत्यादि श्रुत्या मनसो ज्ञानकरणत्वस्यैव निषेधात् । न साक्षात्कारकरणत्वमिति वाच्यम् । तस्याः श्रुतेर्दुष्टमनःकरणत्वनिषेधपरत्वात् । अन्यथा "दृश्यते त्वग्रया बुद्ध्ये"ति विशुद्धमनः-करणत्वपरश्रुतिविरोधात् । बाधकं विना तृतीयायाः औत्सर्गिककरणत्वपरित्यागेन हेतुत्वमात्रपरत्वा-

१. तै.उ.प्र.४ प.२६ २. कठ.अध्या.१ व.२ मं.२३

श्रयणायोगात् । उक्तरीत्या शब्दमात्रस्यापरोक्षज्ञानकरणत्वासम्भवेन परिशेषादपि मनस एव मोक्षसाधनापरोक्षज्ञानकरणत्वौचित्यात् । जन्यापरोक्षत्वावच्छिन्नस्येन्द्रियकरणत्वनियमेन लोकदेवप्रसिद्धेन्द्रियभावस्य मनस एव तत्करणत्वावश्यकत्वात् । अन्यथा मोक्षसाधनब्रह्मज्ञानस्य जन्यापरोक्षत्वानिर्वाहात् । तस्मान्मोक्षसानीभूतब्रह्मसाक्षात्कार इन्द्रियजन्यः जन्यापरोक्षत्वात् सम्प्रतिपन्नवत् । न च अप्रयोजकत्वम् । जन्यापरोक्षत्वेनेन्द्रियत्वेन कार्यकारणभावात् । तन्मूलकहेतूच्छित्तेरेव विपक्षबाधकत्वात् । ततश्च मोक्षसाधनीभूतब्रह्मसाक्षात्कारं प्रतिकॢप्तकरणभावस्यैव मनसः जीवधर्मिकेश्वरप्रतियोगिकभेदप्रत्यक्षं प्रति करणत्वेऽपि न किञ्चिद्बाधकमिति सिद्धम् ।

यत्तु जीवधर्मिकेश्वरप्रतियोगिकभेदेन मनसः सन्निकर्षनिरुपणान्न तस्य मनोगम्यत्वमिति । तन्न । तथाविधभेदस्य जीवस्वरूपरूपत्वेन तेन मनसः संयोगरूपस्यैव सन्निकर्षस्य सम्भवात् । न च जीवस्य निरवयवत्वेन वृक्षादाविवावयवरूपावच्छेदकासम्भवेनाव्याप्यवृत्तिसंयोग एव न युज्यत इति वाच्यम् । अणुजीवात्मनि मनःसंयोगस्य घटे आकाशसंयोगस्येव व्याप्यवृत्तित्वेनावच्छेदकानपेक्षणात् । न च संयोगस्याव्याप्यवृत्तित्वनियमः मानाभावात् । मनःसंयोगस्याणुजीवात्मनि व्याप्यवृत्तित्वेऽपि सावयवे मनस्यव्याप्यवृत्तित्वोपपत्तेश्च । न ह्येकत्राव्याप्यवृत्तिः सर्वत्राव्याप्यवृत्तिरिति नियमोऽस्ति । द्रव्येऽव्याप्यवृत्तिसंयोगाभावस्य गुणकर्मादिषु व्याप्यवृत्तित्वात् । जीवात्मनो विभुत्वं मनसश्च सावयवत्वमिति त्वत्पक्षेऽपि तदवयवस्य तदवयवसंयोगस्यैव वाऽव्याप्यवृत्तिमनःसंयोगावच्छेदकत्वोपपत्तेः । भूतले पुस्तकावयवस्य तदवयसंयोगस्यैव वा व्याप्यवृत्तिपुस्तकसंयोगावच्छेदकत्ववत् । न च तत्र तदवयवस्य तदवयवसंयोगस्यैव वा व्याप्यवृत्तित्वेनैकत्र वृत्तावच्छेदकान्तरापेक्षायां तत्तदभावयोरपि तथात्वेन तयोरप्यविरोधाय तथाभूतावच्छेदकान्तरापेक्षयां तत्राप्येवमित्यनवस्थादोषः ।

अनतिप्रसक्तावयवतत्संयोगस्तथाभूतसंयोगयोरेव वा अन्योन्यावच्छेदकत्वेन अनवस्थादोषावकाशात् । एवम्भूतानवस्थाया उत्पत्त्याद्यप्रतिबन्धकत्वेन नाममात्रेणैवानवस्थात्वाच्च । अत एव अन्योन्याश्रयदोषोऽपि । न चावच्छेद्यसंयोगादि प्रत्यक्षस्यावच्छेदकसंयोगादि प्रत्यक्षसापेक्षत्वेन अन्योन्यावच्छेदकत्वेऽवच्छेदकान्तरावच्छेद्यत्वे वा कथं ज्ञप्तावन्योन्याश्रयानवस्थयोरप्रसङ्ग इति वाच्यम् । अवच्छेद्यप्रत्यक्षस्यावच्छेदकज्ञानसापेक्षत्वे मानाभावात् । अवच्छेद्यावच्छेदकयोर्योग्यत्वे युगपदेव तत्प्रत्यक्षस्य जायमानत्वात् । न च वृक्षे कपिसंयोगावच्छेदकशाखादेः स्वावच्छेद्यकपिसंयोगाश्रयत्वेऽप्यवच्छेदकमात्रस्य स्वावच्छेद्याश्रयत्वनियमोऽस्ति । येन तदवयवतत्संयोगयोरेवान्योन्यावच्छेदकत्वे अन्योन्याधारत्वस्यावश्यकतया तत्प्रतीतिप्रसङ्ग इत्युच्येत ।

न च धूमत्वादेर्वह्निर्निरूपितव्याप्त्यवच्छेदकत्वेऽपि धूमवत्तदाधारत्वमस्ति । आत्ममनसोरुभयोरपि विभुत्वपक्षे जडसंयोगाङ्गीकारवादेऽसमवायिकारणाभावेनात्मनि ज्ञानादिकार्यानुपपत्तिसत्त्वेऽपि व्याप्यवृत्त्यजडसंयोगाङ्गीकारवादे उक्तदोषानवकाशः । अनुभवसिद्धज्ञानादिकार्यान्यथाऽनुपपत्त्या संयोगे कर्मजन्यतावच्छेदकस्याजसंयोगान्यत्वेन सङ्कोचसम्भवात् । अन्यथा लाघवेन प्रामाणिकार्थत्यागे ज्ञाने मनोजन्यतावच्छेदकस्येन्द्रियजन्यतावच्छेदकस्य च जन्यज्ञानत्वेन जन्यापरोक्षज्ञानत्वेन च सङ्कोचाभावप्रसङ्गः । आत्मन एव विभुत्वं मनस्त्वणुत्वमिति पक्षेऽप्यात्मनि मनस्तत्संयोगयोरन्योन्यावच्छेदकत्वसम्भवेनाव्याप्यवृत्तित्वमविरुद्धम् ।

न चैवमन्योन्याश्रयादिदोषः । तस्योत्पत्त्याद्यप्रतिबन्धकत्वेनादोषत्वात् । तस्माज्जीवधर्मिकेश्वरप्रतियोगिकभेदस्य धर्मिस्वरूपत्वे तेन मनसः संयोगस्यैव सन्निकर्षस्य सम्भवात् न काप्यनुपपत्तिः । धर्मिस्वरूपादन्य एव भेद इति पक्षेऽपि न तेन मनसः सन्निकर्षानिरूपणम् । उक्तरीत्या मनःसंयुक्ते आत्मनि भेदस्य विशेषणतासत्त्वेन संयक्तविशेषणतारूपसंनिकर्षस्यैव सत्त्वात् । न चैवमाकाशात्मनि श्रोत्रे शब्दाभावप्रत्यक्षो न स्यात् । आकाशाभिन्नश्रोत्रेन्द्रियस्याकाशेन संयोगासम्भवेनेन्द्रियसंयुक्तविशषणताया एव असम्भवादिति वाच्यम् । तत्र साक्षादिन्द्रियविशेषणताया एव सन्निकर्षत्वात् । न हि सर्वत्राभावप्रत्यक्षे एकविध एव सन्निकर्षः । क्वचिदिन्द्रियसंयुक्तविशेषणतायाः क्वचिदिन्द्रियसमवेतविशेषणतायाः क्वचिदिन्द्रियसंयुक्तसमवेतविशेषणतायाश्च शब्दाभावप्रत्यक्षत्ववादिनाङ्गीकारात् ।

न चैवमननुगमः । विशेषणताया इन्द्रियसंयुक्तविशेषणतादिभेदेन नानात्वादिति वाच्यम् । विषयभेदनिबन्धनस्य प्रत्यक्षरूपफलस्यापि भिन्नतया तस्यादोषत्वात् । आवयोः श्रोत्रेन्द्रियस्य शब्दाभावाधाराकाशाद्भिन्नत्वेन श्रोत्रसंयक्ताकाशे शब्दाभावस्येन्द्रियसंयुक्तविशेषणताया एव सम्भवाच्च (सत्त्वाच्च)। न चैवमपि श्रोत्रे शब्दाभावाप्रत्यक्षत्वप्रसङ्गः । तत्र शब्दाभावस्याप्रत्यक्षत्वेऽप्युक्तरीत्येन्द्रियसंयुक्तविशेषणतासत्त्वेन जीवधर्मिकेश्वरप्रतिगिकभेदस्य प्रत्यक्षत्वानपायात् । श्रोत्रनिष्ठशब्दाभावस्यापि प्रत्यक्षत्वे तदन्यथानुपपत्त्यैव साक्षादिन्द्रियविशेषणताया एव प्रत्यासत्तित्वकल्पनाच्च । संसर्गाभावप्रत्यक्षत्वेऽभावमात्रप्रत्यक्षत्वे वा प्रतियोगियोग्यत्वस्येवाधिकरणयोग्यत्वस्यापि तन्त्रत्वेन श्रोत्रेन्द्रिये शब्दाभावाप्रत्यक्षत्वस्य प्रयोजनाभावेनैवेष्टत्वाच्च ।

न चैवं प्रत्यासत्त्यन्तरकल्पनागौरवम् । अत्र भूतले घटाभावमेव पश्यामि न घटम् । इमं पटं घटभिन्नमेव पश्यामि न तदभिन्नम् । इत्यनुभवसिद्धतद्दर्शनस्यैव प्रत्यासत्त्यन्तरकल्पकत्वेन तद्गौरवस्य फलमुखत्वेनादोषत्वात् । अन्यथा प्रमाणवैजात्याद्यनङ्गीकारापत्तिः । तदङ्गीकारे कल्पनागौरवमिति सुवचत्वात् । कार्यवैचित्र्यान्यथानुपपत्तेरेव तत्कल्पकतया गौरवं प्रामाणिकमिति चेत् । समं प्रकृतेऽपि । अत

एव भूतले घटाद्यभावप्रतीतिर्नेन्द्रियकरणिकासन्निकर्षानिरूपणात् । विशेषणताया एवेन्द्रियसन्निकर्षत्वे मानाभावात् । इन्द्रियासम्बद्धभूतलाद्यधिकरणघटाद्यभावप्रत्यक्षप्रत्यक्षत्वप्रसङ्गाच्च । अधिकरणेन्द्रियसन्निकर्षस्यापि सहकारित्वे श्रोत्रे शब्दाभावस्याप्रत्यक्षत्वप्रसङ्गात् । किन्तु अनुपलब्धिकरणिकैवेति प्रत्युक्तम् । चक्षुषो घटाभावेनेव घटेनापि संयोगे भूतले घटं पश्यामीत्यनुभवसिद्धघटदर्शनेन घटेन चक्षुरिन्द्रियस्येव भूतले घटाभावं तद्भेदं च पश्ययामीत्यनुभवसिद्धघटाभावतद्भेददर्शनेन ताभ्यां चक्षुषः सन्निकर्षकल्पनात् ।

न च चक्षुषो घटेनेव घटाभावेन संयोगः सन्निकर्षो न भवतीति वाच्यम् । चक्षुषो घटाभावनेव घटेनापि संयोगः सन्निकर्षो न सम्भवतीत्यपि सुवचत्वेन घटस्याप्यनुभवसिद्धप्रत्यक्षत्वयागप्रसङ्गात् । न च विशेषणतामात्रमतिप्रसक्तत्वात् नाभावेनेन्द्रियस्य प्रत्यासत्तिः सम्भवतीति वाच्यम् । विशेषणताविशेष्यस्यैवेन्द्रियप्रत्यासत्तित्वोपगमात् । तद्विशेषस्य फलैकोन्नेयत्वात् ।

यत्त्वभावप्रत्यक्षेऽधिकरणेन्द्रियसन्निकर्षस्यापि कारणत्वे आकाशे श्रोत्रेव शब्दाभावप्रत्यक्षे न स्यादिति । तन्न । तत्र शब्दाभावस्य प्रत्यक्षत्वे तदन्यथाऽनुपपत्तेरेव । विनाऽप्यधिकरणेन्द्रियसन्निकर्षमनतिप्रसक्तस्य साक्षादिन्द्रियविशेषणताविशेषरूपस्यैव सन्निकर्षस्य कल्पनात् आवयोरिन्द्रियमात्रस्य सावयवत्वेनैकतन्तुकपटस्थल इवाभेदेऽपि श्रोत्रस्य स्वेन संयोगसम्भवेन शब्दाभावप्रत्यक्षस्थलेऽप्यधिकरणेन्द्रियसन्निकर्षरूपसहकारिणोऽनपायाच्च । अनुपलब्धिकरणकत्वकल्पकप्रतीतिवैचित्र्यस्य चाक्षुषत्वादिवदनुभवेनाभावप्रतीतेः प्रत्युत तत्करणकत्वकल्पनाया एव निर्मूलत्वात् ।

यद्यप्यभावप्रतीतिकारणत्वेन क्लृप्तानुपगब्धेस्तद्विशेषरूपकारणत्वमात्रकल्पनेऽतिलाघवम् । इन्द्रियस्य त्वक्लृप्तकारणकरणभावरूपसामान्यविशेषस्य तदुभयकल्पने विशेषणताया इन्द्रियप्रत्यासत्तित्वज्ञानहेतुत्वकल्पने चातिगौरवम् । तथापि प्रामाणिकतया नैतद्गौरवं दोषः । तदुक्तम् 'प्रमाणवन्त्यदृष्टानि कल्प्यानि सुबहून्यपि' इत्यादि । तस्मान्न जीवान्यतद्धर्मिकेश्वरप्रतियोगिकभेदे न मनसा सन्निकर्षानिरूपणमिति ।

यदपि चोक्तं नापि मनसः सहकारीयोग्यानुपलम्भोऽस्ति । ईश्वरस्य प्रत्यक्षायोग्यत्वादित्यादि । तदपि न । असिद्धेः । "द्रष्टव्यः तस्मिन्दृष्टे परावर" इत्यादि श्रुत्या तस्य प्रत्यक्षयोग्यत्वावगमात् । तव्यस्यार्हार्थत्वात् । शाब्दादपरोक्षज्ञानस्य निरस्तत्वात् । मनसैवानुद्रष्टव्यं इत्यादि सावधारणौत्सर्गिककरणार्थक तृतीयाश्रुतेर्मनोमात्रकरणताया एवाङ्गीकर्तव्यत्वाच्च । लाघवेनात्मत्वस्यैव मनोग्राह्यतावच्छेदकत्वेनेश्वरात्मनोऽपि तद्ग्राह्यत्वावश्यम्भावाच्च । न चेश्वरात्मनोऽस्मदीयमनोग्राह्यत्वे देवदत्तात्मनोऽपि यज्ञदत्तात्मनो ग्राह्यत्वापत्तिः । जीवात्मनोऽणुत्वपक्षे सन्निकर्षाभावादेव तदग्राह्यत्वोपपत्तेः । विभुत्वपक्षेऽपि तत्तदात्मीयभोगानुकूलादृष्टविशेषेण प्रतिबन्धादेव तदुपपत्तेः । तत्तदात्मत्वेनैव तन्मनोग्राह्यत्वे

कल्पनागौरवात् । न च प्रतिबन्धकल्पनापेक्षया तथा कल्पनमेव लघ्वीति वाच्यम् । तथा सति भूताविष्टदेवदत्तशरीरे देवदत्तीयेनैव मनसा तदाविष्टभूतात्मना स्वात्माग्रहप्रसङ्गात् । न च तद्दृष्टविशेषाकृष्टतदीयमनसैव तत्र तद्ग्रह इति वाच्यम् ।

देवदत्तीयचक्षुरादिनैव रूपादिग्रहवत्तदीयमनसैव भूतात्मनोऽपि ग्रहसम्भवे तदीयमनआकर्षकल्पकाभावात् । अन्यथा चक्षुरादिविशिष्टदेहान्तरावच्छिन्नस्यैव भूतात्मनो देवदत्ते आवेशकल्पनाप्रसङ्गात् । कायव्यूहे योगीश्वरात्मनां मुक्तात्मीयमनोग्राह्यत्वानुपपत्तेश्च । फलबलेन तत्तदात्मत्वेनैव तत्तन्मनोयोग्यत्वकल्पने मुमुक्ष्वात्मनामपि मोक्षसाधनभूतेश्वरसाक्षात्कारस्यावश्यकतया तद्रूपफलबलेन ईश्वरात्मत्वेनापि तन्मनोयोग्यत्वकल्पनस्य दुर्निवारत्वाच्च ।

यदपि यत्र यत्सत्त्वमनुपलब्धिविरोधीत्यादिनिरुक्तयोग्यानुपलब्धिखण्डनम् । तदपि न, किमेतावताऽनुपलब्धेरभावग्राहकत्वमेव नेति विवक्षितं, किं वा परोक्तयोग्यानुपलब्धिनिरुक्तिखण्डनमात्रं वा । नाद्यः अपसिद्धान्तात् । न द्वितीयः । तावतापि त्वदङ्गीकृतयोग्यानुपलब्धेः प्रकृतेऽपि सत्त्वेन मदिष्टसिद्धेः । निरुक्तानुपलब्धेरभावग्राहकत्वेऽपि बाधकाभावाच्च । यत्तु यत्र कुत्रचित्प्रतियोगिसत्त्वस्य नानुपलब्धिविरोधित्वमित्यादि तन्न । गोत्वाश्वत्वयोरपि विरोधाभावप्रसङ्गात् । यत्रकुत्रचिदश्वत्वसत्त्वस्य गोत्वाविरोधित्वात् । गोत्वाधिकरणे तत्सत्त्वस्य धर्मिसमसत्ताकस्याभावात् । आरोपिताश्वत्वस्य न्यूनसत्त्वेन त्वयैव गोत्वाविरोधित्वस्वीकारादित्यादेस्तत्रापि सुवचत्वात् ।

ननु वध्यघातकभावलक्षणविरोध एव सामानाधिकरण्यसापेक्षः । व्यधिकरणयोस्तदनुपपत्तेः सहानवस्थानादिलक्षणविरोधस्तु व्यधिकरणयोरेव समानाधिकरणयोस्तदनुपपत्तेः । तथा च गोत्वाश्वत्वयोर्व्यधिकरणतया वध्यघातकलक्षणविरोधाऽसम्भवेऽपि सहानवस्थानलक्षणविरोधेन किञ्चिद्बाधकमिति चेत् समं प्रकृतेऽपि । अभावदेशीयप्रतियोग्यनुपलब्धेरन्यदेशीयेनापि प्रतियोगिसत्त्वेन सहानवस्थानलक्षणविरोधसम्भवात् । निरुक्तानुपलब्धेरभावप्रमामात्रे हेतुत्वेनाभावभ्रमस्थले तदभावेऽप्यदोषात् ।

यदपि च यत्र यत्सत्त्वापादनेन यदुपालम्भोपपादयितुं शक्यत इत्यादि निरुक्ताऽनुपलब्धिखण्डनं तदपि न । तथा सति यद्ययं निर्वह्निः स्यान्निर्धूमः स्यादित्यादि तर्कमात्रविलयापत्तेः । तत्राप्यसता आपादितेन निर्वह्नित्वेन पुरोवर्तिनि निर्धूमत्वापादनाऽसम्भवात् । यत्र क्वचित् सता निर्वह्नित्वेन पुरोवर्तिनि निर्धूमत्वायोगादित्यादेः सुवचत्वात् ।

यदि च निर्वह्नित्वस्य निर्धूमत्वापादकत्वं नाम निर्धूमत्वविषयकतर्कशब्दिततज्ज्ञानविशेषजनकज्ञानविशेषविषयत्वम् । 'व्याप्यारोपे व्यापकारोपस्तर्क' इत्यभिधानात् । तच्चान्यत्र ह्रदादौ निर्धूमत्वव्याप्यत्वेन गृहीतस्य निर्वह्नित्वस्य पुरोवर्तिनि पर्वतादौ निर्धूमत्वविषयकतादृशज्ञानजनकभ्रमविशेष-

विषयत्वसम्भवान्नोक्तदोष इति । तदा प्रकृतेऽपि तुल्यम् । अन्यत्र प्रतियोग्यधिकरणे प्रतियोग्युपलम्भ-व्याप्यत्वेन गृहीतस्य प्रतियोगिसत्त्वविशेषणस्य पुरोवर्तिन्यभावाधिकरणेऽप्यसत्त्वेन गृहीतस्य प्रति-योगिसत्त्वविशेषणस्य पुरोवर्तिन्यभावाधिकरणे प्रतियोग्युपलम्भविषयकतर्कशब्दितज्ञानविशेषजनका-हार्यरूपमविशेषविषयत्वसम्भवान्नोक्तदोष इति तदा प्रकृतेऽपि तुल्यम् । न चाभावग्राहकेण पुंसा तद्ग्रहा-त्पूर्वमन्यदेशीयप्रतियोगिसत्त्वस्य तद्गतोपलम्भव्याप्यत्वस्य च ग्रहनियमे मानाभावात् । तदग्रहस्थलीया-भावप्रत्यक्षं स्यात् । तत्र तथापादनाऽसम्भवादिति वाच्यम् । अपादयितुं शक्यत इत्यनेन आपादन-योग्यत्वस्य विवक्षितत्वात् । यदपि किञ्चापादनशक्तिरित्यादि । तदपि न । अन्यदेशीयप्रतियोगिसत्त्वस्य वास्तवस्यैव उक्तरीत्या प्रतियोग्युपलम्भापादकत्वेन तद्गतशक्तेर्व्याप्तिरूपाया एव सम्भवात् । व्याप्ति-ज्ञानरूपत्वेऽप्यनुपलब्धेरभावधीपूर्वं अभावानुमित्यनुकूलव्यतिरेकव्याप्तिपक्षधर्मताज्ञानसत्त्वेऽपि समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वेन संशयोत्तरपुरुषप्रत्यक्षवदभावप्रत्यक्षस्यैवोत्पत्तेः ।

एतेनैवमपि प्रत्यक्षयोग्यशब्दादेरभावप्रत्यक्षं स्यात् । न त्वतीन्द्रियस्याभावे मनस्त्वादेर्घटादौ तर्कितसत्त्वस्य तद्व्यापकाणुत्वापादनेनानुपलम्भाविरोधित्वादित्यपि प्रत्युक्तम् । मनस्त्वस्य घटवृत्ति-त्वेऽपि द्रव्यत्वपृथिवीत्वादिवदणुमहदुभयवृत्तित्वसम्भवेनाप्रयोजकतया तस्याणुत्वाप्रत्यक्षत्वादिव्याप्य-ताया एव बाधितत्वेनाणुत्वाद्यापादकत्वाऽसम्भवात् । न चैवमपि जीवे सतोऽपीश्वराभेदस्य ब्राह्मण-त्वादेरिव सहकार्यभावादेवानुपलम्भसम्भवेन प्रकृते तदुपलम्भापादनमेव न सम्भवतीति वाच्यम् । ईश्वराभेदस्य जीवनिष्ठत्वे मनसो जीवाभेदग्रह इव तद्ग्रहेऽपि सहकार्यन्तरापेक्षया एवायुक्तत्वात् । जीवत्वादि रूपजीवाभेदस्येव सर्वकर्तृत्वसर्वज्ञत्वादिरूपजीवनिष्ठेश्वराभेदस्यापि मनोमात्रयोग्यत्वात् । अन्यथेश्वराभिन्नजीवं प्रति तदयोग्यत्वे जीवाभिन्नेश्वरं प्रत्यपि तदयोग्यत्वप्रसङ्गात् । न चेश्वरस्य मनोरहितत्वेन स्वाभेदप्रत्यक्षं न मनोजन्यं सम्भवतीति वाच्यम् । जीवेश्वरयोरन्योन्याभेदे ईश्वरस्य मनोराहित्यतदजन्यप्रत्यक्षयोरनुपपत्तेः । जीवस्यापि तदुभयापत्तेर्वा ।

न च तमसा घटस्येवाविद्यातमसावृतत्वेन जीवगतत्वेऽपीश्वराभेदस्यानुपलम्भः सम्भवतीति वाच्यम् । साक्षात्कारनिवर्त्याविद्यायास्तत्प्रयुक्तावरणस्य वा साक्षात्कारनिवर्त्यत्वेन तत्प्रतिबन्धानुप-पत्तेः । ईश्वरस्यापि जीवाभिन्नत्वेन स्वाभेदप्रत्यक्षानुपपत्तेश्चेत्यादेरुक्तत्वात् । अत एव मनो न जीव-ब्रह्माभेदग्रहणयोग्यं 'यन्मनसा न मनुत' इत्यादिश्रुतेरित्यादि निरस्तम् । श्रुतेनावसितमनोविषयत्व-स्योक्तत्वात् । अन्यथा निदिध्यासानन्तरमपि मनोगम्यत्वाभावप्रसङ्गात् । शाब्दापरोक्षस्य निरासात् मनसः प्रमाणत्वस्य व्यवस्थापनाच्च ।

यत्तु किमिदमीश्वरत्वं न तावज्जातिरित्यादि तन्न । तस्य जातित्वे बाधकाभावात् जीववृत्ति-त्वाङ्गीकारे एकव्यक्तिकत्वरूपबाधकाभावस्याप्यापादनात् । द्व्यणुकादिकर्तृत्वरूपोपाधिरूपत्वेऽपि तस्य

तदुपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्वरूपतया जीववृत्तित्वाङ्गीकारे मनोयोग्यत्वसम्भवेन तदनुपलम्भासम्भवात्। यच्चोक्तं किञ्च ज्ञानस्याव्याप्यवृत्तित्वादित्यादि तन्न। ईश्वरज्ञानादेर्नित्यत्वेनाव्याप्यवृत्तित्वप्रयोजकसामग्रीप्रादेशिकत्वादेरभावेन व्याप्यवृत्तिताया एव न्याय्यत्वात्। एतेन किञ्चाहमिहैवास्मीत्याद्यपि निरस्तम्।

अबाधितोक्तप्रत्यक्षसिद्धस्य जीवात्मपरिच्छेदस्य घटादिपरिच्छेदस्येव स्वाभाविकस्यैव स्वीकार्यत्वात्। न च स्वाभाविकमध्यमपरिमाणवतः सावयवत्वनियमेन अनित्यत्वाद्यापत्तिः। अप्रयोजकत्वेन तथाविधनियमे मानाभावात्। अन्यथा महतो जन्यत्वसावयवत्वादिनियमेन जीवस्यापि महत्त्वे जन्यत्वाद्यापत्तिरिति सुवचत्वात्। जीवनित्यत्वग्राहकश्रुतिविरोधान्महत्वेऽपि जीवस्य न तज्जन्यत्वाद्यात्तिरिति। यदि तर्हि तत एव जीवस्य मध्यमपरिमाणवत्त्वेऽपि न सावयवत्वाद्यापत्तिरिति समम्। अणुत्वेऽपि बाधकाभावाच्च। न चैवं अप्रत्यक्षत्वप्रसङ्गः। अणुत्वस्याप्रत्यक्षत्वाप्रयोजकत्वात्। अणुत्वस्य *अपकृष्टत्वरूपस्य त्रुटौ सत्त्वेऽपि प्रत्यक्षत्वाच्च। ततोऽपि न्यूनपरिमाणद्व्यणुकादिसद्भावे मानाभावात्। (अ)भावे वा [1]'अणोरणीयानित्यादि' श्रुतिप्रमिताणीयस्त्वेऽपि परमात्मनो मानसप्रत्यक्षत्वेन तत्रैवाणुत्वस्य व्यभिचारात्। न च महत्त्वश्रुतिविरोधेन दुर्विभाव्यत्वरूपमौपचारिकमेव। परमात्मनोऽणीयस्त्वमिति वाच्यम्। उक्ताणुत्वश्रुतिविरोधेन सुविभाव्यत्वरूपमौपचारिकमेव महत्त्वमित्यपि सुवचत्वात्। न च परमात्मनो वेदैकसमधिगम्यत्वेन सुविभाव्यत्वमेवासिद्धमिति वाच्यम्। अद्वैतवादेऽवस्थात्रयेऽपि अप्रयत्नमेवाहमित्यसन्दिग्धमविपर्यस्तापरोक्षतया तस्य अनुभूयमानत्वात्। अन्यथाऽधिष्ठानास्फुरणेऽहमित्यध्यासानुपपत्तेः। न च अणुत्वे जीवस्य सर्वशरीरस्यापि सुखदुःखतदनुभवाद्यनुपपत्तिः। सुखदुःखादीनां अन्तःकरणपरिणामरूपत्वात्। अन्तःकरणस्य तूलपिण्डवत् सङ्कोचविकासात्मकतया सर्वशरीरव्यापित्वोपपत्तेः। सुखादीनामन्यपरिमाणत्वेऽपि दण्डधनादेरहं दण्डी धनीत्याद्यबाधितानुभवबलेनाहमर्थधर्मत्ववदहं सुखी दुःखीत्याद्यबाधितानुभवबलेन सम्बन्धविशेषेणाहमर्थभूतात्मधर्मत्वोपपत्तेः। शरीरव्यापिसुखादेर्जीवस्वरूपभूतसाक्षिसम्बन्धसत्वेन तदनुभवोपपत्तेश्च। न च विरुद्धदेशद्वये युगपत्सुखदुःखाद्यनुपलम्भप्रसङ्गः। युगपदणुसाक्षिसम्बन्धाभावादिति वाच्यम्।

न हि वयं सुखदुःखदीनां संयोगेन तादात्म्येन वा साक्षि भास्यतां ब्रूमः। किन्तु विषयविषयिभावसम्बन्धेन। स च न्यायनये ज्ञानस्य विरुद्धदेशकालस्य घटपटादिनेव अद्वैतनये परोक्षज्ञानानां तादृशविषयेणेव चाणुजीवस्वरूपज्ञानात्मकसाक्षिणस्तथाभूतसुखदुःखादीनां सम्भवत्येवेति किमनुपपन्नम्।

---

* अणुत्वस्याव्यापकपरिमाणत्वरूपस्येति 'आ' पाठः

1. तै.उ.प्र.४ प.२६

## जीवस्याणुत्वे अनुपपत्तिनिरासः—

नन्वेवं जीवस्याणुत्वे कायव्यूहानुपपत्तिः। युगपद्विरुद्धदेशस्थानेकशरीरसम्बन्धाभावेन तदधिष्ठातृत्वासम्भवात्। न च जीवस्य परिच्छिन्नत्वेऽपि दीपस्य प्रभावत् तद्धर्मभूतज्ञानस्य व्यापकत्वेन वा तप्तकटाहव्यापितैलमध्यस्थचन्दनखण्डस्यांशवत् तावच्छरीरसम्बन्धांशवत्वं वा कायव्यूहोपपत्तिः धर्मभूतज्ञानस्यांशस्य वाऽणुजीवस्वरूपरूपत्वे उक्तानुपपत्तितादवस्थ्यात्। तत्स्वरूपरूपत्वेऽपि तद्व्यापकत्वाभिधाने जीवस्यैव शब्दान्तरेण व्यापकत्वाभिधानेन विवादपर्यवसानाच्च। अतत्स्वरूपरूपकत्वे च तज्ज्ञानांशव्यापकत्वस्य जीवे किञ्चित्करत्वात्। अतत्स्वरूपरूपत्वाङ्गीकारे अपसिद्धान्तापत्तेश्च। किञ्च तज्ज्ञानतदंशानां जीवाद्भिन्नत्वेऽभिन्नत्वे वा अंशानामपि ज्ञानत्वे च तेषामनेकशरीरसम्बन्धस्वीकारवैयर्थ्यम्। जीववदणुत्वेऽपि तत्तच्छरीरस्थसुखदुःखादिविषयत्वसम्भवेन जीवस्य न्यायनय इव तदनुसन्धातृत्वोपपत्तेः। किञ्चांशानामंशिजीवाद्विभज्य तत्तद्देहसम्बन्धाभ्युपगमे चैत्रमैत्रयोरिव अंशांशिनोरप्यन्योन्यसुखदुःखाद्यननुसन्धानप्रसङ्गः। निरवयवत्वेन प्रभावदविभज्य गमनमयुक्तमेव।

ननु जीवस्याणुत्वेऽपि नियतदेशस्थत्वेऽपि तत्तद्देहावच्छिन्नविकासाद्यनुतःकरणपरिणामभूतसुखदुःखादिसाक्षित्वमुपपद्यते। स्वप्रकाशज्ञानरूपतया तत्तद्देहस्थत्वं विनापि तस्य परोक्षज्ञानवत्तत्द्विषयकत्वासम्भवादिति चेत् न। जीवस्य तत्तद्देहसम्बन्धाभावे तत्तद्देहेषु प्रयत्नवदात्मसंयोगाभावेन तदसमवायिकारणकचेष्टाभावप्रसङ्गात्। अहमिहैवास्मि पादे मे वेदना शिरसि मे सुखमित्याद्यहमर्थोल्लेख्यनुभवाभावप्रसङ्गात्। आत्मनस्तत्तच्छरीरप्राणादिसंयोगाभावेन तत्र घटादाविव ज्ञानेच्छाद्यनुत्पत्तिप्रसङ्गाच्चेति चेत्।

अत्र ब्रूमः। जीवस्याणुत्वे कायव्यूहानुपपत्तिरिति कोऽर्थः। न तावत् स्वकर्मार्जित विरुद्धनानादेशस्थानेकशरीरैः सहयुगपत्संयोगतादात्म्ययोरनुपपत्तिः। तयोरेव मयाऽनभ्युपगमात्। न चैवं तत्तच्छरीरेषु युगपच्चेष्टानुपपत्तिः। प्रयत्नवदात्मसंयोगरूपासमवायिकारणाभावादिति वाच्यम्। समवायस्यैवाप्रामाणिकत्वेन समवायिकारणत्वादिना कारणविभागस्यैव मया अनभ्युपगमान्। सङ्कोचविकासस्वभावस्यान्तःकरणस्य योग्यप्रभावलब्धमहाविकासत्वेन युगपदनेकशरीरैः सह संयोगसम्भवेन प्रयत्नवदात्मसंयुक्ततादृशान्तःकरणतत्तच्छरीरसंयोगस्यैव असमवायिकारणस्य सम्भवाच्च। तत एव तत्तच्छरीरावच्छेदेन तादृशान्तःकरणपरिणामविशेषरूपज्ञानेच्छाप्रयत्नसुखदुःखाद्युत्पत्तेश्च। न चैवमपि प्रतिशरीरमहमित्यनुभवस्य पादे मे वेदना शिरसि मे सुखमित्यादिसुखाद्यभावस्यानुपपत्तितादवस्थ्यम्।

युगपत्तावच्छरीरैरात्मसम्बन्धाभावादिति वाच्यम् । अणुजीवात्मनस्तत्तच्छरीरेषु युगपत्संयोगतादात्म्याद्यसम्भवेऽपि स्वसंयुक्तस्वादृष्टोपार्जिततादृशान्तःकरणसंयोगलक्षणसम्बन्धस्य सम्भवेन तेनैव सम्बन्धेनाणोरपि जीवस्य तत्तद्देहाधिष्ठातृत्वसम्भवेन तादृशानुभवोपपत्तेः । किञ्च ''द्रोणं बृहस्पते भागमि''त्याद्यागमानुसारेण जीवानां सांशत्वेनांशानामंशिजीवाद्विभज्य तत्तद्देहसम्बन्धसत्त्वेन न कायव्यूहाद्यनुपपत्तिः । न जैवमंशानामंशिनश्च भिन्नभिन्नदेहादिष्ठातृतया चैत्रमैत्रयोरिवान्योन्यगतसुखदुःखाद्यननुसन्धानप्रसङ्ग इति वाच्यम् ।

चैत्रमैत्रात्मनोऽत्यन्तभिन्नतयाऽन्योन्यगतसुखदुःखाद्यनुसन्धानायोगेऽपि कायव्यूहे जीवांशानामंशिनो जीवस्य चात्यन्ताभिन्नतयानतिप्रसक्तांशांशिभावेन च परमात्मांशभूतानां कृष्णरामादीनामंशिनश्च परमात्मन इव अन्योन्यगतसुखाद्यनुसन्धानोपपत्तेः । न च अंशांशिभावो दुर्वचः । अंशांशिभावशब्देनैव सुवचत्वात् । अन्यथा स्वस्वामिभावप्रतियोग्यनुयोगिभावविशेषणविशेष्यभावादीनामप्यभावप्रसङ्गात् । न चैवमत्यन्ताभेदे विभागाद्यनुपपत्तिः । सामग्रीवशादत्यन्ताभिन्नेऽपि तन्त्वादौ संयोगविभागादिवदुपपत्तेः । क्वचिदत्यन्ताभेदे तदभावस्य सामग्र्यभावप्रयुक्तत्वात् । न च एकस्मिन् तन्त्वादौ स्वनिरूपितसंयोगादिसत्त्वे मानाभावः । एकतन्तुकपटाद्युत्पत्तितद्विनाशाद्यनुपपत्तेरेव तत्र मानत्वात् । नन्वंशानामंशिजीवाद् विच्छिद्य नानादेशस्थदेहावस्थित्यभ्युपगमे चैत्रमैत्रयोरिवात्यन्तभेदस्य आवश्यकतयाऽन्योन्यगतसुखदुःखाद्यननुसन्धानप्रसङ्गः ।

एकस्यैव पटवद्विकासेन नानादेहसम्बन्धाभ्युपगमे तस्य मध्यमपरिमाणवत्तया घटादिवद्विनाशाद्यापत्तिः । आन्तरालिकान्यात्मीयदेहसम्बन्धस्याप्यावश्यकतया जीवविभुत्वपक्षोक्तदोषतादवस्थ्यं चेति चेत् न । विच्छेदस्य भेदव्याप्तत्वे मानाभावात् । अहमेक एव नानादेशस्थ देहसम्बन्धेन सुखमनुभवामीत्युभयसिद्धाबाधितप्रत्यभिज्ञाबलेन विच्छेदेऽप्यंशानामंशिनां चात्यन्ताभेदस्यैव सिद्धेश्च ।

नन्वेवमंशांशिनोरत्यन्ताभेदे जीवानामीश्वरस्य चांशांशित्वेनात्यन्ताभेदापत्तिस्तत्प्रयुक्तभोगादिसाङ्कर्यापत्तिश्चेति चेत् न । जीवनामीश्वरस्य चांशांशित्वेऽपि प्रत्यक्षादिप्रमाणसिद्धतया भेदस्यैवाभ्युपगमात् तत एव भोगाद्यसाङ्कर्यापत्तेश्च । जीवानां तदंशानां चोक्तप्रत्यभिज्ञादिप्रमाणबलेनाभेदस्यैवोपगमात् । अंशांशिभावेऽपि प्रमाणबलेन क्वचिदत्यन्तभेदस्य क्वचिदत्यन्ताभेदस्य (क्वचिद्भेदाभेदस्य च) स्वीकार्यत्वेनांशांशिभावस्यात्यन्ताभेदाप्रयोजकत्वात् । न चैवं जीवानामंशित्वे पटादिवदनित्यत्वाद्यापत्तिः । तस्य परमात्मन्येव व्यभिचारात् ।

## तदभिन्नाभिन्नस्य तदभिन्नत्वमिति नियमानङ्गीकरणम्—

एतेनांशत्वं पटं प्रति तन्तूनामिव नारम्भकद्रव्यत्वं जीवस्यानादित्वात्। नाऽपि महाकाशं प्रति घटाकाशादीनामिव प्रदेशत्वं अङ्कच्छिन्नपाषाणशकलादीनामिव खण्डत्वं वा। अणुत्वेन जीवस्य निष्प्रदेशत्वादवच्छेद्यत्वाच्च। नापि भिन्नाभिन्नद्रव्यत्वम्। तथा सति जीवेश्वरयोर्जीवानां च भोग-साङ्कर्यप्रसङ्गात्। स्वतो भिन्नानां तेषां चेतनत्वादिनाऽभेदस्यापि त्वयाङ्गीकारात्। समूहसमूहिनो-र्भेदाभेदवादिनस्तव मते एकसमूहान्तर्गतजीवानां परस्परमभेदसत्त्वाच्च। स्वाभिन्नसमूहाभिन्नेन स्वस्या-प्यभेदस्य दुर्वारत्वात्। यदि संयोगादीनां जातेश्चानेकाश्रितत्वं स्यात् गुणगुण्यादेरभेदाद्घटाभिन्न-संयोगाभिन्नपटादेरपि घटाभेदः प्रसज्येतेति वदता त्वया तदभिन्नाभिन्नस्य तदभेदनियमाभ्युपगमात्। तस्मादंशांशिभावस्यैव दुर्वचत्वेन नाणुजीवस्य सांशत्वमिति निरस्तम्।

विशेषणविशेष्यत्ववत् स्वस्वामित्ववत्प्रतियोगित्वानुयोगित्वादिवच्चांशांशित्वस्य दुर्वचत्वेऽपि प्रमाणसिद्धतया दुरपह्नवत्वात्। अन्यथा [1]'अंशो ह्येष परमस्य', ममैवांशो जीवलोके', [2]'अंशो नानाव्यपदेशादिति' श्रुतिस्मृतिसूत्रसिद्धजीवस्येश्वरांशत्वमपि न स्यात्। यद्वांशत्वं भावत्ववदभावत्ववच्च अखण्डोपाधिरेवेति न कश्चित्क्षुद्रोपद्रवः।

यत्तु यदि संयोगादीनां जातेश्चानेकाश्रितत्वं स्यात् गुणगुण्यादेरभेदाद्घटाभिन्नसंयोगाभिन्नपटादेरपि घटाभेदः प्रसज्येतैवेत्यादि वदता त्वयेत्यादि तदनुक्तोपालम्भमात्रम्। तदभिन्नाभिन्नस्य तदभिन्नत्व-नियमस्यैव मयाऽनभ्युपगमात्। न हि संयोगादीनामुक्तयुक्त्यानेकाश्रितत्वत्यागः। किन्तु मानाभावात्। क्वचिदुक्तिरस्तु परीत्या अत एव द्वित्वादिव्यासज्यवृत्तिरङ्गीक्रियत इति। एवं च जीवस्य सांशत्वेन वा निरंशत्वेऽपि स्वसंयुक्तस्वादृष्टोपार्जितादृशान्तःकरणसंयोगलक्षणसम्बन्धस्य सम्भवेन तेनैव सम्बन्धेन वा अणोरपि जीवस्य तत्तद्देहाधिष्ठातृत्वसम्भवेन न कायव्यूहाद्यनुपपत्तिः।

न चैवंविधकल्पनायां मानाभावः। जीवाणुत्वान्यथाऽनुपपत्तेरेव तत्र मानत्वात्। न च तत्रैव मानाभावः। परिशेषस्यैव तत्र मानत्वात्। तथाहि नित्यत्वेन श्रुत्यादिसिद्धस्य जीवात्मनो न विभुत्वं सम्भवति। तथात्वेऽहमिहैवास्मि सदने जानान इति परिच्छिन्नत्वगोचराबाधितानुभवानुपपत्तेः। न च स भ्रमः। [3]"घटसंवृतमाकाशं नीयमाने घटे यथा, घटो नीयेत नाकाशं तद्वज्जीवो नभोपमः", "स वा एष महानज आत्मा योऽयं विज्ञानमयः नित्यः, सर्वगतः स्थाणुरचलोऽयं सनातनः" इति तद्विभुत्वा-वेदकश्रुतिस्मृतिविरोधादिति वाच्यम्। घटसंवृतमिति श्रुतौ विभुत्वस्यापदार्थत्वादवाक्यार्थत्वाच्च। गत्यभावश्रवणमात्रस्य रत्नादिप्रभाववत्कलधौतमलवच्चान्यगत्यनुविधायितया स्वातन्त्र्येण गत्यभाव-

१. तत्त्व.उदा.श्रु.ब्र.सू.भा.पृ.१९९ २. ब्र.सू. २-३-१८-४३ ३. त्रि.ता. १३

परतयाऽप्युपपत्त्या जीवविभुत्वाकल्पकत्वात् । त्वयाऽप्याकाशस्यौपाधिकगत्यङ्गीकारेण 'उत्क्रान्तिगत्या'दिश्रुतिविरोधेन च श्रुतेः स्वतन्त्रगत्यभावपरताया एव स्वीकार्यत्वाच्च । नभोपमः नक्षत्रवत्परिच्छिन्नो जीवस्तद्वच्चेत्यर्थपरतयाऽपि श्रुतेर्योजयितुं शक्यत्वाच्च । अन्यथा नभ उपम इत्यापत्तेः ।

किञ्च 'घटसंवृतमि'ति श्रुतिर्न जीवपरा किन्तु परमात्मपरैव । न चैवं जीवशब्दानुपपत्तिः पूर्वोत्तरवाक्यपर्यालोचनया परमात्मपरत्वावसायादित्यन्यत्र विस्तरः । 'स वा एष' इत्यादि श्रुतिरपि न विभुत्वपरा तस्य अपदार्थत्वादवाक्यार्थत्वाच्च । महानित्यस्यापकृष्टमहत्वपरत्वेनाप्युपपत्तेः । तद्विरोध्यणुत्वस्य मयाऽप्यनभ्युपगमाच्च । त्वद्रीत्या विज्ञानमयकोशस्यान्नमयादिकोशापेक्षया महानित्युत्कर्षमात्रप्रतिपादनेन परिमाणपरत्वे मानाभावाच्च । 'नित्य' इत्यादिस्मृतेरपि सर्वगतश्चासावणुश्चेति योजनया जीवाणुत्व एव मानत्वात् । अचल इत्यस्योक्तरीत्या स्वतन्त्रगतिनिषेधपरत्वाच्च । विरोधाधिकरणन्यायेन प्रत्यक्षजीवाणुत्वश्रुतिविरोधेन पराभिप्रेतयोजनाया असम्भवाच्च । तथा च श्रुतिः "अणुर्ह्येवैष आत्मा", "अयं वाऽत्र ते सिनीतः पुण्यं च पापं च", "वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः", "अराग्रमात्रो ह्यवरोऽत्र हि दृष्ट" इत्यादिका । एत एव "आराग्रमात्र" इति श्रुतौ पूर्वत्रावरस्य जीवस्याऽराग्रमात्रत्वे बुद्धेर्गुणेनात्मगुणे ।

न चैवमिति बुद्धिपरिमाणात्मस्वाभाविकपरिमाणलक्षणगुणशब्दार्थयोः प्रयोजकत्वोक्तिः सङ्गच्छते । अन्यथा जीवात्मनः स्वत एवापरिच्छिन्नत्वे तत्परिमाणलक्षणस्य बुद्धिगुणेन सह समुच्चित्य जीवाराग्रमात्रत्वप्रयोजकत्वमुक्तं विरुध्येत । यद्वा बुद्धेर्गुणेनाङ्गुष्ठमात्रमिति पूर्वेण सम्बन्धः । आत्मगुणेन तु आराग्रभाव इत्युत्तरेण सम्बन्धः । किञ्च जीवात्मनो विभुत्वे तस्य श्रौतोत्क्रान्तिगत्याद्यनुपपत्तिः । तथा च श्रुतिः "तमुत्क्रान्तं प्राणोऽनूत्क्रामति", "तथा विद्वान्नामरूपाद्विमुक्तः", [१]"परात्परं पुरुषमुपैति दिव्यम्", [२]"तद्यथा नः सुसमाहितमुत्सर्जघायादेवमेवायं शारीर आत्मा प्राज्ञेनात्मनाऽन्वारूढमुत्सर्जन्याति" इत्यादिका । न चासति बाधके श्रुतेरौपाधिकगतिपरत्वं वक्तुमुचितम् । स्वाभाविकगतिबाधके जीवविभुत्वे प्रमाणाभावात् । उक्तश्रुत्यादेरुक्तरीत्या तत्परत्वात् । प्रत्यक्षस्य चाभावात् । अहं महान् कृश इत्यादि प्रत्यक्षस्य शरीरस्थौल्यकार्श्यानुविधायितया साक्षात्सम्बन्धविषयत्वेऽप्रमाणत्वात् । उष्णं जलमितिवत्परम्परासम्बन्धविषयत्वेन प्रमात्वेऽपि तस्य विभुत्वागोचरत्वात् । सर्वत्र कार्योपलम्भलिङ्गस्याप्यदृष्टवज्जीवसंयुक्तप्रसन्नाप्रसन्नेश्वरजीवसंयुक्तेनैवान्यथासिद्धतया अणुत्वश्रुतिबाधितत्वेन च जीवविभुत्वाऽसाधकत्वात् ।

किञ्च जीवानां विभुत्वे तेषां सर्वगतत्वेन सर्वशरीरान्तर्भावाद्भोगसाङ्कर्यप्रसङ्गः । न च यददृष्टविशेषोपार्जितं यच्छरीरं तत्र विषयसम्बन्धस्तदात्मन्येव सुखादिकमुत्पादयति नान्यत्रेति न

१. मुण्ड. ३-२-८ २. बृह. ४-३-३५

भोगसाङ्कर्यप्रसङ्ग इति वाच्यम् । अदृष्टविशेषनियमासिद्धेः । तन्नियमप्रयोजकाभिसन्ध्यादेरपि साधारणात्मनः संयोगादि जन्यत्वेनाव्यवस्थित्वात् । यद्यप्यदृष्टस्य तदीयत्वं पूर्वतदीयशरीरेन्द्रियाद्युपार्जितत्वं तेषामपि तदीयत्वं तदीयपूर्वादृष्टार्जितत्वं एवं तदीयादृष्टशरीरादीनां पूर्वपूर्वतदीयादृष्टशरीराद्यार्जितत्वं तेषामपि तदीयत्वं तदीयपूर्वादृष्टार्जितत्वम्, एवं तदीयादृष्टशरीरादीनां पूर्वपूर्वतदीयादृष्टशरीराद्यार्जितत्वं तदीयत्वमिति न भोगसाङ्कर्यप्रसङ्गः । अनवस्था तु बीजाङ्कुरन्यायेन न दोषमावहतीति शक्यमभ्युपगन्तुम् । तथापि विभुत्वपक्षे भोगसाङ्कर्यपरिहाराय शरीरेन्द्रियादीनां तदात्मसंयोगादीनां च तदीयादृष्टविशेषोपार्जितशरीरत्वादिना तदीयसुखदुःखादिजनकत्वमित्यतिगौरवम् । अणुत्वपक्षे तु शरीरत्वतत्संयोगत्वादिनैव तदीयसुखदुःखादिकं प्रति जनकत्वमिति लाघवाच्च । शरीरादिकं वस्तुतस्तु जीवादृष्टार्जितमित्यन्यदेतदिति । तन्नु जीवाणुत्वपक्षेऽपि तददृष्टविशेषोपार्जितशरीरत्वादिनैव तदीयसुखादिकं प्रति शरीरादीनां कारणत्वमावश्यकम् । अन्यथेश्वरात्मनो विभुत्वेन तमादायैव भोगसाङ्कर्यप्रसङ्गादिति चेत् । न । संसार्यात्मत्वस्यात्मत्वव्याप्यजातिविशेषस्यैव वा भोगाश्रयतावच्छेदकत्वेनेश्वरात्मनो विभुत्वेऽप्याकाशवद्भोगं प्रति स्वरूपयोग्यत्वेन तत्र तदनुपपत्तेः ।

तथा च श्रुतिः "निरनिष्टो निरवद्य" इत्यादि । तस्माद्विभुत्वे प्रमाणाभावान्मध्यमपरिमाणत्वे घटादिवदनित्यत्वप्रसङ्गात्परिशेषाज्जीवात्मनोऽणुत्वसिद्धिः । उक्तश्रुतयश्च जीवाणुत्वे प्रमाणम् । एतेन 'तत्सृष्ट्वा तदेवानुप्राविशत्', गुहां प्रविष्टौ परमे परार्द्धे, स य एषोऽणिमा, एष म आत्मान्तर्हृदये अणीयान्, व्रीहेर्वा यवाद्वा, अणोरणीयान् यस्मान्नाणीय" इत्यादिश्रुतेर्जीववत्परस्यापि प्रवेशादिश्रवणात् साक्षादणुत्वश्रुतेश्च परमात्मनोऽप्यणुत्वप्रसङ्गः ।

न च 'आकाशवत्सर्वगतश्च नित्यो ज्यायान्दिवो ज्यायानन्तरिक्षादि'त्यादिश्रवणात् । 'यस्मिन्द्यौः पृथिवी चान्तरिक्षमि'त्यादिश्रुतेश्च परमात्मनः सर्वगतत्वसर्वाश्रयत्वसिद्धेस्तदणुत्वश्रुतय उपासनार्था (उग्रत्वा)दुर्ग्रहाभिप्राया वा उन्नेयाः । प्रवेशश्रुतयश्चौपचारिकप्रवेशपरा इति वाच्यम् । 'स वा एष महानज आत्मा घटसंवृतमाकाशमि'त्यादिश्रुतेर्जीवस्यापि सर्वगतत्वसिद्धेस्तदणुत्वश्रुतयस्तथैवोपासनाद्यर्था उन्नेयाः । गतिश्रुतयश्च गतिमद्बुध्याद्युपाधिप्रयुक्तगतिमत्परा इति निरस्तम् । 'अणोरणीयान्महतो महीयानि'त्यादिश्रुत्या विनिगमनाविरहेण परमात्मनो निरतिशयमहत्त्वनिरतिशयाणुत्वस्यापि प्रमिततया तत्र तदापादनस्येष्टत्वात् । न च जीवस्य परमात्मवन्निरतिशयमहत्त्वे श्रुतिरस्ति । येन तस्याणुत्ववन्निरतिशयमहत्त्वं तदनुरोधेनौपाधिकाणुत्वगत्यादिकं स्वीकार्यमित्युच्येत । 'स वा एष महानज आत्मे'त्यादिश्रुतिस्तु अपकृष्टमहत्वरूपाणुत्वादिपरत्वेन न निरतिशयमहत्वादिपरेत्युक्तम् । न हीयं श्रुतिरणोरणीयानित्यादि श्रुतिवन्निरवकाशा । येन निरतिशयमहत्त्वपरेत्युच्येत । न च परमात्मनो निरतिशयमहत्त्वनिरतिशयाणुत्वाङ्गीकारे विरोधः । अणीयस्त्वमहीयस्त्वयोरन्यत्र सहचाराभावस्य दृष्टत्वेऽपि

परमात्मनो धर्मिग्राहकश्रुतिमानेन तथैव सिद्धतया विरोधानवकाशात् । अन्यथा ज्ञानत्वनित्यत्वयोरात्मत्वजगदुपादानत्वयोरात्मत्वसर्वज्ञत्वयोश्च लोके विरोधावधारणेन परमात्मन्यपि तदसिद्धिप्रसङ्गात् । शुष्कतर्केण श्रुतिपीडाया अन्याय्यत्वात् । [1]"नैषा तर्केण मतिरापनेये"ति निषिद्धत्वाच्च । "यस्तर्केणानुसन्धत्त" इत्यादिस्मृतेः । प्रत्यक्षश्रुतिविरोधेन श्रुतीतिकर्तव्यताभूतोपक्रमाद्यनुसन्धानरूपमीमांसापरपर्यायतर्कविषयत्वात् । न चैवं "तत्सृष्ट्वा तदेवानुप्राविशत्" इत्यादि श्रुतिप्रतिपन्नपरमात्मप्रवेशो मुख्यः स्यात् । इष्टापादनात् । न ह्यणीयसो मुख्यप्रवेशो न सम्भावितः । ये न स गौणः स्यात् ।

यदुक्तम्— जीवस्यापि गतिरौपाधिकीति । तन्न । 'तमुत्क्रामन्तं प्राणोऽनुत्क्रामती'ति श्रुत्या प्राणस्य जीवोत्क्रान्त्यनन्तरभाव्युत्क्रान्त्यवगतेः । जीवगतेः प्राणौपाधिकत्वासम्भवात् । त्राणशब्दस्य ...रूपत्वात् । 'तथा विद्वान्नामरूपाद्विमुक्तः परात्परं परुषमुपैति दिव्यमि'ति श्रुत्या नामरूपविमोक्षानन्तरमपि गत्यवगमात् । तद्गतेर्बुद्ध्याद्युपाधिकत्वासम्भवात् । बुद्ध्यादे रूपप्रञ्चान्तर्गतत्वेन मुक्तावभावात् । न च मुक्तौ प्राकृतदेहाद्यभावसत्त्वेऽपि अप्राकृतदेहादिसत्त्वेन तदुपाधिकत्वं जीवगतेरिति वाच्यम् । स्वाभाविकगतिं विना जीवस्य तादृशदेहेन सह सम्बन्धस्य तत्प्रवेशस्य चायोगात् । सम्बन्धस्य च क्रियादिपूर्वकत्वात् । त्वया मुक्तौ तादृशदेहानभ्युपगमाच्च । न च परमात्मनः सर्वगतत्वेन नित्यप्राप्ततया तदुपशमनमेव जीवस्य कथमिति वाच्यम् । लोकविशेषावच्छेदेन परमात्मनः प्रागप्राप्ततया तादृशप्राप्तेर्विद्वत्वं विना कथं कथमप्यसम्भवेऽपि विद्वत्तानन्तरं तत्सम्भवात् ।

तथा च श्रुतिः— [2]"यत्र तत्परमं पदं विष्णोर्लोके महीयते । देवैः सुकृतकर्मभिः । तत्र माममृतं कृधि' इत्यादिः । तस्मान्न जीवस्य गतिरौपाधिकीति । यत्त्वहङ्कार अनात्मा दृश्यत्वात् घटवदित्याद्यनुमानेनाहङ्कारस्यानात्मत्वसिद्धेस्तद्विशिष्ट एवात्मा अहमिति प्रतीयते । स एव च नाहमीश्वर इतीश्वराद्भिन्नतया प्रतीयते न केवलात्मेति । तन्न । अहङ्कारशब्देनान्तःकरणोक्तौ गर्वाद्युक्तौ च सिद्धसाधनात् । आत्मोक्तौ च बाधादसिद्धेश्च न ह्यात्मनश्चिद्विषयत्वरूपं दृश्यत्वं परैरङ्गीक्रियते । वृत्तिव्याप्यत्वरूपदृश्यत्वस्य चात्मन्येव व्यभिचारः स्फुटः ।

दृश्यत्वशब्देन फलव्याप्यत्वविवक्षायां चान्तःकरणेऽसिद्धिः । अन्तःकरणादावावरणाभावेन तद्भङ्गरूपाभिव्यक्तेरेवासम्भवेनाभिव्यक्तचैतन्यरूपफलस्यैव तत्रासम्भवात् । न चानावृतचैतन्यविषयत्वमेव दृश्यत्वं विवक्षितम् । नञर्थस्य संसर्गाभाव इति वाच्यम् । एवमपि तद्रीत्या चैतन्यमात्रस्य असंसारावृतत्वेनानावृतचैतन्यस्यासम्भवात् । कथञ्चित्सम्भवे तत्राज्ञानाभावेन अहङ्काराध्यासस्यैवायोगात् । तत्रावरणशक्तिमदज्ञानभावे विक्षेपशक्तिमदज्ञानसत्त्वेन तदध्यासायोग इति चेन्न । अहङ्काराध्यासस्य निरुपाधिकत्वेन विरोधिवृत्त्यभावेन च तत्र विक्षेपशक्तिमदज्ञानवदावरणशक्तिमदज्ञानस्यापि

१. कठ. अध्या. १ व. २ मं. ९ २. ऋक्. अष्ट.७ अ.५ खिल. मं. २८

दुर्निवारत्वात् । त्वद्रीत्या इदं सर्वं यदयमात्मा आत्मैवेदं सर्वमित्याद्यात्मसार्वात्म्यपरश्रुतिबाधितं चेदमनुमानम् । तथाहि— आत्मनश्चेतनाचेतनात्मकसर्वभेदो बाध्यते । न च प्रत्यक्षादिविरोधात् । न स्थाणुरेष पुमानित्यादिवत् बाधायां सामानाधिकरण्यपरैवेयं श्रुतिर्न तु सर्वाभेदपरेति वाच्यम् । एवमपि बाधानिस्तारात् । श्रुत्या सर्वबाधे सर्वमध्यपतितस्य भेदमात्रस्यापि बाधात् । सर्वाभेदवत्सर्वबाधस्यापि प्रत्यक्षादिविरुद्धतया बाधायां सामानाधिकरण्यानुपपत्तेश्च ! यदि चापौरुषेयतयाऽसम्भावितदोषत्वेन तत्परत्वेन चात्मसार्वात्म्यश्रुतेः प्रबलतया 'यः स्थाणुरेष पुमानिति' अस्य वाक्यस्य प्रत्यक्षसिद्ध-स्थाणवभेदबाधकत्ववत्प्रत्यक्षादिसिद्धप्रपञ्चबाधकत्वं, तदा तत एव प्रत्यक्षादिसिद्धभेदबोधनमुखेन सर्वा-भेदप्रमापकत्वमेव किं न स्यात् । यदा हि साक्षादभेदविरोधि भेदग्राहिप्रत्यक्षादेरेवमवस्था तदा का कथा भेदव्याप्यचित्त्वजडत्वासत्यत्वमिथ्यात्वनित्यत्वानित्यत्वादिविरुद्धधर्मत्वग्राहिप्रत्यक्षादेरिति ।

किञ्चैवं— 'तत्त्वमसी'ति जीवेश्वराभेदश्रुतेरपि बाधायां सामानाधिकरण्यपरत्वापत्तिः । उभय-त्रापि वाच्यार्थस्य प्रत्यक्षादिप्रमाणविरुद्धत्वाविशेषेण तत्त्वमसीत्यादावभेदसामानाधिकरण्यम् । 'इदं सर्वं यदयमात्मे'त्यादौ तु बाधायां सामानाधिकरण्यमित्यत्र विशेषहेत्वभावात् जहदजहल्लक्षणया तत्त्वं-पदाभ्यां चिन्मात्राभेदप्रमा सम्भवतीति । तत्र तथापभ्युपगमे 'इदं सर्वं यदयमात्मे'त्यादावपि जहल्लक्ष-णया सर्वपदेन सर्वाधिष्ठानभूतचिन्मात्रोपस्थितौ सर्वपादात्म्यपादाभ्यां चिन्मात्राभेदप्रमासम्भवेन अभेदे एव सामानाधिकरण्याश्रयणस्यैव न्याय्यत्वेन वैरूप्याश्रयणायोगात् ।

वस्तुतस्तु त्वद्रीत्या नित्यनिर्दोषतत्परप्रपञ्चनिषेधश्रुतेः 'नेह नानास्ति किञ्चने'त्यादेः प्रपञ्चसत्ता-ग्राहिप्रत्यक्षानुपमर्देन पारमार्थिकप्रपञ्चनिषेधबोधकत्ववत् 'तत्त्वमसि', 'इदं सर्वं यदयमात्मे'त्यादिश्रुते-रपि निर्दोषत्वादिसाम्येन प्रबलतया भेदग्राहिप्रत्यक्षाद्युपमर्दनेन तत्त्वम्पदवाच्ययोर्विशिष्टयोरुपहितयोर्वा सर्वात्मपदवाच्ययोरात्मानात्मनोश्च पारमार्थिकाभेदबोधकत्वसम्भवेन तथैवाश्रयितुं युक्तम् । न तु चिन्मात्रलक्षणया तदभेदपरत्वं, बाधायां सामानाधिकरण्यपरत्वं वा ।

**ननु प्रपञ्चमात्रस्य 'नेह नानास्ति किञ्चने'त्यादिना प्रतिपन्नोपाधौ निषिद्धत्वेन मिथ्यात्वात् 'इदं सर्वं यदयमात्मे'त्यादि श्रुत्या तस्य सत्यभूतात्माभेदबोधनमेव न सम्भवतीति चेन्न । निषिद्धत्वमात्रेण प्रपञ्चस्य मिथ्यात्वे ब्रह्मणोऽपि 'नोसदासीत्तदानीमि'ति श्रुत्या प्रतिपन्नोपाधौ निषिद्धत्वेन मिथ्यात्वा-पातात् । तमःशब्दार्थभूताज्ञानस्यानिर्वचनीयत्वे इमां श्रुतिं प्रमाणयता त्वया सन्मात्रनिषेधस्यावश्या-भ्युपगन्तव्यत्वात् प्रपञ्चमात्रस्य सत्यात्माभिन्नतया तच्छ्रुतिप्रमिततया सत्यत्वेन प्रपञ्चनिषेधश्रुतेरेव मिथ्यात्वपरत्वं न स्यादिति वैपरीत्यापातात् । [1]'नान्योऽतोऽस्ति द्रष्टा नान्योऽतोऽस्ति श्रोते'त्यादिना जीवस्वरूपस्यापि निषिद्धतया मिथ्यात्वात् तस्यापि तत्त्वमसीत्यादिना जीवस्वरूपस्यापि निषिद्धतया**

१. बृह. अध्या. ५ कां. ८ मं. २५

मिथ्यात्वात्, तस्यापि तत्त्वमसीत्यादिना भूतब्रह्माभेदबोधनासम्भवेन 'इदं सर्वं यदयमात्मे'त्यादिव-तत्त्वमसीत्यादेरपि बाधायां सामानाधिकरण्यपरत्वापत्तेश्च । 'तत्सत्यं स आत्मे'ति श्रुत्या आत्मनः सत्यत्वावगमात्तस्य स्वरूपेण निषेधायोगात् 'स्वविशेषणे ही'ति न्यायेन 'नान्योऽतोऽस्ती'त्यादि श्रुतिर्भेदमात्रनिषेधिकेति चेन्न । 'तत्सत्यमि'त्यादिश्रुतेः परमात्मसत्यत्वपरत्वेन जीवसत्यत्वपरत्वा-भावात् तदभेदबोधनान्यथानुपपत्त्या जीवस्य सत्यत्वाभ्युपगमे तत एव प्रपञ्चस्यापि सत्यत्वोपपत्तेः । निषिद्धत्वेन मिथ्याभूतदृष्टजीवाभेदबोधनान्यथानुपपत्त्या परमात्मनोऽपि मिथ्यात्वापत्तेश्च 'घटः सन्' इत्यादि प्रत्यक्षस्येव घटं पश्यन्नस्मीत्यादिद्रष्टृजीवग्राहिप्रत्यक्षस्यापि सदधिष्ठानानुवेधविषयत्वेन तत्सत्यत्वासाधकत्वात् ।

किञ्चैवं घटः सन् पटः सन्नित्यादि प्रत्यक्षेण 'विमतं सत्यमसद्विलक्षणत्वात् ब्रह्मवदि'त्यनुमानेन 'विश्वं सत्यमि'त्यादि श्रुत्या च प्रपञ्चसत्यत्वस्यापि प्रमितत्वेन 'नेह नाने'त्यादि तन्निषेधश्रुतेरपि 'इदं वाग्रे नैव किञ्चनासीदि'त्यादि श्रुत्यनुरोधेन सृष्टिपूर्वकालावच्छेदेन तन्निषेधपरत्वेन 'नासदासीन्नोसदा-सीत्तदानीमि'त्यादि श्रुत्यनुरोधेन प्रलयकालावच्छेदेन तन्निषेधपरत्वेन वा [1]'पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवी'ति श्रुत्यनुसारेणापरिच्छिन्नस्वरूपे ब्रह्मणि यत्किञ्चित्प्रदेशावच्छेदेन विद्यमानस्य प्रपञ्चस्य प्रदेशान्तरावच्छेदेन निषेधपरत्वेन वा, येन सम्बन्धेन ब्रह्मणि प्रपञ्चः प्रमितः तदतिरिक्तसम्ब-न्धेन निषेधपरत्वेन वा स्वरूपेण निषेधे निरस्वरूपत्वापत्त्या तत्परिहाराय पारमार्थिकत्वाकारेण तव निषेधपरत्वाभ्युपगमवदपारमार्थिकत्वाकारेण वा तुच्छत्वाकारेण वा क्षणिकत्वाकारेण वाध्यस्तत्वा-कारेण वा चैतन्योपादनत्वाद्याकारेण वा निषेधपरत्वाभ्युपगमेन प्रमाणविरुद्धप्रपञ्चमिथ्यात्वपरत्वत्यागा-पत्त्या तन्मिथ्यात्वमपि न स्यात् । त्वदभ्युपगतप्रपञ्चनिषेधप्रतीतेर्येन फलेन सफलत्वं तेनैवोक्तरीत्या प्रपञ्चनिषेधप्रतीतेरपि फलवत्त्वोपपत्तेः । [2]'तरति शोकमात्मविदि'त्यादि श्रुतिप्रतिपन्नात्मवेदनफलस्य असाधारणत्वात् । तस्मात् 'नेह नानास्ती'त्यादि श्रुतेः प्रत्यक्षादिप्रतिपन्नप्रपञ्चसत्यत्वोपमर्दिनन तन्निषेधबोधकत्ववत्प्रत्यक्षादिसिद्धजडप्रपञ्चभेदोपमर्दनेन 'इदं सर्वं यदयमात्मे'त्यादि श्रुतेरप्यात्मा-नात्माभेदबोधकत्वसम्भवेन तच्छ्रुतिबाधितमेवाहङ्कारानात्मत्वसाधकमनुमानमिति ।

### अथातोऽहङ्कारादेशेत्यादेशात् उपदेशत्रयस्यापि ब्रह्मविद्यासमर्थनम्—

एतेन अथातोऽहङ्कारादेशोऽथात आत्मादेश इत्यात्माहङ्कारयोः पृथगुपदेशादनात्मैवाहङ्कारः । अन्यथा तस्यात्मत्वे पृथगुपदेशवैयर्थ्यात् । न च अयमात्मशब्दो ब्रह्मपरः । वाक्योपक्रमे 'स एवाध-स्तादि'त्यादिनोपदिष्टत्वेन पुनरुपदेशवैयर्थ्यादिति निरस्तम् । उपदेशत्रयस्यापि ब्रह्मविषयत्वात् । न च एवमुपदेशत्रयवैयर्थ्यमाकारभेदेन ब्रह्मज्ञानार्थत्वेनावैयर्थ्यात् । न चाहङ्कारशब्दस्य ब्रह्मवचित्वे मानाभावः।

१. ऋक्. अष्ट.८ अ.४ व.१७ मं.२८    २. छां. ७-१-३

ब्रह्मप्रकरणस्थाहङ्कारशब्दस्यान्यपरत्वासम्भवेन ब्रह्मपरताया एवावश्यकतया शक्त्यभावेऽपि लक्षणया तत्परत्वसम्भवात् । अहंशब्दोपलक्षितं नाम प्रपञ्चं करोतीति योगेन वा तस्य ब्रह्मपरत्वसम्भवात् । तस्य सर्वशब्दवाच्यस्य ब्रह्मणोऽहङ्कारशब्दवाच्यताया अप्यावश्यकत्वाच्च । न च सर्वशब्दवाच्यतायां मानाभावः । [1]''ब्रह्मैव वाचः परमं व्योम', 'वेदैरनेकैरहमेव वेद्यः', [2]''सर्वे वेदा यत्रैकं भवन्ति', 'सर्वे वेदा यत्पदमामनन्ति', [3]''नामानि सर्वाणि यमाविशन्ति', [4]''वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते', [5]''वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः', 'वचसां वाच्यमुत्तममि'त्यादि श्रुतिस्मृतीनामेव तत्र मानत्वात् ।

''भूमा नारायणाख्यः स्यात्स एवाहङ्कृतिः स्मृतः । जीवस्थस्त्वनिरुद्धो यः सोऽहङ्कार इतीरितः । अणुरूपोऽपि भगवान् वासुदेवः परो विभुः । आत्मे''त्युक्त इत्यादिस्मृत्या नारायणानिरुद्धवासुदेवाख्यपरमात्मरूपविशेषवाचितया भूमाहङ्कारात्मशब्दानामुक्तत्वाच्च यदेकमव्यक्तमनन्तमव्ययमित्यादि श्रुत्यैव परमात्मरूपविशेषवाचितया भूमाहङ्कारात्मशब्दानामुक्तत्वाच्च । 'यदेकमव्यक्तमनन्तरूपमि'त्यादिश्रुत्यैव परमात्मनोऽनन्तरूपतायाः प्रमितत्वेन नारायणानिरुद्धवासुदेवाख्यानां भूमाहङ्कारात्मपदार्थत्वेन स्मृत्युक्तानामपि परमात्मरूपभेदत्वाविरोधात् । न त्वहङ्कारशब्दसाम्येऽपि न श्रुतिस्मृत्योरेकार्थता । स्मृतावहङ्कारशब्दार्थस्य जीवस्थत्वाभिधानात् । श्रुतौ तु 'अहमेवेदं सर्वमि'ति अहङ्कारस्य सर्वात्मकत्वाभिधानात् । रूपभेदे च शब्दसाम्यमात्रेण प्रत्यक्षानुपपत्तेः । श्रुतिस्मृत्योर्भिन्नक्रमत्वादपि श्रौतभूमाद्यादेशो न स्मार्तनारायणादेशरूपः ।

श्रुतौ हि भूमाङ्कारात्मादेशास्त्रयः क्रमेण प्रतीयन्ते । स्मृतौ तु भूमाहङ्कृत्यहङ्कारात्मशब्दार्थाः क्रमेण निरूप्यन्त इति चेत् । न । व्याकरणकोशादौ भिन्नक्रमेण व्युत्पादितानामपि योग्यतत्तदर्थानां पश्वादिरूपाणां वेदे ग्रहणवत्स्मृतौ भिन्नक्रमेण व्युत्पादितानामपि भूमादिशब्दार्थानां नारायणादिपरमात्मरूपभेदानामेव वेदे भूमादिशब्दार्थत्वेन ग्रहणोपपत्तेः । अन्यथा लोकवेदाधिकरणविरोधात् । उक्तस्मृतेर्व्याकरणस्मृतितुल्यतया शक्तिग्रहार्थं प्रवृत्तत्वेन श्रुतेश्च तद्व्युत्पादितार्थानां सर्वगतत्वसर्वात्मकत्वादिप्रतिपादनार्थं प्रवृत्तत्वेन श्रुतौ जीवस्थ इत्यादिशब्देन प्रत्यभिज्ञाभावेऽपि जीवस्थत्वादिप्रवृत्तिनिमित्ताहङ्कारादिशब्दैः सर्वगतत्वादिविधानार्थमेकस्यापि परमात्मनः प्रवृत्तिनिमित्तभेदेनोक्त्यविरोधात् । एतेन अनाकाङ्क्षितत्वादेरपि नायं स्मार्ताहङ्कारादेशः ।

अत्र हि 'स एवेदं सर्वमि'ति ब्रह्मणः सर्वात्मकत्वमुपदिश्यते । न च तत्सर्वात्मकत्वोपदेशः । स्मार्तहङ्कारस्य सर्वात्मकत्वोपदेशमपेक्षते । तेन विना अनुपपत्त्यभावात् । तस्य भूमाभिन्नत्वेऽभिन्न-

१. तै.सं.कौ.७ प्र.४ प.४६ २. चित्यु. ११-१ ३. ब्र.सू.भा.उदा.श्रु.पृ.४१
४. ब्र.सू.भा.उदा.हरिवंश.पृ.४४ ५. न.उ.ता. ३-४

प्रकारत्वे च पृथगुपदेशवैयर्थ्यादिति । तद्भिन्नत्वे भिन्नप्रकारकत्वे च तस्याजिज्ञासितस्य शेषिभूतभूम-सर्वात्मोपदेशप्रतिकूलस्य अद्वितीयब्रह्मप्रकरणे निर्देशानुपपत्तेश्च । जीवस्य भूतमपेक्षते । अकार्य-स्वरूपस्य प्रत्यक्षादिसिद्धभेदस्य तस्य सार्वात्म्योपदेशाभावे प्रत्यक्षादितः प्रतीयमानो ब्रह्मप्रतियोगिको भेदः स्वाभाविक एव स्यादिति ब्रह्मणः सर्वात्मकत्वश्रुतिरुन्मत्तप्रलापावत्स्यात् । द्वयोः सार्वात्म्या-योगात् । सति तु जीवसार्वात्म्योपदेशे वस्तुतो भिन्नयोर्द्वयोः सार्वात्म्यायोगेन तद्भेदौपाधिकत्वस्य स्वाभाविकतदभेदस्य च सिद्धौ ब्रह्मसर्वात्मकत्वश्रुतिरुपपन्नार्थैव स्यादिति । तदपेक्षितब्रह्माभेदसिद्धये जीव एव सर्वात्मत्वलक्षणब्रह्मधर्मवत्तया अथातोऽहङ्कारादेश इत्यत्र निर्दिश्यत इति निरस्तम् ।

आकाशाधिकरणन्यायेन श्रौताहङ्करशब्दस्य वाक्यशेषस्थसर्वात्मकत्वरूपब्रह्मलिङ्गेन त्वद्रीत्यापि ब्रह्मपरताया आवश्यकत्वेन स्मार्ताहङ्कारस्य ब्रह्मत्वेनोक्तस्मृतिसिद्धरूढ्याऽहमिति कृतिः करणं यस्मि-न्निति योगार्थभूतजीवापेक्षया शीघ्रोपस्थितत्वेन च तत्परत्वस्यैव न्याय्यत्वात् । अहङ्कारशब्दस्य जीवे रूढौ मानाभावेन तस्य परिच्छिन्नतया सर्वात्मत्वरूपब्रह्मलिङ्गासम्भवेन च तत्परत्वानुपपत्तेश्च । यद्यपि भूमरूप ब्रह्माभिन्नस्मार्ताहङ्कारस्य सार्वात्म्योपदेशः न भूमसार्वात्म्यसिद्धये तत्सर्वात्मश्रुत्याकाङ्क्षितः । तथापि 'स वा एष एवं पश्यन् एवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स्वराट् भवति तस्य सर्वेषु लोकेषु कामचारो भवती'ति वाक्यशेषस्थफलसिद्धये तदाकाङ्क्षित एव प्रत्युत जीवसार्वात्म्योपदेश एव न तदाकाङ्क्षितः ।

बलवत्या भूमसार्वात्म्यश्रुत्यैवाहङ्कारत्वेन प्रसिद्धगन्धर्वाहङ्कारतत्त्वाभेदवद्भूमजीवभेदग्राहिप्रत्यक्षा-द्युपमर्दनेन तदभेदसिद्धिसम्भवात् । अन्यथा प्रत्यक्षादिसिद्धे भूमजीवभेदे दृढे सति भूमसार्वात्म्यश्रुति-वज्जीवसार्वात्म्यश्रुतेरप्युन्मत्तप्रलपितत्वापत्त्या न तदभेदप्रमापकत्वानुपपत्तेः ।

जीवोपदेशस्य ब्रह्मोपदेशतया वाक्यशेषस्थफलाकाङ्क्षितत्वानुपपत्तेश्च । अन्यथा रूढ्या शीघ्रोप-स्थितत्वेन प्रत्यक्षादिसिद्धभूमभेदवत्त्वेन च गर्वादिरेव श्रुतावहङ्कारशब्देन ग्रहणोपपत्तेः । न च स्मार्ताह-ङ्कारस्य भूमाभिन्नत्वेन तस्य पृथगुपदेशः फलार्थमप्यनाकाङ्क्षित एवेति वाच्यम् । तस्य भूमाभिन्नत्वेऽपि जीवस्थानिरुद्धत्वरूपाकारान्तरेण पृथगुपदेशस्य फलार्थमाकाङ्क्षितत्वात् ।'एवं पश्यन् एवं मन्वान एव जानन्नि'ति वाक्यशेषे प्रकारवाच्यभ्यस्तैवंशब्देन पूर्वोक्तप्रकारविशिष्टब्रह्मदार्शनादीनामेव फलकीर्त-नात् । अन्यथा प्रकारवाच्यैवंशब्दवैयर्थ्यात् ।

वस्तुतस्तु (नेह) नैव सार्वात्म्यं प्रति पिपादयिषितम् । भूमात्मनो वास्तवजडप्रपञ्चात्मकत्वानुप-पत्तेः । तथात्वे श्रुतौ 'यत्र नान्यत् पश्यती'त्याद्युक्तव्यावहारिकतत्परत्वे च प्रत्यक्षादिसिद्धभेदस्य पारमार्थिकत्वापत्तेः । लक्षणभेदेन भूमाभूमविभागोत्त्यनुपपत्तेः । 'जुष्टं यदा पश्यत्यन्यमीशम्, अनश्न-न्नन्यः, अविद्यायामन्तरे वर्तमानाः, नान्यच्छ्रेयो वेदयन्त' इत्याद्यात्मानात्मभेदपरबहुश्रुतिव्याकोपा-

पत्तेश्च । 'उत्तमः पुरुषस्त्वन्य' इत्यादि तद्भेदपरस्मृतिविरोधापत्तेश्च । आरोपितसार्वात्म्यपरत्वे च श्रुतेरतत्त्वावेदकत्वापत्तेः । बाधायां सामानाधिकरण्यस्य चापदार्थत्वादवाक्यार्थत्वाच्च । सर्वस्य बाधितत्वे सत्यात्मनः सार्वात्म्यासिद्धेः । न चात्मव्यतिरेकेण असत्त्वमेवात्मनः सार्वात्म्यमिह विवक्षितमिति वाच्यम् । अस्याप्यपदार्थत्वादवाक्यार्थत्वात् लक्षणाश्रयणापत्तेः । स्वरूपनिषेधे शून्यवादापत्तेः । तत्सृष्ट्यादिप्रतिपादक श्रुत्यादिविरोधापत्तेश्च । अतोऽन्यदार्तमन्यद्युष्माकमनन्तरं बभूवेत्याद्यात्मभिन्नप्रपञ्चसत्यत्वप्रतिपादकबहुश्रुतिविरोधापत्तेश्च ।

अत एव पारमार्थिकत्वाकारेण आत्मव्यतिरिक्तप्रपञ्चासत्त्वमेवात्मनः सार्वात्म्यमिह विवक्षितमिति प्रत्युक्तम् । निषेधश्रुतौ पारमार्थिकत्वोपस्थापकपदाभावात् । अध्याहारादिकल्पनायां मानाभावात् । निषेधश्रुतेः प्रपञ्चस्वरूपग्राहिमानान्तराविरोधाय तत्कल्पनेऽपि तत्पारमार्थिकत्वाग्राहिमानान्तरविरोधापरिहारात् । प्रपञ्चस्वरूपतत्सत्यत्वग्राहिप्रमाणाविरोधाय निषेधश्रुतावपारमार्थिकत्वाद्याकारोपस्थापकपदाध्याहारादिकल्पनमेवोचितमित्युक्तत्वाच्च ।

''स एवेदं सर्वं अहमेवेदं सर्वमात्मैवेदं सर्वमि''ति मुख्यसामानाधिकरण्यस्य प्रमाणविरुद्धतया अर्थान्तरपरत्वस्यावश्यकत्वे 'स एवाधस्तादहमेवाधस्तादात्मैवाधस्तादित्युपक्रमावगताधस्थत्वाद्यविरोधाय 'स एवेदं सर्वमहमेवेदं सर्वमात्मैवेदं सर्वमि'त्युपसंहारगतेदं सर्वशब्दयोः सुपां सुलुगिति शास्त्रेण सप्तम्येकवचनस्य प्रथमैकवचनादेशसम्भवादुपसंहारस्यापि सर्वगतत्वपरताया एव न्याय्यत्वात् । उपक्रमगताधस्तादित्यादिनिर्णीतसप्तम्यन्तानेकपदानुसारेणोपसंहारगतप्रथमान्तरं सर्वशब्दयोरेवोक्तरीत्या सप्तम्यन्तताया एव न्याय्यत्वाच्च । एवमाश्रयणे उपक्रमोपसंहारयोर्मुख्यार्थात्यागात् ।

यद्यपि स एवाधस्तादित्युपक्रमेऽधस्तादित्यादि सप्तम्यन्तमिव प्रथमान्तमपि सम्भवतीत्युपसंहारानुसारितया सामानाधिकरण्यपरत्वेन योजयितुं शक्यम् । सप्तम्यन्तादिव प्रथमान्तादपि सप्तमी पञ्चमी प्रथमान्तेभ्यो दिग्देशकालेष्वस्तातिरित्यस्तातिप्रत्ययस्मरणात् । तथाप्युक्तवक्ष्यमाणबाधकात्प्रथमान्तत्वासम्भवेन सप्तम्यन्तत्वनिश्चयेन सर्वगतत्वपरत्वमेव युक्तम् । 'स एवे'त्यादावेवकारस्य पार्थ एव धनुर्धर इत्यादाविव मानान्तराविरोधाय समाभ्यधिकमात्रनिषेधपरत्वात् । तथा च श्रुतिस्मृती 'न [1]तत्समश्चाभ्यधिकश्च दृश्यते । एतावतालम्बनसूचितेने'त्यादि । (एतावतालं न तु बहु)

किञ्च सर्वं लवणमितिवत् सर्वव्याप्त्या वा 'आयुर्वै घृतम्'। [2]'ब्राह्मणोऽस्य मुखमि'तिवत्तन्निमित्तत्वेन वा 'राजा राष्ट्रं ब्राह्मणो वै सर्वा देवता' इतिवत्सर्वाधारत्वेन वा 'यजमानः प्रस्तर' इतिवत्तत्सिद्ध्या वा 'आदित्यो यूप' इतिवत् सारूप्येण वा । [3]''स एवेदं सर्वमि'त्यादि श्रौतसामानाधिकरण्योपपत्तौ

१. श्वेता. ६०८ २. चित्यु. १२-५ ३. छां. २-२५

सर्वप्रमाणबाधितायाः सार्वात्म्यपरत्वकल्पनायाः यः पुरुषः स स्थाणुरितिवत् यत् सर्वत्वेन प्रतीतं तदात्मन्यध्यस्तमिति पदद्वयलक्षणया बाधायां सामानाधिकरण्यपरत्वकल्पनायाश्चायोगात् ।

किञ्च [1]"पुरुष एवेदं सर्वं, पुरुषेणैवेदं सर्वं व्याप्तम्, 'आतृणादाकरीषादि'ति श्रुतौ 'असतश्च सतश्चैव सर्वस्य प्रभवोऽप्ययः । सर्वस्य च सदाज्ञानात्सर्वमेनं प्रचक्षते । 'पुरुष एवेदं सर्वं भूतं भव्यं भवच्च यत् । इत्युच्यते तदीयत्वान्न तु स्वरूपतः" इति भारते । [2]"सर्वं समाप्नोषि ततोऽसि सर्व" इति गीतायां च सर्वशब्दस्य अन्यथाव्याख्यातत्वात् । 'स य एवेदं सर्वमि'ति श्रौतसामानाधिकरण्यव्यपदेशस्यान्यथैवोपपत्त्या न सार्वात्म्ये प्रामाण्यम् । तस्मान्नेह सार्वात्म्यं प्रतिपिपादयिषितम् । किन्तु सर्वगतत्वमेवेति ।

यच्चोक्तमिदमद्वितीयं ब्रह्म प्रकरणमिति । तदपि न । तथात्वे मानाभावात् । न च 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति निरस्तनिखिलभेदतया भूमशब्दार्थकथनमेव तत्र मानमिति वाच्यम् । यत्र नान्यत्पश्यतीति वाक्ये नञोऽन्यशब्दार्थेन वा दर्शनक्रियया वा द्रष्ट्रा वा विशिष्टेन वा योजनायां ब्रह्मणि चक्षुर्योग्यपदार्थस्य चाक्षुषज्ञानक्रियायाश्चाक्षुषज्ञानवतश्च निषेधलाभेऽपि ब्रह्मव्यतिरिक्तसकलनिषेधालाभात् । पश्यतेः साक्षात्कारमात्रार्थत्वेऽपि अतीन्द्रियपदार्थनिषेधालाभाच्च । [3]"यदा पश्यः पश्यते रुग्मवर्णमि'त्यादिश्रुत्या ब्रह्मणि साक्षात्कारविषयरुग्मवर्णादिरावेदनेन तद्विरोधेन 'नान्यत्पश्यतीत्यस्य ब्रह्मणि दृश्यदर्शनक्रियादृष्टसामान्यनिषेधपरत्वस्याप्ययोगाच्च । वाक्यशेषश्रुताल्पत्वामत्यत्वापादकसातिशयत्वोत्पत्तिमत्यादिरूपदोषाणामेवान्यशब्दार्थत्वेन स्वीकार्यत्वाच्च । यत्र 'नान्यच्छृणोति नान्यत् विजानाती'ति वाक्ययोरपि न ब्रह्मातिरिक्तपदार्थसामान्यनिषेधपरत्वं पूर्ववाक्ये ब्रह्मातिरिक्तयोर्गुरुशिष्ययोः सनत्कुमारनारदयोः तथा नामादिप्राणपर्यन्तस्योपासनालम्बनस्योपासनक्रियायास्तत्फलस्य तर्तव्यशोकादेश्च तथोत्तवाक्ये यत्रान्यत् पश्यतीत्यादौ यच्छब्दार्थादेश्च श्रुतत्वेन तद्विरोधात् । "यस्मिन्द्यौः पृथिवी चान्तरिक्षं सत्यकामः सत्यसङ्कल्प" इत्यादि श्रुत्यन्तरविरोधाच्च । किन्तु तदविरोधाय 'अपहतपाप्मा विजरो विमृत्युरि'त्यादि श्रुत्यन्तरावगतदोषनिषेधपरत्वमेव तस्यैवोत्कृष्टत्वापरपर्यायभूमत्वोपपादकत्वात् ।

सकलनिषेधस्य स्वाश्रयोत्कर्षोत्थापकगुणासहिष्णुतयोक्तविधभूमत्वप्रतिकूलत्वाच्च । ततश्च पूर्वोत्तरवाक्यपर्यालोचनया सद्वितीयब्रह्मप्रकरणमेवेदम् । अन्यथा उपास्योपासकोपासनादि विधिनिषेधावेदकतया श्रुतेर्व्याहतभाषित्वेनोन्मत्तप्रलापसमत्वापत्तेः ।

यद्वा यत्रेति सतिसप्तमी । तथा च यत्र यस्मिन्नित्यनिरतिशयानन्दरूपे परमात्मनि सति द्रष्टा जनः नान्यदनित्यं सातिशयं सुखं पश्यति । श्रोता वा नान्यत्तथाविधं सुखं शृणोति । विज्ञाता वा

---

१. तै.आ.प्र.३ प.३३ २. भ.गी. ११-४० ३. अथ.उ.(उभा.पृ.२२३)

नान्यत्तथाविधं सुखं विजानाति । स भूमा यत्र चानित्ये सातिशये चानन्दे सति अन्यन्नित्यं निरतिशयं परमात्मस्वरूपसुखमेव द्रष्टा श्रोता विज्ञाना वा जन पश्यति शृणोति विजानाति वा तदल्पमिति श्रुत्यर्थः। लोकेऽपि उत्कटानुत्कटविषययोः सतोः द्रष्टादि जनः अनुत्कटं विषयं तुच्छीकृत्य उत्कटमेव विषयं पश्यन् शृण्वन् विजानानश्च तिष्ठतीति सर्वानुभवसिद्धम् । अतः कथं द्वितीयात्मप्रकरणमिति ।

यद्वा— यत्रेति विषयसप्तमी । तथा च अन्यत् कर्तृ यत्परमात्मस्वरूपं कर्म चक्षुषा न पश्यति श्रोत्रेण न शृणोति विशेषतः साकल्येन न जानाति वा स भूमेति श्रुत्यर्थः । तथा च श्रुत्यन्तरम् ।

"नेन्द्रियाणि नानुमानम् । न चक्षुषा पश्यति कश्चनैनम् ।" इत्यादि । यत्तु 'नान्यत्पश्यति' इत्यादिना प्रमाणनिषेधे यत्पदार्थसिद्धिप्रसङ्गः । कर्तृनिषेधे चात्मैकत्वसिद्धौ मदिष्टसिद्धिरिति नवीनैरुक्तं तन्न । न पश्यति शृणोतीत्यस्य चक्षुःश्रोत्ररूपप्रमाणविशेषगम्यत्वनिषेधकत्वात् । न विजानातीत्यस्यापि विशब्दमहिम्ना साकल्येन प्रमाणगम्यत्वमात्रनिषेधकत्वेन प्रमाणसामान्यगम्यत्वानिषेधकत्वात् । परमात्मनः स्वरूपतो गुणतश्चापरिच्छिन्नत्वेन तद्व्यतिरिक्तैः साकल्येन विशिष्याज्ञेयत्वात् । तथा च श्रुतिस्मृतयः— 'अथ कस्मादुच्यते ब्रह्मेति बृहन्तो ह्यस्मिन् गुणाः । अनन्तरूपं अनन्तं ब्रह्म । मय्यनन्तगुणेऽनन्ते गुणतोऽनन्तविग्रहे । तान्यहं वेद सर्वाणि न त्वं वेत्थ परन्तपे'त्याद्याः । इदमेव च स्वरूपतो गुणतश्च साकल्येन विशिष्याज्ञेयत्वं दुर्विज्ञेयत्वम् । तस्य च विशब्दप्रतिपाद्यत्वसम्भवेन अपदार्थत्वाविद्यादि दूषणमपि प्रत्युक्तम् । मदभिमतब्रह्मणः पामरधीविषयत्वेन दुर्विज्ञेयत्वमसिद्धिमिति दूषणमप्यत एव प्रत्युक्तम् । यथा कथञ्चित् पामरधीविषयत्वेऽप्युक्तदुर्विज्ञेयत्वानपायात् ।

अन्यथा त्वदभिमतब्रह्मणोऽपि सर्वप्रत्ययवेद्यतया वेदैकसमधिगम्यत्वाभावप्रङ्गात् । यदपि सद्वितीयस्य सर्वगतमात्रस्यैतत्प्रकरणार्थत्वे 'यो वै भूमे'ति भूम्नः सुखत्वप्रतिपादनं ब्रह्ममात्रविषयं स्यात् । कालादेरपि तव मते सर्वगतस्य सत्त्वात् । तस्याः सुखरूपताया 'यो वै भूमा तत्सुखमि'ति सामानाधिकरण्यानुपपत्तेश्चेति, तदपि न ।

स्यादेतदेवम् । यदि सद्वितीयं सर्वगतवस्तुमात्रं भूमशब्दार्थः स्यात् । न तु एवम् । किन्तु [1]"यत्र नान्यत्पश्यती"त्यादि श्रुत्युक्तनिर्दोषत्वदुर्विज्ञेयत्वादिरूपोत्कर्षवद्वस्त्वेव । तच्च परमात्मरूपमेव । न तु कालाकाशादीति कथं भूम्नः सुखत्वप्रतिपादनं ब्रह्मविषयं, कथं च सामानाधिकरण्यानुपपत्तिरिति ।

एतेन 'स भगवत् कस्मिन्प्रतिष्ठित' इत्यादिनोत्तरत्र भूमब्रह्मणोऽपि अन्यवदधिकरणमस्ति नेत्याशङ्क्य 'नाहमेवं ब्रवीमि इति सहोवाच । अन्योह्यन्यस्मिन्प्रतिष्ठित' इत्यादि का क्वान्यनिषेधेन

१. छां. ७-२४-११

तस्यान्यस्थितत्वनिषेधात् सद्वितीयत्वे च भूम्नस्तदसम्भवात् । विभुत्वादप्रतिष्ठत इति प्रतिवचनापत्तेश्चेत्यतद्वितीयब्रह्मप्रकरणमेवेदमिति प्रत्युक्तम् । भूम्नो ह्यन्यो हि पदार्थः स्वप्रतिष्ठासिद्ध्यर्थमन्यत्पदार्थमपेक्षत भूमा तु स्वमहिम्नैव प्रतिष्ठित इति एवमर्थपरतया तस्य वाक्यस्य सकलप्रमाणविरुद्धतयान्यनिषेधमुखेन तत्प्रतिष्ठितत्वनिषेधपरत्वानुपपत्तेः ।

न चैव योजनायां अन्यप्रतिष्ठितत्वनिषेधे हेत्वलाभ इति वाच्यम् । अस्य परमाप्तसनत्कुमारोपदेशतया हेतुं विनैव शब्दविधयैव बोधकत्वात् । अन्यो ह्यन्यस्मिन्प्रतिष्ठित इति वाक्यस्य 'यो यो भूमान्यः सोऽन्यस्मिन्प्रतिष्ठित' इति व्यतिरेकव्याप्तिप्रदर्शनपरतया भूमत्वस्यैव व्यतिरेकहेतुत्वाच्च । तस्मान्नाद्वितीयब्रह्मप्रकरणमिदम् । न चात्र सार्वात्म्यं प्रतिपिपादयिषितम् । नाप्ययमहङ्कारादेशोऽहमर्थस्य जीवस्यादेशः किन्तु परमात्मरूपविशेषस्याहङ्कारशब्दवाच्यत्वेन स्मृत्युक्तत्वादनिरुद्धस्यैवायमादेश इति । किञ्च न तावदात्मनः पृथगुपदेशमात्रादहमर्थाद्भेदसिद्धिः । उभयोर्भिन्नत्वेन सार्वात्म्यायोगात् । अहमर्थस्यानात्मत्वे जडत्वापत्तेः । पृथगुपदेशविशेषेण भूमात्मनोरपि भेदसिद्धिप्रसङ्गाच्च ।

ननु भूमात्मनोर्भेदः प्रत्यक्षादिसिद्ध इति तयोः पृथगुपदेशभेदार्थः । अहमात्मनोस्त्वभेद एव प्रत्यक्षादिसिद्ध इति तयोः पृथगुपदेशो भेदार्थ इति चेत् अहमर्थव्यतिरेकेणात्मनः प्रत्यक्षादितो भूमभिन्नत्वासिद्धेः । प्रत्युताहमर्थ एव भूमभिन्नत्वेन प्रत्यक्षादिसिद्ध इति तस्यैव पृथगुपदेशेन भूमाभेदप्रसङ्गात् ।

किञ्चाहमर्थस्यात्मभिन्नत्वे तस्य परिच्छिन्नत्वेन सार्वात्म्योपदेशो न स्यात् । भिन्नयोः सार्वात्म्यानुपपत्तिप्रसङ्गाच्च । न च स्थूलारुन्धतीन्यायेन परोक्षस्य भूमात्मनोऽपरोक्षत्वसिद्ध्यर्थं प्रत्यगभेदसिद्ध्यर्थं वाऽपरोक्षाहमर्थस्य परिच्छिन्नत्वेऽपि सार्वात्म्योपदेश इति वाच्यम् । तत्र स्थूलनक्षत्रापेक्षया भिन्नस्यातिसूक्ष्मस्योपदेष्टव्यस्यारुन्धतीनक्षत्रस्य सत्त्वेन सुखप्रतिपत्त्यर्थं प्रथमं स्थूलनक्षत्रस्यारुन्धतीत्वेनोपदेशो युक्तः ।

प्रकृते त्वहमर्थापेक्षया भिन्नस्य प्रतीचः सद्भावे प्रत्यग्भूमैक्यस्योपदेष्टव्यत्वे च मानाभावेन तन्न्यायानवतारात् । न हि भूम्नः प्रत्यगैक्यज्ञानशोकतरणसाधनमित्यत्र मानमस्ति । येन भूम्नः प्रत्यगैक्यं शोकतितीर्षुं नारदं प्रति सनत्कुमारेणोपदेष्टव्यं स्यात् । न चाहमर्थस्य सुषुप्तौ प्रत्यगात्मनि भासमानेऽप्याभासमानत्वमेव प्रत्यगात्मभिन्नत्वे मानमिति वाच्यम् । असिद्धेः । प्रत्यगात्मन एवाहमर्थत्वेन तज्ज्ञानस्यैव तज्ज्ञानत्वात् । न चैवं सुषुप्तावहमुल्लेखापत्तिः । अहमिति प्रतीत्यापादनस्येष्टत्वात् । वागादिकरणानां तदानीमुपरतत्वेनैवाहमिति शब्दाभिलापस्यासम्भवात् ।

सुप्तोत्थितस्याहमर्थस्मरणापादनस्येष्टत्वात् । एतावन्तं कालमहं सुखमहमस्वाप्समिति सुप्तोत्थितस्याहमर्थस्मरणगोचरस्मरणदर्शनेन तेनैव लिङ्गेन सुप्तौ सुखाद्यनुभववदहमर्थानुभवस्याप्यनुमानात् । न च सुप्त्युत्थितस्योक्तपरामर्शः । नाहमर्थांशे स्मृतः किन्तु तदैवाध्यस्ताहङ्कारगोचरसाक्ष्यनुभवरूप इति वाच्यम् । तस्य तथात्वे प्रमाणाभावात् । अन्यथा अन्योन्याश्रयात् । एतत्कल्पनायाऽहमर्थेदमनिदमात्मकत्वसिद्ध्यधीनत्वात् । किञ्च अहङ्कारस्य सुप्तोत्थितसमयभेवाध्यस्तत्वे प्रति सुप्तितदुपहिताहमर्थस्य भिन्नभिन्नत्वेन योऽहं पूर्वेद्युः सुखमन्वभवं स एवाहमद्य सुखमनुभवामीति प्रत्यभिज्ञानुपपत्तिः ।

ततश्चाहमर्थो न प्रत्यगात्मातिरिक्तः । न चेयं प्रत्यभिज्ञा, सेयं दीपज्वाला तानेव शालीन् भुञ्ज्महे इत्यादि प्रत्यभिज्ञावत् जात्यभेदविषया । न तु व्यक्त्यभेदविषयेति वाच्यम् । प्रतिसुप्त्यहमर्थस्य भिन्नभिन्नत्वे तदनुसन्धातुरपि तदतिरिक्तत्वे मानाभावेनाहमर्थरूपत्वेन भिन्नभिन्नतया प्रत्यभिज्ञातुरद्यतनाहमर्थस्य तदनुसन्धातुस्तत्तच्छब्दार्थभूतपूर्वेद्युस्तनाहमर्थभूततदनुसन्धातृभिन्नत्वेन देवदत्तमात्रानुभूतादिविषये यज्ञदत्तस्येव तादृशप्रत्यभिज्ञाया एवायोगात् । बाधकं विना औत्सर्गिकव्यक्त्यभेदविषयत्वापरित्यागाच्च । अन्यथा स्थायिपदार्थासिद्धिप्रसङ्गात् । न च दीपज्वालादाविव प्रकृतेऽहमर्थभेदः प्रत्यक्षः । येनाहमर्थप्रत्यभिज्ञायास्तस्मिन्सत्यपि जायमानतया तद्विरुद्धव्यक्त्यभेदविषयकत्वासम्भवेन दीपज्वालादिप्रत्यभिज्ञाया इव तज्जात्यभेदविषयत्वमाश्रीयेत ।

न चेयं प्रत्यभिज्ञा व्यक्त्यभेदविषयिणी भूमरूपैवाऽस्तामिति वाच्यम् । बाधकाभावात् । भेदग्राहकप्रमाणाभावात् । अहमर्थस्य सुप्तौ लयप्रतिपादकश्रुतेरभावात् । भावे वा तस्याः सुखदुःखादिरूपविक्षेपाभावमात्रपरत्वात् । अन्यथा कृतहानादिप्रसङ्गात् । प्राज्ञेनात्मनाहमर्थभूतजीवस्य परिष्वङ्गप्रतिपादकं श्रुत्यन्तरविरोधापत्तेः । [1]"अविनाशी वा अरेऽयमात्माऽनुच्छित्तिधर्मे"ति श्रुत्या तस्य साक्षाल्लयाभावप्रतिपादनाच्च । "कार्योपाधिरयं जीव" इत्यस्याः श्रुतेरन्यपरत्वस्योक्तत्वात् । कार्यं प्रयोजनमुपाधिर्यस्य स तथोक्तः । प्रयोजनाभिसन्ध्यधीनप्रवृत्तिक इति यावत् । कारणं जीवादृष्टादि । वियदादिकार्यजनने स्वप्रवृत्तिसहकारि यस्य स तथोक्तः । वियदादिकार्यानुगततत्तज्जीवादृष्टादिसहकारिविशेषाभिसन्धिनियतप्रवृत्तिक इति यावत् । उपाधिशब्दस्य लाभाद्युपाधिना कृतमित्यादौ नानार्थत्वदर्शनात् । कार्यानुगुणं कारणमदृष्टादि वियदादिकार्यजननं यस्य स तथा तस्य भावः कार्यकारणता तां हित्वा कार्योन्मुखादृष्टविशेषरूपसहकार्यसमवहितः प्रलयकाले पूर्णबोधमात्रत्वेन वर्तत इत्यप्यन्यार्थपरत्वसम्भवाच्च ।

[2]"स्वं ह्यपीतो भवती"ति श्रुतेरपि पूर्वस्येतल्लयार्थकत्वेऽपि स्वमिति द्वितीयानुपपत्त्या 'प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्चन वेदनान्तरमि'ति [3]स्वप्राप्तिविशेषरूपपरमात्मपरिष्वङ्गप्रतिपादनश्रुत्यन्यथा-

---

१. बृ.उ. ४-५-१४   २. छां.उ. ६-८-१   ३. सम्प्रति

नुपपत्त्या च स्वं परमात्मनमपीत प्राप्तो भवतीत्यन्यार्थपरत्वाच्च । ''व्यत्ययो बहुलमि'ति स्मरणात् । सप्तमीस्थाने द्वितीयामाश्रित्यापीतशब्दस्य प्रकृत एव लयार्थपरत्वेऽपि तस्य कार्याभिसन्धिरूप-विशेषणलयमादाय विशिष्टलयप्रतिपादकत्वोपपत्तेश्च । अन्यथाहमर्थस्य जीवात्मनः सर्वथा लये सुप्तौ परिष्वङ्गः बाह्यान्तरविषयकमज्ञानं तज्ज्ञानाभावो वा श्रुत्युक्तः कस्य स्यात् ।

[2]''एतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यती''त्यादि जीवोत्पत्तिविनाशप्रतिपादक-श्रुत्यन्तरस्यापि 'अविनाशी वा अरेऽयमात्मानुच्छित्तिधर्मे'ति मध्ये स्वरूपतः स्वाभाविकधर्मनश्चा-विनाशमुक्त्वा तदुपक्रमावगतोत्पादविनाशयोः का गतिरिति शङ्कायां तन्निरासाय 'न प्रेत्यसंज्ञास्ति' तन्मात्रा संसर्गस्तस्य भवति । मीयन्त इति मात्राः विषयाः ताभिरसंसर्गो भवतीति पूर्वोत्तरवाक्याभ्यां संज्ञारूपवृत्तिविषयसंसर्गव्यतिरेकप्रतिपादनात् तद्विशिष्टोत्पत्तिविनाशप्रतिपादनपरत्वेन सौषुप्तिक-नित्यनिर्दोषसाक्षिस्वरूपानुभवसिद्धानिदमर्थभूताहमर्थजीवात्मनोत्पत्तिविनाशपरत्वानुपपत्तेश्च । तस्मा-दहमर्थप्रत्यभिज्ञानं भ्रमः । किन्त्वौत्तरिकस्मृतिविषयत्वाविशेषेऽप्यहमर्थस्येव तत्स्मृतिविषयकाल-सुखाज्ञानस्वापकालैतावत्त्वस्वापातीतत्वादेरपि सुप्तोत्थितिकाल एवाध्यास इति किं न स्यात् । विशेष-हेत्वभावात् ।

अपि च 'तरतिशोकमात्मविदि'त्यात्मवेदनस्य शोकतरणहेतुत्वमुक्त्वा आत्मवेदनार्थमुपसन्नं नारदं प्रति सनत्कुमारेण तस्मिन्नेव निरूपणीये भूमनिरूपणमसङ्गतमिति शङ्कायां तन्निरासाय भूमात्मनोरभेद-निरूपणमत्र क्रियत इति तावदावयोः समम् ।

''आत्मशब्दस्य परमात्मैव मुख्यार्थ'' इति द्युभ्वाद्यधिकरणे निर्णीतमित्यपि तस्य परमात्मनो-ऽरुन्धतीवत् बहु प्रणिधानं विना दुर्विज्ञेयत्वमित्यपि च । एवं च स्थूलारुन्धत्योरिवाहङ्कारापरपर्यायाह-मर्थभूतजीवपरमात्मनोरनौपाधिकात्यन्तभेद एव स्थूलारुन्धतीन्याय इति किं न स्यात् । अन्तर्यामित्वेन परमात्मनोऽहमर्थसन्निहितत्वादहङ्कारसार्वात्म्योपदेशस्यैवमप्युपपत्तेः ।

अपि चाहङ्कारोपदेशस्य स्थूलारुन्धतीन्यायेनात्मस्वरूपप्रत्यायनपरत्वे तदन्यथानुपपत्त्याऽहङ्का-रस्य वस्तुनस्ततो भेद एव सिद्ध्यति । तेन विना तन्न्यायस्यैवानवतारात् । तच्च भूमात्मसार्वात्म्योप-देशप्रतिकूलमेव । अतो मद्रीत्या भूमात्मनोरत्र सर्वगतत्वमेव प्रतिपाद्यत इत्येव वाच्यम् । तच्च भूमा-त्माहङ्काराणां वास्तवभेदेऽप्यविरुद्धम् । न च सर्वगतत्वं भूमाकाशादावतिप्रसक्तम् । फलाभावादेव न प्रतिपाद्यम् । विभुमात्रसाधारणमिदं यो वै भूमा तत्सुखमिति समानाधिकरणप्रतिकूलं च ।

१. पा.सू. ३-१-८५   २. बृह. २-४-१२

सर्वगतमात्रस्य सुखरूपत्वभावादिनि वाच्यम् । सर्वगतत्वेनापि परमात्मनो ज्ञानस्य शोकतरण-हेतुत्वेन सफलत्वात् । "आकाशवत्सर्वगतश्च नित्य" इति श्रुत्या आकाशसाधारण्येन परमात्मनः सर्वगतत्वाभिधानात् । यत्र 'नान्यत्पश्यती'त्यादि लक्षणलक्षितस्यैव भूम्नः तच्छब्देन परामर्शेन तत्सुखमिति सामानाधिकरण्याविरोधात् । न हि सर्वगतत्वमात्रमत्र आत्मलक्षणमुक्तं, येनाकाशादा-वतिप्रसक्तिः । उक्तसामानाधिकरण्यानुपपत्तिश्च स्यात् । अपि चैवमप्यात्माहङ्कारयोर्द्वयोरेव सार्वात्म्य-मुपदेष्टव्यम् । तावतैव स्थूलारुन्धतीन्यायावतारोपपत्तेः । न तु भूमात्मनोऽप्यात्मसार्वात्म्योपदेशेनैव आत्मनो भूमाभेदसिद्धेः । न हि भूमा न सर्वशब्दार्थः ।

किञ्च त्रयाणामन्यतमसार्वात्म्योपदेशेनैव त्वदभिमतनिर्विशेषवस्तुज्ञानसिद्धेरितरसार्वात्म्योपदेश-वैयर्थ्यम् । न चैवं सविशेषसर्वात्मकत्वोपदेशेन निर्विशेषवस्तुसिद्धिः कथं इति वाच्यम् । त्रयाणां तथोपदेशेऽप्यस्य समानत्वात् बाधायां सामानाधिकरण्येन तत्सिद्धयभ्युपगमेऽन्यतमसार्वात्म्योप-देशेनैव तत्सिद्धेश्च । न च भूमात्मनोः स्वरूपेण ऐक्यसिद्धिद्वारा भेदाध्यासनिरासाय तथा पृथगुपदेश इति वाच्यम् । तदैक्यस्यापि भूमसार्वात्म्योपदेशात एव सिद्धेः । आत्मनोऽपि सर्वशब्दार्थत्वात् । अन्यथा विशेषहेत्वभावेन पृथग् भूमादित्रितयसार्वात्म्योपदेशेनापि तदसिद्धिप्रसङ्गात् । 'स एवेदं सर्वमि'त्युपदेशेन सार्वात्म्यसिद्धौ भिन्नयोरसार्वात्म्यानुपपत्त्यापि तदैक्यसिद्धिप्रसङ्गाच्च । न चैकस्यैव सार्वात्म्योपदेशे जडस्यैवात्मनोऽपि बाधायां सामानाधिकरण्यरूपतदैक्यसिद्धिप्रसक्तौ तन्निरासाय स्वरूपेण तदैक्य-सिद्धयें च भूमात्मनोर्द्वयोरपि सार्वात्म्योपदेशोऽत्रेति विशेषहेत्वभावो सिद्ध इति वाच्यम् । तत्त्वमसी-त्यादिवत् 'स एवेदं सर्वमि'त्यभेदेनैव सामानाधिकरण्यसम्भवेन तत्परित्यागे कारणाभावात् । प्रत्य-क्षादिप्रमाणविरोधात् । तत्त्यागेन बाधायां सामानाधिकरण्याभ्युपगमे भूमप्रत्यगात्मैक्यस्यापि प्रत्य-क्षादिप्रमाणविरुद्धतया भूमात्मनोर्द्वयोः सार्वात्म्योपदेशेनाप्यसिद्धेः । भूमप्रत्यगात्मनोः श्रुतसर्वात्म्योप-देशान्यथानुपपत्तेः । प्रबलतया प्रत्यक्षाद्युपमर्दनेन स्वरूपतो वास्तवैक्यसिद्धौ 'स एवेदं सर्वमि'ति श्रुते-रतिप्रबलतया प्रत्यक्षाद्युपमर्देन भूम्नः स्वरूपतो वास्तवसर्वाभेदसिद्धिप्रसङ्गात् । वस्तुत्वेनैव चेतनत्वेन साजात्यस्याप्यकिञ्चित्करत्वात् । तदभ्युपगमे च भूम्नः सुखात्मकत्ववद्दुःखात्मकत्वस्याप्यवर्जनीयतया निरुपाधीष्टत्ववन्निरुपाधिद्विष्टत्वस्याप्यापत्तेः । भूताकाशादेरपि परमात्मात्मकत्वेनाकाशादिशब्दानां भूताकाशादिपरत्वनिरासेन ब्रह्मणि समन्वयानुक्तिप्रसङ्गाच्च । अपि च भूतात्मनोः पृथक् सार्वात्म्यो-पदेशेनापि न पराभिमतैक्यसिद्धिः । "स एवेदं सर्वं", "आत्मैवेदं सर्वं" इति वाक्यद्वयेऽपि परेण बाधायां सामानाधिकरण्याभ्युपगमे न सर्वस्यैव भूमात्मनोरपि बाधापत्त्या बाह्याभिमतशून्यवादस्यैव सिद्धयापत्तेः ।

## प्रत्यगात्मनो पृथग्भूमैक्यस्य प्रतिपिपादयिषितत्वे प्रमाणाभावविधानम्—

एतेन प्रत्यगात्माहम्प्रत्ययविषयः कर्ता भोक्तेति लौकिकैर्निश्चीयत इति तत्रैव प्रथममात्मशब्दात्सिद्धिः स्यात् । तस्य च कर्तृत्वादिविशिष्टस्य संसारिणोऽहमर्थस्य प्रकृतभूमात्मैक्यश्रुतिर्नावगमयितुं शक्नोति विरुद्धत्वात् । शक्नोति त्वहम्पदार्थं पृथङ्निर्दिश्य ततोऽन्य एव प्रत्यगात्मेति प्रतिपादिते प्रत्यगात्मनो भूमैक्यं प्रतिपादयितुमित्यहमर्थान्संसारिणः प्रत्यगात्मनो भेदसिद्धये प्रथममहमात्मानं संसारिणं निर्दिशतीति नवीनोक्तं निरस्तम् । अत्र पृथग्भूमैक्यस्य प्रतिपिपादयिषितत्वे मानाभावात् । पृथगात्मसार्वात्म्योपदेशेन प्रत्यगर्थभूतात्मसार्वात्म्यविरुद्धतयाहमर्थात्प्रत्यगात्मनो भेदासिद्धेश्च । श्रुतेः प्रत्यक्षाद्यपेक्षया प्रबलत्वेन प्रपञ्चनिषेधश्रुतिवत् तदुपमर्दनेनाहमर्थस्य संसारिण एव भूमैक्यबोधने शक्ततयाहमर्थभिन्नत्वेन प्रत्यगात्मबोधनवैयर्थ्यात् । अहमर्थभेदस्यापदार्थत्वात् अवाक्यार्थत्वाच्च । पृथगात्मसर्वात्म्योपदेशस्य विरुद्धतयाऽहमर्थादात्मनो भेदानाक्षेपकत्वाच्च । प्रत्यक्भूमैक्यस्य स्वप्रकाशात्ममात्रत्वेन स्वतःसिद्धतया तत्सिद्ध्यर्थमुक्तविधोपदेशवैयर्थ्यात् । तस्यावृतत्वे चाज्ञानादिसर्वसाक्षिकचैतन्यस्यैवावृततया जगदान्ध्यप्रसङ्गाच्च ।

ननु आत्मनः पृथक् सार्वात्म्योपदेश एव प्रत्यक्भूमैक्यस्यात्र प्रतिपिपादयिषितत्वे मानम् । परस्परभिन्नयोर्द्वयोः सार्वात्म्यायोगादिति चेत् न । 'तरति शोकमात्मविदि'ति शोकतरणहेतुज्ञानविषयतयोपक्रान्तपरमात्मजिज्ञासुर्नारदं प्रति सनत्कुमारस्य भूमस्वरूपोपदेशो व्यधिकरण इति शङ्कापरिहाराय तेन भूम्नः परमात्माभेद एवोपदेष्टव्यः ॥ सर्वाभेदः । आत्मशब्दस्य पामरैरहमर्थ एव संसारिणि सङ्गतिग्रहात् तस्यैव प्रथममात्मशब्दात्प्रतीततया प्रथममात्मसार्वात्म्योपदेशेन न सिद्ध्येत् । किन्तु प्रत्यक् भूमाभेद एव सिद्ध्येत् । तथा चाहमर्थात्संसारिणः सकाशात् परमात्मनो भेदसिद्धिं विना भूम्नः परमात्माभेदसिद्ध्यसम्भवात् । तदर्थमेव प्रथममहमर्थस्य संसारिणः सार्वात्म्यमुपदिश्य ततोऽन्य एव परमात्मेति सूचयितुमेवायमात्मसार्वात्म्योपदेशः ।

परमात्मन एवेत्यपि सम्भवेनात्मसार्वात्म्योपदेशस्य तत्र मानत्वात् । यदपि चाथातोऽहङ्कारादेश इत्यत्राहङ्कारशब्दोऽहमिति कृतिः करणं यस्मिन्नित्यवयववृत्त्याऽन्तःकरणवृत्त्यवच्छिन्नं चैतन्यमभिसन्धत्ते । समुदायशक्तेर्लोके क्वचिदप्यक्लृप्तत्वात् स्मार्तप्रसिद्धेश्च पौरुषेयतयाऽपौरुषेयवेदव्यवस्थापकत्वात् । तथात्वे वा "शोकहर्षभयक्रोधलोभमोहस्पृहादयः अहङ्कारस्य दृश्यन्त" इत्यादि स्मृतावन्तःकरणावच्छिन्नजीव एव तत्प्रयोगात् । शोकादेः कृतेश्च केवलजडधर्मत्वानुपपत्तेरित्युभयथाप्यन्तःकरणावच्छिन्नचैतन्यमेवाहङ्कारपदार्थः प्रकृते गाह्यः । तथा चोपाधिपरिच्छेदात् परिच्छिन्ने तदभेदाद्भिन्ने

च तस्मिन् सर्वगतसर्वात्मब्रह्माभेदप्रतीतिर्न भवतीति दहरपुण्यरीकवेष्टितस्य परमात्मनो [1]"यावान्वा-ऽयमाकाशस्तावानेषोऽन्तर्हृदय आकाश" इत्युपाधिकृताल्पत्वनिवृत्तिपराकाशोपदेशवदहमर्थस्या-प्युपाधिकृतपरिच्छिन्नत्वनिवृत्त्या वास्तवसर्वात्मत्वादिपरा श्रुतिर्न विरुध्यत इति नवीनोक्तं तदपि न। यतोऽहमिति कृतेरहंशब्दप्रयोगरूपाया अहमाकारज्ञानरूपाया वा इदं चैतन्यमेव विषयः लाघवादाव-श्यकत्वाच्च।

न ह्यन्तःकरणावच्छिन्नचैतन्यं गौरवान्मानाभावाच्च। ततश्चाहङ्कारशब्दो न योगवृत्त्यान्तः-करणावच्छिन्नचैतन्यवाची। अहङ्कारशब्दस्य गर्वादौ रूढत्वेन तस्य क्वचिदपि समुदायशक्तिः क्लृप्तेत्यप्ययुक्तम्। व्याकरणस्मृतिकोशादेः पौरुषेयत्वेऽप्यपौरुषेयवेदरूपवाक्यार्थजननोपयुक्तपदार्थ-निर्णायकतया स्मार्तप्रसिद्धेस्तादृशवेदार्थाव्यवस्थापकत्वमित्ययुक्तम्। अहं शोचामि हृष्यामि बिभेमी-त्याद्यनुभवबलेन "एतत्सर्वं मन एवे"ति श्रुत्युक्तमनोमात्रपरिणामभूतशोकादीनामन्यपरिणामभूत-दण्डादीनां देवदत्तादिधर्मत्ववदिनिदं चैतन्यधर्मत्वसम्भवेनान्तःकरणावच्छिन्नचैतन्यधर्मत्वे मानाभावेन "शोकहर्षे"त्यादिस्मृतिबलेनाप्यहङ्कारशब्दस्तदवच्छिन्नचैतन्ये रूढ इत्यप्यसिद्धम्। अन्तःकरणाव-च्छिन्नचैतन्यस्यैवाहङ्कारशब्दार्थस्योपाधिकृतपरिच्छेदनिवृत्त्या वास्तवसर्वात्मत्वपरा श्रुतिर्न विरुध्यत इत्यप्ययुक्तम्।

त्वन्मते उपहितानुपहितयोरत्यन्तभिन्नत्वेनानुपहितात्मसार्वात्म्योपदेशेनोपहितात्मगतपरिच्छेद-निवृत्तेर्बोधयितुमशक्यत्वात्। उपहितस्य चोपाधिपरिच्छेदात्परिच्छिन्नस्य त्वद्भेदाद्भिन्नस्य त्वदुत्पत्ति-निवृत्तिभ्यामुत्पत्तिनिवृत्तिमतश्च सर्वात्मकत्वासम्भवात्। उपहितस्य सर्वगतसर्वात्मकब्रह्माभेदतत्प्रमि-त्योरसम्भवेन तदर्थतयोपहितगतपरिच्छेदाद्यभावबोधनायोगात्। अनुपहितात्मस्वरूपस्य च तादृश-ब्रह्माभेदयोग्यस्योपहितादत्यन्तभिन्नत्वेन तत्कृतपरिच्छेदादेः स्वत एव नित्यनिवृत्तत्वात्।

ननु उपहितस्य न ब्रह्माभेदं त्वत्प्रमितिं वा ब्रूमः। नापि तदर्थं तत्परिच्छेदाद्यभावबोधनम्। येन तदयोगः स्यात्। किन्तूपहितात्परिच्छेदादिमतः ब्रह्माभेदायोग्यादन्य एव प्रत्यगात्मा परिच्छेदादिरहितः। ब्रह्माभेदयोग्योऽस्तीत्यहङ्कारशब्दार्थात्पृथगात्मनः सार्वात्म्योपदेशेन बोध्यत इति ब्रूम इति चेत्। न एतादृशार्थस्यापदार्थतया वाक्यार्थतया च तेन बोधयितुमशक्यत्वात्। आत्मशब्दार्थस्य पृथगुपदेश-मात्रेणाहङ्कारादन्यत्वे भूम्नः सकाशादप्यात्मनोऽन्यत्वप्रसङ्गात्। एकस्य पृथगुपदेशो व्यर्थ इत्यन्यथा-सिद्धेः। भूमसाधारणत्वात् प्रकारिण एकत्वेऽपि प्रकारभेदेन तज्ज्ञानार्थं पृथगुपदेशस्यान्यथैवोपपत्तेश्च तादृशात्मपरत्वकल्पनायोगात्। लक्षणाया अपि वृत्तिविशेषत्वेन स्वज्ञानार्थं स्वविषयज्ञानसापेक्षत्वे-

१. छां. ८-१-३

नात्मविषयस्य केनाप्यनुपहितत्वे निर्विशेषस्य तस्य मानान्तरागोचरत्वेन कल्पयितुमशक्यत्वात् । चैतन्यस्य स्वप्रकाशत्वेऽपि संसारदशायामज्ञानादिप्रपञ्चोपहितत्वेनैव मुक्तिदशायां तन्निवृत्त्युपाहितत्वेन च भाननियमेनानुपहितात्मस्वरूपस्य कदाप्यनुपस्थितेः ।

ननु गङ्गायां घोषः इत्यादौ गङ्गापदस्य लक्षणाकल्पनादशायां मानान्तरेण तीरकच्छाद्यनेकार्थोपस्थितिसत्त्वेऽपि तीर एव वक्तुस्तात्पर्यात्तत्रैव लक्षणाकल्पनावत्संसारदशायां उपहितात्मोपस्थितिसत्त्वेऽपि वेदस्यात्मस्वरूपमात्रे तात्पर्यात्तत्रैव लक्षणाकल्पनासम्भवतीति चेन्न । येन रूपेणोपस्थिते वृत्तिकल्पनातत्पदजन्यपदार्थस्मृतेः शाब्दबोधस्य च तत्प्रकारकत्वनियमेन गङ्गादिपदात्तीरत्वादिप्रकारकतीरादिस्मृतिशाब्दबोधवत् ब्रह्मपरवाक्यगतात्मपदादप्युपाधिप्रकारकपदार्थस्मृतिशाब्दबोधापत्त्या वेदान्तानामखण्डार्थत्वभङ्गप्रसङ्गात् ।

ननु पदजन्यपदार्थस्मृतेः शाब्दबोधस्य तत्प्रकारकत्वनियमेऽपि न तज्जन्यशाब्दबोधस्यापि तत्प्रकारकत्वनियमः । मानाभावात् । न चैवमतिप्रसङ्गः । तात्पर्यस्यैवेतरप्रकारकत्वावारकत्वात् । तात्पर्यं च तत्प्रतीतिप्रयोजनकत्वरूपम् । पौरुषेये पुमिच्छानियन्त्रितं अपौरुषेये तु वाक्ये न्यायनियन्त्रितमिदमिति तात्पर्यग्राहकलिङ्गैर्यत्प्रतीतौ तदवधारितं तत्प्रतीतिरेव तेन क्रियते । तथा च वेदान्तानां निर्विशेषचैतन्य एवोपक्रमादिलिङ्गैस्तात्पर्यावधारणात् । ततो जायमाना प्रतीतिस्तन्मात्रविषयिण्येव जायत इति चेन्न । एवं सति ब्रह्मणि द्वितीयरूपविशेषाभावसिद्धिप्रसङ्गात् ।

न च द्वितीयाभावस्य ब्रह्मातिरिक्तत्वे तदसिद्धिरिष्टैव । तन्मात्रत्वे च तत्सिद्धिरेव तत्सिद्धिरिति वाच्यम् । आद्ये प्रत्यक्षादिसिद्धद्वितीयस्यैव सत्यत्वापत्तेः । द्वितीयेऽपि द्वितीयाभाववद्वितीयस्य ब्रह्मातिरिक्तत्वादेश्चापि ब्रह्ममात्रत्वेन तत्सिद्धिरेव तत्सिद्धिरिति सुवचत्वात् । न च द्वितीयाभावो ब्रह्मैव इति श्रुतिरस्ति । "इदं सर्वं यदयमात्मा यत्र त्वस्य सर्वमात्मैवाभूदि"त्यादिश्रुतेर्भावाभावात्मकप्रपञ्चमात्रस्याविशेषेणैवात्मस्वरूपपरूपत्वावेदकत्वादिति दिक् ।

यदपि दहरपुण्डरीकवेष्टितस्य परमात्मनः "यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय" इत्युपाधिकृताल्पत्वनिवृत्तिपराकाशोपदेशवदहमर्थस्याप्युपाधिकृतपरिच्छिन्नत्वनिवृत्तिपरात्मसार्वात्म्योपदेश इति । तदपि न ।

अपि च [1]"यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशस्तस्मिन्यदन्तस्तदन्वेष्टव्यं तद्वाव विजिज्ञासितव्य"मिति श्रुतौ [2]"तस्मिन्यदन्तस्तदन्वेष्टव्यमि"त्यादिना हृत्पद्मस्थ-

१. आकाशे छां. ८-१२ २. म.ना.उ. ८-१६

भूताकाशगत ब्रह्मण एवान्वेष्टव्यत्वाद्युक्त्या दहरोऽस्मिन्नन्तराकाश इत्यत्राकाशपदस्य ब्रह्मपरत्वाभावेन अन्वेष्टव्यत्वादिनोक्तस्य ब्रह्मणः हृत्पुण्डरीकवेष्टितत्वासिद्धेः ।

उत्तरत्र किं 'तदत्र विद्यत' इति प्रश्नस्य ब्रह्मपुरशब्दमहिम्नैव पुरस्वामिन एव स्वातन्त्र्येण पुरान्तर्वर्ति वेश्मान्तरावकाशस्थात्वलाभेन अन्वेष्टव्यब्रह्मत्वसिद्धेः धर्मिस्वरूपमात्रप्रश्नपरत्वासम्भवेन तद्ब्रह्म किं धर्मविशिष्टमन्वेष्टव्यमित्यन्वेष्टव्यधर्मविशेषप्रकाशत्वावश्यम्भावेन "यावान्वाऽयमाकाश" इत्यादि तत्प्रश्नोत्तरभूतोत्तरवाक्यस्यापि यद्ब्रह्मान्वेष्टव्यतयोक्तं 'तस्यान्तर्हृदयेऽयमाकाशः प्रमाणसिद्धस्तावान्सर्वोऽप्येष आकाशो विद्यते अस्मिन्नेव द्यावापृथिव्यादिकं च समाहितम् । एष भगवानपहतपाप्मा विजरो विमृत्युर्विशोकादिश्चे'त्यन्वेष्टव्यब्रह्मणः सर्वाकाशाश्रयत्वद्यावापृथिव्याद्याश्रयत्वापहतपाप्मत्वादिधर्मविशेषत्वप्रतिपादनपरतया दहरपुण्डरीकस्थदहराकाशस्थव्यापकभूताकाशौपम्येन दहरहृत्पुण्डरीकरूपोपाधिवेष्टनकृतदहरत्वनिवृत्तिपरत्वासिद्धेश्च ।

यदि चान्यपरेऽन्यवेश्मस्थितिसम्भवान्यवेश्मान्यवस्थानसम्भवाच्च ब्रह्मपुरस्थहृत्पुण्डरीकवेश्मान्तर्गताकाशस्थस्यान्वेषितव्यतयोक्तस्य ब्रह्मत्वनिर्णयासम्भवेन किं 'तदत्र विद्यत' इति प्रश्नस्याधेयधर्मिस्वरूपमात्रप्रश्नत्वम् । तदापि 'तावानि'त्यादि तत्प्रश्नोत्तरभूतोत्तरवाक्ये हृदयशब्देन हृत्पुण्डरीकमन्तःशब्देन च सप्तम्यन्तेन तदन्तर्वर्तिभूताकाशं तदाधारकं चानूद्य आकाशशब्देन प्रथमान्तेनाकाशाधिकरणन्यायेन ब्रह्मपरेण पृष्टस्य तदाधेयस्य ब्रह्मत्वं विधाय "यावान्वाऽयमाकाशस्तावानेष" इति अव्याकृताकाशौपम्येन तस्याव्याप्तत्वप्रतिपादनात् । 'उभे अस्मिन्नि'त्यादिना च तस्य अन्वेष्टव्यत्वादिप्रयोजकद्यावापृथिव्याद्याधारत्वप्रतिपादनात् । यावान्वेत्यादेरुपाधिकृतब्रह्मपरिच्छिन्नत्वनिवृत्तिपरत्वासिद्धेः । तस्याचिन्त्यमहिमत्वेन स्वाभाविकमहत्त्ववत् स्वाभाविकपरिच्छेदस्याप्यविरुद्धत्वेन तन्निवृत्तेर्दुःशकत्वात् । एतेन दहरोऽस्मिन्नन्तराकाश इत्याकाशशब्दस्याकाशाधिकरणन्यायेन परमात्मपरतया तस्यैवान्वेष्टव्यत्वम् ।

ननु हृत्पद्मस्थाकाशान्तर्गतस्य तथात्वे द्यावापृथिव्यादेरेवान्वेष्टव्यत्वापत्तेः । तथा च हृत्पुण्डरीकस्थस्याकाशशब्दार्थस्यैव परमात्मनः परिच्छिन्नहृत्पद्मोपाधिकृतपरिच्छिन्नत्वप्रसक्तेः । तन्निवृत्त्यर्थं भूताकाशौपम्येन 'यावान्वे'त्यादिना तस्य व्यापकत्ववर्णनमिति परव्याख्यानमपास्तम् । 'तस्मिन्यदन्तस्तदन्वेष्टव्यमि'ति सन्निहितमाकाशं परामृश्य तदन्तर्गतस्यैवान्वेष्टव्यत्वाद्युक्तेराकाशशब्दार्थस्यान्वेष्टव्यत्वालाभात् । तस्मिन्नित्यस्य सन्निहितदहराकाशान्वयपरित्यागेन व्यवहितरपुण्डरीकान्वयायोगात् । आकाशस्य दहरहृत्पुण्डरीकस्थताया दहरोऽस्मिन्नित्यत्रैवोक्तत्वेन पुनस्तस्मिन्यदन्तरिति तदुक्तिवैयर्थ्यात् । तदन्तरिति यच्छब्दस्य तदन्वेष्टव्यं 'तद्वाव विजिज्ञासितव्यमि'त्यत्र तच्छब्दस्यान्वेष्टव्यत्वादिशब्दानां च दहराकाशपरत्वे पुलिङ्गत्वापत्तेश्च ।

किञ्च [1]"य एषोऽन्तर्हृदय आकाशस्तस्मिंश्चेते, [2]सर्वस्य वशी सर्वस्येशानः [3]स एषोऽन्तर्हृदय आकाशः । तस्मिन्नयं पुरुषः, [4]यो वेद निहितं गुहायां परमे व्योमन्, [5]दहरं विपाप्मं परवेश्मभूतं हृत्पुण्डरीकं पुरमध्यसंस्थं, तत्रापि दहरं गगनं विशोकस्तस्मिन्यदन्तस्तदुपासितव्यमि'त्यादि श्रुतिषु हृत्पुण्डरीकाल्पभूताकाशस्थब्रह्मण एवोपास्यत्वोपपत्तेरिहापि तथैवाश्रयितुमुचितत्वात् । अत एव आकाशान्तर्गतस्यैव अन्वेष्टव्यत्वे द्यावापृथिव्यादेरेवोत्तरवाक्ये तदन्तर्गतत्वेनोक्तस्यान्वेष्टव्यत्वप्रसङ्ग इति निरस्तम् । उक्तरीत्याकाशद्यावापृथिव्याधारत्वादिगुणकस्य वा आकाशवद्व्यापकत्वादिगुणकस्य ब्रह्मण एवान्वेष्टव्यत्वादि लाभात् ।

न चेदं हृत्पद्मस्थाकाशान्तर्गत ब्रह्मण एव आकाशद्यावापृथिव्याद्याश्रयत्वे [6]"तस्यान्ते सुषिरं सूक्ष्मं तस्मिन् सर्वं प्रतिष्ठितमि'ति श्रुत्यन्तरेण हृत्पद्मस्थसुषिरशब्दार्थभूताकाशस्यैव सर्वाश्रयत्वमुक्तं विरुध्येत । न च तत्र सुषिरशब्देन तत्स्थं ब्रह्मैव गृह्यत इति युक्तम् । लक्षणाप्रसङ्गात् । "तस्याः शिखायामध्ये परमात्मा व्यवस्थित" इत्युत्तरवाक्ये परमात्मनः सुषिरस्थशिखामध्यस्थत्वोक्त्या सुषिरशब्दस्य परमात्मपरत्वानुपपत्तिरिति चेन्न । गृहस्थमञ्जूषास्थमणिमालाया गृहस्थत्वोक्तिवत् सर्वसुषिरस्थब्रह्मत्वेऽपि सुषिरस्थत्वोक्त्यविरोधात् । तदुक्तम् । 'सुषिरस्थब्रह्मसंस्थं सुषिरस्थमितीर्यते । मञ्जूषास्थोऽपि हि मणिर्गेहस्थ इति गीयत' इति ब्रह्मणः सर्वगतत्वेन साक्षादाकाशस्थस्यैव तत्स्थ-स्वगतवह्निशिखास्थत्वस्याप्यादित्यपुरुषस्थत्वादिवदविरुद्धतया तत्तदुपासनानां तत्तद्गुणविशिष्टतया तत्तच्छ्रुत्या परमात्मप्रतिपादनाविरोधात् । तस्मात् "यावान्वाऽयमाकाश" इत्यादि श्रुतेर्दहरपुण्डरीको-पाधिकृतपरमात्मपरिच्छिन्नत्वाभावापरत्वाभावेन तद्दृष्टान्तेनात्मसार्वात्म्योपदेशस्यान्तःकरणोपाधि-कृतप्रत्यगात्मपरिच्छिन्नत्वाभावपरत्वमयुक्तमेवेत्युक्तरीत्यैव भूमाहङ्कारशब्दार्थत्वेन स्मृत्युक्तानां परमात्मरूपविशेषाणामेव नारायणानिरुद्धवासुदेवानां सार्वात्म्योपदेशोऽयमित्येव युक्तमित्येतद्बलान्न जीवात्मनोऽहङ्कारात् भेदसिद्धिरिति ।

यद्यप्यत्र नवीनोक्तं "विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि चेति" श्लोकेन विज्ञानमयस्याहं-बुद्धिविषयस्य निखिलकर्तृत्वमुक्त्वा ततोऽन्यत्वेनान्तरत्वेन च जीवस्यानन्दमयस्य [7]"तस्माद्वा एतस्माद् विज्ञानमयादन्योऽन्तर आत्मानन्दमय" इत्यभिधानान्निखिलकर्मकर्तुरहमनुभवगोचरात् भिन्न एव प्रत्य-गात्मा जीव इति । तदपि न । अहंबुद्धिगोचरस्य विज्ञानमयशब्दार्थत्वे विज्ञानशब्दार्थत्वे मानाभावात् । न हि विज्ञानमयशब्दार्थस्य विज्ञानशब्दस्य वाहं बुद्धिगोचरे रुढिरस्ति । नापि योगः । मयटो

१. तै.उ.प्र.१ प.१३ २. आर्षे. ९-२ ३. तै.उ. १ ४. तै.उ. १
५. म.ना.उ. ८-१६ ६. तै.उ.प्र.४ प.३० ७. तै.उ.प्र.२ प.४

विकारार्थत्वेऽपि विज्ञानविकारस्याहंबुद्धिगोचरे सिद्धेः छन्दसि विकारार्थत्वेऽवयवार्थे द्वयच् छन्दसीति द्वयच् एव मयटः स्मरणाच्च विज्ञानानन्दशब्दयोश्च द्वयच्त्वाभावेन ताभ्यां विकारार्थे तदयोगात् सर्वत्रात्र मयटो विकारार्थत्वे 'प्राचुर्यशब्दान्नेति चेन्न विकारादि'ति सूत्रेणापत्त्या 'विकारशब्दान्नेति चेन्न प्राचुर्यादि'ति सूत्रविन्यासानुपपत्तेश्च । प्राचुर्यार्थस्यैव त्वयैवानभ्युपगमात् । विज्ञप्तिप्राचुर्यस्य सर्वत्र परमात्मन्येव सम्भवेनाज्ञानप्रचुरेऽहंबुद्धिगोचरे तस्याऽसम्भवात् । विज्ञानकरणप्राचुर्यस्यापि सकल-तत्करणनियामकपरमस्वतन्त्रपरमात्मन्येव सम्भवेन अस्वतन्त्रेऽल्पतत्करणभूतचक्षुरादिनियामके तत्र असम्भवाच्च ।

परमात्मन एव [1]"विश्वतश्चक्षुः" "सहस्राक्षः सहस्रपात्" इत्यादिश्रुतौ [2]"सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्" इत्यादिस्मृतौ च चक्षुराद्युपलक्षितविज्ञानकरणप्राचुर्यावगतेश्च ।

उक्तरीत्या मयटोऽर्थवत्त्वसम्भवे वैयर्थ्यापादकस्वार्थकप्रत्ययत्वाश्रयणायोगात् । 'अकायः अपाणिपादौ चक्षुः कर्णौ मना इत्यादि विज्ञान करणादिनिषेधश्रुतेश्च । निरनिष्ठो निरवद्यः आप्रणवात् स एवानन्दः । आप्रणवात् सर्व एव सुवर्णः । पूर्णमदः पूर्णमिदं नित्यचेतनानां नित्यः चेतन' इत्यादि श्रुत्यनुरोधेन नान्तोऽस्ति । यस्य न च समुद्भवोऽस्ति वृद्धिर्न यस्य परिणामविवर्जितस्य नापक्षयं च समुपेत्य विकल्पवस्त्वित्यादिश्रुत्यनुरोधेन च दुःखहेत्वनित्यप्रकृतिपरिमाणात्मककुरूपापूर्णपरि-मितरूपशब्दादिविषयकविहितेतरदेहादिविशेषविषयत्वेन सामान्यतन्निषेधरूपत्वाभावात् । अन्यथा "न हिंस्यात् [3]सर्वा भूतानी"त्यादेर्ब्राह्मणो न हन्तव्य इत्यादेश्चाविहितहिंसानिषेधत्ववद्विहितपशुहिंसा-निषेधत्वापत्तेः । चक्षुरादिविज्ञानकरणसामान्याभावे तन्नियतज्ञानवाचिन पश्यति स श्रृणोतीत्यादेर्जीवा-त्मन इव परमात्मनोऽपि स्वरूपतो नित्यत्ववद्देहादितोऽपि अनित्यत्वस्य तुल्यत्वे 'नित्यो नित्यानां चेतनश्चेतनानामि'ति परमात्मनो नित्यचेतनजीवात्मापेक्षयातिशयितनित्यचेतनत्वोक्तेश्चायोगाच्च । तथाच विज्ञानमयशब्दस्याहंबुद्धिगोचरपरत्वाभावेन तत्समानार्थक 'विज्ञानं यज्ञं तनुत' इति श्लोकस्थ-विज्ञानशब्दस्यापि न तत्परत्वं युक्तम् । अत एवानन्दमयशब्दोऽपि न जीवपरः । तत्र तस्य रूढेरभावात् आनन्दविकारत्वरूपयोगार्थस्य च स्वरूपतोऽनादि जीवार्थाभावात् । न चानन्दात्मकब्रह्मप्रतिबिम्ब-भूतस्य जीवस्य तादृशब्रह्माधीनाग्रिमक्षणसत्ताकत्वेन तद्विकारत्वमिति वाच्यम् । तदधीनाग्रिमक्षण-सत्ताकत्वस्य योगक्षेमसाधारणजन्यत्वरूपस्य स्वरूपतोऽनाद्यनन्ते जीवेऽसम्भवात् सम्भवे वा परिणाम-त्वरूपविकारत्वस्य तत्रासम्भवात् । तस्यैव च मयडर्थत्वात् अन्यथा दण्डमयो घटः प्रायश्चित्तमयो दुःखाभाव इत्यादि प्रयोगप्रसङ्गात् ।

---

१. तै.उ.प्र.४ प.३ २. तै.उ.प्र.४ प.३ ३. कैव. १०

आनन्दप्राचुर्यस्य च दुःखप्रचुरे जीवेऽसम्भवात् । न च प्रियाद्यवयवसंयोगात् 'तस्यैष एव शारीर आत्मे'ति शारीरत्वग्रहणात् प्रतिशरीरं प्रियाद्यवयवभेदेन भिन्नत्वाच्चानन्दमयो जीव एवेति वाच्यम् । त्वन्मते जीवस्य निरवयवत्वेन प्रियाद्यवयवविशेषयोगस्याप्यसम्भवात् । निवासार्थकाण्प्रत्ययान्त-शारीरशब्दयोगार्थस्य शरीरनिवासित्वरूपस्य जीवब्रह्मसाधारणतया जीवलिङ्गत्वायोगात् । वक्ष्यमाण-रीत्या प्रतिशरीरं भिन्नाभिन्नानां प्रियादीनामवयवत्वाभावेन तत्कृतभेदस्य आनन्दमये सिद्धेः । आनन्दमयस्य जीवत्वे तदभिन्नत्वे भिन्नत्वे वा ब्रह्मणस्त्वप्रसिद्धपुच्छत्वायोगात् । बाधकं विना ब्रह्मशब्दपुच्छयोर्मुख्यार्थपरित्यागायोगात् । ज्ञेयब्रह्मप्रकरणे जीवस्वरूपनिरूपणासङ्गतेः । न च अन्न-मयादिवदानन्दमयस्यापि स्थूलारुन्धतीत्यायेन ब्रह्मज्ञानोपयोगितयैव तन्निरूपणमत्रेति वाच्यम् ।

प्रथमं स्थूलनक्षत्रमरुन्धतीत्वेनोपदिश्य तन्निरासपूर्वकं ज्ञापनीयारुन्धत्युपदेशवदिहानन्दमयोप-देशानन्तरं तन्निरासपूर्वकं ज्ञापनीयब्रह्मनिरूपणाभावेन स्थूलारुन्धतीन्यायानवकाशात् । [1]'ब्रह्मपुच्छं प्रतिष्ठे'ति पुच्छत्वेन ब्रह्मनिरूपणस्यान्नमयादौ 'इदं पुच्छं प्रतिष्ठे'त्यादेरिव ज्ञेयब्रह्मपरत्वाभावात् आनन्दमयनिरासाऽनुपलब्धेश्च । "सत्यं ज्ञानमनन्तं ब्रह्मे"ति लक्षणवाक्येन ज्ञेयब्रह्मस्वरूपमात्रस्य प्रागेव ज्ञापितत्वेनोत्तरत्र पुनस्तज्ज्ञापनार्थमन्नमयाद्यानन्दमयान्तानां निरूपणवैयर्थ्याच्च ।

किञ्च स्थूलनक्षत्रप्रदर्शनमन्तरेणारुन्धतीप्रदर्शनासम्भववदन्नमयादीनां ब्रह्मत्वोपदेशमन्तरेण न ज्ञेयब्रह्मोपदेशासम्भवः । येनेह तन्न्यायावतारः स्यात् । न च सत्यं ज्ञानमिति स्वरूपलक्षणपरवाक्येन ब्रह्मोपदिश्य पुनरन्नमयादिवाक्येन स्थूलदेहादिरूपकोशात्मकमया भ्रान्तिमुत्पाद्य तन्निरासपूर्वकं ब्रह्मपुच्छमिति वाक्ये पुनरविज्ञेयब्रह्मोपदेशस्य किमपि पुच्छमस्ति । न च अज्ञातधर्मतत्त्वं प्रति चैत्यवन्दनादि धर्म इत्युपदिश्य मन्वानं प्रति ज्योतिष्टोमादिधर्म इत्युपदिश्यते । येन श्रोतृबुध्यनुसारेणेह तथा तथोपदेश इत्युच्येत ।

## आनन्दमयस्य जीवत्वेऽनुपपत्तिप्रदर्शनद्वारा ब्रह्मण एव आनन्दमयत्वसमर्थनम्—

किञ्चानन्दमयस्य जीवत्वे "असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद" इत्युत्तरश्लोके ब्रह्मशब्दाभ्यासोऽनुपपत्तिः । जातिकमलासनादिसाधारणकेवलरूढ्यपेक्षया योगरूढेः प्रबलत्वेन ब्रह्मणो बृहन्तो ह्यस्मिन् गुणा इति श्रुतिसिद्धयोगार्थस्य पूर्णगुणत्वस्य 'तदेतद् ब्रह्म परमं कवीनां, एतमेव ब्रह्मेत्याचक्षत' इति श्रुतिसिद्धविद्वद्रूढेश्च सत्त्वेन च परमात्मन्येव तस्य मुख्यत्वात् ।

१. तै.उ.प्र.२ प.५

न च आनन्दमयेऽवयविनि प्रधाने सति ब्रह्मशब्दाभ्यासस्यासन्नेवेत्याद्यानन्दमयविषयकोत्तरश्लोकस्थस्य तदवयवाप्रधानपुच्छविषयत्वं आश्रयणार्हम् । न च तच्छ्लोकोऽपि पुच्छब्रह्मविषयः अन्नमयादीन् प्रत्युदाहृतश्लोकानामप्यन्नमयादिपुच्छविषयत्वापातात् ।

किञ्चानन्दमयस्य जीवत्वे "सोऽकामयत बहु स्यां प्रजायेये"त्यादि वाक्योक्तकामयितृत्व-स्रष्टृत्वाद्यनुपपत्तिः । न च तदपि वाक्यं ब्रह्म पुच्छ ब्रह्मविषयं तथा सति 'सोऽकामयते'ति पुल्लिङ्गनिर्देशानुपपत्तेः । आकाशादिकारणत्वेनोक्तस्यात्मनोऽव्यवहितत्वेनाव्यवहितानन्दमयपरित्यागेन तस्य तेन परामर्शायोगात् । 'रसो वै सः' इत्यादिवाक्योक्तलब्धलब्धव्यभावतल्लाभानन्तरभाव्यति-शयितानन्दवत्वानुपपत्तिश्च । न हि जीवः स्वयमेव लब्धालब्धयो रसात्मकश्च भवति । सारापरप-नामकरसरूपत्वस्य परमात्मनोऽन्यत्राऽसम्भवात् । तस्यैव सर्ववस्तुषु निरतिशयस्वरूपत्वात् ।

न चानन्दमयशब्दमहिमलब्धप्रचुरानन्दब्रह्मस्वरूपलाभस्यैव प्रचुरदुःखजीवलाभस्य आनन्दीति इन्प्रत्ययान्तशब्दप्रतिपन्नातिशयितानन्दहेतुत्वं युज्यते । किञ्च पुच्छत्वेनोक्तस्यैव ब्रह्मत्वे पुच्छमभ्या-सादिति सूत्रेणापत्त्या 'आनन्दमयोऽभ्यासादि'ति सूत्रविन्यासोऽसङ्गतः स्यात् । न च सौत्रानन्दमय-शब्देनानन्दमयपुच्छं विवक्षितमित्यत्र मानमस्ति । न वा प्रयोजनं विना रूढलक्षणाश्रयणमयुक्तम् । तस्मादानन्दमयो न जीवः किन्तु परब्रह्मैव । एवमन्नमयादयोऽपि न कोशाः किन्तु ब्रह्मैव "असन्नेव स भवती"ति उत्तरश्लोके आनन्दमयो ब्रह्मशब्दाभ्यासवत् विज्ञानमयोऽपि [1]"विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेदे"ति ब्रह्मशब्दाभ्यासात् यद्यप्यन्नमयप्राणमयमनोमये पुनर्ब्रह्म-शब्दाभ्यासोऽस्ति । तथापि [2]"येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वानि"ति सकृच्छ्रुतब्रह्मशब्दसामर्थ्यादिव तेषामपि ब्रह्मत्वम् ।

न हि सकृदुक्तस्य ब्रह्मशब्दस्य ब्रह्मप्रमापकत्वासामर्थ्येभ्यः तस्यापि तद्युज्यते । न चैव-मभ्यासोपन्यासः सौत्रो व्यर्थः । विजातीयानेकलिङ्गोपन्यासवत् सजातीयानेकतदुपन्यासस्यापि प्रतिज्ञार्थदार्ढ्यहेतुत्वात् । ज्योतिष्टोमप्रकरणस्थज्योतिःशब्दस्य तत्परत्ववदन्नमयादीन् प्रत्युदाहृत-श्लोकस्थानामन्नादिशब्दानां प्रकृतान्नमयादिपरत्वेन तत्रत्यब्रह्मशब्दस्यापि अन्नमयादिविषयत्वात् ।

एवं उत्तरानुवाके भृगुवल्ल्यामपि अन्नादय आनन्दपर्यन्ता ब्रह्मैव । तत्रापि सर्वत्र [3]"अन्नं ब्रह्मेति व्यजानात्, [4]प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानात्, [5]आनन्दो ब्रह्मेति व्यजानात्" इति

१. तै.उ.प्र.२ प.५ २. तै.उ.प्र.२ प.२ ३. तै.उ.प्र.३ प.१
४. तै.उ.प्र.३ प.२ ५. तै.उ.प्र.३ प.३

आनन्दप्राचुर्यस्य च दुःखप्रचुरे जीवेऽसम्भवात् । न च प्रियाद्यवयवसंयोगात् 'तस्यैष एव शारीर आत्मे'ति शारीरत्वग्रहणात् प्रतिशरीरं प्रियाद्यवयवभेदेन भिन्नत्वाच्चानन्दमयो जीव एवेति वाच्यम् । त्वन्मते जीवस्य निरवयवत्वेन प्रियाद्यवयवविशेषयोगस्याप्यसम्भवात् । निवासार्थकाण्प्रत्ययान्त-शारीरशब्दयोगार्थस्य शरीरनिवासित्वरूपस्य जीवब्रह्मसाधारणतया जीवलिङ्गत्वायोगात् । वक्ष्यमाण-रीत्या प्रतिशरीरं भिन्नाभिन्नानां प्रियादीनामवयवत्वाभावेन तत्कृतभेदस्य आनन्दमये सिद्धेः । आनन्दमयस्य जीवत्वे तदभिन्नत्वे भिन्नत्वे वा ब्रह्मणस्त्वप्रसिद्धपुच्छत्वायोगात् । बाधकं विना ब्रह्मशब्दपुच्छयोर्मुख्यार्थपरित्यागायोगात् । ज्ञेयब्रह्मप्रकरणे जीवस्वरूपनिरूपणासङ्गतेः । न च अन्न-मयादिवदानन्दमयस्यापि स्थूलारुन्धतीत्यायेन ब्रह्मज्ञानोपयोगितयैव तन्निरूपणमत्रेति वाच्यम् ।

प्रथमं स्थूलनक्षत्रमरुन्धतीत्वेनोपदिश्य तन्निरासपूर्वकं ज्ञापनीयारुन्धत्युपदेशवदिहानन्दमयोप-देशानन्तरं तन्निरासपूर्वकं ज्ञापनीयब्रह्मनिरूपणाभावेन स्थूलारुन्धतीन्यायानवकाशात् । [1]'ब्रह्मपुच्छं प्रतिष्ठे'ति पुच्छत्वेन ब्रह्मनिरूपणस्यान्नमयादौ 'इदं पुच्छं प्रतिष्ठे'त्यादेरिव ज्ञेयब्रह्मपरत्वाभावात् आनन्दमयनिरासाऽनुपलब्धेश्च । "सत्यं ज्ञानमनन्तं ब्रह्मे"ति लक्षणवाक्येन ज्ञेयब्रह्मस्वरूपमात्रस्य प्रागेव ज्ञापितत्वेनोत्तरत्र पुनस्तज्ज्ञापनार्थमन्नमयाद्यानन्दमयान्तानां निरूपणवैयर्थ्याच्च ।

किञ्च स्थूलनक्षत्रप्रदर्शनमन्तरेणारुन्धतीप्रदर्शनासम्भववदन्नमयादीनां ब्रह्मत्वोपदेशमन्तरेण न ज्ञेयब्रह्मोपदेशासम्भवः । येनेह तन्न्यायावतारः स्यात् । न च सत्यं ज्ञानमिति स्वरूपलक्षणपरवाक्येन ब्रह्मोपदिश्य पुनरन्नमयादिवाक्येन स्थूलदेहादिरूपकोशात्मकमया भ्रान्तिमुत्पाद्य तन्निरासपूर्वकं ब्रह्मपुच्छमिति वाक्ये पुनरविज्ञेयब्रह्मोपदेशस्य किमपि पुच्छमस्ति । न च अज्ञातधर्मतत्त्वं प्रति चैत्यवन्दनादि धर्म इत्युपदिश्य मन्वानं प्रति ज्योतिष्टोमादिधर्म इत्युपदिश्यते । येन श्रोतृबुध्यनुसारेणेह तथा तथोपदेश इत्युच्येत ।

## आनन्दमयस्य जीवत्वेऽनुपपत्तिप्रदर्शनद्वारा ब्रह्मण एव आनन्दमयत्वसमर्थनम्—

किञ्चानन्दमयस्य जीवत्वे "असन्नेव स भवति, असद् ब्रह्मेति वेद चेत्, अस्ति ब्रह्मेति चेद्वेद" इत्युत्तरश्लोके ब्रह्मशब्दाभ्यासोऽनुपपत्तिः । जातिकमलासनादिसाधारणकेवलरूढ्यपेक्षया योगरूढेः प्रबलत्वेन ब्रह्मणो बृहन्तो ह्यस्मिन् गुणा इति श्रुतिसिद्धयोगार्थस्य पूर्णगुणत्वस्य 'तदेतद् ब्रह्म परमं कवीनां, एतमेव ब्रह्मेत्याचक्षत' इति श्रुतिसिद्धविद्वद्रूढेश्च सत्त्वेन च परमात्मन्येव तस्य मुख्यत्वात् ।

१. तै.उ.प्र.२ प.५

न च आनन्दमयेऽवयविनि प्रधाने सति ब्रह्मशब्दाभ्यासस्यासन्नेवेत्याद्यानन्दमयविषयकोत्तरश्लोकस्थस्य तदवयवाप्रधानपुच्छविषयत्वं आश्रयणार्हम् । न च तच्छ्लोकोऽपि पुच्छब्रह्मविषयः अन्नमयादीन् प्रत्युदाहृतश्लोकानामप्यन्नमयादिपुच्छविषयत्वापातात् ।

किञ्चानन्दमयस्य जीवत्वे "सोऽकामयत बहु स्यां प्रजायेये"त्यादि वाक्योक्तकामयितृत्व-स्रष्टृत्वाद्यनुपपत्तिः । न च तदपि वाक्यं ब्रह्म पुच्छ ब्रह्मविषयं तथा सति 'सोऽकामयते'ति पुलिङ्गनिर्देशानुपपत्तेः । आकाशादिकारणत्वेनोक्तस्यात्मनोऽव्यवहितत्वेनाव्यवहितानन्दमयपरित्यागेन तस्य तेन परामर्शायोगात् । 'रसो वै स' इत्यादिवाक्योक्तलब्धलब्धव्यभावतल्लाभानन्तरभाव्यति-शयितानन्दवत्वानुपपत्तिश्च । न हि जीवः स्वयमेव लब्धालब्धयो रसात्मकश्च भवति । सारापरपर-नामकरसरूपत्वस्य परमात्मनोऽन्यत्राऽसम्भवात् । तस्यैव सर्ववस्तुषु निरतिशयस्वरूपत्वात् ।

न चानन्दमयशब्दमहिमलब्धप्रचुरानन्दब्रह्मस्वरूपलाभस्यैव प्रचुरदुःखजीवलाभस्य आनन्दीति इन्प्रत्ययान्तशब्दप्रतिपन्नातिशयितानन्दहेतुत्वं युज्यते । किञ्च पुच्छत्वेनोक्तस्यैव ब्रह्मत्वे पुच्छमभ्या-सादिति सूत्रेणापत्त्या 'आनन्दमयोऽभ्यासादि'ति सूत्रविन्यासोऽसङ्गतः स्यात् । न च सौत्रानन्दमय-शब्देनानन्दमयपुच्छं विवक्षितमित्यत्र मानमस्ति । न वा प्रयोजनं विना रूढलक्षणाश्रयणमयुक्तम् । तस्मादानन्दमयो न जीवः किन्तु परब्रह्मैव । एवमन्नमयादयोऽपि न कोशाः किन्तु ब्रह्मैव "असन्नेव स भवती"ति उत्तरश्लोके आनन्दमयो ब्रह्मशब्दाभ्यासवत् विज्ञानमयोऽपि [1]"विज्ञानं देवाः सर्वे ब्रह्मज्येष्ठमुपासते । विज्ञानं ब्रह्म चेद्वेदे"ति ब्रह्मशब्दाभ्यासात् यद्यप्यन्नमयप्राणमयमनोमये पुनर्ब्रह्म-शब्दाभ्यासोऽस्ति । तथापि [2]"येऽन्नं ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वानि"ति सकृच्छ्रुतब्रह्मशब्दसामर्थ्यादिव तेषामपि ब्रह्मत्वम् ।

न हि सकृदुक्तस्य ब्रह्मशब्दस्य ब्रह्मप्रमापकत्वासामर्थ्येभ्यः तस्यापि तद्युज्यते । न चैव-मभ्यासोपन्यासः सौत्रो व्यर्थः । विजातीयानेकलिङ्गोपन्यासवत् सजातीयानेकतदुपन्यासस्यापि प्रतिज्ञार्थदार्ढ्यहेतुत्वात् । ज्योतिष्टोमप्रकरणस्थज्योतिःशब्दस्य तत्परत्ववदन्नमयादीन् प्रत्युदाहृत-श्लोकस्थानामन्नादिशब्दानां प्रकृतान्नमयादिपरत्वेन तत्रत्यब्रह्मशब्दस्यापि अन्नमयादिविषयत्वात् ।

एवं उत्तरानुवाके भृगुवल्ल्यामपि अन्नादय आनन्दपर्यन्ता ब्रह्मैव । तत्रापि सर्वत्र [3]"अन्नं ब्रह्मेति व्यजानात्, [4]प्राणो ब्रह्मेति व्यजानात्, मनो ब्रह्मेति व्यजानात्, [5]आनन्दो ब्रह्मेति व्यजानात्" इति

१. तै.उ.प्र.२ प.५ २. तै.उ.प्र.२ प.२ ३. तै.उ.प्र.३ प.१
४. तै.उ.प्र.३ प.२ ५. तै.उ.प्र.३ प.३

ब्रह्मशब्दश्रवणात् । न तु तपसो ब्रह्मत्वेऽपि तत्र [1]"तपो ब्रह्मेति" ब्रह्मशब्दवदन्नमयादीनां अन्नादीनां चाब्रह्मत्वेऽपि तेषु ब्रह्मशब्दोपपत्तिः ।

नाम्नीव ब्रह्मत्वेनोपास्यत्वोपपत्तिश्चेन्न । पूर्वत्र 'तपसा ब्रह्म विजिज्ञासस्वे'ति उत्तरत्र च 'स तपस्तप्त्वा, अन्नं ब्रह्मेति व्यजानादि'ति च ब्रह्मज्ञानोपायत्वेनानुष्ठेयत्वेन चोक्तस्य तपसो ब्रह्मत्वायोगेन तत्र ब्रह्मशब्दस्यासकृच्छ्रुतस्यापि मुख्यार्थस्यासम्भवात् । ब्रह्म वै पर्ण इतिवदर्थवादत्वात् । प्रकृते बाधकं विना मुख्यार्थत्वत्यागायोगात् । असदुपासनाया निषिद्धत्वेनाब्रह्मत्वे अन्नमयादीनां तत्रैवोपास्यत्वासम्भवाच्च । नामब्रह्मेत्युपासीतेत्यत्रापि नामस्थब्रह्मण एवोपास्यत्वात् ।

तथा च स्मृतिः । न च 'रमन्त्यहोऽसदुपासनाया आत्महन्' इति 'विज्ञानं ब्रह्म चेद्वेद, अन्नं ब्रह्मेति व्यजानादि'त्यादावुपासनाया अश्रवणाच्च । अन्नमयं प्रत्युदाहृतश्लोके [2]"अन्नाद्भूतानि जायन्त" इत्यादिनान्नस्य सकलभूतोत्पत्तिस्थितिलयहेतुत्वरूपब्रह्मलक्षणोक्तेश्च । प्राणमयादौ ब्रह्मशब्दसमानार्थकात्मशब्दश्रवणाच्च । मनोमयं प्रत्युदाहृतश्लोके [3]"यतो वाचो निवर्तन्त" इत्यादिना मनोमयस्य वाङ्मनसागोचरत्वरूपब्रह्मधर्मोक्तेश्च । "आनन्दं ब्रह्मणो विद्वान् न बिभेति कदाचने"ति तद् ज्ञानिनोभयराहित्योक्तेश्च । विज्ञानमयं प्रत्युदहृतश्लोके सर्वदेवोपास्यत्वरूपब्रह्मधर्मोक्तेः । तज्ज्ञानस्य सर्वपापनिवृत्तिवत्सर्वकामावाप्तिसाधनश्रुतेश्च । एवमुत्तरानुवाकोक्तान्नाद्यानन्दपर्यन्तानामपि "अन्नाद्धेव खल्विमानि भूतानि जायन्त" इत्यादिना जगजन्मादिकारणत्वरूपब्रह्मलक्षणोक्तेश्च । अन्नमयादीनामन्नादीनां च वाक्यशेषस्थनिरवकाशब्रह्मलिङ्गसद्भावेऽप्यब्रह्मत्वे आकाशप्राणादीनामप्यब्रह्मत्वापत्तेश्च । अन्नमयादिष्विवाकाशादिष्वपि उपासनार्थमेव वाक्यशेषे ब्रह्मधर्मोक्त्युपपत्तेश्च ।

ननु मयटो विकारार्थत्वात् ब्रह्मणश्चाविकारत्वान्नान्नमयादीनां ब्रह्मत्वं युक्तमिति चेत् । न । सर्वत्र मयटः प्राचुर्यार्थत्वात् ।

ननु तथापि अन्नमयादीनां त्रयाणां ब्रह्मत्वमविरुद्धं ब्रह्मणोऽप्यन्नादिप्राचुर्यसम्भवात् । विज्ञानमयानन्दमयोस्तु न ब्रह्मत्वं सम्भवति । प्राचुर्यस्य समानाधिकरणाल्पविरोधिसापेक्षत्वनियमेन विज्ञानानन्दैकरसे ब्रह्मणि तद्विरोध्यज्ञानदुःखलेशस्याप्यसम्भवेन तत्प्राचुर्यस्यासम्भवादिति चेत् न । समानाधिकरणाल्पविरोध्यपेक्षया 'ब्राह्मणप्रचुरो ग्राम' इत्यादाविव व्यधिकरणाल्पसजातीयापेक्षयापि 'प्रचुरप्रकाशः सविते'त्यादौ प्राचुर्यवाचकशब्दप्रयोगदर्शनेन प्राचुर्यस्य समानाधिकरणाल्पविरोध्यपेक्षानियमासिद्धेः । अविगीतप्रयोगतौल्यस्य ब्राह्मणप्रचुरो ग्राम इत्यादौ मुख्यत्वं प्रचुरप्रकाशः सविते-

१. तै.उ.प्र.३ प.५ २. तै.उ.प्र.२ प.२ ३. तै.उ.प्र.२ प.४

त्यादौ त्वमुख्यत्वमित्यत्र नियामकाभावाच्च । असत एवाक्षादिपदवदनेकार्थत्वस्यादोषत्वात् । अनन्यथासिद्धब्रह्मलिङ्गसत्त्वे कोशादिब्रह्मशब्दवदन्नमयादिशब्दानां ब्रह्मणि समन्वयस्यावश्यवक्तव्यत्वाच्च ।

अत एव प्रचुरप्रकाशः सवितेत्यादौ प्राचुर्यस्य विशेषणत्वेन तत्र समानाधिकरणाल्पविरोध्यप्रतीतावपि यत्र प्राचुर्यस्य विशेष्यत्वं तत्र तत्प्रतीतिनियमः । ब्राह्मणप्रचुरो ग्राम इत्यादौ तथा दर्शनात् । आनन्दमय इत्यत्र च प्राचुर्यविशेष्यमेवेति निरस्तम् । प्रकाशप्रचुरः सवितेति प्रयोगे प्राचुर्यस्य विशेष्यत्वेऽपि सवितर्यन्धकारलेशाप्रतीतेः । अन्तःशरीरे ज्योतिर्मयोऽपि शुभ्रः यं पश्यन्ति यतयः क्षीणदोषाः, स एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमय आनन्दमयनये वानन्दमय इत्यादौ त्वन्मतेऽपि ब्रह्मण्यपि ज्योतिर्मयादिशब्दप्रयोगाच्च । न च तत्र मयटः प्राचुर्यार्थत्वसम्भवे वैयर्थ्यापादकस्वार्थिकत्वं युक्तमाश्रयितुम् ।

वस्तुतस्तु प्रचुरशब्दादिक्यापरपर्यायमुत्कर्षमात्रमाह । समानाधिकरणाल्पविरोधिप्रतीतिस्तु मानान्तरात् न तु प्रचुरशब्दात् । तथा च समानाधिकरणामल्पविरोधि यत्र मानान्तरबाधितं तत्र व्यधिकरणमल्पं सजातीयमेव निरूपकतया प्रतीयते अल्पविरोधिवदल्पसजातीयस्यापि प्रचुरशब्दार्थभूतोत्कर्षनिरूपकत्वाविशेषात् । एवं च प्रचुरशब्दसमानार्थकमयट्प्रत्ययात् ब्रह्मणि विज्ञानानन्दरूपे तदुत्कर्षमात्रप्रतीतौ तन्निरूपकस्याल्पविरोधिनो ज्ञानस्य दुःखस्य वा प्रमाणबाधितत्वेन मानान्तरादप्रतीतावपि व्यधिकरणसजातीयस्याल्पस्य जीवगतस्य विज्ञानस्यानन्दस्य चानिरूपकस्य मानान्तरात् प्रतीतिसम्भवात् मयटः प्राचुर्यार्थकत्वेन काप्यनुपपत्तिरिति ।

एतेनानन्दमयतदवयवपुच्छयोर्द्वयोर्ब्रह्मत्वायोगादेकस्य ब्रह्मता वाच्या । तत्रानन्दमयस्य ब्रह्मत्वे विकारार्थमयटः प्रायपाठपरित्यागः प्राचुर्यस्याप्यल्पविरोध्यपेक्षत्वात् ब्रह्मणि च दुःखलेशस्यापि असम्भवात् मयटः स्वार्थत्यागः । पुच्छवाक्यगतब्रह्मशब्दस्य गौणार्थत्वं मुख्यार्थस्य ब्रह्मण आनन्दमयशब्दार्थभूतं स्वं प्रति पुच्छत्वायोगात् । न ह्येकमेव स्वं प्रत्यवयव्यवयवश्चेति सम्भवति । एवं सौत्राभ्यासरूपहेतूपपादनार्थं 'सैषानन्दस्य मीमांसे'त्यादौ अभ्यस्यमानानन्दप्रातिपदिकेन मयडर्थो लक्षतेति प्रायपाठपरित्यागमुख्यत्रितयलङ्घनरूपाश्चत्वारो दोषाः स्युः । पुच्छस्य ब्रह्मत्वे तु अवयवप्रायपाठबाधमात्रं, पुच्छपदमुख्यार्थत्यागस्तु आनन्दमयस्य ब्रह्मत्वपक्षेऽपि समः । लाङ्गूले मुख्यस्य तस्यानन्दमयावयवेऽपि गौणत्वात् । तस्मान्मयट्प्रत्ययब्रह्मशब्दानन्दप्रातिपदिकरूपमुख्यत्रितयानुगुणन् पुच्छमेव ब्रह्मेति युक्तम् । पुच्छपदं तु प्रतिष्ठापदसन्निधानादाधारलक्षकम् ।

किञ्च प्रियाद्यवयवयोगेनानन्दमयः सविशेषः । ब्रह्म तु निर्विशेषम् । अपिच आनन्दमयः प्रतिशरीरं प्रियाद्यवयवभेदात् भिन्नः । ब्रह्मत्वभिन्नम् । तस्मादानन्दमयो न ब्रह्म किन्तु पञ्चादिकोशाः । न च सर्वान्तरत्वादानन्दमयो ब्रह्म पुच्छवाक्ये प्रतिष्ठापदेन ततोऽप्यान्तरस्य ब्रह्मणो निर्दिष्टत्वात् या तु

'भार्गवी वारुणी विद्या' तस्यां मयटः प्रियशिरस्त्वादेश्चाश्रवणाद्युक्तं आनन्दमयस्य ब्रह्मत्वमिति निरस्तम्। अन्नमयादिवाक्येष्वपि मयटः प्राचुर्यार्थत्वेन विकारार्थत्वाभावेन प्रायपाठपरित्यागभाववत् प्राचुर्यस्योत्कर्षमात्ररूपस्य समानाधिकरणाल्पविरोधिनिरूपितस्य ब्रह्मणि असम्भवेऽपि व्यधिकरणाल्पसजातीयनिरूपितस्य तस्य चोक्तरीत्या सम्भवेन मयटो मुख्यार्थपरित्यागाभावात्। आनन्दमयपुच्छयोः अवयवावयविनोर्द्वयोरपि पूर्णत्वेन पुच्छवाक्यगतस्योत्तरत्रानन्दमयेऽभ्यस्यमानस्य च ब्रह्मशब्दस्य मुख्यार्थपरित्यागाभावात्। अन्यत्रावयविन्यवयवेवादृष्टस्य ब्रह्मशब्दमुख्यार्थभूतस्य पूर्णत्वस्यानन्दान्तरेऽदृष्टस्य पूर्णत्वादेर्ब्रह्मानन्द इव ब्रह्मरूपे आनन्दमयेऽवयविनि तदवयवे पुच्छादौ च प्रमाणबलेन स्वीकाराविरोधात्। 'विश्वतश्चक्षुरुत विश्वतो मुखः', 'पूर्णमदः पूर्णमिदं', 'सर्वतः पाणिपादं तदि'त्यादि श्रुतिस्मृत्यादेस्तत्र मानत्वात्। 'उद्ववर्हात्मनः केशावि'त्यादि स्मृतिसिद्धस्य केशरूपस्य कृष्णस्य 'व्याप्तं [1]त्वयैकेन दिशश्च सर्वा' इत्यादि स्मृत्या पूर्णत्वावगमाच्च। [2]आनन्दं ब्रह्मणो विद्वानि'त्यादि श्रुतेरानन्दात्मकस्यैव ब्रह्मण आनन्दित्ववत् 'सशिरः सदक्षिणः पक्ष' इत्यादि श्रुतेः 'कृष्णकेशो हि यादवः कृष्णस्तु भगवान् स्वयम्' इत्यादि स्मृतेश्चाभेदेऽपि परमात्मनोऽपि अचिन्त्यशक्त्या विशेषबलेन चावयवावयवित्वाविरोधात्। ''नेह नानास्ति किञ्चने''त्यादिश्रुत्यावयवावयविभावादिना प्रसक्तस्य स्वगतभेदस्य निषेधात्। एवमुत्तरत्र [3]''सैषानन्दस्ये'त्यादावानन्दशब्दस्यापि न मुख्यार्थपरित्यागेन आनन्दमयलक्षकता।

न हि वयमानन्दमयस्य ब्रह्मत्वे आनन्दपदाभ्यासं हेतुं ब्रूमः। येन तथा स्यात्। किन्तु ब्रह्मपदाभ्यासमेव। सविशेषत्वं तु ब्रह्मत्वसाधकम्। न च 'यतो वाचो निवर्तन्त' इति श्रुतिर्ब्रह्मणो निर्विशेषत्वमाह। किन्तु साकल्येन। अवाङ्मनसगोचरानन्तविशेषवत्त्वं प्रियादिके च ''यः प्रतिशरीरं भिन्नः प्रियादिः नासौ भगवतोऽवयवः। यश्चावयवो न स भिन्नः। 'नेह नाने'त्यादि श्रुत्यैव तद्भेदस्य निषेधात्।

अत एव पुच्छवाक्ये प्रतिष्ठापदेन आनन्दमयापेक्षयान्तरस्य ब्रह्मणो निर्देशात् पुच्छत्वेनोक्तमेव ज्ञेयम्। ब्रह्मानन्दमयस्तु प्राणमयादिवद्ब्रह्मैवेति प्रत्युक्तम्। पुच्छत्वेनोक्तस्य ब्रह्मणो विज्ञानमयादानन्दमयस्येवानन्दमयादान्तरत्वेन शब्दतो निर्देशाभावात् प्रतिष्ठापदस्यान्तरत्वानभिधायित्वात् आनन्दमयो ब्रह्म। कुतोऽभ्यासादिति स्वारस्येन सूत्रयोजनासम्भवे सौत्रानन्दमयशब्देन आनन्दमयवाक्यस्थपुच्छं लक्षयित्वा सूत्रयोजनानुपपत्तेश्च। त्वद्रीत्याऽऽनन्दमयस्य जीवत्वेन घटादिवद्विकारित्वरूपत्वासम्भवेनाविकारार्थकमयडनुपपत्तेरुक्तत्वाच्च। अन्नमयाद्यानन्दमयान्तानामब्रह्मत्वे योगरूढिभ्यां

१. भ.गी. ११-१० २. तै.उ.प्र.२ प.५ ३. तै.उ.प्र.२ प.८

ब्रह्मण्येव मुख्यस्य ब्रह्मशब्दस्यात्मशब्दस्य तदभ्यासस्य च तेष्वनुपपत्तेश्च । न च बाधकं विना मुख्यार्थत्यागो युक्तः ।

नन्वेवमन्नमयादीनां ब्रह्मत्वे "स वा एष पुरुषोऽन्नरसमय" इत्येतच्छब्देन आकाशादि कारणत्वेनोक्तस्य परमात्मन एव परामर्शो वाच्यः । न त्वाद्यपुरुषशब्दोक्तसन्निहितपुरुषाकारान्नविकारात्मककोशपरामर्शः स वा इति तच्छब्दपरामृष्टेनाकाशादिकारणपरमात्मनोऽन्नात्पुरुष इत्यस्य कोशस्यात्यन्तभिन्नत्वेन अभेदमादाय तच्छब्दैतच्छब्दयोः सामानाधिकरण्योपपादनायोगात् । परस्याप्येष दोषः सम इति चेत् । परेणास्य वाक्यस्य स्थूलारुन्धतीन्यायेन ब्रह्मत्वप्रतिपत्त्यर्थत्वस्वीकारेणाभेदपरत्वानभ्युपगमात् । न च यजमानः प्रस्तर इत्यादिवत् तन्सिद्ध्यादिना वा । राजा राष्ट्रवन्नियम्यत्वादिना वा "स वा एष पुरुष" इति श्रौतसामानाधिकरण्योपपत्तिरिति वाच्यम् । तथा सत्यन्नमयादिशब्दानां त्वदभ्युपगत ब्रह्मपरत्वत्यागप्रसङ्गात् ।

किञ्चैवं मयटो विकारार्थत्वेऽपि दोषाभावे अन्नमयादिशब्देषु तस्य प्राचुर्यार्थत्वाभिनिवेशो न युक्तः । न च तत्र तच्छब्दवदेतच्छब्दस्यापि व्यवहिताकाशादिकारणात्मपरामर्शित्वमभ्युपगन्तुं शक्यम् । तस्य सन्निहितपरामर्शिताया एव स्वरससिद्धत्वेन व्यवहिततत्परामर्शित्वे मानाभावात् । द्वितीयपुरुषशब्देन आद्यपुरुषशब्दार्थस्यैव प्रत्यभिज्ञायमानतया तत्समानाधिकरणैतच्छब्दस्य तत्परामर्शिताया एव न्याय्यत्वाच्च । न चावकाशादिपुरुषान्तरशब्दानां तादृशपरत्वेन सन्निहितत्वं, तेषां तत्परत्वे मानाभावात् । किञ्च तादृशात्मपरत्वे आत्मन आत्मोत्पत्तिरेवात्मन आकाशः सम्भूत' इत्यादि वाक्यार्थः स्यात् । नत्वात्मन आकाशादेः ।

अपि चैवं 'आकाशाद्वायुरि'त्यादि पुनरुक्तं स्यात् । 'आत्मन आकाशः सम्भूत' इत्युक्तार्थस्यैव तेन प्रतिपादनात् । न चाकाशादि शब्दानामुभयपरत्वेनेष्टसिद्धिः । उभयपरत्वे मानाभावात् । वाक्यभेदापत्तेः । उभयपरत्वेऽप्युक्तदोषानिस्ताराच्चेति चेत् न । प्रकृते स्थूलारुन्धतीन्यायप्रवृत्त्यसम्भवस्योक्तत्वेनैतच्छब्दस्य सन्निहिताद्यपुरुषशब्दार्थभूततदाकाशनिर्विकारात्मककोशपरामर्शित्वे तादृशात्मपरामर्शितच्छब्दसामानाधिकरण्यायोगेन तस्यापि तादृशात्मपरामर्शिताया एव वाच्यत्वात् । स्वरससिद्धसन्निहितपरामर्शित्वस्याप्येतच्छब्दस्य व्यवहिततादृशात्मपरामर्शित्वे चोक्तानुपपत्तेरेव मानत्वात् । केवलैतच्छब्दस्य तथात्वेऽपि व्यवहितपरामर्शतच्छब्दपरामर्शस्यातथात्वेन व्यवहितपरामर्शित्वोपपत्तेः । अन्यथा केवलैनैव विवक्षितार्थस्य लब्धत्वेन विशेषणवैयर्थ्यात् । न चाद्यपुरुषशब्दार्थस्यैव द्वितीयपुरुषशब्देन प्रत्यभिज्ञानात् । तेन विशेषिततच्छब्दस्य कथं व्यवहितात्मपरामर्शित्वं प्रत्यभिज्ञाविरोधादिति वाच्यम् । तथा सति 'एष पुरुष' इत्येतावतैव 'अन्नात् पुरुष' इति शब्दोक्तान्नविकारकोशस्य लाभा-

दन्नरसमय इत्यस्य पुनरुक्तत्वप्रसङ्गात् । त्वन्मते मयटोऽत्र विकारार्थत्वादन्नात्पुरुष इति पञ्चम्योपादान एव स्वीकारेणाहेतुपञ्चमीत्वात् । तस्मात् वस्तुप्रावृतजानावेषजानुरितिवदाद्यपुरुषशब्दार्थकोशाव-च्छिन्नतन्नियामकपरमात्मरूपविशेष एव "एष पुरुषोऽन्नरसमय" इत्येतच्छब्दप्राचुर्यर्थिकान्नरसमय-शब्दविशेषितद्वितीयपुरुषशब्दनिर्देश इत्येव युक्तम् । न त्वाद्यपुरुषशब्दार्थप्रत्यभिज्ञापकोऽयमिति । एवं च क्व प्रत्यभिज्ञाविरोधः । न च मत्पक्षे पौनरुक्त्यदोषः । स वा एष पुरुष उक्तविधः परमात्मान्न-रसमयः । सारभूतान्नप्रचुर इति परमात्मनि सारभूतान्नप्राचुर्यस्याप्राप्तस्येव विधानात् ।

यद्वा आकाशाद्याद्यपुरुषान्तशब्दानामपि परमात्मपरत्वेन तस्या सन्निहितत्वम् । एवं चैतच्छब्देन स्वरससिद्धसन्निहितपरामर्शित्वेन परमात्मपरामर्शोऽप्यविरोधः । न च एतेषां परमात्मवाचित्वे तत्परत्वे वा मानाभावः । [1]"सर्वे वेदा यत्पदमामनन्ति सर्वे वेदा यत्रैकं भवन्ती"त्यादेरस्तत्र मानत्वात् । अन्यथा तवापि सर्वेषां वेदान्तानां ब्रह्मपरत्वासिद्धिप्रसङ्गात् । न च 'यतो वाचो निवर्तन्त' इत्यादावप्राप्येति वा प्राप्तिनिषेधात् वाक्प्राप्तेश्च साक्षात्सम्बन्धरूपवाच्यवाचकभावापरपर्यायशब्दशक्तिरूपत्वात् पदशक्ति-मात्रनिषेधे तद्विशेषशक्तिरेव दुर्लभेति वाच्यम् । शक्तिलक्षणासाधारणवृत्तिमात्रस्य प्राप्तिशब्दार्थत्वेन अप्राप्येत्यनेन तन्निषेधेलक्षणायाप्यसिद्धप्रसङ्गात् । मनः प्राप्तेः संयोगरूपतदाकारत्वाभ्यामन्यस्या-भावेन [2]'अप्राप्य मनसा सहेति' तस्यापि निषेधेऽन्तःकरणवृत्तिविषयत्वस्य वा असिद्धिप्रसङ्गाच्च । असंयुक्तेऽपि ग्रामादौ दानादिना स्वतोत्पत्तावपि ग्रामादिकं प्राप्तमित्यविगीतव्यवहारदर्शनेन स्वत्व-संयोगाद्यनुगतसाक्षात्सम्बन्धत्वस्य निर्वक्तुमशक्यत्वेन प्राप्तिशब्दस्य नानार्थत्वावश्यम्भावात् । वाक् साक्षात्सम्बन्धत्वापेक्षया लघुभूतवाक्सम्बन्धस्यैव निषेध्यतावच्छेदकत्वेन शक्तिलक्षणा साधारणवाक्-सम्बन्धमात्रनिषेधस्यैव तच्छ्रुतितात्पर्ये गोचरत्वाच्च । 'यतो वाचो निवर्तन्त' इत्यादेः 'एतमेव ब्रह्मे-त्याचक्षते, वचसां वाच्यमुत्तममि'त्यादि ब्रह्मवाच्यत्वपरश्रुतिस्मृतिविरोधेन शब्दवाच्यत्वनिषेध-परत्वायोगेन साकल्येन शब्दप्रतिपाद्यत्वाद्यभावरूपान्यार्थपरस्यैवाङ्गीकर्तव्यत्वाच्च ।

तथाच आकाशादिपुरुषान्तशब्दानां परमात्मवाचित्वे तत्परत्वे च न काप्यनुपपत्तिः । न चैव-मात्मन आत्मोत्पत्तिरेव "आत्मन आकाशः सम्भूत" इत्यादि वाक्यार्थः स्यात् । पुनरुक्तिः स्यात् । आत्मादेर्भूताकाशादीनां उत्पत्तेरेतद्वाक्यार्थं च स्यादिति वाच्यम् । केवलात्मन आकाशादिनियामक-तदवच्छिन्नपरमात्मरूपविशेषोपपत्तेरिष्टत्वात् ।

अत एव पौनरुक्त्यप्रसङ्गः प्रत्यूढः । आत्मादेः भूताकाशादीनामुत्पत्तेरतद्वाक्यार्थत्वं च आका-शादिशब्दानामाकाशादिविशिष्टतन्नियामकपरमात्मपरत्वेन तदुभयपरत्वाभ्युपगमात् । अन्यथा तवापि

---

१. कठ.अध्या.१ व.२ मं.१५ २. तै.उ.प्र.२ प.१

वेदान्तानामखण्डचिन्मात्रपरत्वेन परमात्मन आकाशाद्युत्पत्त्यसिद्धिप्रसङ्गदोषसाम्यात् । तवेव ममापि वाक्यभेदपरिहारोऽपि सम इति किमनुपपन्नम् । तथापि नान्नमयादीनां ब्रह्मत्वं युक्तम् । "तस्माद्वा एतस्मादन्नरसमयादन्योन्तर आत्मा प्राणमय" इति प्राणमयादीनामन्नमयादितोऽन्यत्वान्तरत्वोक्तेः । न च ब्रह्मभेदे मानमस्ति । प्रत्युत 'नेह नाने'त्यादिना तद्भेदो निषिद्धः । न वा देशतो परिच्छिन्नस्य ब्रह्मणः तत्परिच्छिन्नत्ववदवान्तरत्वं युज्यते । न च 'अन्योन्तर आत्मे'ति-श्रुत्युक्त-अन्यत्वान्तरत्वे अन्यनिबन्धने अमुख्ये मुख्यत्वे वा बाधकाभावात् तदमुख्यत्वकल्पनस्य अन्नमयादि ब्रह्मत्वसिद्ध्य-धीनत्वात् । अन्नमयादीनां ब्रह्मत्वे चान्यत्वान्तरत्वे मुख्ये एव सम्भवतः । न हि सति सम्भवे मुख्यत्यागो युक्तः इति चेत् । न ।

## अन्नमयान्तपञ्चापि ब्रह्मैव, न कोशाः इति समर्थनम्—

अन्नमयादीनां ब्रह्मत्वे बहुसाधकस्य तदब्रह्मत्वे बहुबाधकस्य चोक्तत्वेन तदविरोधाय तदन्यत्वा-न्तरत्वोक्त्योः द्वयोरेव तन्नियम्य तदधिष्ठानभूतकोशनिबन्धना मुख्यन्यत्वान्तरत्वालम्बनत्वकल्पनात् । अन्यथा बहुबाधापत्तेः । बहुभिर्विरोधेऽल्पस्यैवान्यथयितव्यत्वात् । तथा च पारमर्षिसूत्रं "विप्रतिषिद्ध-धर्माणां समवाये भूयसां स्यात्सधर्मत्वम्" इति । अपि चान्नमयादीनामन्नादीनां चाब्रह्मत्वे [1]"एतमन्न-मयमात्मानमुपसङ्क्रामती"त्यादौ "एतमानन्दमयमात्मानमुपसङ्क्रामती"त्यन्ते मध्ये तथा "एतमन्नमय-मात्मानमुपसङ्क्रम्ये"त्यादौ "एतमानन्दमयमात्मानमुपसङ्क्रम्ये"त्यन्ते उपसंहारे च [2]"इमाँलोकान्नी-कामरूप्यनुसञ्चरन्नेतत्सामगायन्नास्त" इति श्रुत्युक्तकामान्नीत्यादिलिङ्गनिश्चितमुक्तप्राप्यत्वोक्तिविरोधः । न चात्रोपशब्दोऽतिक्रमार्थः । तत्र अभियुक्तप्रयोगाभावेन तस्य तदर्थत्वानुपपत्तेः । तदनुसारेणैवा-व्ययानामनेकार्थत्वस्याश्रयितव्यत्वात् । अन्यथान्तरशब्दः क्वचित् बहिरर्थोऽप्याश्रीयेत ।

किञ्च 'अस्माल्लोकात्प्रेत्ये'त्यनेनैवान्नविकारशरीराख्यकोशातिक्रमस्योक्तत्वेन 'अन्नमयमुपसङ्क्रा-मती'त्यादिनापि तदुक्तौ पुनरुक्तिः । एतेनैवान्नमयादीनां ब्रह्मत्वं त्याज्यम् । अन्यथा अशुद्धिप्रार्थन-वाक्यविरोधादिति प्रत्युक्तम् । शुद्धिप्रार्थनवाक्यगतान्नमयादीनामुक्तब्रह्मलक्षणकान्नमयादितः प्रकार-भेदात् कुण्डपायिनामयने मासमग्निहोत्रं जुहोतीति वाक्यगताग्निहोत्रस्याग्निहोत्रं जुहोतीतिवाक्यगताग्नि-होत्रादिवान्यत्वात् तदब्रह्मत्वेऽप्यस्मदुक्तब्रह्मप्रमापकभिन्नाप्रकरणस्थान्नमयादीनां ब्रह्मत्वे बाधकाभावान्न अन्यशुद्धिप्रार्थनमन्यब्रह्मत्वे बाधकं सम्भवति । तस्मादन्नमयादय आनन्दमयान्ताः पञ्चा अपि ब्रह्मैव न तु कोशा इति सिद्धम् ।

---

१. तै.उ.प्र.२ प.८ २. तै.उ.प्र.३ प.१०

ततश्च 'विज्ञानं यज्ञं तनुते । कर्माणि तनुतेऽपि चे'त्यहं बुद्धिविषयस्य विज्ञानमयस्य निखिल-कर्मकर्तृत्वमुक्त्वा ततोऽन्यत्वे नान्तरत्वेन च जीवस्यानन्दमयस्य 'तस्माद्वा एतस्माद्विज्ञानमयादन्यो-ऽन्तर आत्मा आनन्दमय' इत्यधिष्ठानान्निखिलकर्मकर्तुरहमनुभवगोचरात् भिन्न एव प्रत्यगात्मा जीव इति यदपि नवीनोक्तं तदपि सर्वथाऽनुपपन्नमेवेति स्थितम् । तस्मादहमर्थस्यानिदं चैतन्यरूपतया तत्र नाहमीश्वरो नाहं सर्वज्ञ इत्यादि जीवधर्मिकेश्वरप्रतियोगिकभेदप्रत्यक्षस्याहङ्कारादिविशिष्टे तदुपहिते वा जीवे ईश्वरप्रतियोगिकभेदाविषयत्वेन अन्यथासिद्धतया भेदसाधकमुक्तानुमानं तादृशप्रत्यक्षबाधिततया न तदभेदसाधकम् । अहं त्वं चात्मत्वापरपर्यायं वह्नित्वादिवज्जातिरेव नाहङ्कार इति । अन्यथा वह्निः शीतो न तेजस्तिमिरं नेत्यादि प्रत्यक्षस्य वह्नित्वादिविशिष्टे तदुपहिते वाशीतादिप्रतियोगिकभेदविष-यत्वेनान्यथासिद्धतया वा वह्निः शीतः तेजस्तिमिरं पदार्थत्वादित्यादि वह्न्यादौ च शीताद्यभेदसाधक-मनुमानं प्रत्यबाधकत्वापत्तिरिति ।

एतेन नाहमीश्वर इत्यादि प्रत्यक्षं घटाकाशः महाकाशो न सूचीछिद्रं दर्भं न छिद्रं न स्त्रीगकारः पुरुषगकारो नेत्यादि भेदप्रत्यक्षवत् । विशिष्टभेदविषयत्वेनोपहितप्रत्यक्षेणोपहितभेदविषयत्वेन वा अन्यथासिद्धं न । तदभेदानुमानबाधकम् । अन्यथा गगनादैक्यानुमानमपि उक्तभेदप्रत्यक्षबाधितं स्यादिति निरस्तम् । नीलघटपीतघटादिवन्महाकाशघटाकाशादिरूपेणाकाशस्यापि नानात्वेन तदैक्य-साधकानुमानस्यापि घटाकाशो महाकाशो नेत्याद्युक्तप्रत्यक्षबाधितत्वेनानुदाहरणत्वात् । स्त्रीगकारः पुरुषगकारो नेत्यादि वर्णभेदप्रत्यक्षस्य च सोऽयं गकार इत्यादि प्रत्यभिज्ञा प्रत्यक्षबाधितत्वेन वा मूले वृक्षः कपिसंयोगी शाखायां नेति प्रत्यक्षवदव्याप्यवृत्तिभेदविषयत्वेन वा पाकरक्ते इदानीं श्याम इति प्रत्यक्षवद्विशेषभेदविषयत्वेन वा अन्यथासिद्धतया वा प्रत्यभिज्ञाप्रत्यक्षानुगृहीतवर्णैक्यानुमानबाधक-त्वेनानुदाहरणत्वात् । नाहमीश्वर इत्यादि प्रत्यक्षं तु अहमर्थस्योक्तरीत्या इदं चैतन्यमात्रत्वेन न विशिष्ट-भेदविषयकमुपहितभेदविषयकं वा बलवत्प्रत्यभिज्ञारूपप्रत्यक्षेण बाधितमन्यविषयतां वा नीतमिति तस्योक्तजीवेश्वरैक्यानुमानबाधकत्वोपपत्तेश्च ।

किञ्चोक्तजीवेश्वरभेदप्रत्यक्षस्य विशिष्टोपहितभेदविषयत्वेऽपि विशेष्यभूतचैतन्यव्यक्तिभेदविषय-त्वमप्यस्त्येवेति । नीलघटः पीतघटो नेत्यादि विशिष्टोपहितभेदप्रत्यक्षस्य विशेष्यभूतघटव्यक्तिभेद-विषयत्वमप्यस्त्येवेति तदैक्यानुमानबाधकत्ववज्जीवेश्वरैक्यानुमानबाधकत्वावश्यम्भावात् । किञ्च तत्त्वमसीत्यादि तत्त्वम्पदार्थलक्ष्यचिन्मात्रैक्यावेदकवेदान्तानां वैय्यर्थ्याय तद्भेदभ्रमनिरासकत्वस्या-वश्यकतया 'नान्योतोऽस्ति द्रष्टे'त्यादेरप्यप्रसक्तप्रतिषेधकत्वपरिहाराय भेदप्रसक्तेरावश्यकतया च विशिष्टोपहिततत्त्वम्पदार्थभेदप्रत्यक्षस्यैव विशेष्यभूतचैतन्यमहाविषयकत्वमावश्यकम् ।

नन्वरस्तूक्तप्रत्यक्षं चैतन्यभेदविषयकम् । तथापि न तदुक्तिर्जीवेश्वराभेदानुमानबाधकम् । यथा पीतः शङ्खो न श्वेत इति शङ्खे श्वेतभेदप्रत्यक्षं न श्वेताभेदानुमानबाधकम् यथा वा नभोनैर्मल्यप्रत्यक्षं न तत्र रूपाभावानुमानबाधकमिति चेत् । न । यत्र शङ्खे इदं प्रथमतया पीतः शङ्खो न श्वेत इति श्वेतभेदप्रत्यक्षं अप्रामाण्यशङ्काशून्यं प्रबलदोषवशात् जायते नास्त्येव । तत्र श्वेताभेदानुमानं वह्नौ शीताभेदानुमानवत् यत्र तु शङ्खे परीक्षितप्रत्यक्षेण श्वेताभेदो गृहीतः तत्रैव कदाचिद्दोषवशात् श्वेतभेदप्रत्यक्षं जायमानमप्रामाण्यशङ्काकलङ्कितमेव जायत इति न तच्छ्वेताभेदानुमानबाधकमिति युक्तम् ।

एवं यत्र नभोनैल्यप्रत्यक्षं इदम्प्रथमतया प्रामाण्यशङ्काशून्यं दोषवशात् जायते तत्र नास्त्येव तदभेदानुमानम् । यत्र तु दूरे नभःप्रदेशे नैल्यप्रत्यक्षं जायते तत्रैव निकटं गतस्य तदभावप्रत्यक्षे वा, यत्र वा निकटे नभःप्रदेशे बहुधा रूपाभावप्रत्यक्षानन्तरं तत्रैव दूरं गतस्य रूपप्रत्यक्षे वा जाते विरुद्धप्रत्यक्षद्वयोपनयानन्तरं इदं वा प्रमाणमिदं वा अप्रमाणमिति ज्ञानद्वयेऽप्यप्रामाण्यशङ्का । तत्र नभोनैल्यप्रत्यक्षमपि न रूपाभावानुमानबाधकमित्यपि युक्तम् । जीवेश्वरभेदप्रत्यक्षं तु स्वविरोधिप्रत्यक्षान्तराभावेनाप्रामाण्यशङ्काशून्यतया वह्निशीताभेदानुमानं प्रति तद्भेदप्रत्यक्षवत् भवत्येव जीवेश्वरभेदानुमानं प्रति बाधकमिति वैषम्यात् । अन्यथा प्रत्यक्षं क्वापि बाधकं न स्यादिति ।

## जीवेश्वराभेदप्रत्यक्षविरोधात् श्रुतीनामभेदपरत्वाभावसाधनम्—

ननु मास्त्वनुमानं प्रत्यक्षविरोधाज्जीवेश्वराभेदसाधकम् । श्रुतयस्तु जीवेश्वराभेदपराः कथं न तत्साधिकाः स्युरिति चेदुच्यते । भवेदेवं यदि श्रुतयो जीवेश्वराभेदपराः स्युः । न चैवं बलवज्जीवेश्वरभेदप्रत्यक्षविरोधात् । अन्यथा यजमानः प्रस्तरः सोमेन यजेतेत्यादिश्रुतीनामपि प्रस्तरयजमानाभेदपरत्वेन तत्साधकत्वापत्तेः । तत्राप्यपूर्वत्वादितात्पर्यलिङ्गसत्त्वेन तत्परत्वावश्यम्भावात् । अन्यथा व्यभिचारेणापूर्वत्वादेरतात्पर्यलिङ्गत्वापत्तेः । उपक्रमादीनां प्रत्येकमेव तात्पर्यलिङ्गत्वात् । अन्यथा 'ज्योतिरुपक्रमात्, आनन्दमयोऽभ्यासात्, विधिरस्तु धारणे पूर्वत्वादि'त्यादावुपक्रमादिष्वन्यतमस्य लिङ्गत्वेनानुपादानप्रसङ्गात् ।

न च यजमानः प्रस्तर इत्यादेरर्थवादतया विध्यपेक्षितप्राशस्त्यपरत्वेन न यथाश्रुतार्थपरत्वमन्यथोभयत्र तात्पर्ये वाक्यभेदापत्तेरिति वाच्यम् । अवान्तरतात्पर्यस्य वाक्यभेदानापादकत्वात् । अन्यथा 'श्रोतव्य' इत्यादेर्ब्रह्मपरवेदान्तमध्यपातिनः श्रवणादिकर्तव्यत्वपरत्वाभावप्रसङ्गात् । 'वज्रहस्तः पुरन्दर' इत्याद्यर्थवादस्य प्राशस्त्यमात्रपरतया यथाश्रुतार्थपरत्वाभावेन देवताविग्रहवत्त्वाद्यसिद्धिप्रसङ्गात् । अतत्परत्वेऽपि मानान्तरविरोधेन तत्सिद्धिरिति चेत् न । तथा सति मानान्तराविरुद्धवाक्यमात्रादेव

तदर्थसम्भवेन क्वापि तात्पर्यस्वीकारानापत्तेः । तथाप्यपूर्वत्वादेस्तात्पर्यव्यभिचारित्वेनातल्लिङ्गत्व-प्रसङ्गात् । जीवेश्वरभेदप्रत्यक्षवत् प्रस्तरयजमानभेदप्रत्यक्षस्यापि नित्यनिर्दोषश्रुत्यपेक्षया सम्भावित-दोषत्वेन दुर्बलतया तद्विरोधस्य शङ्कितुमनर्हत्वेन प्रस्तरयजमानाद्यभेदस्यापि सिद्धिप्रसङ्गाच्च । सोमेन यजेतेत्यादेर्विधित्वेनानन्यशेषतया सोमयागाभेदपरत्वोपपत्तेश्च ।

ननु यजमानः प्रस्तर इत्यादेर्न भेदप्रत्यक्षविरोधेन तदभेदपरत्वाभावः तत्साधकत्वाभावो वा । किन्तु प्रहरणशास्त्रविरोधेन दर्भमुष्टिरूपप्रस्तरस्य यजमानाभिन्नत्वे तत्प्रहरणे यजमानस्यापि प्रहरणापत्त्या यजमानं विना समभिकर्मानिष्पत्तेः । एवं सोमेन यजेतेत्यादेरपि न प्रत्यक्षविरोधेन तद्भेदपरत्वाभावस्त-त्साधकाभावो वा । किन्तु सोमशब्दार्थत्वेन प्रसिद्धलताविशेषस्य यागाभिन्नत्वेऽश्रुतद्रव्यान्तरकल्पना-गौरवेणैवेति चेत् । दूरे गत्वा प्रत्यक्षाविरोधानादरे यजमानाभिन्नस्यापि प्रस्तरस्य दर्भमुष्टेः प्रहरण-शास्त्रासम्भवेन तच्छास्त्रविरोधापत्तेः । जीवेश्वरयोर्धर्मिसमसत्ताकाभेदसत्त्वेऽपि कल्पितभेदमादाय संसारित्वासंसारित्वादिव्यवस्थावद्यजमानप्रस्तरयोः यागसोमयोर्वा तादृशभेदसत्त्वेऽपि तन्न्यूनसत्ताक-व्यावहारिकभेदमादाय प्रहरणाप्रहरणयागत्वतत्साधनद्रव्यत्वानुपपत्तेश्च । श्रुतद्रव्याभावे ध्रौवाज्यस्यैव द्रव्यस्य सत्त्वेन द्रव्यान्तरकल्पनागौरवाभावात् । प्रत्यक्षविरोधस्याकिञ्चित्करत्वे सोमयागयोरभेदेऽपि साध्यसाधनभावसम्भवेन यागसाधनीभूतद्रव्यान्तरकल्पनापत्तेश्च ।

एवं प्रत्यक्षादिविरोधस्याकिञ्चित्करत्वे तत्त्वमसीत्यादिवत् ''सर्वं खल्विदं ब्रह्म', 'इदं सर्वं', 'यदयमात्मे'त्यादेरपि जडेश्वराभेदपरत्वेन तत्साधकत्वप्रसङ्गः । बाधायां सामानाधिकरण्यानभ्युपगम-प्रसङ्गश्च । न हि तत्र घट ईश्वरो न पट ईश्वरो नेत्यादि जडेश्वरभेदप्रत्यक्षादिकं विनान्यद्बाधकमस्ति ।

ननु तत्र प्रत्यक्षादिविरोधान्न जडेश्वरभेदपरत्वाभावः । तत्साधकत्वाभावादिकमङ्गीक्रियते । किन्तु नेह नानास्ति किञ्चनेत्यादि प्रपञ्चमिथ्यात्वावेदकश्रुतिविरोधात् । ''सत्यं ज्ञानमनन्तं ब्रह्म, तत्सत्यं स आत्मे''त्यादि श्रुत्या सत्यतयावगतेन ब्रह्मणा मिथ्याभूतजडप्रपञ्चस्याभेदायोगादिति चेत् । ''नान्यो-तोऽस्ति द्रष्टा एकमेवाद्वितीयमि''त्यादि जीवात्ममिथ्यात्वेदकश्रुतिविरोधात् । तत्त्वमसीत्यादेरपि तदभेदपरत्वं न स्यादिति साम्यात् । तत्त्वमसीत्यादि जीवेश्वराभेदपरश्रुत्यविरोधाय नान्योतोस्तीत्यादे-र्भेदमात्रनिषेधपरत्वेन जीवात्मस्वरूपनिषेधपरत्वाभावे ''नेहनानास्ति किञ्चने''त्यादेरपि ''सर्वं खल्विदं ब्रह्मे''त्यादि जडेश्वराभेदपरश्रुत्यविरोधाय भेदमात्रनिषेधपरत्वं न । जडप्रपञ्चस्वरूपनिषेधपरत्वमित्यपि सुवचत्वात् । तस्मात्परीक्षितप्रत्यक्षादिविरोधासत्त्व एव श्रुतीनामुपक्रमादिलिङ्गैस्तत्परत्वासिद्धिरि-त्यवश्यमङ्गीकर्तव्यम् ।

ननु प्रत्यक्षाद्यपेक्षया श्रुतेर्बलत्वे देहात्मैक्यप्रत्यक्षविरोधेन देहात्मभेदस्य चन्द्रप्रादेशिकत्वप्रत्यक्ष-विरोधेन तद्विरुद्धपरिमाणस्य श्रुतितः सिद्धिर्न स्यादिति चेत् । न । 'अहं मनुष्यो गौरोहं ब्राह्मणोहमि'-त्यादि देहात्मभेदप्रत्यक्षस्य तद्भेदग्राहिणा मम शरीरं मम देहोऽहं देहीत्यादि प्रत्यक्षेणाप्रामाण्याशङ्का-कलङ्किततया श्रुत्यपरिपन्थित्वात् । एवं चन्द्रप्रादेशिकत्वप्रत्यक्षस्याप्युदयादिसमयभेदेन नानापरिमाण-तत्तदभावग्राहिप्रत्यक्षेण परिमाणभ्रमजनकत्वेन क्लृप्तदोषत्वनिश्चयेन च अप्रामाण्यशङ्काकलङ्किततया श्रुत्या परिपन्थित्वात् । अप्रामाण्यशङ्काशून्यप्रत्यक्षस्यैव श्रुतिपरिपन्थित्वात् ।

एतेन पृथिवीजलादिषु सङ्कीर्णतया प्रतीयमानानां गन्धादीनामुपलभ्य "अप्सु चेद्गन्धं केचिद्ब्रूयु-रनैपुणाः । पृथिव्यामेव तं विन्द्यादपो वायुं च संश्रितम्" इत्यादिभिरागमैरेव व्यवस्थायाः वक्तव्यत्वेन प्रत्यक्षादागमस्य प्राबल्यमिति निरस्तम् । अग्निसम्पर्केण पृथिव्यां रूपादेरिव पृथिवीजलादीनामन्योन्य-सम्पर्केण तत्तद्गुणसजातीयगुणान्तरोत्पत्त्या गन्धस्पर्शयोः स्वाश्रयं विहाय दूरदेशस्थत्वस्य नक्षत्रादिव-दनुभवसिद्धतया तत्र तत्र सङ्क्रान्तत्वेन वा तत्प्रज्ञत्यक्षप्रतीतीनां प्रमात्वेनाप्रामाण्यशङ्काशून्यतया प्रबलत्वेनागमबाध्यत्वासम्प्रतिपत्तेः । प्रत्युतागमस्यैवोक्तप्रत्यक्षविरोधेन जले वायौ च प्रतीयमानो गन्धः पृथिवीसम्पर्कप्रयुक्त एव । न स्वावयवगुणप्रयुक्त इत्येवं परत्वस्यैव कल्पयितुमुचितत्वाच्च ।

किञ्च उपजीव्यत्वादपि श्रुत्याद्यपेक्षया प्रत्यक्षप्रबल्यमावश्यकम् । न च प्रत्यक्षप्रामाण्यं विना शब्दरूपधर्मिस्वरूपं तद्धर्मभूतयोग्यतादिकमुपक्रमोपसंहारैकरूप्यादिकं वा तात्पर्यलिङ्गं सिद्ध्यति । तदसिद्धौ च कुतस्तात्पर्यसिद्धिः । कुतो वा शाब्दधीः तत्प्रामाण्यं वा । अन्यथारोपितयोग्यतादिमता आरोपितेन शब्देन तदर्थसिद्धौ प्रातिभासिकयोग्यतादिमता वह्निरनुष्ण इत्याद्यनाप्तवाक्येन तात्त्विको व्यावहारिको वा वह्न्यादावनुष्णतादिः व्यावहारिकयोग्यतादिमतालौकिकवाक्येनाग्निहोत्रादिवैदिक-वाक्येन वा तात्त्विकोऽर्थः सिद्ध्येत् ।

न च प्रतिबिम्बस्यारोपितस्यापि सत्यबिम्बप्रमापकत्वदर्शनात् स्वाप्नकुञ्जरारोहणादेरारोपितस्यापि शुभप्रमापकत्वस्यारोपितसवितृसुषिरादेश्चानिष्टप्रमापकत्वस्य दर्शनाच्च । नायं नियम इति वाच्यम् । प्रतिबिम्बस्वाप्नपदार्थयोः सत्यत्वेनानारोपितत्वात् सवितृसुषिरादेरसत्यत्वेऽपि तद्दर्शनस्य सत्यस्यैवा-निष्टव्याप्ततया तत्प्रमापकत्वोपपत्तेः । न च स्वाप्नपदार्थस्य सत्यत्वे भेदवाद्यनभिमतार्थविदकस्वाप्न-वेदादिनापि तदर्थसिद्ध्यापत्तिः । आरोपितस्य साधकत्वपक्षेऽपि अभेदवाद्यनभिमतार्थविदकात् 'शून्यं तत्त्वं अनेकमेव सद्वितीयं ब्रह्मे'त्यादि स्वाप्नवेदादितोऽपि तदर्थसिद्ध्यापत्तिरिति । दोषस्य स्वाप्नपदार्था-सत्यत्वपक्षेऽपि तस्य तुल्यत्वेन उभयवादिसमाधेयत्वात् । स्वाप्नपदार्थस्यासत्त्वेऽपि तद्दर्शनस्य सत्य-स्यैव रज्जावारोपितसर्पदर्शनवत् सत्यार्थसाधकत्वोपपत्तेश्च ।

न चोपजीव्यत्वेन प्रत्यक्षस्य प्राबल्ये शुक्ताविदं रूप्यमिति ज्ञानस्यापि नेदं रूप्यमित्यादिबाधकज्ञानादपि प्राबल्यापत्तिः । तेन विना बाधकज्ञानानुत्थानेन तस्यापि बाधकज्ञानं प्रत्युपजीव्यत्वाविशेषादिति वाच्यम् । न हि वयमुपजीव्यत्वमात्रेण तस्य प्राबल्यं ब्रूमः । किन्तु परीक्षितत्वसहितत्वेन । परीक्षा च सजातीयविजातीयसंवादौ विसंवादाभावश्च । न च शुक्ताविदं रूप्यमिति ज्ञानस्य धर्मिप्रतियोग्यर्पकत्वेन बाधज्ञानं प्रत्युपजीव्यत्वेऽपि विशेषदर्शनजन्यस्वसमानविषयस्वसमानाकारज्ञानान्तररूपसजातीयसंवादो वा तापनताडनघर्षणकटकमकुटाद्यर्थक्रियारूपविजातीयसंवादोऽस्ति । प्रत्युतैतद्विपरीतसजातीयविजातीयविसंवाद एवास्तीत्यनतिप्रसङ्गात् ।

अस्ति च जीवेश्वरभेदप्रत्यक्षे बाधकत्वेनाभिमते तत्त्वमस्यादिवाक्यार्थे जीवेश्वरभेदज्ञानं प्रत्युत्थितिहेतुत्वेनोपजीव्ये स्वसमानविषयकं स्वसमानाकारं किञ्चित् ज्ञात्वा विशेषदर्शनजन्यं नाहमीश्वरो नाहं सर्वज्ञ इति सजातीयसंवादरूपं ज्ञानान्तरविजातीयसंवादरूपं रागद्वेषदुःखादिकं च । नास्ति च 'अहमीश्वरोऽहं सर्वत्र' इति सजातीयविसंवादः क्षित्याद्यशेषकार्यानुकूलकृतिमत्त्वादिरूपविजातीयसंवादश्चेति । तस्मात् जीवश्वरभेदप्रत्यक्षस्य तदभेदश्रुत्यपेक्षया प्राबल्यम् ।

अपि च प्रत्यक्षस्य जीवेश्वरभेदप्रत्यक्षस्य चोपसंहारादुपक्रमस्येव प्रथमत्वेनासञ्जातविरोधित्वेन वा लिङ्गाच्छ्रुतेरिव शीघ्रगामित्वेन वा यदाहवनीये जुहोतीति सामान्यशास्त्रात्पदे जुहोतीति विशेषशास्त्रस्येव श्रुत्यनुपस्थापिततद्धटादितद्रेखोपरेखादिसत्त्वग्राहितया विशेषविषयत्वेन यत्किञ्चित्प्राचीनमग्नीषोमीयात्तेनोपांशु चरन्तीत्यस्माद्यत्किञ्चिच्छब्दस्य प्रकृतप्रातिस्विकविशेषवाचित्वेन सामान्याविषयत्वेऽपि दीक्षणीया व्यतिरिक्ते सावकाशात् यावत्या वाचा कामयीत तावत्या दीक्षणीया यामनुब्रूयादित्यस्येव वृत्त्यन्तरेण सिंहो माणवक इतिवदनेकार्थत्वेन सैन्धवमानयेत्यादिवद्वाबाधितार्थान्तरे सावकाशात् । द्वैतादिश्रुत्यपेक्षया निरवकाशत्वेन च प्राबल्यमावश्यकम् । यत्तु यत्रैकवाक्यता प्रतीयते तत्रैकस्मिन्नेवार्थे पर्यवसानेन भाव्यम् । अर्थभेदे प्रतीतैकवाक्यताभङ्गप्रसङ्गात् ।

अतस्तत्र प्रथममसञ्जातप्रतिपक्षेण 'प्रजापतिर्वरुणायाश्वमनयदि'त्याद्युपक्रमेण परकृतिस्वरूपार्थवादेन दातुरिष्टौ विधिमधिरोपितायां तद्विरुद्धार्थं यावतोऽश्वान् प्रतिगृह्णीयात् तावतो वारुणांश्चतुष्कपालान्निर्वपेदित्युपसंहारगतपदजातमुपजातप्रतिपक्षत्वाद्यथाश्रुतार्थसमर्पणेन तदेकवाक्यतामप्रतिपद्यमानमेकवाक्यतानिर्वाहाय णिजर्थमन्तर्भाव्य तदानुगुण्यैनैवात्मानं लभत इत्युपक्रम्यस्य प्राबल्यम् । यत्र तु परस्परमेकवाक्यता न प्रतीतये तत्र पूर्ववृत्तमप्यविगणय्य लब्धात्मकं वाक्यं स्वार्थं बोधयत्येवेति न तत्र पूर्ववृत्तस्य प्राबल्यम् । अत एव षोडषिग्रहणवाक्यं पूर्ववृत्तमविगणय्य तदग्रहणवाक्यस्यापि स्वार्थबोधकत्वमुपेयते । किन्तूभयोर्विषयान्तराभावादगत्या तत्रैव विकल्पानुष्ठानमुच्यते ।

## उपक्रमादिकरणन्यायेन प्रत्यक्षस्य प्राबल्यसमर्थनम्—

एवञ्चाद्वैतागमस्य प्रत्यक्षेणैकवाक्यत्वशङ्काभावात् पूर्ववृत्तमपि तदविगणय्य स्वार्थबोधकमप्रतिहतम् । तदर्थबोधने च पूर्वं परमजातत्वादबाधितत्वेनैव जायते परस्यानन्यथोपादानान्बाधबाधेन सम्भव इत्यपच्छेदन्यायस्यैव प्रवृत्तिर्नोपक्रमन्यायस्य । अत एव लोकेऽपि प्रथमप्रवृत्तं शुक्तिरूप्यप्रत्यक्षमाप्तोपदेशेन बाध्यत इति । तन्न । क्रमप्रवृत्तयोः परस्परविरुद्धार्थतया प्रतीतयोः स्फुटदोषाभावेन ज्ञानप्रमाण्यस्य स्वतस्त्वेन प्रमाणत्वेन निश्चितयोः द्वयोः उत्तरं प्रमाणं यत्र पूर्वमपेक्षिते तत्र द्वयोर्थाप्राप्तार्थत्वेन प्रामाण्यनिर्वाहायोगात् । तन्निर्वाहायान्यतरसामान्यतरानुसारेण नयने कर्तव्ये यस्य असञ्जातप्रतिपक्षत्वं प्रथमप्रवृत्तेन तदनुरोधेनैव अन्यन्नेतव्यमिति ह्युपक्रमाधिकरणन्यायः ।

प्रतीतैकवाक्यता ह्युपक्रमोपसंहारयोरन्यतरस्यान्यतरानुसारेण नयने एव प्रयोजिका । न तु साक्षादुपक्रमाधिकरणन्यायप्रवृत्तौ । येन प्रत्यक्षागमस्थले एकवाक्यताभावेनोपक्रमाधिकरणन्यायप्रवृत्तिर्न स्यात् । ग्रहणाग्रहणवाक्यस्थले तु परस्परनैरपेक्ष्येण स्वस्वार्थप्रवृत्तिवाक्यद्वयस्य प्रयोगभेदेन प्रामाण्यसम्भवेन च नान्यतरस्यान्यतरानुसारेण नयनप्रसक्तिः । येन तदर्थमुपक्रमाधिकरणन्यायापेक्षा स्यात् विकल्पश्च न स्यात् । अन्यथाऽपच्छेदन्यायेन ग्रहणवाक्यापेक्षया ग्रहणवाक्यस्य प्राबल्यापत्त्या विकल्पो न स्यादिति दोषसाम्यत् । शुक्ताविदं रजतमिति प्रत्यक्षस्य तु नाप्तवाक्येन बाधः । अप्रामाण्यशङ्कां विना रजतप्रत्यक्षस्यायोग्यतानिश्चयरूपस्य सत्त्वेनाप्तवाक्येन तत्र ज्ञानस्यैवानुदयात् । उदये वा तस्याहार्यज्ञानत्वेन रजतज्ञानबाधकत्वायोगात् राजभृत्यस्य राजगौरवादमात्यबाधकत्ववत् क्वचिद्वाक्यस्य स्वमूलभूतपरीक्षितप्रत्यक्षगौरवादेव प्रत्यक्षबाधकत्वोपपत्तेश्च । अत एव लोके भ्रान्ता वक्तारं प्रति किं दृष्ट्वा विचार्य एवं वदसि । किं वा एवमेव तूर्ष्णी वदसीति वक्तारो दृश्यन्त इति । तस्मादुपक्रमाधिकरणन्यायेनैव प्रत्यक्षस्य प्राबल्यसम्भवात् तदविरोधाय श्रुतेरेवान्यथानयनं दुर्वारमिति ।

किञ्च पञ्चदशरात्रे प्रथमेऽहनि अग्निष्टुन्नामकेनातिदेशेन प्राप्ताया एकाहाग्निष्टुब्धर्मभूताया अल्पविषयाया आग्नेय्याः सुब्रह्मण्या द्वितीयादिचतुर्दशाहस्सु यथा प्रकृतिचोदकेन प्राप्ताया ऐन्द्र्या सुब्रह्मण्यये‍व बहुबाधस्यान्याय्यत्वेनाद्वैतवाक्यस्य द्वैतग्राहिप्रत्यक्षतदुपजीव्यनुमानकर्मकाण्डसृष्ट्यादिवाक्यसगुणोपासनावाक्यादिरूपबहुप्रमाणैः प्रतीतार्थत्यागरूपबाध एव न्याय्यः । तथा च पारमर्षसूत्रम् । "विप्रतिषिद्धकर्मणां समवाये भूयसां स्यात्स धर्मत्वमि"ति ।

एतेनापच्छेदन्यायेन प्रत्यक्षापेक्षया परत्वाच्छ्रुतेः प्राबल्यमिति निरस्तम् । परत्वमात्रस्य प्राबल्यप्रयोजकत्वे प्रमानन्तरभाविभ्रमस्य प्रमापेक्षयाऽनादिश्रुत्यनन्तरभाविबाह्यागमस्य श्रुत्यपेक्षया प्राबल्या-

पत्तेः । श्रुतेरेव प्रत्यक्षापेक्षया प्राबल्ये भेदग्राहि प्रत्यक्षादि बहुबाधवत् परीक्षितोपजीव्यबाधवन्निरव-काशबाध(शब्द)वच्चापच्छेदस्थले बहुबाधाभावेन पूर्वापच्छेदस्योत्तरापच्छेदं प्रत्युपजीव्यत्वाभावेन एकैकमात्रापच्छेदादिस्थले नैमित्तिकशास्त्रस्य सावकाशत्वेन च वैषम्याच्च ।

यत्तु प्रपञ्चसत्त्वग्राहि प्रत्यक्षमपच्छेदशास्त्रवद्व्यावहारिकसत्त्वविषयत्वेन वा ब्रह्मसत्त्वविषयत्वेन वा सावकाशम् ।

एवं जीवेश्वरभेदप्रत्यक्षमपि विशिष्टतद्भेदविषयत्वेन वोपहिततद्भेदविषयत्वेन वा आरोपिततद्भेद-विषयत्वेन वा सावकाशमिति नापच्छेदवैषम्यमिति । तन्न । प्रमाणस्याबाधितार्थविषयत्वनियमेन व्यावहारिकसत्त्वस्य प्रपञ्चे ब्रह्मसत्त्वस्य वा विशिष्टजीवेश्वरादिभेदस्य चान्ततो बाध्यत्वेन प्रत्यक्षस्य क्लृप्तदोषाभावेन प्रमाणस्य सतस्तद्विषयत्वेन सावकाशत्वानुपपत्तेः ।

अन्यथा बाधितार्थविषयत्वमादाय सावकाशत्वसम्भवे निरवकाशमात्रोच्छेदप्रसङ्गात् । सत्ताभेदे मानाभावात् । प्रपञ्चगतसत्त्वमेव ब्रह्मगततया ''सत्यं ज्ञानमि''त्यदिना प्रतिपाद्यत इति वैपरीत्यस्यैव वक्तुं शक्यत्वेन ब्रह्मगतसत्त्वस्यैव प्रपञ्चे प्रतीतौ मानाभावाच्च । अन्यथा ''सर्वं खल्विदं ब्रह्मे''त्यादि श्रुत्या ब्रह्मणः सर्वात्मकत्वेन सत्त्ववत् घटत्वपटत्वादिधर्माणां ब्रह्मगतानामेव घटादिप्रपञ्चनिष्ठत्वेन प्रतीत्या-पत्तिः । न हि 'सत्यं ब्रह्म सर्वं खल्विदं ब्रह्मे'त्यनयोरर्थतः प्रतीतौ वा विशेषोऽस्ति । येन सत्तैव स्वरूपरूपो ब्रह्मधर्मः प्रपञ्चे प्रतीयते न पटत्वादिस्तथेति व्यवस्था स्यात् । विशिष्टस्योपहितस्य वा अन्यत्वपक्षे तद्भेदप्रत्यक्षस्याविशिष्टानुपहितविशेष्यभेदविषयत्वस्योक्तरीत्या आवश्यकत्वात् । प्रत्युत तत्त्वमसीत्याद्यभेदपरवाक्यस्यौत्सर्गिकमुख्यार्थभेदसिद्धये अविशिष्टानुपहितभेदमात्रविषयकं प्रत्यक्ष-मित्येवाश्रयितुमुचितत्वाच्च । अन्यथा प्रस्तरयजमानसोमयागभेदप्रत्यक्षस्य विशिष्टोपहितभेदविषय-त्वेन सावकाशत्वोक्तिसम्भवेन यजमानः प्रस्तरः सोमेन यजेतेति तदभेदश्रुत्याविशिष्टानुपहितप्रस्तर-यजमानादिशब्दार्थाभेदप्रतिपादनप्रसङ्गः । अत्रापि विशिष्टोपहित एव प्रत्यक्षविषयः न तु प्रस्तरयज-मानादिशब्दामुख्यार्थभेद इति सुवचत्वात् ।

ननु विशिष्टोपहितभेदप्रत्यक्षस्य विशेष्यभेदविषयत्वनियमः । पाकरक्ते घटे इदानीं रक्तोऽयं न श्याम इति विशिष्टभेदप्रत्यक्षस्य विशेष्यभेदविषयत्वेन व्यभिचारात् । तथा च नाहमीश्वर इत्यादि जीवेश्वररूपविशिष्टोपहितभेदप्रत्यक्षस्य विशेष्यभूतचैतन्यभेदाविषयत्वेन तद्विषयत्वेन सावकाश-त्वानुपपत्तेः । विशिष्टोपहिततद्भेदविषयत्वेनैव सावकाशत्वमावश्यकम् ।

न चैवं तत्त्वमसीत्याद्यभेदपरश्रुतेर्भेदभ्रमनिरासकत्वानुपपत्तिः । शोधितत्वम्पदार्थाभेदे बोधिते भेदभ्रमोपादानभूतैक्यविषयकाज्ञाननिरासमुखेन तद्भ्रमनिरासकत्वोपपत्तेरिति चेत् । न । विशिष्टोपहित-

भेदयोः परीक्षितप्रत्यक्षसिद्धत्वेन निषेधायोगेन नान्योऽतोऽस्ति द्रष्टेत्यादेरप्रस्तुतप्रतिषेधत्वापत्तेः । शोधितत्वम्पदार्थगोचरनिवर्त्याज्ञानस्य भिन्नविषयतया विशिष्टोपहितभेदप्रत्यक्षस्य विशेष्यभेदविषयत्वम् । यत्र तु न तथा । भ्रमप्रयोजकत्वाऽसम्भवेन तन्निवृत्तिसम्पादनमुखेन तद्भेदभ्रमनिरासकत्वाऽनुपपत्तेः । तदर्थं शोधितत्वम्पदार्थाऽभेदांश एव तस्य भेदभ्रमजनकतावश्यकत्वाच्च । तत्त्वमस्यादिवाक्यार्थशोधितत्वम्पदार्थभूताखण्डचैतन्यैक्यगोचरस्य ज्ञानस्य तज्ज्ञानविरोधित्वेऽपि विशिष्टोपहितत्वम्पदमुख्यार्थभूतचैतन्यैक्याविषयत्वेन तदज्ञानविरोधितया तन्निवृत्तिद्वारा तदापादितविशिष्टोपहितचैतन्यभेदनिवर्तकत्वासम्भवेन तद्भेदस्य ब्रह्मवत् पारमार्थिकत्वापत्तेः । न च चिन्मात्रविषयत्वमेव तत्त्वज्ञानं सर्वाज्ञानविरोधीति वाच्यम् । तत्र मानाभावात् । भिन्नविषयत्वेन विशिष्टोपहितचैतन्यैक्याज्ञानाविरोधित्वात् । अन्यथातिप्रसङ्गात् । "सर्वप्रत्ययवेद्यो वेति" न्यायेन घटाद्याकारापरोक्षवृत्तेरपि अखण्डानुस्यूतचैतन्यविषयत्वेन तद्विषयकमूलाज्ञाननिवृत्त्या सद्योमोक्षप्रसङ्गाच्च ।

किञ्च यत्र परीक्षितप्रत्यक्षेण विशेष्यैक्यं निश्चितं मास्तु । तत्र विशिष्टोपहितभेदप्रत्यक्षस्य विशेषभेदविषयत्वं यत्र तु न तथा तत्रास्त्येव तस्य विशेष्यभेदविषयत्वनियमः । अन्यथा नीलपीतघटादिव्यक्तिषु भेदप्रत्यक्षस्य विशिष्टोपहिततद्भेदमात्रविषयत्वेऽपि न विशेषभेदासिद्धिप्रसङ्गात् । न चैवं प्रकृते । शोधितत्वम्पदार्थैक्यं परीक्षितप्रत्यक्षादिना निश्चितम् । येन पाकरक्तघटस्थल इव विशिष्टोपहितभेदप्रत्यक्षस्य विशेष्यभेदविषयत्वासम्भवेन तद्भेदविषयत्वेनैव सावकाशतोच्येत ।

ततश्च प्रपञ्चसत्ताग्राहिप्रत्यक्षस्य न व्यावहारिकसत्त्वविषयत्वेन वा सावकाशत्वम् । एवं जीवेश्वरभेदप्रत्यक्षस्यापि विशिष्टोपहितारोपिततद्भेदविषयत्वेन न सावकाशत्वं सम्भवति । येनापच्छेदन्यायावकाशः स्यादिति । किञ्चैकस्मिन्नपि प्रयोगे क्रमिकाभ्यां निमित्ताभ्यां क्रमेण तत्तन्नैमित्तिककर्तव्यतयोर्बदरफले श्यामरक्तरूपयोरिव क्रमेणोत्पादाद्रूपज्ञानद्वयवत् कर्तव्याज्ञानद्वयमपि प्रमाणमेवेति पूर्वबाधाभावान्न परेण पूर्वज्ञानबाधे अपच्छेदन्याय उदाहरणम् । अत एव अपच्छेदाधिकरणे नैमित्तिकशास्त्रस्य ह्ययमर्थः । निमित्तोपजननात् प्रागन्यथाकर्तव्योऽपि क्रतुर्निमित्ते सत्येवं कर्तव्य इति शास्त्रदीपिकावचनम् ।

यत्त्वङ्गस्य सतः कर्तव्यत्वं न च पश्चाद्भाविप्रतिहर्त्रपच्छेदवति क्रतौ पूर्वत्रोद्गात्रपच्छेदनिमित्तकस्य प्रायश्चित्तस्याङ्गत्वमस्ति । आहवनीयशास्त्रस्य पदहोमातिरिक्तहोमविषयत्ववत् यद्युद्गातापच्छिद्येतेति शास्त्रस्य पश्चाद्भाविप्रतिहर्त्रपच्छेदरहितक्रतुविषयत्वात् । उक्तं हि न्यायरत्नमालायाम् । "साधारणस्य हि शास्त्रस्य विशेषविषयत्वादिना सङ्कोचः क्लृप्तरूपस्य प्राप्तबाधोऽभिधीयत" इति । तत्रैवं सति शास्त्रार्थो

भवति पश्चाद्भाव्युद्गात्रपच्छेदविधुरप्रतिहर्त्रपच्छेदवतः क्रतोः सर्ववेदसदानमङ्गमिति । एवमुद्गात्रपच्छेदेऽपि द्रष्टव्यमिति तन्न । दाने सति गवादिधने स्वत्वं तदभावेनेत्यन्वयव्यतिरेकाभ्यां दानस्य स्वत्वं प्रतीवोपरागादिनिमित्ते सति स्नानादौ कर्तव्यत्वं तदभावेनेत्यन्वयव्यतिरेकाभ्यामुपरागादेर्निमित्तमात्रस्य नैमित्तिककर्तव्यत्वं प्रति हेतुत्वावधारणात् ।

उपरागादिना स्नानादाविव उद्गात्रपच्छेदादि निमित्तेन तन्निमित्तके कर्मणि कर्तव्यत्वोपपत्तेर्दुर्वारत्वात् । तद्विरुद्धप्रतिहर्त्राद्यपच्छेदनिमित्तेन पुनर्दानेन धने प्रागुत्पन्नस्वत्वनाशस्वत्वान्तरोत्पत्तिवत्पूर्वोत्पन्नकर्तव्यत्वनाशकर्तव्यत्वान्तरोत्पत्त्योरपि दुर्वारत्वाच्च । निमित्तोपजनने सति प्रागिदमित्थं कर्तव्यमासीदिदानीं न तथा किं त्वन्यथैव कर्तव्यं जातमिति पूर्वकर्तव्यतानाशकर्तव्यत्वान्तरोत्पत्त्या नु बाधितानुभवसिद्धत्वात् ।

यत्तु प्रकृते तत् किंकर्तव्यत्वं यत्परनैमित्तिककर्तव्यत्वोत्पत्त्या निवर्तेत । न तावत्पूर्वनैमित्तिकस्य कृतिसाध्यत्वयोग्यत्वन्तस्य पश्चादप्यनपायात् । नापि फलोपधानरूपं कृतिसाध्यत्वम् । तस्य पूर्वमनुत्पत्तेः । नापि यदननुष्ठाने क्रतो वैकल्यम् । तत्त्वमङ्गत्वं वा अननुष्ठाने क्रतुवैफल्यप्रयोजकत्वस्य नियमविशेषरूपत्वेन कर्माङ्गत्वं वा अननुष्ठाने क्रतुवैफल्यप्रयोजकत्वस्य नियमविशेषरूपत्वेन कर्माङ्गत्वस्य फलोपकारितया सन्निपातितया वा कारणत्वविशेषरूपत्वेन च यावद्धर्मभावितया तयोः कादाचित्कत्वायोगेन पश्चाद्भावि प्रतिहर्त्रपच्छेदवति क्रतौ पूर्ववृत्तोद्गात्रपच्छेदनिमित्तके क्रत्वङ्गत्वस्य तदनुष्ठाने क्रतुवैफल्यप्रयोजकत्वस्य वा पश्चात् पापच्छेदोत्पत्ते पूर्वासम्भवात् ।

न हि वस्तु किञ्चिद्वस्त्वन्तरं प्रति किञ्चित्कालं व्याप्यं पश्चान्नेति वा क्वचित्कालं कारणं पश्चान्नेति वा क्वचिद्दृष्टं युक्तं वा । नापि कर्तव्यत्वान्नामागतापाययोग्यं पदार्थान्तरं मानाभावादिति । तदप्यत एव निरस्तम् । उक्ताबाधितानुभवस्यैव तत्र मानत्वे इक्षुक्षीरादिमाधुर्यादिवदाख्यातुमशक्यत्वेऽपि प्रत्याख्यातुमशक्यत्वात् ।

यद्वा अङ्गत्वमेव कर्तव्यत्वं, तच्च फलोपकारितया वा सन्निपातितया वा साधनत्वम् । तदपि साधनतावच्छेदकावच्छिन्नत्वरूपयोग्यत्वमेव । तदवच्छेदकं च प्रकृते उद्गात्रपच्छेदनिमित्तस्य कर्मण उत्तरभावि प्रतिहर्त्रपच्छेदाभावावच्छिन्नत्वे सत्युद्गात्रपच्छेदनिमित्तोत्तरकालावच्छिन्नतत्कर्मत्वम् । उद्गात्रपच्छेदरूपनिमित्ताभावस्थले उत्तरभाविप्रतिहर्त्रपच्छेदरूपनिमित्तस्थले चानुमितस्योद्गात्रपच्छेदनिमित्तस्य कर्मणः क्रतुस्वरूपं प्रति वा क्रतुसाध्या पूर्वं प्रति वा साधनत्वाभावात् । तथा चोद्गात्रपच्छेदरूपनिमित्ते सति तद्घटितधर्मावच्छिन्नत्वरूपयोग्यताया उत्पत्तिः अनन्तरं प्रतिहर्त्रपच्छेदरूप-

निमित्ते सति तत्प्रागभावापगमेन तद्घटितधर्मावच्छिन्नत्वरूपयोग्यताया अभावः तत्प्रतिहर्त्रप-च्छेदनिमित्तकसर्ववेदसदाने तद्घटितधर्मावच्छिन्नत्वरूपयोग्यताया निष्पत्तिश्च । एवं प्रतिहर्त्रपच्छेदपूर्व-कोद्गात्रपच्छेदस्थलेऽपि योग्यताया उत्पत्तिविनाशौ द्रष्टव्यौ ।

एवं च क्रमिकाभ्यां निमित्ताभ्यां तन्निमित्तकयोः कर्मणोरागन्तुकतत्तन्निमित्तघटितधर्मावच्छिन्न-त्वरूपयोग्यतालक्षणाङ्गत्वोत्पत्त्या तदुपकर्तव्ययोरपि क्रमेणोत्पत्तिसम्भवेन तद्विशिष्टक्रतावपि तद्द्वारा कर्तव्यताद्वयोत्पत्तिरविकला । ततश्च तद्विषयकशास्त्रद्वयजन्यज्ञानस्य बदरफल क्रमोत्पन्नश्यामरक्तरूप-द्वयविषयकज्ञानवत् प्रमात्वसम्भवेन तज्जनकशास्त्रद्वयस्याप्यसङ्कोचेनैव प्रमाणत्वोपपत्तौ तत्सङ्कोच-लक्षणबाधो न न्याय्यः । अत एव शास्त्रदीपिकावचनमपि न कृत्वा चिन्तामात्रपरम् । तस्माद्युक्तमेव क्रमिक कर्तव्यत्वोत्पत्तिवचन इति नात्रापच्छेदन्यायावतारः ।

किञ्च श्रुतौ नित्यत्वेन भ्रमरूपदोषाजन्यत्वनिश्चयसत्त्वेनासम्भावितदोषत्ववत्साक्षिप्रत्यक्षेऽपि नित्यत्वेन दोषाजन्यत्वनिश्चयसत्त्वेनासम्भावितदोषत्वमविशिष्टम् । तथा च जीवेश्वरभेदग्राहिदोषाजन्य-साक्षिप्रत्यक्षसत्त्वेन कथं नित्यत्वेन भ्रमरूपदोषाजन्यमपि तत्त्वमसीत्यादि श्रुत्या जीवेश्वराभेदसिद्धिः । न च निर्दोषश्रुतिसाक्षिणोः समबलत्वेन परस्परप्रतिपक्षत्वे जीवेश्वरयोर्भेद एवेति वा तयोरभेद एवेति वा निर्णयः सम्भवति । प्रत्युत भेदनिर्णय एव सम्भवति । तस्यानादिनित्यसाक्षिप्रत्यक्षरूपतया तदभेदश्रुत्या तज्जन्यज्ञानेन वा प्रतिबन्धासम्भवात् । अभेदनिर्णयस्तु न कथञ्चिदपि सम्भवति । तस्य श्रुतिजन्य-त्वनियमेन नित्यसिद्धतद्भेदग्राहिसाक्षिप्रत्यक्षेण प्रतिबन्धसम्भवात् ।

अपि च श्रुतेः नियतानुपूर्विकत्वनियमेन तद्रूपनित्यत्वेऽपि जीवेश्वरभेदग्राहिसाक्षिप्रत्यक्षवत् स्वरूपतो विषयतश्च नित्यत्वासम्भवेन शब्दाभासस्यैव तस्यापि भ्रमादिदोषप्रयोज्यत्वसम्भावनायाः कदाचित्सामग्रीबलापनाया दुर्निवारतया साक्षिप्रत्यक्षस्य च धर्मिग्राहकमानेनानादिनित्यत्वेन दोषजन्य-त्वसम्भवानाया एवासम्भवेन तस्यैव श्रुत्यपेक्षया प्राबल्यस्वीकारो युक्तः । न च जीवेश्वरभेदप्रत्यक्षस्यैव मनआदिनित्यत्वे प्रतियोगिज्ञानं विनापि सर्वदाऽपि तद्भेदस्फुरणप्रसङ्ग इति वाच्यम् । इष्टापादनात् । सामान्यतः पदार्थमात्रस्य साक्षिसिद्धत्वोपगमात् । अन्यथा घटादौ तदितरसर्ववैलक्षण्यासिद्धिप्रसङ्गात् । "तेभ्यो विलक्षणः साक्षी चिन्मात्र" इति श्रुत्या साक्षिणश्चिन्मात्रत्वावेदनाच्च । प्रतियोगिज्ञानस्यापि तद्भेदविषयताप्रयोजकत्वेन तदभावादेव तदस्फुरणोपपत्तेः ।

न च साक्षिणोऽविद्यावृत्त्यन्तःकरणवृत्त्याद्युपहितचैतन्यरूपतया चैतन्यमात्रस्य स्वरूपतोऽनादि-नित्यत्वेऽप्युपहितत्वाकारेण सादितया सादेश्च जन्यत्वावश्यम्भावेन तत्रापि सदोषत्वसम्भावना दुर्वारेति वाच्यम् । "साक्षी चेता केवलो निर्गुणश्चे"ति श्रुतिविरोधापत्त्या अनुपहितकेवलनिर्विशेषस्वरूप-

चैतन्यस्यैव साक्षिताभ्युपेयत्वात् । उपहितचैतन्यस्य शुद्धचैतन्यादन्यत्वे तस्य जडत्वेन घटादिवदज्ञानवच्चार्थस्फोरकत्वानुपपत्तेः । तदनन्यत्वे च चैतन्यस्यैव स्वपरस्फोरकत्वस्वाभाव्येन सर्वदा सर्वस्फोरणापत्तौ तत्परिहारायोपाधित्वेन त्वदभ्युपगताविद्यावृत्त्यादेरपि मदभ्युपगतजीवेश्वरभेदविषयताप्रयोजकप्रतियोगिज्ञानवन्नियतविषयताप्रयोजकत्वानतिरेकेण उपाधिनामत एव विशेषापत्तेश्च । पाकेन घटरूपोत्पत्तावपि घटस्य पाकजन्यत्वत् उपाधेः स्वकारणेनोत्पत्तावपि चैतन्यस्योपाधिकारणाजन्यत्वोपपत्तेश्च ।

ननु घटे स्वसम्बन्धिरूपजन्यत्वेनापि घटः इदानीं रक्तो जात इति जन्यत्वं दृश्यत इति चेन्न । तथादर्शनस्य विशेषादर्शनकालीनत्वे भ्रमत्वेन घटजन्यत्वासाधकत्वात् । विशेषदर्शनकाले च प्रतिबन्धकसत्त्वेन घटे साक्षात्सम्बन्धेन जन्यत्वावगाहिदर्शनस्यैवानुत्पत्तेः । परम्परासम्बन्धेन जन्यत्वावगाहिदर्शनस्य च प्रमात्वेन तेनैव सम्बन्धेन तत्र जन्यत्वसाधकत्वात् । अपि च मुखे दर्पणसंसर्गादिदर्पणोपाधिजन्यत्वेऽपि मुखस्य तदजन्यत्ववत्साक्षिचैतन्यविषयसम्बन्धस्याद्यावृत्त्याद्युपाधिजन्यत्वेऽपि साक्षिचैतन्यस्य तदजन्यत्वात् । न हि चैतन्यनियतविषयसम्बन्धस्य तन्नियामकोपाध्यपरनामकाविद्यावृत्त्यादेर्वा जन्यत्वमस्तीत्येतावता धर्मिग्राहकमानेनानादिनित्यतया सिद्धसाक्षिचैतन्यस्य जन्यस्य स्वीकारो युक्तः ।

ननु साक्षिणोऽनादिनित्यत्वे तस्य सदातनत्वेन दुःखाद्यनुभवस्य साक्षिरूपस्य कथं कादाचित्कत्वानुभवः । दुःखादिविषयकादाचित्कत्वेन तस्य कादाचित्कत्वानुभवे कथमनादिनित्यत्वनिर्वाहः । कथं वा अनाद्यज्ञानजीवेश्वरभेदाद्यकादाचित्कवस्तुविषयकसाक्ष्यनुभवस्य कादाचित्कत्वानुभवनिर्वाहः ।

न हीश्वरानुपस्थितिदशायामपि तत्र जानामीति वा नाहमीश्वर इति वा तदज्ञानतद्भेदादेरनुभवोऽनुभवसिद्धः । तत्कादाचित्कत्वानुभवस्य भ्रमत्वे तस्याऽपि साक्षिरूपतया तस्य त्वदभ्युपगततत्प्रमात्वनियमभङ्गप्रसङ्ग इति चेन्न । दुःखादिरूपविषयानुपहितकेवलसाक्ष्यनुभवस्वरूपस्यैवानादित्वाभ्युपगमात् । तस्य च न कदापि कादाचित्कत्वानुभवः । न हि कश्चिद्विषयोपरागमन्तरेण केवलसाक्ष्यनुभवस्य कदाचिदनुभवामीति कादाचित्कत्वमनुभवति । किन्तु विषयविशिष्टस्यैव । तस्य तु कादाचित्कत्वानुभवो न विरुद्धः । तथाहि । विशिष्टं पदार्थान्तरमिति मते तस्य कादचित्कविशेषणादिजन्यत्वेन कादाचित्कत्वात् अपदार्थान्तरमिति मतेऽपि विशिष्टाभावस्यातिरिक्तत्वपक्षे कादाचित्कविषयरूपविशेषणतत्सम्बन्धाभावदशायां विद्यमानस्यापि साक्ष्यनुभवस्य तत्प्रयुक्तविशिष्टाभावसत्त्वेन विषयविशिष्टसाक्ष्यनुभवस्य दण्डावच्छिन्नपुरुषस्येव किञ्चित्कालीनसंसर्गाभावप्रतियोगित्वरूपकादाचित्कत्वसम्भवात् ।

अनतिरिक्तत्वपक्षेऽपि दण्डाभावदशायां विद्यमानस्यापि पुरुषस्य परम्परासम्बन्धेन अबाधिताभावप्रतियोगित्वानुभवेन दण्डविशिष्टपुरुषस्य कादाचित्कत्ववद् पाकानन्तरं विद्यमानस्यापि घटस्य परम्परासम्बन्धेन श्यामो नष्ट इत्यबाधितध्वंसप्रतियगित्वानुभवेन श्यामरूपविशिष्टघटस्य कादाचित्कत्ववच्च कादाचित्कविषयरूपविशेषणतत्सम्बन्धाभावदशायां विद्यमानस्यापि साक्ष्यनुभवस्य परम्परासम्बन्धेनाबाधिताभावप्रतियोगित्वानुभवेन तादृशविषयरूपविशेषणविशिष्टसाक्ष्यनुभवस्यापि कादाचित्कत्वसम्भवात् ।

एतेन दुःखाद्यनुभवकादाचित्कत्वानुभवस्य साक्षिरूपस्य भ्रमत्वे त्वदभ्युपगतसाक्षिप्रमात्वनियमभङ्गप्रसङ्ग इति प्रत्युक्तम् । उक्तरीत्या तत्प्रमात्वस्यैव व्यवस्थापनात् ।

नन्वेवमपि स्वरूपसुखाज्ञानेश्वरभेदाद्यकादाचित्करूपविषयरूपविशेषणस्य तद्विषयकसाक्ष्यनुभवस्य तत्स्वरूपात्मकविषयविषयिभावापरनामकतदुभयसम्बन्धस्य च सदातनत्वेन कथं स्वरूपसुखाद्यनुभवस्य कादाचित्कत्वानुभवः । तदनुभवस्य भ्रमत्वे वा कथं साक्षिप्रमात्वनियमाभ्युपगम इति चेन्न । घटवद्भूतलचत्वरीयाभावस्वरूपद्वयस्य सत्त्वेऽपि विशिष्टप्रतीतिरूपफलाभावेनासम्बन्धत्ववद्घटापनयनदशायां सम्बन्धरूपस्यैव भूतलघटाभावोभयस्वरूपस्य घटोपनयनदशायां विशिष्टप्रतीतिरूपफलाभावेनासम्बन्धत्ववच्च स्वरूपसुखादिसाक्षिप्रत्यक्षोभयस्वरूपस्य सदातनत्वेऽपि कदाचिद्विशिष्टप्रतीतिरूपफलभावेन कदाचिदसम्बन्धत्वस्यावश्यकतया तत्स्वरूपमात्रस्यातिप्रसक्तत्वेनानतिप्रसक्ततत्तत्कालविशेषावच्छिन्नसाक्षिप्रत्यक्षस्वरूपसुखाद्युभयस्वरूपस्यैव सम्बन्धत्वेन कादाचित्कत्वोपपत्त्या स्वरूपसुखाद्यनुभवकादाचित्कत्वानुभवोपपत्तेः । उक्तस्वरूपद्वयस्य सम्बन्धतावच्छेदकीभूते काले विशेषस्तु स्वरूपसुखे सुषुप्त्यज्ञाननिवृत्त्यादिरूपः । अज्ञानेश्वरभेदादौ तु प्रतियोगिज्ञानादिरूपः । अज्ञानस्यापि घटं न जानामि पटं न जानामीति विषयविशेषावच्छिन्नज्ञानविरोधित्वेनैवानुभवेन तदनुभवे प्रतियोगिज्ञानापेक्षाया आवश्यकत्वादिति न किञ्चिदनुपपन्नम् ।

## सदातनसाक्षिसद्भावे तत्प्रमात्वनियमे च प्रमाणाभिधानम्—

ननु सदातनसाक्षिसद्भावे तत्प्रमात्वनियमे च किं मानमिति चेत् उच्यते । परोक्षज्ञानादन्यद्देवदत्तात्मतद्धर्मगोचरव्यवहारत्वावच्छिन्नं विमतं वा व्यवहर्तव्यगोचरदेवदत्तीयज्ञानसाध्यं देवदत्तीयव्यवहारत्वात् सम्प्रतिपन्नवदित्यनुमानमेव मानम् । न च मानसप्रत्यक्षेणार्थान्तरं तस्य नानात्वेन लाघवतर्कसहकारेणानुमानेन सिद्ध्यतो नाद्यनन्तयोग्यदेवदत्तात्मतद्धर्मगोचरव्यवहारजनकीभूततत्तद्गोचरज्ञानस्येश्वरज्ञानवदेकत्वेनानाद्यनन्तत्वेन स्वप्रकाशत्वेन च सिद्धेः ।

न चैवं तस्योत्पादविनाशानुभवविरोधः । दुःखादिविषयसत्त्वदशायां तदनुभवोत्पादविनाशयोरननुभवात्तद्विनाशोत्पत्तिदशायां च तदनुभवोऽत्पादविनाशानुभवस्योक्तरीत्या परम्परासम्बन्धेनोत्पादविनाशविषयत्वेनान्यथासिद्धेः । न च विनिगमनाविरहः । स्वात्मयोग्यतद्धर्माणां ज्ञातैकसत्त्वेन सर्वदा तदनुभवप्रसङ्गात् ।

नन्वेवं देवदत्तीयव्यवहारत्वावच्छिन्नपक्षकानुमानेन लाघवतर्कसहकृतेन तद्व्यवहारमात्रहेतुभूततादृशैकज्ञानसिद्धिः किं न स्यादिति चेन्न । स्मृतित्वानुभवत्वप्रत्यक्षत्वपरोक्षत्वानुमितित्वशाब्दत्वचाक्षुषत्वादिप्रत्यक्षानुभवसिद्धविरुद्धधर्माक्रान्ततया तदैक्यस्य बाधितत्वात् ।

नन्वेवं प्रकृतेऽपि सुखानुभवो न दुःखानुभव इति सुखाद्यनुभवस्य प्रात्यक्षिकभेदानुभव एव बाधक इति चेन्न । सुखादिविषयानुपरक्तकेवलानुभवे भेदाननुभवात् । विशिष्टस्यावयोः पदार्थान्तरत्वेन सुखादितद्विषयविशिष्टानुभवस्य भिन्नभिन्नतया तद्विषयकभेदानुभवस्य भिन्नविषयत्वेन तदनुपरक्तसाक्ष्यनुभवैकत्वसाधकेनानुमानाबाधकत्वात् ।

नन्वेवं देवदत्तयज्ञदत्तादि सकलात्मतद्धर्मगोचरापरोक्षानुभवैक्यस्यापि बाधकाभावेन सुसाधनतया प्रतिजीवं तव साक्षिभेदो न सिद्ध्येदिति चेन्न । साक्ष्यनुभवस्य जीवात्मनोऽत्यन्तभिन्नत्वेन तदैक्यजीवेश्वरसाधारणात्ममात्रैक्यापत्तौ सुखदुःखाद्यनुसन्धानव्यवस्थानुपपत्त्यादेः बाधकस्य उक्तत्वात् । किञ्चात्मतद्धर्मगोचरनित्यसाक्ष्यनभ्युपगमे आगन्तुकतदनुभवस्य नावश्यकतया प्रतिबन्धकाभावेन कदाचित्तद्गोचरसंशयादिप्रसङ्गः । न हि कश्चित्स्वात्मनि योग्यतद्धर्मेषु अहमनहं वा अहं घटं जानामि न वा घटमिच्छामि न वेत्यादि प्रकारेण सदिग्धेन वा नाहं घटमहं न जानामि पटं नेच्छामीत्यादिप्रकारेण विपर्ययस्य नित्यसाक्ष्यभ्युपगमे तु नायं दोषः । तस्यैवं निश्चयरूपतया सदातनत्वेन च सर्वदा तत्संशयाद्यभावोपपत्तेः ।

नन्वात्मरूपधर्मिनिश्चये तस्य योग्यविशेषगुणोपहितस्यैव प्रत्यक्षत्वनियमेन तन्निश्चयस्यैव योग्यतद्धर्मनिश्चयतया संशयाद्यनवकाशः । धर्मिनिश्चयाभावे तु धर्मिज्ञानघटितसामग्र्याभावादेव तदनवकाशः । कोटिस्मरणादेरप्यनावश्यकतया कदाचित्तदभावादपि तदनवकाशः । धर्मिज्ञानस्य संशयाद्यहेतुत्वपक्षेऽपि आत्मरूपधर्मिनिश्चयसामग्र्या एव योग्यतद्धर्मनिश्चयसामग्रीत्वेन प्रतिबन्धकतया न तत्संशयाद्यवकाशः । न चैवं स्थाणुपुरुषसंशयोऽपि न स्यात् । तत्राऽपि तद्धर्मिनिश्चयसामग्र्या एव तदन्यतरकोटिनिश्चयसामग्रीत्वेन प्रतिबन्धकत्वादिति वाच्यम् । तत्रानुभवसिद्धसंशयहेतुभूतफलबलेन दोषस्यैवान्यतरकोटिनिश्चयप्रतिबन्धकतया निश्चयसामग्र्यभावात् । प्रकृते तु संशयादिरूपफलाभावेन तत्कल्प्यदोषस्याप्यभावे तन्निश्चयसामग्रीसत्त्वात् ।

अपि च अप्रामाण्यस्योत्पत्तौ परतस्त्वेन संशयविपर्यययोरपि अप्रमात्वेन दोषजन्यत्वस्यावश्यकतया तदभावादेव संशयाद्यभाव इति चेत् । न । स्वात्मनि योग्यतद्धर्मेषु वा न कदाऽपि संशयादिरित्यविवादम् । संशयविपर्ययोर्दोषजनकत्वनियमेन तस्य फलबलकल्प्यत्वे न तदभावादेव तदभाव इत्यप्यविवादम् । स च संशयाद्यभावः । नित्यसाक्ष्यभ्युपगमपक्ष एव युक्तः । नान्यथा । तथाहि । न तावत् पित्तादिस्तत्र दोषः । तस्याननुगतत्वेन संशयाद्यहेतुत्वात् । विशेषदर्शनप्रतिबन्धकत्वेनानुगमे च गौरवात् । भ्रमवैजात्यकल्पने मानाभावात् । विशेषदर्शने सति पित्तादिदोषव्यतिरेकेण भ्रमव्यतिरेकादर्शनाच्च । किन्तु विशेषादर्शनमेव । न हि जात्यैव कश्चिद्दोषोऽस्ति । भ्रममात्रे तस्यानुगतत्वात् ।

लाघवात् स्वतन्त्रान्वयव्यतिरेकानुविधायित्वाच्च । पित्तादेरपि भ्रमविशेषं प्रत्यन्वयव्यतिरेकानुविधानं दृश्यत इति चेत्सत्यम् । सर्वत्र भ्रमे विशेषादर्शनस्यावश्यकतया तत्रैव तस्योपक्षयात् । पित्तादिदोषोत्कर्षेण भ्रमे उत्कर्षदर्शनेन भ्रमविशेषे तस्य हेतुत्वेऽपि भ्रममात्रेऽनुगतस्य विशेषादर्शनस्यैव दोषत्वेन हेतुत्वात् । न च शङ्खरूपविशेषदर्शनेऽपि पीतः शङ्ख इति भ्रमदर्शनाद्व्यभिचारेण कथं तस्यापि भ्रममात्रहेतुत्वमिति वाच्यम् । विशेषादर्शनशब्देन विरोध्यदर्शनस्यैव विवक्षितत्वात् । न तदिन्द्रियजन्यसाक्षात्कारनिश्चये तदिन्द्रियजन्यविपरीतनिश्चयस्यैव प्रतिबन्धकत्वेन तत्रापि तथाविधविशेषादर्शनस्य सत्त्वात् । विशेषदर्शने भ्रमविरोधित्वस्य विषयप्रयुक्तस्य वा स्वरूपप्रयुक्तस्य वा फलबलेन सर्वैरपि स्वीकृतत्वात् ।

एवं च स्वात्मतद्धर्मगोचरनित्यसाक्ष्यनभ्युपगमे तन्निश्चयरूपविरोधिदर्शनस्यागन्तुकतया कादाचित्कसामग्रीबलात् कदाचित्सत्त्वेऽपि सर्वदा तस्यासत्त्वेन कदाचिद्विरोधदर्शनरूपदोषसत्त्वेन तदा तत्संशयादिर्दुर्वार एव । यत्स्वात्मरूपधर्मिनिश्चयसत्त्वे तस्यैव असति प्रतिबन्धके योग्यतद्धर्मनिश्चयरूपतया न तत्र संशयादिः । तद्धर्मिज्ञानासत्त्वे च कारणाभावादेव संशयाद्यभाव इति । तन्न । धर्मिज्ञानस्य संशयाद्यहेतुत्वात् । संशयविपर्यययोर्धर्मिनियमस्य धर्मिप्रत्यक्षसामग्रीत एवोपपन्नत्वेन तद्धर्मिज्ञानहेतुत्वानाक्षेपकत्वात् ।

संशयकोट्युत्कटत्वस्यापि तत्कोटिसहचरितानेकधर्मविशिष्टधर्मिविषयकत्वरूपस्य तत्कोटिभूयःसहचरितधर्मिविशिष्टधर्मिविषयकत्वरूपस्य वा तद्धर्मविशिष्टज्ञानसामग्रीत एव सम्भवेन तदनाक्षेपकत्वात् । अविद्यमानधर्मिकसंशयादौ तज्ज्ञानस्य प्रत्यासत्तित्वेनैव हेतुतया प्रत्यासत्त्यन्तरसत्त्वदशायां तस्यानपेक्षितत्वात् । सादृश्यवत्तया धर्मिदर्शनस्यापि कोटिस्मरणोपक्षीणतया प्रकारान्तरेण तत्सत्त्वे तस्याप्रयोजकत्वात् । अभावप्रत्यक्षेऽधिकरणज्ञानस्य हेतुत्वाऽनभ्युपगमेन धर्मिज्ञानं

संशयस्याभावप्रत्यक्षत्वेऽप्यधिकरणज्ञानानपेक्षत्वात् । धर्मिज्ञानस्य संशयादिहेतुत्वे '[1]यद्विशेषयो-रितिन्यायेन जन्यविशिष्टज्ञानमात्रे तस्य हेतुत्वापत्तेश्च । न चेष्टापत्तिः । सामान्यलक्षणाजन्यज्ञाने व्यभिचारादपसिद्धान्ताच्च ।

एतेन धर्मिज्ञानस्य संशयाद्यहेतुत्वेऽपि स्वरूपधर्मिज्ञानसामग्र्या एव योग्यतद्धर्मनिश्चयसामग्रीत्वेन 'यद् ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्र प्रतिबन्धिके'ति न्यायेन प्रतिबन्धकसत्त्वे न तत्संशयादि-रिति निरस्तम् । नित्यसाक्षिवादिनात्मप्रत्यक्षसामग्र्यास्तद्धर्मप्रत्यक्षसामग्र्याश्चानङ्गीकारात् । आग-न्तुकानन्तात्मतद्धर्मनिश्चयतत्सामग्रीकल्पनापेक्षया 'धर्मिकल्पनातो वरं धर्मकल्पने'ति न्यायेनात्मन एव स्वस्वधर्मगोचरसंशयादिविरोधिज्ञानरूपत्वकल्पने लाघवाच्च ।

किञ्च सौषुप्तिकसुखाद्यनुभवान्यथानुपपत्तिरपि नित्यसाक्षिणि प्रमाणम् । न च सोऽनुभवो जन्यः सम्भवति । तदा मनस उपरतत्वेन ज्ञानसामान्यसामग्र्या एवाभावात् । न च तत्कालीनानुभवे माना-भावः । सुप्तोत्थितस्यैतावन्तं कालं सुखमहमस्वाप्सं न किञ्चिदवेदिषमित्यादि सुषुप्तिकालावच्छिन्न-सुखादिस्मरणस्यैव तत्र मानत्वात् ।

ननु तत्स्मरणमेव न किन्त्वनुमितिरेवेति चेन्न । अद्वैतिनोऽभ्युपगमविरोधात् । वैशेषिकादिनाऽपि तदनुमितित्वं त्वनाभ्युपगन्तुं शक्यम् । तत्कालावच्छिन्नस्यात्मनः पक्षस्याज्ञानेनाश्रयासिद्धेः । साक्षि-प्रत्यक्षं विना सुप्तेर्ज्ञानाभावेन साध्याप्रसिद्धेः । तदनुमापकलिङ्गाभावात् । सुखाज्ञानशब्दार्थयोस्तन्मते सुखाभावज्ञानाभावरूपतया तज्ज्ञानसम्भवेऽपि तत्कालावच्छेदेन तदनुमापकलिङ्गाभावाच्च । न च तत्सामग्रीविरह एव लिङ्गमिति वाच्यम् । अतीन्द्रियपदार्थाद्यघटितसामग्र्यभावस्यातीन्द्रियतया फला-भावानुमेयत्वेनान्योन्याश्रयात् ।

एवं हि धारावाहिकबुद्ध्यनुसन्धानमपि नित्यसाक्षिणि मानम् । न ह्येतावन्तं कालं घटमेव पश्य-न्नासमिति समानविषयकनिरन्तरज्ञानधारानुसन्धानं स्मरणरूपं तावज्ज्ञानानुभवं विनोपपन्नम् । न च तत्तज्ज्ञानानन्तरोत्पन्नतत्तदनु[2]व्यवसायजनितसंस्कारः तावद्घटज्ञानविषयकसमूहालम्बनरूपस्मरणमेव तदिति वाच्यम् । तथा सति मध्ये मध्ये विजातीयानुव्यवसायैर्व्यवधानात् । तावद्घटज्ञानानां समान-विषयकनिरन्तरानेकज्ञानत्वरूपोक्तानुसन्धानसिद्धधारात्वासिद्धिप्रसङ्गात् ।

१. "यद्विशेषयोः कार्यकारणभावः असति बाधके तत्सामान्ययोरपि" इति न्यायः ।

२. ज्ञानविषयकज्ञानं अनुव्यवसायः (घटमहं जानामीत्याकारकम्) ।

न च तावत्कालानुवृत्तं घटविषयं वृत्तिरूपं ज्ञानमेकमेवेति न तदनुव्यवसायरूपानुसन्धानं विरुद्धमिति वाच्यम् । तथा सति घटेन्द्रियसम्प्रयोगविच्छेदेऽपि तदनुवृत्तिप्रसङ्गात् । तद्वृत्तिं प्रति तत्कारणभूतसम्प्रयोगस्य द्वित्वादिकं प्रति तत्कारणभूतापेक्षाबुद्धेरिव स्थापकत्वसम्भवेऽपि तावत्कालावस्थाप्येकवृत्त्यङ्गीकारेऽपि चरमक्षणोत्पन्नतदनुव्यवसायेन तत्क्षणावच्छिन्नतदनुसन्धानसम्भवेऽपि चैतावन्तं कालं घटं पश्यन्नेवास्मीत्यनुभवसिद्धस्य तद्वृत्तौ तावत्कालसम्बन्धस्यासिद्धिप्रसङ्गतादवस्थ्याच्च ।

## आत्मस्वरूपसाक्ष्यनुभवयोरत्यन्ताभिन्नतया सुखमनुभवामि दुःखमनुभवामीत्यबाधितानुभवसिद्धधर्मधर्मिभावोपपत्तिसमर्थनम्—

नन्वेवमात्मस्वरूपस्यैव स्वस्वधर्मगोचरसाक्ष्यपरनामकस्वप्रकाशानुभवरूपत्वे तयोरात्मस्वरूपसाक्ष्यनुभवयोरत्यन्ताभिन्नतया सुखमनुभवामि दुःखमनुभवामीत्यबाधितानुभवसिद्धधर्मधर्मिभावो विरुद्धश्चेतेति चेन्न । तयोः सविशेषाभेदाङ्गीकारेण विशेषस्यैव धर्मधर्मिभावाद्युपपादकत्वात् । अत एव अहं ज्ञानमिति प्रतीत्यापत्तिरिति निरस्तम् । धर्मिग्राहकमानेन भेदं प्रतिनिधितया सिद्धस्य विशेषस्य तादृशव्यवहारविरोधितया भेदकार्यकारितया च सिद्धेः । एवंविधविशेषानभ्युपगमे प्रतियोगित्वादेः प्रतियोगिघटादेश्चात्यन्ताभिन्नतया परस्परं धर्मधर्मिभावाद्यनुपपत्तेः । घटः प्रतियोगित्वमित्यादि व्यवहारापत्तेः । स्वान्योन्याभावप्रतियोगित्वरूपघटादेर्भूतलवृत्तितया घटादेरिव भूतलस्यापि स्ववृत्तिघटाद्यन्योन्याभावप्रतियोगित्वापत्तेश्च । आत्मस्वरूपभूतज्ञानानन्दयोरत्यन्ताभिन्नत्वेन स्फुरणास्फुरणाद्यनुपपत्तेश्च । न च कल्पितभेदेन तद्व्यवस्था । कल्पितभेदस्यातिप्रसञ्जकतया व्यवस्थाहेतुत्वानुपपत्तेः । अन्यथा वह्न्यादावपि कल्पितवह्न्यादिभेदसत्त्वेन दाहादिरूपवह्न्यादिकार्यानुपपत्तेरवह्न्यादिकार्योपपत्तेश्च ।

किञ्च 'विज्ञानमानन्दं ब्रह्म', 'सत्यं ज्ञानमनन्तं ब्रह्म', 'तत्त्वमसी'त्यादिवाक्यात् प्रतिपन्नविज्ञानानन्द प्रत्यग् ब्रह्मैक्यादीनां परमतेऽपि न तावद्भेदो भेदाभेदौ वा । अखण्डार्थत्वहानेः । ''एकधैवानुद्रष्टव्यमि''त्याद्यैकरसस्य श्रुतिविरोधाच्च । तत्र भेदप्रतिनिधिस्वभावविशेषोऽपि न चेत् कथं तत्तच्छब्दानामपर्यायत्वम्पदान्तरवैयर्थ्यम् । विज्ञानानन्दयोरेकतरापरिशेषः । धर्मधर्मिभावः प्रमाधिष्ठानत्वेन चैतन्यभानेऽपि मोक्ष इवेदानीमपरिच्छिन्नानन्दाप्रकाशः । प्रत्यग्ब्रह्मैक्याप्रकाश इत्यादि कार्यं स्यात् ।

ननु लक्ष्यार्थभेदाभावेऽपि वाच्यार्थभेदादपर्यायत्वादिति चेन्न । ज्ञानानन्दादीनां ब्रह्माभिन्नत्वेन तद्धर्मभूतज्ञानत्वादीनामपि ब्रह्मधर्मतया ब्रह्मधर्माणां च "एवं धर्मान् पृथक् पश्यन्स्तानेवानुविधावती"त्यादि श्रुत्या भेदनिषेधात् ज्ञानानन्दादिशब्दानामन्यूनानतिरिक्तार्थकतया वाच्यार्थभेदाभावेन ब्रह्मतद्धर्मभूतज्ञानान्दादीनां च भेदाभावेन गवाश्वादिशब्देषु दण्डपुरुषादिषु चापर्यायत्वधर्मधर्मिभावादिप्रयोजकत्वेन क्लृप्तवाच्यार्थादिभेदाभावेन तत्प्रतिनिधिभूतविशेषापरनामकनियामकस्यावश्याभ्युपेयत्वात् । नियामकं विनैव ज्ञानानन्दादिशब्दानामपर्यायत्वे ब्रह्मतद्धर्मभूतज्ञानानन्दादीनां च धर्मधर्मिभावाद्यभ्युपगमे घटकलशशब्दयोरपर्यायत्वं तद्घटादेरेव स्वं प्रतिधर्मधर्मिभावः ज्ञातत्वाज्ञातत्वादिकं च स्यात् । न च वास्तवतद्भेदाभावेऽप्यारोपिततद्भेदमादायैवापर्यायत्वाद्युपपत्तिरिति वाच्यम् । घटकलशशब्दादीनामपि वाच्यार्थादिभेदभ्रमसम्भवेनापर्यायत्वादिप्रसङ्गात् ।

## ज्ञानानन्दादिशब्दानां पर्यायत्वे सहप्रयोगानुपपत्तिपरिहारकथनम्—

ननु ज्ञानानन्दादिशब्दानां पर्यायत्वमिष्टमेव । न चैवं "विज्ञानमानन्दं ब्रह्म"ति सहप्रयोगानुपपत्तिः । घटकलशशब्दयोरिव विज्ञानानन्दादिशब्देष्वपि यावद्वाच्यार्थभेदभ्रमं सहप्रयोगसम्भवात् । ब्रह्मतद्धर्मभूतज्ञानान्दादीनामपि वास्तवधर्मधर्मिभावादि नास्त्येव । येन तन्नियामकं किञ्चिदङ्गीक्रियेत । तत्प्रतीतिस्त्वारोपितभेदमादायैव उपपन्ना इति चेन्न । क्वचिल्लौकिकपर्यायसहप्रयोगस्य वाच्यार्थभ्रमनिबन्धनत्वसम्भवेऽप्यपौरुषेये वेदे तादृशसहप्रयोगस्य भ्रमनिबन्धनत्वासम्भवात् ।

ननु तथापि श्रोतॄणां घटकलशशब्दवाच्यार्थभेदभ्रमवद्विज्ञानानन्दादीनां ब्रह्मभिन्नत्वभ्रमदर्शनेन तदभेदबोधनमुखेन तद्भेदभ्रमनिरासाय पर्यायत्वेऽपि 'विज्ञानमानन्दं ब्रह्म'त्यादि सहप्रयोग उपपद्यत इति चेन्न । लोके नीलमुत्पलं द्रव्यं घटः मृद्घट इत्यादौ भिन्नभिन्नरूपेणोपस्थितस्वस्वार्थभेदबोधकत्वस्य पदानां व्युत्पत्तिसिद्धतया विज्ञानानन्दब्रह्मादिशब्दानां पर्यायत्वे भिन्नभिन्नरूपेण स्वस्वार्थोपस्थित्यभावेन घटो घट इत्यादेरिवाभेदबोधकत्वासम्भवात् । परमतेऽनुपहितादुपहितस्य भिन्नत्वेन भिन्नविषयतयाऽनुपहितार्थाभेदबोधनेनोपहितार्थभेदभ्रमनिरासकत्वायोगाच्च ।

यदुक्तं ब्रह्म तद्धर्मभूतविज्ञानानन्दादीनामपि वास्तवो धर्मधर्मिभावो नास्त्येवेत्यादि । तन्न । 'आनन्दं ब्रह्मणो विद्वान्', 'आनन्दं ब्रह्मणो रूपं', 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'यस्सर्वज्ञः सर्ववित्', 'यस्य ज्ञानानन्दमयं तपः', 'तुरीयं ज्ञानमयं तुरीयं तत्सर्वदृक् सदे'त्यादि श्रुतिसिद्धतया धर्मधर्मिभावस्य वास्तवत्वेन तन्नियामकस्य भेदप्रतिनिधेरावश्यकत्वात् ।

किञ्च ज्ञानानन्दादीनां ब्रह्मणश्च धर्मधर्मिभावादिः कल्पित एव परस्परप्रतियोगिकपरस्परानुयोगिककल्पितभेदनियम्यश्चेत्यङ्गीकुर्वतापि तस्य तादृशधर्मधर्मिभावादेस्तन्नियामकभेदस्य च शश-

विषाणादिव निरस्वरूपत्वानभ्युपगमात् । कल्पितज्ञानानन्दादिप्रतियोगिकब्रह्मानुयोगिकतादृशभेदस्यापि ब्रह्मणा समं धर्मधर्मिभावोऽवश्यं कल्पितोऽङ्गीकर्तव्यः ।

एवं ब्रह्मप्रतियोगिकज्ञानानन्दाद्यनुयोगिककल्पितभेदस्याप्यानन्दादिभिस्समम् । तथा च तादृशभेदनिरूपितधर्मधर्मिभावस्य तद्भेदप्रतियोगिककल्पितभेदान्तरनियम्यत्वे तस्याप्येवमित्यनन्ताप्रामाणिक तादृशभेदस्वीकारप्रसङ्गः । दूरे गत्वा क्वचित्तादृशभेदत्यागे तन्निरूपितधर्मधर्मिभावस्याकस्मिकत्वपरिहाराय विशेषस्वीकारे विवादः पर्यवसितः । प्रथममेव ज्ञानानन्दादीनां ब्रह्मणश्च परस्परनिरूपितधर्मधर्मिभावनियामक एव सोऽङ्गीकर्तुमुचितश्चेति किमन्तर्गतानन्ताप्रामाणिकभेदस्वीकारेण ।

## भेदप्रतिनिधितया विशेषाङ्गीकारकथनम्—

एवं दृक्दृश्ययोराध्यासिक एव सम्बन्ध इति स्वीकुर्वता त्वया दृग्दृश्याभ्यां नान्यः सम्बन्धोऽभ्युपगन्तव्योऽनवस्थानात् । अनन्यश्चेदेकस्यैव तस्य स्वनिरूपितसम्बन्धिसम्बन्धभावस्तन्नियामकं भेदप्रतिनिधिं विशेषं विनानुपन्न इति तन्नियामकविशेषसिद्धिः ।

नन्वपर्यायत्वादिनियामकत्वेन अङ्गीक्रियमाणो विशेषस्तद्धर्मिस्वरूपाद्भिन्नः ? उत अभिन्नः ? नाद्यः । विशेषस्यापि स्वनिरूपितधर्मधर्मिभावादिनिर्वाहकविशेषान्तरवत्त्वे तस्याप्येवमिति विशेषानवस्थानात् । तत्तद्भेदस्यापि तत्तद्धर्मतत्तद्विशेषानिरिक्तत्वेऽनवस्थानाच्च । न द्वितीयः । तथाप्यपर्यायत्वाद्युक्तदोषेभ्योऽनिर्मोक्षात् । तत्तद्धर्मिस्वरूपस्यैव नामान्तरकरणप्रसङ्गाच्चेति चेत् । मैवम् । प्राग्विशेषसिद्धेः । एतद्विकल्पस्य निर्विषयत्वेनाप्रसरात् । तत्सिद्ध्युत्तरकाले च तस्य धर्मिग्राहकमानेन स्वपरनिर्वाहकतयाऽनवस्थादिदोषेण धर्मिभिन्नतया च सिद्धेरुक्तविकल्पानवसराच्च ।

नन्वेवं विशेषस्यैव सर्वत्र धर्मधर्मिभावादिनियामकत्वोपपत्तेस्तदर्थं क्वापि भेदो नोपेय इति चेन्न । भेदकार्यनिर्वाहार्थं तत्प्रतिनिधितया कल्प्यमानस्य विशेषस्य सोमकार्यनिर्वाहर्थं तत्प्रतिनिधितयाऽङ्गीकृतस्य पूतिकस्य लब्धसोमकर्मणि सोमावघातकत्ववत्प्रमाणसिद्धभेदे वस्तुनि तद्भेदाविघातकत्वात् ।

तस्माद्ब्रह्मतद्धर्मभूतज्ञानानन्दादीनां 'एवं धर्मानि'त्यादि श्रुत्या भेदनिषेधात् 'विज्ञानमानन्दं ब्रह्मेत्यादिश्रुत्या ब्रह्माभिन्नतया सिद्धेष्वपि विज्ञानानन्दादिषु 'आनन्दं ब्रह्मणो विद्वान्' इत्यादि श्रुतिसिद्धधर्मधर्मिभावादिनिर्वाहाय भेदप्रतिनिधिर्विशेष आवश्यकः । एवं जीवात्मस्वरूपस्यैव स्वस्वधर्मगोचरसाक्ष्यपरनामकस्वप्रकाशानुभवस्यापि जीवस्वरूपेण सविशेषाभिन्नतया सुखमनुभवामि दुःखमनुभवामीत्यबाधितानुभवसिद्धधर्मधर्मिभावो न विरुद्धः । तस्यानादिनित्यजीवस्वरूपाभिन्नतया

पूर्वोक्तयुक्त्या च स्वरूपतोऽपि नित्यत्वसिद्धेः । जीवेश्वरभेदग्रहादिसाक्षिप्रत्यक्षस्योत्पत्तिरहितत्वेन कदाचिदपि श्रुतेरिव दोषजन्यत्वसम्भावनाग्रस्तत्वासम्भवेन श्रुत्यपेक्षया प्राबल्यात् तद्विरोधेन सत्यपि तात्पर्यलिङ्गे 'यजमानः प्रस्तरः, सोमेन यजेते'ति श्रुत्या प्रस्तरयजमानयोरिव सोमयागयोरिव च तत्त्वमस्यादि श्रुत्या जीवेश्वरयोरपि नाभेदो बोधनार्ह इति । तस्माज्जीवेश्वरभेदग्राहि नित्यनिर्दोष-प्रबलसाक्षिप्रत्यक्षबाधितान्युक्तानुमानानि श्रुतयश्चोपचरितार्थाः । अत एव भेदग्राहकप्रमाणसत्त्वा-दभेदपरश्रुतेरभावाच्चोक्तानुमानान्यप्रयोजकानि च । एवं जडेश्वराभेदसाधकान्यप्यनुमानानि तद्भेद-ग्राहिपरीक्षितप्रत्यक्षबाधितानि । तदभेदश्रुतयोऽपि उपचरितार्थाः ।

अत एव तद्भेदग्राहिपरीक्षितप्रत्यक्षसत्त्वात्, अभेदपरश्रुत्यभावाच्च तदभेदसाधकोक्तान्यनुमानान्य-प्रयोजकानि च । जीवेश्वरभेदे जडेश्वरभेदे च उक्तप्रत्यक्षानुमानागमा एव प्रमाणमिति सुस्थो जीवश्वरभेदो जडेश्वरभेदश्च । तत्तच्छ्रुत्यर्थश्चान्यत्र प्रपञ्चित इति सर्वमनवद्यम् ।

## अन्ते जीवेश्वरयोः भेदस्थापनोपसंहारपुरस्सरं मङ्गलाभिधानम्—

उच्चैरारुह्य नीचैः पतति मयि वृथा द्वेषकारीति तत्त्वं
सम्यग्व्याकर्तुकामः किल दनुजकुलं पाणिजप्रोतमग्रे ।
उत्क्षिप्याधःक्षिपन्मत्पदभजनपरं रक्षिता सर्वथेति
प्रह्लादे दत्तदृष्टिर्नतजनमजहत्पौरुषः पातु सिंहः ॥ १ ॥

(सर्वज्ञः सर्वकर्ता मे सर्वजीवजडात्मकात् ।
प्रपञ्चाद्वस्तुतोऽत्यन्तभिन्नः श्रीनृहरिर्गतिः ॥ २ ॥)

धीरः श्रीविजयीन्द्रमस्करिमणिः श्रीशदृहां शासिता
तद्दास्यैकबलान्वितो दशमतेः श्रीशस्य च प्रीतये ।
प्रत्यक्षश्रुतियुक्तिनिश्चितमपि श्रीशात्मभेदं वृथा
धिक्कृत्यात्मनि तद्वियं विदधतः शिक्षामकार्षीद्ध्रुवम् ॥ ३ ॥

*॥ इति श्रीमत्सुरेन्द्रतीर्थपूज्यपादशिष्येण श्रीमद्विजयीन्द्रतीर्थविरचिता अद्वैतशिक्षा समाप्ता ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

॥ श्रीः ॥

# अद्वैतशिक्षा

## विषयानुक्रमणिका

★ ★ ★

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमज्जयतीर्थविरचिता

# प्रमाणपद्धतिः

श्रीविजयीन्द्रतीर्थविरचितटिप्पणीसमेता

सम्पादकः

विद्वान् चतुर्वेदी प्रदीपसिंहाचार्यः

।। श्रीः ।।

।। श्रीमद्धनुमद्भीममध्वान्तर्गतरामकृष्णवेदव्यासात्मकलक्ष्मीहयग्रीवाय नमः ।।

श्रीमज्जयतीर्थविरचिता

# प्रमाणपद्धतिः

## श्रीविजयीन्द्रतीर्थविरचितटिप्पणीसमेता

## अथ प्रत्यक्षपरिच्छेदः

*मङ्गलाचरणम्*

**मूलम्**

**प्रणम्य चरणाम्भोजयुगलं कमलापतेः ।**
**प्रमाणपद्धतिं कुर्मो बालानां बोधसिद्धये ।। १ ।।**

**टिप्पणी**

**पद्मापतिपदाम्भोजयुग्ममानम्य मद्गुरून् ।**
**प्रमाणपद्धतेर्भावं वर्णयामि यथामति ।। १ ।।**

प्रारिप्सितग्रन्थस्याविघ्नेन परिसमाप्त्यर्थं कृतं नमस्काररूपमङ्गलं शिष्यशिक्षायै निबध्नंश्चिकर्षितं प्रतिजानीते **प्रणम्येति** ।। अत्र भक्तिश्रद्धातिशयकथनाय प्रशब्दः । प्रणामरूपमङ्गलस्य प्रारब्धाभीष्टकमपेक्षया पूर्वकालत्वबोधनाय क्त्वाप्रत्ययः । नम्यचरणाम्भोजयुगलस्य भगवतोऽपि विशिष्टेष्टाधिकृतत्वं नम्यत्वप्रयोजनकं रूपं सूचयितुमाह **कमलापतेरिति** ।। प्रस्तुतप्रकरणप्रयोजनमाह **बोधेति** ।। प्रमाणादितत्त्वज्ञानविरहिणोऽन्यत्र व्युत्पन्नांस्तद्बोधप्रयोजकानाह **बालानामिति** ।। प्रमाणपद्धतेः क्रियमाणत्वेऽपि प्रमाणपद्धतेरेव प्राधान्यालिङ्गसमवायेन प्राणभृत उपधात्विति वाक्यस्थप्राणभृच्छब्दवत्प्रमाणपद्धतितदन्यपद्धतिसमुदाये प्रमाणपद्धतिशब्दमभिप्रेत्याह **प्रमाणपद्धतिमिति** ।। ग्रन्थनामत्वे वा लिङ्गसमवाय एव निमित्तमिति द्रष्टव्यम् । प्रमाण-

पद्धतिमित्यस्मात्पूर्वं वयमित्यध्याहारः। प्रमाणपद्धतिकर्तुरेकत्वेऽप्यस्मदोर्द्वयोश्चेति वयमिति बहुवचनोपपत्तिः । प्रमाणपद्धतेः करिष्यमाणत्वेऽपि वर्तमानसामीप्ये वर्तमानवद्वेति कुर्म इति लट्प्रयुक्तः । एतत्प्रकरणरूपक्रिया-फलस्य बालबोधस्य कर्तृगामित्वाभावादत्र परस्मैपदप्रयोगः । अनेन प्रमाणादितत्त्वमस्य प्रकरणस्य विषय इति सूचितम् । एवं च विषयादीनां यथायथं सम्बन्धो द्रष्टव्यः ।

**यद्यपि भगवत्पादैरेव प्रमाणलक्षणादिकमभिहितम् । तथाऽपि गम्भीरया वाचा विक्षिप्य वर्णितं न मन्दैः शक्यते सुखेन बोद्धुमिति तदर्थमिदं प्रकरणमारभ्यते ।**

भगवत्प्रणीतप्रमाणलक्षणादिना प्रमाणादितत्त्वज्ञानसिद्धेः एतत्प्रकरणस्य तदुत्तरकालीनस्य आरम्भे न किञ्चित्प्रयोजनमस्तीत्याशङ्क्य गम्भीरयान्यवाचा सङ्कलय्यात्र प्रमाणादितत्त्वप्रतिपादनमनेन क्रियते इत्यक्लेशेन तज्ज्ञानमारम्भप्रयोजनमिति परिहारमाह **यद्यपि** इत्यादिना **इदं प्रकरणमारभ्यते** इत्यन्तेन ।।

*लक्षणलक्षणम्*

**यो धर्मो लक्ष्ये व्याप्त्या वर्तते न वर्तते चान्यत्र स धर्मो लक्षणमित्युच्यते ।**

**यो धर्म इति** । लक्ष्येतरावृत्तित्वे सति सकललक्ष्यवृत्तिधर्मो लक्षणम् । लक्ष्यतावच्छेदकाभिव्यङ्ग्य-सादृश्यप्रतियोगीतरवृत्तिवृत्तिसादृश्यानिरूपकत्वेसति लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगियावद्वृत्तिवृत्ति-सादृश्यप्रतियोगी धर्मो लक्षणमित्यर्थः । एतेन अनुगतधर्मानभ्युपगमे सकललक्ष्यवृत्तेर्धर्मस्यैकस्याभावात् असम्भवसम्भवोऽलक्ष्ये लक्ष्ये च वर्तमानस्यानभ्युपगमादतिव्याप्त्यसम्भवात्तद्वारकविशेषणवैयर्थ्यम् । किञ्च गोत्वस्येव गोत्वसमनियतस्य द्रव्यत्वादेरपि गोलक्षणं प्रसज्येत । अपि च द्रव्यत्वस्येव गोत्वस्यापि लक्ष-णत्वं किं न स्यादित्यादिदूषणं निरस्तम् । यद्यप्यत्रतावत्प्राधान्यात्प्रमाणलक्षणमेव वक्तुमुचितम् । तथाऽपि लक्षणसामान्याज्ञाने प्रमाणलक्षणमिदमिति लक्षणविशेषस्य ज्ञातुमशक्यत्वाद्विशेषलक्षणज्ञानोपयोगितया लक्षणसामान्यलक्षणोक्तिरादाविति बोध्यम् ।

**यथा गोः सास्नादिमत्त्वम् । तद्धि गोषु सर्वत्रास्ति नास्ति चागोषु ।**

सामान्यं विना विशेषापर्यवसानाल्लक्षणसामान्यलक्षणं क्वचिद्विशेषे योजयति **यथेति** ।। **तद्धीति** । यद्यपि सास्नात्वं नैकं तथाऽपि सास्नात्वनिष्ठसादृश्यप्रतियोगिधर्मवत्तया वा सास्नानिष्ठसादृश्यप्रतियोगित्वेन वा सास्नानामनुगममभिप्रेत्य तथोक्तमिति ध्येयम् ।।

**अन्यथाभूतं त्वलक्षणम् ।**

**अन्यथाभूतं त्विति ।** लक्ष्येतरावृत्तित्वविशिष्टसकललक्ष्यवृत्तित्वाभाववान्धर्मो अलक्षणम् । लक्ष्यतावच्छेदकाभिव्यङ्ग्यसादृश्यप्रतियोगीतरवृत्तिवृत्तिसादृश्यानेकरूपकत्वविशिष्टलक्ष्यतावच्छेकाभिव्यङ्ग्यसादृश्यप्रतियोगियावद्वृत्तित्तृत्तिसादृश्यप्रतियोगित्वाभाववान्धर्मोऽलक्षणमिति यावत् । एतेन परोद्भाव्यप्रतियोग्यप्रसिद्धिर्यथाश्रुते स्यादित्यादिदूषणं परास्तम् । विशेषणाद्यभावप्रयुक्तो विशिष्टाभावः सर्वत्रालक्षणेऽनुगत इति ।

### *अतिव्याप्त्यादिलक्षणम्*

**तत् त्रिविधम् । असम्भवि यल्लक्ष्ये सर्वथा न वर्तते । यथा गोरेकशफत्वम् । अव्यापकं यल्लक्ष्यैकदेशे वर्तमानमपि तदेकदेशान्तरे न वर्तते । यथा गोः शबलत्वम् । अतिव्यापकं यल्लक्ष्यादन्यत्रापि वर्तते । यथा विषाणित्वम् ।**

सङ्गमयति **असम्भवीत्यादिना** ।।

**सजातीयविजातीयव्यावृत्ततया लक्ष्यावधारणं लक्षणज्ञानस्य प्रयोजनम् । अस्मिन्ग्रामे देवदत्तगृहमिति वार्तां श्रुतवतो हि तद्ग्रामस्थेषु सर्वेष्वपि गृहेषु देवदत्तबुद्धिः प्रसक्ता । ततो यत्र पताका तद्देवदत्तगृहमिति तल्लक्षणज्ञाने सति इदमेव नान्यत् इत्यवधारणं जायते ।**

लक्षणप्रयोजनमाह **सजातीयेति** ।। किञ्चिद्धर्मनिष्ठसादृश्यप्रतियोगिमत्सजातीयं किञ्चिद्धर्मनिष्ठवैदृश्यप्रतियोगिमद्विजातीयमित्यर्थः ।

**शब्दव्यवहारो वा लक्षण(ज्ञानस्य) प्रयोजनम् ।**

तस्यैव ज्ञानस्य प्रयोजनान्तरमाह **शब्दव्यवहारो वेति** । शब्दो व्यवह्रियतेऽनेनेति वाच्यवाचकभावपरिच्छेद इत्यर्थः ।। **लक्षणप्रयोजनमिति** । ज्ञानलक्षणप्रयोजनमित्यर्थः । तज्ज्ञानप्रयोजनमिति वा ।

**सास्नादिमान् गौरिति लक्षणज्ञाने सति यं यं सास्नादिमन्तं पिण्डं पश्यति तं तं गोशब्दवाच्यं प्रत्येति । यावदन्यतो व्यावर्तनीयं यावति चैकः शब्दो व्युत्पादनीयः तदुच्यते लक्ष्यमिति ।**

वाच्यवाचकभावज्ञानहेतुतां लक्षणज्ञानस्योपपादयति **सास्नादिमान् गौरिति** ।। **यावदिति** । लक्षणज्ञानव्यतिरेकप्रयुक्तव्यतिरेक प्रतियोगिज्ञानविषयव्यावृत्त्यधिकरणतावच्छेदकावच्छिन्नमित्यर्थः ।। **यावति चेति** । लक्षणज्ञानसाध्यशब्दवाच्यत्वज्ञानविषयतावच्छेदकावच्छिन्नमित्यर्थः ।। **शब्दानुगममात्रमिति** । लक्ष्यलक्षणयोरस्तत्प्रवेशानिर्बन्धान्योन्याश्रयादिनेति बोध्यम् । तत्र प्रमाणतदितरसमुदायपदोपयुक्ते निरूपित इति शेषः ।

*प्रमाणसामान्यलक्षणम्*

**तत्रादौ तावत्प्रमाणसामान्यलक्षणमुच्यते । यथार्थं प्रमाणम् । प्रमाणमिति लक्ष्यनिर्देशः । यथार्थमिति लक्षणोक्तिः । एवमुत्तरत्रापि ज्ञातव्यम् ।**

**आदाविति** प्राधान्यमाह । शिष्यबुद्धिसमाधानार्थमाह **प्रमाणेति** । सामान्यस्याज्ञाने विशेषजिज्ञासानुदयाद्वक्ष्यमाणविशेषलक्षणसङ्गतिमाह **सामान्येति** ।। **यथार्थमिति** । लक्ष्यलक्षणयोर्लक्ष्यत्वलक्षणत्वभ्रान्तिं वारयितुमाह **प्रमाणमिति लक्ष्यनिर्देश इति** । उक्तन्यायमतिदिशति **एवमिति** ।।

**अत्र यथाशब्दोऽनतिक्रमे वर्तते।**

योग्यतावीप्सापदार्थानतिवृत्तिसादृश्येषु यथाशब्दार्थेष्वभिप्रेतमर्थमाह **अत्रेति** । **अत्र** लक्षणे ।

**अर्थशब्दश्चार्यत इति व्युत्पत्त्या ज्ञेयवाची । ज्ञेयमनतिक्रम्य वर्तमानं यथावस्थितमेव ज्ञेयं यद्विषयीकरोति नान्यथा तत्प्रमाणमित्यर्थः ।**

ननु घटाद्यर्थमतिक्रम्यात्मन्यन्तः करणे वा ज्ञानादेर्वर्तमानादव्ययीभावार्थपदार्थानतिवृत्तेरसम्भव इत्याशङ्क्याह **अर्थशब्दश्च** इत्यादिना **प्रमाणमित्यर्थ** इत्यन्तेन । तथाच विषयीकारे पदार्थानतिविलक्षणात् न असम्भव इत्यर्थः । एवं च येन सम्बन्धेन यद्यत्रास्ति तेन सम्बन्धेन तत्र तद्विषयिकारि प्रमाणमिति द्रष्टव्यम् । एतेन ज्ञेयविषयीकारित्वं यदि विषयविषयिभावः सम्बन्धस्तदेच्छायामतिव्याप्तिः । यदि च ज्ञेयविषयकज्ञानत्वं तदेन्द्रियादावनुप्रमाणेऽव्याप्तिः । यदि च ज्ञानजनकत्वगर्भं तदार्थेऽतिव्याप्तिः । तत्साधनत्वगर्भत्वे ज्ञानेऽव्याप्तिः । न च ज्ञानतत्साधानान्यत्वं विवक्षितमिति साम्प्रतम् । तदन्यान्यत्वस्य तदन्यभेदात्मकस्यैतल्लक्षणसाध्यत्वेनासिद्धेरिति परास्तम् । ज्ञेयेन सह ज्ञानतद्विषयत्वतत्साधनान्यानिरूपितसविषयत्वव्यवहारप्रयोजकसम्बन्धवत्प्रमाणमिति तल्लक्षणार्थस्य विवक्षितत्वात् । एवं च पुरोवर्तिनि घटत्वज्ञाने घटादौ चक्षुरादिप्रमाणं घटादौ प्रत्यक्षं प्रमाणमित्यादौ सप्तम्यर्थरूपविषयत्वानुभवेन पूर्वोक्तसम्बन्धस्य केवलानुप्रमाणयोः सत्त्वात् । घटे घटः प्रमाणमित्यनुभवाभवादिच्छाविषयत्वस्यान्यनिरूपितत्वान्न किञ्चिदूषणमिति मन्तव्यम् ।

**ज्ञेयविषयीकारित्वं च साक्षाद्वा साक्षाज्ज्ञेयविषयीकारिसाधनत्वेन वा विवक्षितमिति नानुप्रमाणेष्वव्याप्तिः । ज्ञेयविषयीकारित्वेनैव प्रमातृप्रमेययोर्व्यवच्छेदः । तयोः साक्षाज्ज्ञेयविषयीकारित्वाभिवात् । साक्षाज्ज्ञेयविषयीकारिकारणत्वेऽपि तत्साधनत्वाभावाच्च ।**

तदेवाह **साक्षादिति** । प्रमातुः प्रमेयत्वोपपादनेऽपि प्रमेयव्यवच्छेद इत्युक्ते कथञ्चिदसम्भवशङ्का स्यादतः प्रमात्रिति पृथगुक्तिः तयोर्लक्षणप्रसक्तिमाह **तयोरिति** ।

*प्रमातृलक्षणम्*

**प्रमावान्प्रमाता । प्रमाविषयः प्रमेयम् ।**

प्रमातृशब्दार्थस्य प्रमाजननानुकूल्यवत्त्वस्य यथाश्रुतस्य सर्वत्र प्रमातर्यसम्भवादाह **प्रमावानिति** । प्रमेयशब्दाभिधेयमाह **प्रमाविषय इति** ।

**यथार्थज्ञानं प्रमा । यथार्थग्रहणेन संशयविपर्ययतत्साधनानां निरासः ।**

प्रमां लक्षयति **यथार्थेति** । सन्मात्रविषयकज्ञानमित्यर्थः । यद्वा येन सम्बन्धेन यद्यत्रास्ति तेन तत्र तद्विषयकारि ज्ञानमित्यर्थः । प्रमाणसामान्यलक्षणगतयथार्थपदव्यावर्त्यमाह **यथार्थेति** । लक्षणद्वयेऽपि यथासम्भवं व्यावर्त्यमाह **यथार्थेति** ॥

*संशयलक्षणम्*

**अनवधारणं ज्ञानं संशयः । अनवधारणग्रहणं सम्यग्ज्ञानविपर्ययव्युदासार्थम् । घटादिनिवृत्त्यर्थं ज्ञानमिति ।**

**अनवधारणेति** । ननु किमिदमनवधारणत्वम् । न तावत्प्रकारायोगव्यवच्छेदाविषयकत्वम् । पुरुषोऽयमिति निश्चयेऽतिव्याप्तेः । असम्भवाच्च । संशये प्रकारायोगव्यवच्छेदात्मिकायाः कोटेरेव विषयत्वात् । नाप्यवधारणानिश्चयः । न तद्भिन्नत्वं निश्चयत्वस्य संशयान्यज्ञानत्वेनान्योन्याश्रयात् । न चैकमात्रकोटिकं ज्ञानमवधारणम् । तथा द्विकोटिकं ज्ञानं संशय इति वाच्यम् । द्रव्यं घटश्चेति समुच्चयेऽतिव्याप्तेः । विरोधित्वमपि कोटौ विशेषणमिति चेन्न । यद्ययंनिर्वह्निः स्यात्तदा निर्धूमः स्यादित्यादौ तर्केऽतिव्याप्तेः । तत्रैकस्मिन्पर्वतादौ व्याप्यारोपान्निर्धूमत्वस्य चक्षुरादिना धूमवत्त्वस्य विषयत्वादिति ।

मैवम् । एकस्मिन्धर्मिण्येकजातिसामग्र्य विषयकारिप्रमाविरोध्युभयकोटिज्ञानं संशय इति तदर्थात् । तर्के तु व्याप्यारोपप्रमाणाभ्यामुभयकोटिज्ञानात् । यद्वा एकस्मिन् धर्मिणि साधारणधर्मोपस्थितभारसमानविरोधोभय कोटिकज्ञानं संशयः । एतदेव हृदि निधाय वक्ष्यति **वयन्तु ब्रूम इति** । संशयत्वं जातिरेव । न च चाक्षुषत्वादिना सङ्करः । सर्वत्र मानसस्यैव संशयस्य स्वीकारात् । न च चक्षुषा सन्देहेऽनुव्यवसायविरोधः । चक्षुषोऽपि प्रयोजकत्वेन तथाऽनुव्यवसायात् । अस्ति च धर्म्युपनयद्वारा मानसेऽपि संशये चक्षुरुपयोग इत्याहुः । तन्न । एवं हि विषयत्वमपि जातिः स्यात् । चक्षुषा रजतं पश्यामीत्यनुव्यवसायस्य त्वद्रीत्यैवोपपाद्यत्वात् । यदि च शाब्दोऽपि विपर्ययोऽस्तीति शाब्दत्वादिना जातिसङ्करान्नैवं तदा शाब्दोऽपि संशयोऽस्तीति जातिसङ्करान्नैवमिति प्रकृतेऽपि समानमिति दिक् ।। **सम्यग्ज्ञानेति** । सम्यङ्निश्चयेत्यर्थः ।

*संशयकारणानि*

**तस्य निर्णायकाभावसहकृताः साधारणधर्मासाधारणधर्मविप्रतिपत्त्युपलब्ध्यनुपलब्धयः पञ्च कारणानीति केचिदाहुः । तद्यथा । स्थाणुपुरुषयोः साधारणमूर्ध्वतालक्षणं धर्मं पुरोवर्तिन्युपलभ्य स्थाणुपुरुषौ स्मृत्वा विशेषजिज्ञासायां स्थाणुत्वनिश्चायकं वक्रकोटरादिकं पुरुषत्वनिश्चाकं शिरःपाण्यादिकं चानुपलभमानस्य डोलायमानं संशयज्ञानमुत्पद्यते किमयं स्थाणुर्वा पुरुषो वेति ।**

संशयवन्निरस्यं संशयसाधनमादौ कस्यचिन्मतमुपन्यस्यति **तस्येति** ।। तथा च तत्कारणजन्यसंशयत्वेन संशयः पञ्चविध इति भावः ।। **विशेषजिज्ञासायामिति** । अन्यतरकोटिजिज्ञासायामित्यर्थः । इदं च क्वाचित्कमभिप्रेत्यैकत्रक्लृप्तसामग्रीद्वयसमाजात्संशयोत्पत्तेरप्रत्यूहत्वादिति **निर्णायकाभावसहकृता इति** । अन्यतरनिर्णायकाभावसहकृता इत्यर्थः । उभयव्याप्यदर्शनस्य तदानीमनिश्चायकत्वादिति भावः ।। **डोलायमानमिति** । अव्यवस्थितकोटिकमित्यर्थः । यद्वेदमित्थमेवेत्यभिलापाजनकमित्यर्थः ।। **किमयमिति** ।

**शब्दे च आकाशविशेषगुणत्वमसाधारणधर्ममुपलभमानस्य निर्णायकमजानतः संशयो भवति किं शब्दो नित्योऽनित्यो वेति । इन्द्रियेषु वैशेषिकसाङ्ख्ययोर्भौतिकत्वाभौतिकत्वविप्रतिपत्तिं पश्यतो निश्चायकमजानतः सन्देहो भवति किमिन्द्रियाणि भौतिकान्युत अभौतिकानीति ।**

असाधारणधर्महेतुकं संशयमुदाहरति **शब्दे चेति** ।। ध्वनेरनित्यत्वानिश्चयदशायां वायुधर्मत्वं वाऽभिप्रेत्य इदं द्रष्टव्यम् ।।

कूपखननानन्तरं जलोपलब्धौ सत्यां निश्चायकाभावे संशयो जायते किं प्राक् सदेवोदकं कूपखनननेनाभिव्यक्तमुपलभ्यते उतासत्तेनोत्पन्नमिति ।

अभिव्यक्तमिति ।। अपगतप्रतिबन्धकमित्यर्थः ।

अस्मिन्वटे पिशाचोऽस्तीति वार्तां श्रुतवतो वटसमीपं गतस्य तत्र पिशाचानुपलब्धौ सत्यां निर्णायकाभावे संशयो भवति । किं विद्यमान एव पिशाचोऽन्तर्धानशक्त्या नोपलभ्यते किंवा अविद्यमान एवेति । उपलब्ध्यनुपलब्ध्योः साधारणधर्म एवान्तर्भावात् त्रीण्येव कारणानीत्यपरे ।

तदेतत्परद्वारा दूषयति उपलब्ध्यनुपलब्ध्योरितीति ।

उपलब्धिर्हि सतामेव घटादीनां प्रदीपारोपणेन दृष्टा । असतां च कुलालादिव्यापारान्तरमिति । तथाऽनुपलब्धिः सतामीश्वरादीनामसतां च शशविषाणादीनां दृष्टेति ।

अन्तर्भावमेवाह उपलब्धिरिति । तथाऽपि त्रिविध एव संशय इति भावः ।

*स्वमतरीत्या कारणनिरूपणम्*

वयं तु ब्रूमः । असाधारणधर्मविप्रतिपत्त्योरपि साधारणधर्म एवान्तर्भावः । असाधारणो हि धर्मो न स्वरूपेण संशयहेतुः । विशेषस्मरणकारणत्वाभावात् । किन्तु व्यावृत्तिमुखेनैव ।

नन्वत्र विभिन्नकारणव्यक्तिजन्यत्वाद्विभिन्नकारणतावच्छेदकाद्वा । नाद्यः । कारणव्यक्तेरनन्तत्वेन संशयानन्तविधत्वापत्तेः । नान्त्यः । कारणतावच्छेदकभेदस्याभावात् । सर्वेषां साधारणधर्मत्वेनैव हेतुत्वादित्याह वयं तु ब्रूम इति ।। न स्वरूपेणेति । असाधारणधर्मत्वेनाज्ञात इत्यर्थः ।। विशेषेति । अज्ञातस्य कोटिस्मृतिरूपव्यापारजनकत्वादित्यर्थः ।

तथा च नित्यव्यावृत्तत्वमनित्यस्यानित्यव्यावृत्तत्वं च नित्यस्य धर्म इति साधारण एव ।

किमतो यद्येवमत आह **तथा चेति** ।। ननु कोटिद्वयसहचरितधर्मो धर्मिणि ज्ञायमानः सांशयिकः साधारणः । ऊर्ध्वत्ववत् । अयं तु धर्मोऽसाधारणः । तत्कथमनयोरैक्यम् । न हि साधारणधर्मज्ञानत्वेन हेतुता । धर्मिभिन्ननिष्ठतया ज्ञानमानस्य तत्त्वापत्तेः । अपि तु साधारणधर्मत्वेन साधारणज्ञानं वा तद्धेतुः । यस्तु प्रकृते नास्त्येव । किञ्च किमिदं नित्यव्यावृत्तत्वम् । नित्यनिष्ठात्यन्ताभावप्रतियोगित्वं वा नित्यवृत्त्यन्योन्याभावप्रतियोगितावच्छेदकत्वं वा नित्यभिन्नत्वं वा । नाद्यौ । तयोरनित्यधर्मत्वाभावादन्यत्वस्य नित्यवृत्तित्वात् । नान्त्यः । नित्यभिन्नत्वस्य साधारणत्वेऽपि किमायातम् । आकाशविशेषगुणत्वे न हि स धर्मो नास्तीति ब्रूमः । किन्त्वाकाशगुणत्वं न साधारणमिति । मैवम् । यावन्निनिष्ठात्यन्ताभावप्रतियोगिधर्मवत्त्वस्यानेन विवक्षितत्वात् । एतस्य च घटशब्दसाधारणत्वात् । शब्दस्याकाशविशेषगुणत्वस्य च यावन्नित्यनिष्ठात्यन्ताभावप्रतियोगित्वात् । तद्वत्त्वाच्च । घटशब्दयोरिति । एवमुत्तरत्रापि द्रष्टव्यम् ।

## न चैकेनैव साधारणधर्मेण भाव्यमिति नियमोऽस्ति ।

नन्वत्र कोटिद्वयसमानाधिकरण एक एव धर्मः सांशयिकः । प्रकृते त्वेककोटिसमानाधिकरणं धर्मद्वयं सांशयिकमिति वैषम्यमत आह **न चैकेनैवेति** ।। कोटिसहचरितवद्धर्मिज्ञानत्वेनैव हेतुता । न तूभयकोटिसहचरितधर्मवद्धर्मिज्ञानत्वेन गौरवात् । न चैवमेकधर्मज्ञानादपि संशयापत्तिः । द्वितीयकोटिस्मृतेरभावात् । अन्यथोभयकोटिसहचरितधर्मज्ञानमपि न हेतुः स्यात् । विशेषदर्शनदशायां संशयाजनकत्वात् । विशेषादर्शनमपि तद्धेतुरिति तदा प्रकृतेऽपि दीयतां दृष्टिरिति भावः । यद्यप्याकाशविशेषगुणत्वस्यानेन रूपेणोभयकोटिसहचाराप्रत्ययदशायामुभयव्यावृत्तत्वज्ञानकालेऽपि संशयसम्भवान्नैतदुचितमिव । तथाऽपि संशयत्वावच्छेदेन साधारणधर्मज्ञानस्य लाघवेन हेतुत्वे सिद्धे तत्रापि तत्कल्पनादक्लृप्तस्य हेतुत्वकल्पनायां गौरवादिति बोध्यम् ।

## तथा तथा प्रतिपन्नत्वं तस्य तस्य धर्म इति विप्रतिपत्तिरपि साधारणीति ।

विप्रतिपत्तेः साधारणधर्मत्वमाह **तथेति** । **तथा तथा प्रतिपन्नत्वं** भौतिकत्वाभौतिकत्वविप्रत्तिविषयत्वं **तस्य तस्य** भौतिकस्याभौतिकस्येत्यर्थः । एवमन्यत्राप्यूह्यम् । ननु विप्रतिपत्तिविषयत्वमज्ञात्वाऽपि विप्रतिपत्तिवाक्यस्थपदैः कोट्युपस्थितौ सत्यां संशयसम्भवात्कथमेवम् । न हि साधारणो धर्म एव तत्र नास्तीति ब्रूमः । अपि तु तदा तस्यापरामर्श इति ।

किञ्च विप्रतिपत्तिविषयत्वं साक्षान्नास्तीति व्यापारानुबन्धितया तद्वाच्यम् । न तत्सम्भवति । विप्रतिपत्तिवाक्ययोः परस्परप्रतिबन्धेन सत्प्रतिपक्षवज्ज्ञानाजनकत्वादिति । मैवम् । भौतिकत्वाभौतिकत्वविशिष्टज्ञाना-

भिप्रायकपदोपस्थाप्यत्वस्य तदभिप्रायकपदसमभिव्याहृतपदोपस्थाप्यस्य वा विप्रतिपत्त्युद्देश्यत्वस्य विप्रतिपत्तिविषयत्वोक्त्यभिधानात् । एतत्प्रतिसन्धानस्य पूर्वोक्तयुक्त्या कल्पनौचित्यात् । अन्यथा कारणान्तरकल्पनापत्तिरिति सर्वमवदातम् ।

### *विपर्ययलक्षणम्*

**विपरीतनिश्चयो विपर्ययः । विपरीतेति सम्यङ्निश्चयव्युदासः । निश्चय इति संशयज्ञानस्य । स च प्रत्यक्षानुमानगमाभासेभ्यो जायते । यथा शुक्तिकायामिदं रजतमित्यादि ।**

निरस्यज्ञानं विना निरासज्ञानं न सम्भवतीति निरस्यं विपर्ययं लक्षयति **विपरीतेति** । संशयान्यतदभाववद्विशेष्यकतत्प्रकारकज्ञानमित्यर्थः । निरस्यं विपर्ययसाधनं दर्शयति **स चेति** ।

**अयथार्थज्ञानमेव नास्तीति प्राभाकरादयः । तन्न । अनुभवसिद्धत्वात् । एतावन्तं कालमहं शुक्तिकामेव रजतत्वेन प्रतिपन्नोऽस्मीत्युत्तरकाले परामर्शाच्च ।**

**अयथार्थमिति** । तथा च ज्ञानतत्साधनयोरयथार्थयोर्व्यावर्त्ययोश्च भावादर्थवत्प्रमाणमित्येव प्रमाणलक्षणमस्त्विति भावः ।। **शुक्तिकामेवेति** । न च शुक्तिकायां रजतत्वप्रकारकज्ञानविषयत्वासंसर्गाग्रहात्मैवायमप्यनुभव इति वाच्यम् । संसर्गविषयत्वे बाधकाभावादिति भावः ।

**प्रतीतं च रजतं देशान्तरे सदेवेति वैशेषिकादयः । ज्ञानस्वरूपमेवेति विज्ञानवादिनः ।**

स्वमतं निर्धारयितुमादौ निर्धारणप्रतियोगिनो दर्शयति **प्रतीतं चेत्यादिना** ।। **वैशेषिकादय इति** । क्लृप्तरजतविषयकत्वेनैवोपपत्तावक्लृप्तविषयकत्वे मानाभावादिति भावः ।। **विज्ञानवादिन इति** । भेदविषयविभावानुपपत्तेरिति भावः ।।

**तत्रैव तात्कालिकमुत्पन्नं सदिति भास्करः । न सन्नासन्नसदसत् किन्त्वनिर्वचनीयमेवेति मायावादिनः ।**

**भास्कर इति** । ज्ञानत्वस्य प्रमात्वव्याप्तत्वादिति भावः ।। **न सन्नासदिति** । बाधापरोक्षत्वाभ्यामिति भावः ।

*विपर्यये आचार्यमतम्*

**असदेव रजतं प्रत्यभात् इति उत्तरकालीनानुभवात् शुक्तिरेव अत्यन्तासद्रजतात्मना प्रतिभातीति आचार्याः । अनध्यवसायः स्वप्नश्च अयथार्थज्ञानान्तरं अस्तीति वैशेषिकाः ।**

युक्तिपुरःसरं निर्धारयति **असदेव रजतमिति** । मतान्तरे त्वेतादृशानुभावानुपपत्तेः । न च तद्देशकालासत्त्वमेवासत्त्वं गोचरयत्यनुभव इति वाच्यम् । सकलदेशकालासत्त्वे बाधकं विना विशेषासत्त्वगोचरत्वे मानाभावात् । न चात्यन्तासतो भानसामग्रीविरह एव बाधकः सन्निकर्षादिस्तादृशस्याभावादिति वाच्यम् । दोषसहितस्यैवेन्द्रियस्य तज्ज्ञानसामग्रीत्वात् । सन्निकर्षस्यापि विषयतानियामकत्वेनोपयोगादिति भावः ।

**किंसंज्ञकोऽयं वृक्ष इत्यनध्यवसायः । स तु कोटीनामतिबाहुल्यादनिर्दिष्टकोटिकः संशय एव । वटादिव्यावृत्तिं पश्यतोऽपि पनसे यत्किञ्चित् संज्ञकोऽयं वृक्ष इत्युत्पद्यते तज्ज्ञानमेव न भवति । किन्तु संज्ञाविषयं जिज्ञासामात्रम् ।**

वैशेषिकानामेवानध्यवसायलक्षणमाह **किंसंज्ञक इति** । ननु वैशेषिकोक्तस्वप्नानध्यवसायरूपं ज्ञानद्वयमस्त्येव । तत्कुतस्तदपि यथार्थपदव्यावृत्तत्वेन न प्रदर्शितमित्यत आह **स तु कोटीनामिति** । तथा च संशयत्वेन तस्यापि व्यावर्त्यकुक्षिनिक्षेपोऽस्तीति भावः । ननु व्यावर्तकधर्मग्रहः संशये कारणम् । तथा च यदा व्यावर्तकधर्मग्रहे सति किंसंज्ञको वृक्ष इत्याकारकमुत्पद्यते । तत्कथं संशयेऽन्तर्भवेत् । संशयोत्पादकस्य तदानीमभावादित्यत आह ।। **तज्ज्ञानमेव न भवतीति** । विशिष्टज्ञानत्वावच्छिन्नं प्रत्येव व्यावर्तकधर्मग्रहत्वेन हेतुत्वादिति भावः । किं तदित्यत आह **जिज्ञासामात्रमिति** ।। किंशब्दजन्योपस्थितिप्रकारीभूतधर्मवानयमिति इच्छामात्रमित्यर्थः ।

**स्वप्नेऽपि गजादिदर्शनं चेद्यथार्थमेव । मानसवासनाजन्यत्वाद्गजादीनाम् । तेषु यद्बाह्यत्वज्ञानं स विपर्यय एव ।**

ननु तथाऽपि स्वप्नोऽतिरिच्यत इत्यत आह **स्वप्नेऽपीति** । स्वप्नावस्थायामित्यर्थः ।। **यथार्थमेवेति** । तथा च तस्य ज्ञानान्तरत्वेऽपि यथार्थत्वेन सङ्ग्राह्यत्वादेव न व्यावृत्त्यकोटिनिक्षेप इति भावः । ननु गजादेस्तदा तत्राभावाद्विषयमव्याप्तं याथार्थ्यं कुतः स्वप्न इत्यत आह **मानसवासनेति** । ननु गजादिषु यद्वीथीस्थत्वज्ञानं तद्भिन्नमेव । न च तदपि यथार्थमेव । वासनाजन्यगजस्य वीथिस्थत्वाभावात् । न च वासनयैव वीथिस्थत्वमपि गजे जायत इति वाच्यम् । पूर्वावगतवीथ्याः पूर्वोत्पन्नत्वेन तद्वीथिस्थत्वस्य तत्काले वासनाया अप्युनुत्पत्तेरत

आह **स विपर्यय एवेति** । इदं रजतमित्यादिवदसद्विषय एवेत्यर्थः । तथा च विपर्ययत्वेन तस्योपादानान्न न्यूनत्वमिति भावः ।

*ऊहायाः संशयेऽन्तर्भावः*

**बाह्यालीप्रदेशे पुरुषेणानेन भवितव्यमित्यूहापरनामकं सम्भावनाज्ञानमप्यन्यतरकोटिप्रापकप्राचुर्यनिमित्तोऽन्यतरकोटिप्रधानः संशय एव ।**

ननु सम्भावनारूपं ज्ञानान्तरमस्ति तत्कुतो न व्यावर्तितमित्यत आह **सम्भावनाज्ञानमपीति** । संशयभिन्नस्य तस्याभावान्न संशयभिन्नत्वेन तस्योपादानमिति भावः ।

*तर्कस्यानुमानत्वम्*

**तर्कोऽनुमानमेवेति वक्ष्यामः । स्मृतावतिव्यापकं प्रमाणलक्षणमिति चेन्न । तस्या अपि प्रमाणत्वेन लोकवेदयोः संव्यवहारात् ।**

**तर्कोऽनुमानमेवेति** । तथा च यथार्थत्वे सङ्ग्राह्यमेव । अयथार्थत्वे भ्रमानुमितिवद्विषयत्वेन सङ्ग्रह एवेति भावः । स्मृतावित्युपलक्षणम् । स्मृतिसाधने चेत्यपि द्रष्टव्यम् । एवमग्रेऽपि ।। **तस्या अपीति** । सङ्ग्राह्यत्वान्नातिव्याप्तिरित्यर्थः ।

यद्यपि परैस्तत्र व्यवहारो नास्तीत्येवोच्यते । तथाऽपि यथार्थानुभवत्वापेक्षया यथार्थज्ञानस्य प्रमापदप्रवृत्तिनिमित्तत्वे लाघवेन परवचनस्य निरुपपत्तिकत्वादिति भावः । परमतखण्डनं विना न स्वमतसिद्धिरिति तत्खण्डयितुमुपक्रमते । प्राभाकराणामित्यतदग्रेतनेनायुक्तमित्यनेन सम्बध्यते । न च प्राभाकरेण तयोरनभ्युपगमान्नातिव्याप्तिः । अनुभवेन प्रवृत्त्यन्यथाऽनुपपत्त्या चानीयमानयोरनभ्युपगममात्रेणापलपितुमशक्यत्वादिति भावः ।

**अनुभूतिः प्रमाणम् । स्मृतिव्यतिरिक्तं ज्ञानमनुभूतिरिति प्राभाकराणां लक्षणम् । संशयविपर्ययव्यापकत्वात् स्मृतौ वेदादिषु च यथार्थज्ञानसाधनेष्वव्यापकत्वाच्च अयुक्तम् । ज्ञातताप्राकट्यापरपर्यायवाच्यस्य प्रमेयाश्रितस्य प्रकाशविशेषस्य साधनं क्रियाज्ञानं प्रमाणमिति भाट्टानां लक्षणमप्ययुक्तम् ।**

यद्वैतदस्वरसादाह **स्मृताविति** । तस्यानुपदमेव प्रमाणत्वव्यवस्थापनादिति भावः । यद्वैतदस्वरसादेवाह **वेदादिष्विति** । वेदे प्रमाणपदस्य नियमतः प्रयोगाद्वेदस्य प्रधानत्वमपेक्ष्येदं द्रष्टव्यम् । न च प्रमाणपदं प्रमातत्साधनयोर्भिन्नप्रवृत्तिनिमित्तकमेवेति वाच्यम् । एकप्रवृत्तिनिमित्तकत्वे सम्भवति भिन्नप्रवृत्तिनिमित्तकत्व-

कल्पनायां गौरवादिति भावः ।। **प्रकाशविशेषस्येति** । स्वविषयकविशेषस्येत्यर्थः । क्रियेत्यस्यैव व्याख्यानं **ज्ञानमिति** । अत्र ज्ञाततासाधनं ज्ञानप्रमाणमित्येव लक्षणम् । इतरत्तु तत्परिचायकतयोक्तमित्यवधेयम् ।

*ज्ञाततानिराकरणम्*

**ज्ञानव्यतिरिक्तायां ज्ञाततायां प्रमाणाभावेनासम्भावित्वात् ।**

अत एव तावदेव निष्कृत्य दूषयति **ज्ञानव्यतिरिक्तायामिति** । न च ज्ञानस्य घटीयत्वानुपपत्तिरेव घटनिष्ठज्ञातताजनकत्वे मानम् । स्वभावादेव ज्ञानस्य घटीयत्वात् । अन्यथा ज्ञानस्य नियमतो घटनिष्ठज्ञानता-जनकत्वमित्यपि न स्यान्नियामकाभावादिति भावः ।

**अतीतादिविषयज्ञानानामाश्रयाभावेन तज्जनकत्वायोगाच्च । वेदादिष्वव्याप्तेश्च । अनधिगततथाभूतार्थज्ञानं प्रमाणमिति तेषामेव लक्षणान्तरमप्ययुक्तम् । स्मृतौ वेदादिषु चाव्याप्तेः ।**

एतदस्वरसादाह **अतीतादीति** । ननु ज्ञातताजननयोग्यत्वमर्थः । तथाच अतीतविषयकज्ञानस्या-श्रयरूपसहकारिविरहादजनकत्वेऽपि योग्यत्वसत्त्वात् इत्यत आह **वेदादिष्विति** ।। **तथाभूतेति** । ज्ञानप्रकारीभूतधर्मवदित्यर्थः । **तेषामेव** = भाट्टानामेव । **स्मृताविति** । यथा चैतत्तथोपपादितमधस्तात् । इदमुपलक्षणम् । धारावाहिकज्ञाने चेत्यपि द्रष्टव्यम् ।

**सम्यगनुभवसाधनं प्रमाणमिति नैयायिकादयः । तदप्यसत् । यथार्थज्ञानेऽव्याप्तेः । प्रमाव्याप्तं प्रमाणमित्युदयनः । तदपि सर्वस्यापि प्रमेयस्येश्वरप्रमाव्याप्तत्वेनाति-व्यापकत्वादयुक्तम् ।**

**यथार्थज्ञानेति** । तस्यापि प्रमाणपदप्रयोगविषयत्वेन लक्ष्यत्वादिति भावः । **प्रमाव्याप्तमिति** । नियतप्रमासम्बन्धवदित्यर्थः । अत्र नियतप्रमासम्बन्धवत्त्वं न जन्यजनकभावसम्बन्धेन । ईश्वरासङ्ग्रहात् । नाप्याश्रयत्वेन । साधनासङ्ग्रहात् । किन्तु यथाकथञ्चित् सम्बन्धेन वाच्यम् । तथासति विषयविषयिभावस्य प्रमासम्बन्धस्य सर्वत्र सत्त्वादतिव्याप्तिरित्यत आह **तदपीति** ।।

**साधनाश्रययोरन्यतरत्वे सति प्रमाव्याप्तत्वं विवक्षितमिति चेन्न । आश्रयग्रहण-वैय्यर्थ्यात् । ईश्वरस्यापि प्रामाण्यसिद्ध्यर्थं तदिति चेन्न । कर्तरि प्रमाणशब्दस्य अननुशासनात् । यथार्थज्ञानेषु अव्याप्तेश्च । तस्मात् याथार्थ्यमेव प्रमाणलक्षणं युक्तम् ।**

**साधनाश्रययोरन्यतरत्वे सतीति** । साधनाश्रयत्वान्यतरसम्बन्धेन प्रमाव्याप्तत्वमित्यर्थः ।। **आश्रयस्येति** । प्रमासाधनत्वमेव लक्षणमस्त्वित्यर्थः ।। **ईश्वरस्यापीति** । अन्यथेश्वरस्य प्रमायां साधनत्वाभावेन प्रमाणत्वं न स्यादिति भावः । ननु केनोच्यत ईश्वरः कर्तेत्यपि त्वाश्रय इति । तत्र ल्युटोऽनुशासनमस्त्येवेत्यत आह **यथार्थज्ञानेष्विति** ।।

*केवलप्रमाणलक्षणम्*

**द्विविधं प्रमाणं केवलमनुप्रमाणं चेति । तत्र यथार्थज्ञानं केवलप्रमाणम् । यथार्थमिति संशयादिव्युदासः । ज्ञानमिति प्रत्यक्षस्य । लिङ्गज्ञानं वाक्यज्ञानं च लिङ्गिनि वाक्यार्थे चानुप्रमाणमपि लिङ्गे वाक्ये च केवलप्रमाणमिति नातिव्याप्तिः । इदं च साक्षाज्ज्ञेयविषयीकारित्वात्केवलमित्युच्यते ।**

**केवलमिति** । साक्षाज्ज्ञेयविषयकं यथार्थमित्यर्थः ।। **अनुप्रमाणमिति** । यथार्थत्वे सति परम्पराज्ञेयविषयकमित्यर्थः । नन्वनुमाने शाब्दे च यथार्थज्ञानसाधने इदं लक्षणमतिव्यापकमत आह **लिङ्गज्ञानं चेति** । तथा च ज्ञानमानकरणतापक्षे ज्ञानपदेनैव वारणम् । लिङ्गादिज्ञानकारणतापक्षे तस्य द्विविधप्रमाणरूपत्वात् सङ्ग्राह्यत्वमेवेत्यर्थः । ननु किमिति तत्केवलमत आह **इदं चेति** ।। **तदिति** । केवलप्रमाणमित्यर्थः ।

*केवलप्रमाणस्य चातुर्विध्यम्*

**तच्च चतुर्विधम् । ईश्वरज्ञानं लक्ष्मीज्ञानं योगिज्ञानमयोगिज्ञानं चेति । तत्र सर्वार्थविषयकमीश्वरज्ञानम् । नियमेन यथार्थम् । तत्स्वरूपमनादिनित्यम् । स्वतन्त्रम् । निरतिशयस्पष्टं च ।**

प्रथमोद्दिष्टत्वादीश्वरज्ञानं लक्षयति **तत्र सर्वार्थविषयमिति** ।। सर्वधर्मिनिष्ठयावद्धर्मप्रकारकमित्यर्थः ।। **नियमेनेति** । सर्वप्रकारावच्छेदेनेत्यर्थः ।। **स्वतन्त्रमिति** । स्वाधिकविषयकज्ञानासहकारिकमित्यर्थः । यद्वा स्वान्यूनविषयकज्ञानासहकारिकज्ञानमित्यर्थः । यद्वेच्छाद्यतिरिक्तत्वे सतीश्वरातिरिक्तत्वे सति स्वाश्रयाधिकासहकारिकमित्यर्थः ।। **निरतिशयस्पष्टं चेति** । सर्वोत्कृष्टत्वाश्रय इत्यर्थः । अत्र तु सर्वार्थविषयत्वं स्वातन्त्र्यं निरतिशयस्पष्टत्वं च प्रत्येकमेकमेव लक्षणम् । साहित्यवैय्यर्थ्यात् । इतरत्तु स्वरूपनिर्वचनमित्यवधेयम् ।

**ईश्वरे त्वसार्वत्रिकमन्यत्रानालोचनेऽपि सर्वविषयं लक्ष्मीज्ञानम् । तदपि नियमेन यथार्थम्। तत्स्वरूपमनादि नित्यं च । ईश्वरैकाधीनम् । तदपेक्षया स्पष्टत्वे न्यूनम् । स्पष्टत्वं च अपरोक्षत्ववज्ज्ञानगत एव विशेषो न विषयोपाधिकः ।**

लक्ष्मीज्ञानं लक्षयति **ईश्वरे त्विति** । अनालोचनेऽपि प्रणिधानं विनाऽपीत्यर्थः ।। **सर्वविषयमिति** । प्रणिधानं विनेश्वरातिरिक्तसकलधर्मिनिष्ठयावद्धर्मप्रकारकमित्यर्थः ।। **ईश्वरैकाधीनमिति** । स्वाश्रयाधिके-श्वरैकसहकारिकमित्यर्थः ।। **तदपेक्षयेति** । ईश्वरज्ञाननिष्ठस्पष्टत्वमात्रावधिकापकर्षाश्रयस्पष्टत्ववदित्यर्थः । अत्रापि पूर्ववत्प्रत्येकमेव लक्षणमित्यवधेयम् । ननु स्पष्टत्वमशेषविशेषविषयकत्वम् । तच्च सर्वार्थविषय-मित्यनेन गतार्थमित्यत आह **स्पष्टत्वं चेति** ।

**योगप्रभावलब्धातिशयं योगिज्ञानम् । तत् त्रिविधम् । ऋजुयोगिज्ञानं तात्त्विक-योगिज्ञानमतात्त्विकयोगिज्ञानं चेति । ऋजवो नाम ब्रह्मत्वयोग्या जीवाः । ईश्वरादन्यत्र आलोचने सर्वविषयं तज्ज्ञानम् । ईश्वरे तु असार्वत्रिकमेव ।**

योगिज्ञानं लक्षयति **योगेति** । अतिबहुविषयकत्वलक्षणः ।। **ऋजुज्ञानमिति** । ब्रह्मत्वभवनयोग्यज्ञान-मित्यर्थः ।। **तात्त्विकेति** । ब्रह्मत्वयोग्यतात्त्विकमित्यर्थः ।। **अतात्त्विकेति** । तत्त्वाभिमानियोगिज्ञानमित्यर्थः । इतरयोगिज्ञानापेक्षया ऋजुयोगिज्ञाने प्रकर्षमाह **ईश्वरादन्यत्रेति** । गुणगुणिनोरभेदादाह **ईश्वरे त्विति** ।।

**तद् द्विविधम् । स्वरूपं मनोवृत्तिरूपं चेति । तत्र स्वरूपमनादिनित्यम् । योग-प्रभावादामुक्तेर्व्यक्त्यतिशयोपेतम् । मुक्तावेकप्रकारम् । वृत्तिज्ञानं तु प्रवाहतोऽनादि । योगानुगृहीत[1]तत्प्रत्यक्षादिजन्यम् । मुक्तौ तु नास्त्येव । द्वयमपि नियमेन यथार्थम् । ईश्वरे त्वन्यजीवेभ्योऽधिकविषयम् ।**

**तदिति** । ऋजुज्ञानमित्यर्थः ।। **स्वरूपमिति** । स्वाभिन्नमित्यर्थः ।। **योगेति** । योगप्रभावान्मुक्तिपर्यन्तं व्यक्त्यतिशयोऽहरहरधिकाधिकविषयत्वं तदुपेतमित्यर्थः । **एकप्रकारमिति** । न्यूनाधिकविषयत्वरहित इत्यर्थः । **प्रवाहतोऽनादीति** । सजातीयध्वंसव्याप्यप्रागभावप्रतियोगीत्यर्थः ।। **योगेति** । इदमपि योगप्रभावादामुक्तेः प्रवाहतोऽतिशयोपेतमित्यवधेयम् ।। **तत्प्रत्यक्षादिजन्यमिति** । न च प्रमाणान्तरजन्यमपि तस्य ज्ञानमस्ति । योगाख्यसन्निकर्षस्य सर्वदा सत्त्वेन प्रत्यक्षस्यैवोत्पत्तेः समाने विषये प्रत्यक्षसामग्र्या बलवत्त्वात् । न च सिषाधयिषया तथेति वाच्यम् । व्यवहारादेः प्रत्यक्षत एवोत्पन्नत्वेन सिद्धिविशेषेच्छायां मानाभावात् । तदिच्छाया न्यायनियन्त्रितत्वादिति वाच्यम् । तदज्ञानस्य परोक्षत्वापरोक्षत्वादिना प्रमाणसिद्धतया तज्ज्ञानमात्रे योगस्य सहकारित्वमिति भावः ।। **मुक्ताविति** । अदृष्टाद्यभावादिति भावः ।

---

१. तदिति टीकानुसारेण योजितपदम् ।

तदतिरिक्तास्तत्त्वाभिमानिनो देवास्तात्त्विकाः । अनादित्वे सति ईश्वरादन्यत्र आलोचनेऽपि असर्वविषयं तज्ज्ञानम् । तदपि स्वरूपं बाह्यं चेति द्विविधम् । तस्यानादित्वं पूर्ववत् । स्वरूपं ययार्थमेव । बाह्यं कदाचिदयथार्थमपि ।

तात्त्विकज्ञानं लक्षयितुमादौ तात्त्विकाँल्लक्षयति **तदतिरिक्ता इति** । ब्रह्मणोऽपि तत्त्वाभिमानित्वादेत-दुक्तम् । अतात्त्विकज्ञानं व्यवच्छेत्तुमाह **अनादित्वे सतीति** । यद्यपि व्यक्त्या प्रवाहेन वोभयरूपमप्यतात्त्विक-ज्ञानमप्यनादि । तथाऽपि योगानुग्रहांशेऽनादित्वं द्रष्टव्यम् । एतस्यानादियोगित्वादतात्त्विकस्य सादियोगित्वा-दिति भावः ।। **पूर्ववदिति** । स्वरूपस्य व्यक्त्या मनोवृत्तिरूपस्य बाह्यस्य प्रवाहेनेत्यर्थः ।

तद्व्यतिरिक्ता देवादयो योगिनोऽतात्त्विकाः । सादित्वे सतीश्वरादन्यत्राल्पाज्ञानयुक्तं तज्ज्ञानम् । तदपि पूर्ववद् द्विविधम् । तत्र स्वरूपस्य सादित्वं व्यक्त्यपेक्षया । अन्यस्य प्रवाहोत्पत्त्यपेक्षया । याथार्थ्यानियमादि पूर्ववत् ।

पूर्वोक्तयोगिद्वयातिरिक्तायोगिनोऽतात्त्विकाः । के त इत्यपेक्षायामुक्तं **देवादय इति** । आदिपदाद्गन्ध-र्वादिपरिग्रहः ।। **ईश्वरादिति** । ईश्वरे त्वज्ञानप्रचुरमेवेत्यर्थः ।। **द्विविधमिति** । स्वरूपं बाह्यं चेत्यर्थः ।। **सादित्वमिति** । सैव स्वरूपव्यक्तिः। कदाचिद्योगानुग्रहवती कदाचिन्नेत्यर्थः ।। **अन्यस्येति** । बाह्यप्रवाहे किञ्चिद्योगाननुग्रहोत्पन्नं किञ्चित्तदनुग्रहोत्पन्नमित्यर्थः ।। **याथार्थ्येति** । स्वरूपं यथार्थमेव । बाह्यं कदाचि-दयथार्थमपीत्यर्थः ।

तद्व्यतिरिक्ता जीवा अयोगिनः । ईश्वरादन्यत्राज्ञानप्रचुरं तज्ज्ञानम् । तदपि पूर्ववद् द्विविधम् । उत्पत्तिविनाशवच्च ।

अयोगिज्ञानं लक्षयितुमादावयोगिनं लक्षयति **तद्व्यतिरिक्ता इति** ।। **जीवा इति** । योगप्रभाव-लब्धातिशयज्ञानवद्भिन्ना इत्यर्थः । एतच्चेश्वरादावप्यस्तीत्यत उक्तं **जीवा इति** । ईश्वरेऽज्ञानप्रचुरमतात्त्विकस्यापि ज्ञानमत उक्तम् **ईश्वरादन्यत्रेति** । बाह्यमभिप्रेत्याह **उत्पत्तिविनाशवदिति** ।

अयोगिनोऽपि त्रिविधाः । मुक्तियोग्या नित्यसंसारिणस्तमोयोग्याश्चेति । तत्र मुक्तियोग्यानां स्वरूपज्ञानं यथार्थमेव । नित्यसंसारिणां तु मिश्रम् । अन्येषामयथार्थ-मेव । बाह्यं तु त्रयाणामप्युभयरूपम्(विध)मिति ।

**योग्यत्वे सतीति** ।। प्रतियोगितत्सन्निकर्षातिरिक्तप्रतियोग्यनुभावकसमवधाने सतीत्यर्थः ।।

एवं प्रातर्गजाद्यभावज्ञानमनुपलब्धिलिङ्गजन्यम् । अभावस्येन्द्रियसन्निकर्षानुपपत्तिरिति चेन्न । भाववदभावस्यापीन्द्रियसन्निकर्षे बाधकाभावात् । बहुलज्ञानेऽल्पज्ञानं सम्भवः । यथा शतमस्तीति ज्ञाने पञ्चाशज्ज्ञानम् । तदप्यनुमानमेव । देवदत्तः पञ्चाशद्वान् । शतवत्त्वात् । यथाऽहमिति प्रयोगसम्भवात् ।

**एवमिति** । प्रातश्चत्वरे गजो नासीत् । स्मरणार्हत्वे सत्यस्मर्यमाणत्वादिति स्मरणाभावो लिङ्गमेवेत्यर्थः ।। **बहुलेति** । अधिकवृत्तिसङ्ख्याज्ञाने न्यूनवृत्तिसङ्ख्याज्ञानमित्यर्थः ।।

### *परिशेषलक्षणम्*

प्रसक्तप्रतिषेधे परिशिष्यमाणे बुद्धिः परिशेषः । यथा देवदत्तयज्ञदत्तावेताविति ज्ञाने सत्येकस्मिन्नायं यज्ञदत्त इति प्रतिषेधे देवदत्तबुद्धिः । इयमनुमानजन्या । अयं देवदत्तः । देवदत्तयज्ञदत्तयोरन्यतरत्वे सत्ययज्ञदत्तत्वात् । व्यतिरेकेण यज्ञदत्तवदिति प्रयोगोपपत्तेः। उपक्रमादीन्यप्यनुमानान्येव । अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यम् । यथाऽत्र वटे वैश्रवणोऽस्तीति वाक्यं तदागम एव ।

**प्रसक्तेति** ।। उपस्थिताभावज्ञानेनैककोटिज्ञानमित्यर्थः ।। **उपक्रमादिति** । तात्पर्ये तेषां लिङ्गत्वादिति भावः ।। **अनिर्दिष्टेति** । विशेषतोऽपरिज्ञातवक्तृकमित्यर्थः ।।

एवमन्यान्यपि प्रमाणान्युक्तेष्वेवान्तर्भाव्यानि ।

**एवमिति** । श्रुतिलिङ्गादीन्यपीत्यर्थः । तत्र श्रुतेः स्फुटोऽन्तर्भावः। लिङ्गस्य तु शेषाशेषित्वादौ लिङ्गत्वम् । वाक्यादेश्च स्फुटोऽन्तर्भावः । प्रसङ्गादाह **तदेषामिति** ।।

### *प्रामाण्यस्वतस्त्वादिविमर्शः*

नन्वेतेषां प्रमाणानां प्रामाण्यमप्रमाणानामप्रामाण्यं च केनोत्पद्यते केन वा ज्ञायत इति चेत् । उच्यते ।

ननूक्तप्रमाणानामपि वादिविप्रतिपत्तेः प्रामाण्यकारणस्य विशिष्य निश्चये परस्परं सर्वत्र दोषदर्शने सामान्यतोऽपि तन्निश्चयसम्भवात्तत एव प्रामाण्यग्राहकस्याप्यनवधारणाच्च न प्रामाण्यव्यवस्था सम्भवतीति सांवृत एव प्रमाणप्रमेयभावो न वास्तव इत्याशयेन तटस्थः प्रत्यवतिष्ठते **नन्वेतेषामिति** ।। प्रमाणपदस्य भावकरणव्युत्पन्नतयोभयत्र प्रश्नोऽयम् । गुणस्यानुगतस्यानिर्वचनादननुगतस्य चानुगतकार्याहेतुत्वादित्याशयः । प्रामाण्याश्रयकारणस्य प्रामाण्यकारणत्वमुपचर्य प्रश्नः । न च प्रामाण्यहेतुदोषाभाव एव तद्धेतुरस्तु तदभावकूटस्य हेतुत्वादननुगमस्य तत्रादोषत्वादिति मीमांसकमतमाशङ्क्याह **अप्रमाणानामिति** ।। अननुगमेन दोषाभावस्य प्रामाण्यहेतुत्वमेव न सम्भवति । न वा तदभावकूटस्य प्रामाण्यहेतुत्वम् । शङ्खे पीतत्वभ्रमहेतुपीतद्रव्ये सति तदभावाभावेऽप्यपीतत्वप्रमोत्पत्तेरित्याशयः । ननु प्रामाण्याप्रामाण्ययोः प्रमाणसिद्धत्वे तत्कारणेनावश्यं केनचिद्भवितव्यमिति किमत्र विशेषजिज्ञासयेत्याशङ्क्याह **केनेति**[1] । न स्वतःप्रामाण्यग्रहोऽनभ्यासदशापन्नज्ञाने संशयानुपपत्तेः । नापि परतोऽनवस्थापत्तेरिति प्रमाणसिद्धत्वमेवासिद्धमित्याशयः ।।

## तत्र ज्ञानानामुभयं स्वत एवेति साङ्ख्या मन्यन्ते । ज्ञानजनकातिरिक्तजनकानपेक्षत्वमुत्पत्तौ स्वतस्त्वम् ।

**तत्रेति** । प्रामाण्याप्रामाण्यकारकज्ञापकविचारे कर्तव्य इत्यर्थः । उभयं प्रामाण्याप्रामाण्यं चोत्पद्यते ज्ञायते चेति शेषः । ननु स्वत एवोत्पद्यत इत्ययुक्तम् । पूर्वोत्तरभावविशेषरूपकार्यकारणभावस्य भेदनियतत्वात् । स्वशब्दस्य स्वकयार्थत्वेऽनिष्टापत्तिरिति पारिभाषिकं स्वत इत्यस्यार्थमाह **ज्ञानजनकातिरिक्तेति** ।। प्रमातदन्यसाधारणधर्मावच्छिन्नकार्यताप्रतियोगिककारणातिरिक्तानपेक्षत्वमित्यर्थः । अन्यथा गुणदोषयोरपि ज्ञानजनकत्वेन परतः पक्षसाधारण्यादिति ध्येयम् । नन्वेवं सर्वत्र प्रमात्वाप्रमात्वप्रसङ्गे तदुभयवैचित्र्यानुपपत्तिः । कारणवैचित्र्याभावात् । तस्माद्यत्कार्यं यत्कार्यविजातीयं तत्कार्यविजातीयकरणजन्यम् । घटविजातीयपटादिवदिति द्वयोरपि परतस्त्वमिति चेन्न । द्वयोरप्यौत्सर्गिकयोः क्वचिदपवादकेनापवादानपवादाभ्यां वैचित्र्योपपत्तौ गुणदोषयोः कारणत्वाकल्पनादिति तात्पर्यम् ।

## ज्ञानज्ञापकातिरिक्तज्ञापकानपेक्षत्वं ज्ञप्तौ स्वतस्त्वम् ।

ननु तथाऽपि प्रामाण्यस्याज्ञानरूपत्वेन स्वतो ज्ञप्तिरनुपपन्ना । न च शब्दोऽयं स्वाश्रयपरः । ज्ञानस्य स्वसन्निकर्षव्याप्याद्यजन्यत्वेन स्वाविषयतया स्वाधर्मप्रामाण्यग्राहकत्वात् । प्रामाण्यस्य ज्ञानघटितत्वेन धर्म्यग्रहेऽपि शब्दादिवद् ग्रहस्यासम्भवात् । ज्ञानं प्रमेति ज्ञानगतत्वेन प्रामाण्यग्रहस्य व्यवहाराङ्गत्वेन प्रकृते

[1]. केवलेति इति मुद्रितः प्रामादिकपाठः ।

विचारणीयस्यालाभश्च । नापि स्वाश्रयग्राहकपरः । परतस्त्वपक्षाविशेषादित्यत आह **ज्ञानज्ञापकातिरिक्तेति** ।। प्रतिबन्धदोषासमवहिततया वस्त्वाश्रयानुव्यवसायग्राह्यत्वमित्यर्थः । अन्यथा परतः पक्षावरणादिति ध्येयम् ।

**उभयं परत एवेति नैयायिकादयः ।**

ननु नैतद्युक्तम् । प्रमात्वाप्रमात्वयोः सामान्यकारणताश्रयतत्तद्व्यक्तिभेदाधीनत्वात् । व्यक्तिभेदवदुभयमज-वैजातिवच्चानुगतधर्मस्यापि तथैवोपपत्तेः । स्वरूपसम्बन्धगर्भत्वेन प्रमात्वस्यानुगमासम्भवाच्च । यद्वा दोषतदभावौ सामग्र्यावच्छेदकौ न हेतू । तथा चानुगतकार्यस्याननुगतादनुत्पत्तेरपवादकदोषगुणाभावयोरवच्छेदकत्वेऽन्यत्रापि प्रतिबन्धकाभावहेतुतोच्छेदापत्तेश्च । किञ्च तयोरवच्छेदकत्वहेतुत्वे च असाधारणकारणसिद्धेः परतस्त्वपर्यव-सानात् । न चासाधारणभावानपेक्षत्वं तत्त्वं गौरवात् । तथात्वेऽपि वा गुणदोषाभावापेक्षया तदुभयोरेव हेतुत्वमवच्छेदकत्वं वा लाघवादुचितम् । किञ्चाविशेषादर्शनादेर्भावस्य हेतुत्वमेवापतितमेवेत्यस्मिन्मते साङ्ख्या इत्यनेन अस्वारस्यं विभाव्य मतान्तरमाह **उभयं परत एवेति** ।। आदिपदार्थो वैशेषिकः ।

*परतस्त्वलक्षणम्*

**ज्ञानजनकातिरिक्तकारणजन्यत्वमुत्पत्तौ परतस्त्वम् ।**

ननूपपत्तिः सर्वस्य परत एव । ज्ञप्तिरपि ज्ञानभिन्नस्य तथैवेति सिद्धसाधनमाशङ्क्य च तदुभयं व्याचष्टे **ज्ञानजनकेति** । यद्यपि गुणदोषयोरपि ज्ञानहेतुत्वाद्बाधः । न च प्रमात्वाप्रमात्वयोरेव ज्ञानभिन्नानित्योपाधि-रूपयोस्तद्वयहेतुर्न ज्ञान इति वाच्यम् । विषयाविशेषरूपप्रामाण्याज्ञानभिन्नत्वासम्भवात् । विषयात्मकत्वे तु सुतरां तद्वयाजन्यत्वात् । तथाऽपि पूर्वोक्तसाध्याभावोऽर्थः न च तत्रापि तत्प्रागभावस्य साधारण्यात्तदादाय सिद्ध-साधनम् । भावत्वेनापि कारणविशेषणात् । प्रमामात्र इत्यनेकवृत्तिधर्मावच्छिन्नकार्यताप्रतियोगिककारणजन्यत्वस्य विवक्षितत्वादिति भावः । न चैवमपि दोषाभावेन सिद्धसाधनम् । गुणेनान्यथासिद्ध्या तद्धेतुत्वाकल्पनात् । न च भूयोऽवयवेन्द्रियसन्निकर्षसत्त्वेऽपि पित्तादिप्रतिबन्धान्न श्वैत्यादिप्रमेति तदभावहेतुतावश्यकति वाच्यम् । क्वचि-दन्वयव्यतिरेकाभ्यां किञ्चिदभावस्य हेतुत्वेऽपि पक्षतावच्छेदकप्रमाणत्वावच्छेदेन साध्यसिद्ध्यभावेन सिद्ध-साधनासम्भवात् । अर्थान्तरस्य गौरवेणैव निरासादित्याशयः ।।

**ज्ञानज्ञापकातिरिक्तप्रमाणापेक्षत्वं ज्ञप्तौ परतस्त्वम् । तत्र ज्ञानमिन्द्रियादिजन्यं प्रामाण्यं पुनरिन्द्रियादिगुणजन्यम् । तथाऽप्रामाण्यं तद्दोषजन्यम् ।**

**ज्ञानज्ञापकेति** ।। दोषासमवहितस्ववृत्तिवर्तमानज्ञानग्राहकयावद्ग्राह्यत्वम् । परमतसिद्धप्रामाण्यग्राहकभिन्न-यावद्ग्राह्यत्वं वेत्यर्थः । यथाश्रुते प्रामाण्यग्राहकलिङ्गादेरपि ज्ञानग्राहकत्वाद्बाधापत्तेरित्यवधेयम् । प्रामाण्यस्य परतस्त्वमुत्पत्तौ व्युत्पादयति **तत्रेति** ।। अप्रामाण्योत्पत्तौ तदाह **अप्रामाण्यमिति** ।।

**एवं ज्ञानं मानसप्रत्यक्षवेद्यम् । तत्र प्रामाण्यमप्रामाण्यं च संवादविसंवादलिङ्ग-गम्यमिति । प्रामाण्यं परतोऽप्रामाण्यं स्वत इति बौद्धाः ।**

ज्ञप्तौ परतस्त्वमाह **एवमिति** । ज्ञप्तौ तयोः संवादेति संवादिप्रवृत्तिजनकत्वेत्यर्थः । आदिपदार्थस्तु गन्धादिव्याप्यवृत्तिपृथिवीत्वादिव्यापकप्रकारकज्ञानत्वादि ।

नन्वेवं प्राथमिकप्रामाण्यज्ञानानुपपत्तिः । साध्याप्रसिद्ध्याऽन्वयव्यतिरेकव्याप्त्योरग्रहात् । व्याघातदण्डस्य स्वार्थानुमाने सर्वत्र सम्भवात् । क्वचिन्मनसा प्रामाण्यग्रहे सर्वत्र तथात्वादविशेषात् । न च प्राग्भावीयसंस्कारा-त्प्रामाण्यस्मृतिः । अपूर्वचैत्रत्वादिप्रकारकज्ञानप्रामाण्यस्य प्रागनुभवेन स्मरणायोगात् । प्रमेयत्वादिसामान्येन तत्स्मरणस्य प्रकृतानुमानानुपयोगात् ।

अथ प्रामाण्यघटकं घटकत्वप्रकारकत्वं पुरोवृत्तिविशेष्यकत्वं पुरोवर्तिनं घटत्वं जानामीत्यनुव्यवसायगम्य-मेव तद्विशेष्ये च घटत्ववत्त्वं ग्राह्यमिति विचारः । तथा चेदं ज्ञानं घटकत्वाभाववद्विज्ञानविशेष्यत्वं घटवृत्ति । अघटावृत्तित्वेऽपि वृत्तिमत्त्वादित्यादिना प्रामाण्यानुमितिरिति चेत् ।

मैवम् । प्रामाण्यवदप्रामाण्यस्यापि दुर्ग्रहत्वेन तदभावानुमानासम्भवात् । मनसा तद्ग्रहे प्रामाण्यग्रहोऽपि तथैवास्तु किमनुमानप्रयासेनेति चेत् । अत्र वदन्ति । न तावत्साध्यप्रसिद्धौ पक्षतद्विशेष्यग्रहे वोपायनियमः । क्वचित् कथञ्चिदुपपत्तेः । तदत्र केचिन्मनसैव प्रमात्वग्रहः । तथाहि । अयं घट इति ज्ञाने तदनुव्यवसाये च सति पुनस्तथैव ज्ञाने स्मृत्युपनीयतप्रथमव्यवसाये द्वितीयव्यवसायोपनीतघटत्वविशिष्टत्वस्य मनसा परिच्छेदे न किञ्चिद्बाधकम् । काव्यमूलसंसर्गज्ञानत्वात् । एवं कुत्रचिच्चक्षुरादिनाऽपि प्रमात्वज्ञानं घटत्वेन गृह्यमाणे पूर्वा-नुव्यवसायोपनीतघटत्वप्रकारकज्ञानविशेष्यकप्रमात्वज्ञानमयं घटोऽत्र च घटत्वप्रकारकमिदं ज्ञानमित्येतावतैव निष्कपटव्यवहारोपपत्तेः । तावद्दूरस्यानपेक्षितत्वात् । अपेक्षितत्वेऽपि मानसज्ञानान्तरसम्भवात् ।

एवं क्वचित्प्रागभावीयसंस्कारवशात्स्मृतस्य क्वचित्तु दैवादप्रामाण्यस्यैव प्रामाण्यग्रहोक्तप्रकाराभ्यां प्रथमोपस्थितौ तदभावानुपूर्वकोक्तानुमानेन प्रामाण्यस्यानुमिति र्भवतीति न काचिदनुपपत्तिः । ग्रन्थस्तु संवादविसंवादलिङ्गादित्यादिपदलिङ्गयोर्व्यत्यासेन योजनीयमिति ।

अत्रायं प्रयोगः । चाक्षुषघटत्वप्रमात्वं कार्यतावच्छेदकम् । कार्यतावच्छेदकत्वबाधकत्वावच्छिन्नाभावात् । घटवत् । चाक्षुषघटत्व प्रमात्वं कार्यतावच्छेदकम् । मन्मतसिद्धकार्यतावच्छेदकत्वावच्छिन्नभिन्नत्वात् । इत्याद्युत्पत्तौ । ज्ञप्तौ त्वयमनुव्यवसायो न प्रमात्वविशिष्टैतज्ज्ञानविषयको मन्मतसिद्धविषयत्वावच्छिन्नभिन्नत्वात् । अप्रमात्ववदित्यादि ।

एवं मतान्तरेऽपि ग्राहकत्वाभिमततज्ज्ञानान्तर्भाविन साध्यमूहनीयम् । स्यादेतत् । प्रथमहेतौ बाधकाभावोऽसिद्धः । दण्डविशेषाद्धटविशेषवत्सामान्यकारणताश्रयतत्तद्व्यक्तिविशेषादेव तत्तत्प्रामाण्यव्यक्त्युपपत्तेः । तत्तद्धटत्वादिवच्चाक्षुषप्रमात्वादेरपि कार्यतावच्छेदकत्वे मानाभावात् ।

अथ कार्यगतं वैचित्र्यं न कारणप्रयोज्यम् । आकस्मकत्वेवैचित्र्यानुपपत्तेः घटत्वपटत्ववैचित्र्यवत् । नाप्यननुगततत्तद्व्यक्तिप्रयोज्यानुगतकार्यस्याननुगतादनुपपत्तेः। तत्तद्धटत्वादिकं त्वननुगतमननुगततत्तत्प्रागभावप्रयोज्यमेव । संस्थानादिविशेषस्त्वनुगतो यदि केषुचिद्धटेषु तदा कुलालादिविशेषप्रयोज्य एव साधकसत्त्वाद्बाधकासद्भावानिश्चयादिति चेन्न । नीलघटत्वादिवत्सामग्र्यन्तरोपपाद्यत्वेन कार्यतावच्छेदकानुपपत्तेः । कार्यवृत्तेरनुगतधर्मस्य सर्वस्यैव कार्यतावच्छेदकनियमो गृहविशेषवृत्तिघटत्वादेरतत्त्वात् । तथा हि । घटत्वविशेष्यकत्वे घटगोचरपटभ्रमे सामग्री या च घटभ्रमे घटत्वप्रकारकत्वे सामग्री ताभ्यामेव परस्परसमवहिताभ्यां नीलघटत्ववत्प्रमात्वोपपत्तेः । न तस्य कार्यतावच्छेदकत्वम् ।

यत्त्ववच्छेदकप्रविष्टभागयोर्यत्र पृथक् कार्यतावच्छेदकत्वं तत्रैवेदम् । विशिष्टोपाधेः कार्यतावच्छेदकत्वे बाधकम् । न चात्र घटत्वे कारणमस्तीति नायं दोष इति । तत्तुच्छम् । कार्यतावच्छेदकस्यान्यथासिद्धिमात्रेणैवावच्छेदकान्तराक कल्पनात् ।

अथ न तदुभयमात्रं प्रमात्वम् । घटपटयोः पटघटभ्रमेऽतिव्याप्तेः । किन्तु तादृशविशेषावच्छेदेन तत्प्रकारकत्वम् । तच्च सामग्रीद्वयप्रयोज्यम् । उक्तभ्रमेऽपि प्रसङ्गादिति तदवच्छेदेन सामग्र्यन्तरमावश्यकमिति चेत् ।

अत्र ब्रूमः । तद्व्यक्तिधर्मिकघटत्वप्रकारकत्वावच्छेदेन तद्धर्मिकघटत्वासंसर्गग्रहस्य तत्र तद्ग्रहप्रतिबन्धकदोष विशेषाभावादेश्चातिप्रसङ्गार्थमवश्यं कारणत्वे किं घटधर्मिकघटत्वप्रकारकत्वावच्छेदेन कारणान्तरकल्पनया आवश्यकविशेषकारणेन गुणानामन्यथासिद्धः ।

न च प्रमामात्रहेतुत्वादयमेव गुणो दोषाभावरूपत्वात् । अन्यथा तत्प्रागभावस्यासाधारणकारणत्वात्स एव गुण इति विवाद एवानुपपन्नः । तस्माद्बाधकाभावोऽसिद्धः । द्वितीयहेतुश्चात एव प्रयोजक इति नोत्पत्तौ

प्रमात्वस्य परतस्त्वम् । नापि ज्ञप्तौ व्यवसायप्रत्यासत्त्यन्तरत्वेऽतथात्वे वा तदुपनीतो विषयो मानसानुव्यवसाये भासत इति सर्वसिद्धम् । एवं च कविकाव्यमूलमानसप्रत्यक्ष इवोपनीतविशेष्यविशेषणयोर्मनसा वैशिष्ट्यग्रहे किञ्चिद्बाधकं पश्यामः । तथा चानुव्यवसाये विशेष्यत्वेन भासमाने पूरोवर्तिनि प्रकारतया भासमानघटत्वादि-वैशिष्ट्यग्रहे किमवसिष्यते ॥

**प्रामाण्ये ज्ञातव्य इति**[1] । स्वत एव प्रामाण्यधीरित्युक्तहेतो-रप्रयोजकता । चैवमपि प्रकारत्वविशेष्यत्वयोः पूर्वाज्ञातत्वेन तद्घटितप्रमात्वस्यानुव्यवसाये प्रकारत्वासम्भवः। फलबलेन प्रतियोगित्वाभावत्वयोरिवाज्ञातयोरपि प्रकारत्वात्। वस्तुतोऽयं घटोऽत्र घटत्वप्रकारकत्वमित्येतावतैव निष्कापट्यव्यवहारादप्रकारत्वेऽपि न क्षतिः ।

नन्वेवमनभ्यासदशापन्नज्ञाने प्रमा नैवेति सन्देहानुपपत्तिः । अनुव्यवसायेन प्रमात्वनिश्चयात् । तदभावे धर्मिज्ञानाभावेन ज्ञानविशेष्यकसन्देहासम्भवादिति चेत् । किमेतावता सामग्रीसत्त्वेऽपि न प्रमात्वज्ञानमिति वक्तुमध्यवसितोऽसि ।

ननु त्वमपि किं विरोधिविशेषदर्शने सत्त्वेऽपि सन्देहोऽस्तीति वक्तुमुद्यतोऽसीति सुवचम् । सन्देहाज्ञाने भासमानेऽपि तत्र स्थले सामग्री विद्यमानाऽपि प्रमात्वज्ञानमभिप्रैषि । अनुभवसिद्धापलापमेव वा । उभयथा-ऽप्यविचारकतेति चेत् ।

मैवम् । किन्त्वनुव्यवसायं विनैव कोटिद्वयस्मृत्या सन्देहे धर्मिज्ञानसंशयहेतुत्वे मानाभावात् । विशिष्ट-ज्ञानसामान्यसामग्र्यैवोपपत्तेः । न च अतीतादिविशेष्यकसंशये धर्मिज्ञानहेतुत्वाद्यविशेषयोरिति न्यायेन सामान्यत एव तद्धेतुत्वमिति वाच्यम् । तत्र सन्निकर्षत्वेनैव तदपेक्षणाल्लौकिकसन्निकर्षत्वेन तदपेक्षणात् । तत्र सन्निकर्ष-त्वस्यानुगतस्याभावान्न तथा कारणता । तथा सत्यसिद्धसन्निकर्षकल्पनानुपपत्तेः ।

नाप्यभावज्ञानत्वादधिकरणसन्देहेऽपेक्षितमिति वाच्यम् । तद्धेतुत्वेऽपि मानाभावात् । भावेऽपि वा लौकिकप्रत्यक्ष एव तथा । अन्यथाऽभाववदिति सामान्यज्ञाने व्यभिचारात् । नापि सन्देहे धर्मिनियमार्थं तज्ज्ञानापेक्षा । अवश्यतद्धीसामग्र्यैवोपपत्तेः ।

नापि तत्कोटिसहचरितानेकधर्मवद्धर्मिज्ञानतत्कोट्युत्कटसन्देहे हेतुत्वात्सामान्यत एव तस्य हेतुत्वमिति वाच्यम् । उत्कटत्वं हि न जातिः । अव्याप्यवृत्तित्वात् । चाक्षुषादिना सङ्करापत्तेश्च । किन्तु तादृशधर्मविशिष्ट-तत्कोटिविषयत्वम् । तच्च तादृशधर्मभानसामग्र्यैवान्यथोपपन्नं न सामग्र्यन्तरकल्पनम् ।

---

१. अस्य टीकावाक्यस्य मूलं नोपलब्धम ।

नन्वेवमपि सन्देहोऽनुपपन्नः । प्राथमिकानुव्यवसायपूर्वं तन्निश्चयाभावेऽपि ज्ञानग्राहकसामग्रीरूपप्रामाण्यग्राहकसामग्र्या एव प्रतिबन्धकत्वात् । यज्ज्ञानं यत्र प्रतिबन्धकं तत्सामग्र्यपि तत्र प्रतिबन्धिकेति नियमात् । अन्यथा पुरुषत्वव्याप्यदर्शनलक्षणे तत्सन्देहापत्तिरिति चेन्न । दोषेण प्रतिबन्धाद्धटत्वादिसन्देहवदुपपत्तेः ।

एतेनाधर्मधीहेतुत्वे सत्यामपि सामग्र्यां दोषेण कदाचिद् घटत्वादिग्रहप्रतिबन्धात्तत्सन्देहवदत्रापि दोषेण प्रतिबन्धात्तदग्रहे ज्ञानधर्मिमात्रज्ञानात्सन्देहोत्पत्तिर्व्याख्याता । न हि कदाचिद् घटसन्देहदर्शनाद्व्यक्तिभानसामग्री न जातिग्राहिका । नन्वत्र सामग्र्येव नास्तीत्येव लाघवात्कल्प्यम् । न तु कल्पयित्वा दोषस्य प्रतिबन्धकत्वं गौरवात् । तथाहि । सुरभिचन्दनमित्यादौ ज्ञानोपनीतस्य स्वातन्त्र्येण वैशिष्ट्यं गृह्यते । न तु घटत्वेन जानामीत्यादौ । तेन यत्रोपनायकं ज्ञानं फलीभूतं तत्र न स्वातन्त्र्येण स्ववैशिष्ट्यं ग्राहयेत् । अत्र तु तथेति कल्प्यत इति कुतोऽनुव्यवसायेन प्रामाण्यशङ्केति ।

अत्र ब्रूमः । किमेतावता व्यवसायग्रहे सामग्री प्रतिबन्धिकाऽभिमता । अथवा गृह्यमाणज्ञानेनोपनायकताऽभिमता । नाद्यः । काव्यमूलभूतोपनयस्थले गन्धवति पृथिवीत्वोपनयनानन्तरमित्याद्युक्तप्रामाण्यग्रहस्थले चोपनायकज्ञानाभावेन व्यभिचारात् । नान्त्यः । लाघवात्स्वविषयकसविकल्पकत्वेनोपनायकताकल्पनात् । अग्रे संशयोपपादकदोषस्यैव कल्पनौचित्यात् । अन्यथा वह्नेरपि दशाविशेषविशिष्टत्वादिना कारणत्वे प्रतिबन्धकमात्रोच्छेदापत्तेः । जातेर्व्यक्तिग्राहकग्राह्यतानुपपत्तेश्च । तस्मान्न ज्ञप्तावपि प्रमाणस्य परतस्त्वमिति ।

## *भाट्टमतनिराकरणम्*

## प्रामाण्यं स्वतोऽप्रामाण्यं परत इति पक्षङ्गीकुर्वाणा अपि भाट्टाः प्रामाण्यविशिष्टं ज्ञानं ज्ञातताविशेषेणानुमीयत इति ज्ञप्तौ स्वतस्त्वम् ।

अस्वरसं नैयायिका इत्यनेनोद्भाव्य मतान्तरमाह **प्रामाण्यं स्वत इति** । अयमाशयः । उक्तरीत्योभयोर्न स्वतस्त्वमिति विशेषसामग्र्योपपत्तौ नोभयत्रापि तत्कल्पनं गौरवात् । तथाच अपरमौत्सर्गिकज्ञानस्य सामग्रीप्रयोज्यमेवोपपादकं विनेति स्थिते किं तथेति विचारे लाघवात्प्रमात्वमेव तथाऽन्वयत्वप्रमात्वं गौरवात् ।

न च विशेषसामग्र्यवयवे लाघवात्प्रमात्वे कल्प्यतामिति वैपरीत्यापत्तिरिति वाच्यम् । ज्ञानसामान्यसामग्र्यनिर्वाह्य एव विशेषसामग्र्याः कल्पनीयत्वेनौत्सर्गिककल्पनस्यैव प्राथमिकत्वात् । तत्रैव लाघवानुसरणाद्यपवादकं विना ज्ञानसामग्री प्रमामेव जनयति । दोषेण त्वपवादकेन प्रमाशक्तिनिरोधदोषसाहित्येनप्रमाम् । अत एव प्रमात्वस्य सामान्यसामग्रीप्रयोज्यत्वेन प्रमाऽपि स्यात् । अन्यथा ज्ञानमपि न स्यादित्यदूषणम् । प्रमाभ्रमशक्त्योर्भेदात् । अप्रमास्थले प्रमाशक्तिनिरोधाधिति ।

न चैवं दोषस्य प्रमाशक्तिनिरोधमात्रप्रयोजकत्वात्राप्रमासामग्रीनिवेश इति कथमप्रमापर इति वाच्यम् । किमेतावता प्रामाण्ये विशेषसामग्रेव माऽस्त्वित्यभिमतं प्रमाशक्त्यभाव एव वा तथेति । नाद्यः । प्रमायामपि तदापत्तेः । न द्वितीयः । दोषाधीनशक्त्यभावापेक्षया दोषस्यैव लाघवात् । प्रथमोपस्थापितत्वाच्च । भावस्याकारणत्वाच्च । न च परोक्तरीत्या असंसर्गग्रहादिघटितसामग्र्यैव प्रमात्ववत् अप्रमात्वस्याप्यन्यथोपपत्तेः । घटे सर्वसामग्रीसत्त्वेऽपि घटत्वप्रमानुत्पत्तेर्दोषावश्यकत्वात् । न चैवमघटे प्रमानुत्पत्त्या गुणोऽप्यावश्यकः । तत्र प्रमाशक्तिनिरोधादिति नाप्रमात्वप्रतिबन्ध्यवाकश इत्याकल्पनीयं सुहृदयैः ।

नन्वेतावदाचार्यमतसाधारणमित्यलं विशेषोपन्यासेनेत्याशङ्क च ज्ञप्तिस्वतरस्त्वे वैलक्षण्यात्पृथगुपन्यास इत्याशयेनाह **अङ्गीकुर्वाणा अपीति** ।। **ज्ञाततविशेषेणेति** । यावज्ज्ञानग्राहकग्राह्यत्वमेव ज्ञप्तिस्वतरस्त्वम् । न तु ज्ञानानुव्यवसायगम्यत्वम् । ज्ञानातीन्द्रियत्वादिति भावः ।

## अप्रामाण्यं तु विसंवादाद्यनुमानान्तरवेद्यमिति परतस्त्वं मन्यन्ते ।

यद्यपि ज्ञातताविशेषः प्रमितत्वमवान्तरवैचित्र्यं प्रमात्वनिश्चयपूर्वं दुर्ज्ञानमिति । कथं स प्रामाण्यानुमापकः । अन्यथा प्रमितत्वेनाप्रमात्वस्यापि स्वतो वेदनापत्तेः । तथाऽपि विशेषो घटत्वप्रकारकत्वादिः । तथाच अहं घटत्वप्रकारकज्ञानवान् । तत्प्रकारकज्ञाततावत्त्वादित्येवं ज्ञानानुमितौ व्यवसायोपनीतघटविशेष्यकमपि भासते । ज्ञातातात्वस्य तद्विषयविषयकत्वनियमात् । न च प्रत्यक्ष एव तथा । मन्मते प्रत्यक्षाभावेन श्यामाभिषिक्तानुमितावेव विद्यमानसमानाधिकरणज्ञानत्वेन तन्नियमकल्पनात् । पुरोवर्तिनं घटत्वेन जानामि इति ज्ञानज्ञानस्य फलस्य सर्वसिद्धत्वेन तदुपायस्य सर्वैरेवमेव वाच्यत्वात् । अत एवाप्रमाऽपि प्रमेत्येव गृह्यते । तथाऽयं पटत्वप्रकारकधीविशेष्यः । तादृशज्ञातताश्रयत्वादित्येवं व्यापकतावच्छेदकत्वादिनैव विशेष्यत्वप्रकारकभानसम्भवान्नानुमितावुपनीतभानकल्पनं युक्तम् । सम्बन्धितावच्छेदकवत्तयैवेत्यादिनियमस्यापि प्रत्यक्षपरत्वात् । अन्यथा ज्ञानादिपदजन्यज्ञानाज्ञाने व्यभिचारादिति न तद्बलेनापि धर्मधर्मिवैशिष्ट्यज्ञानम् । घटत्वप्रकारकज्ञाततावत्त्वाद्वेत्यनुमितावप्यनुभवसिद्धतदाकारतारकक्षार्थमनुमितौ लाघवोपनीतस्यैव व्यवसायोपनीतस्यापि विषयता कल्प्या । अप्रामाण्ये तु नेयं सामग्री व्यवसायानुपनेयत्वादित्याशयेनाह **अप्रामाण्यं त्विति** ।।

### *प्राभाकरमतनिराकरणम्*

**स्वप्रकाशज्ञानेनैव प्रामाण्यविशिष्टज्ञानं सिद्ध्यति । अप्रामाण्यं तु नास्त्येवेति प्राभाकराः ।**

ननु ज्ञानमतीन्द्रियं जानामीति ज्ञाने लिङ्गपरामर्शस्य कदाऽप्यनपेक्षणात् । अन्यथा घटादावपि तथापत्तेः । तथाऽपि ज्ञातताख्यं पदान्तरमस्ति । यल्लिङ्गं ज्ञानव्यवसायज्ञाततावििशिष्टव्यवहारवत्स्वरूपसम्बन्धेनैवोपपत्तेः । अनागतादिविषये तस्यावश्यकत्वाच्च । न च तथाऽपि घटत्वप्रकारकोच्छेदादिकमेव हेतुः स्यात् । परतस्त्वादिसाधारण्यात् । अत एव घटोऽयं घटत्वप्रकारकज्ञानविशेष्यः । तादृशज्ञातताश्रयत्वादित्यादि स्वत एवानुमानमपास्तम् । न्यायमतसाधारण्यात् । न च तन्मते विशेषणधियो हेतुत्वात् । न यावज्ज्ञानग्राहकग्राह्यत्वं स्वतस्त्वं विवादानन्तरत्वाद्युक्तेर्मतान्तरमाह **स्वप्रकाशेति** ।। अयमाशयः । ज्ञानवत्त्वेनैतज्ज्ञानावश्यकत्वे लाघवाद्ग्राह्यज्ञानात्मकमेव तदा क्रियते । ज्ञानान्तरगम्यत्वेऽनवस्थापत्तेरिति सर्वज्ञानमिदमहं जानामीत्याकारम् । साध्याप्रसिद्ध्या प्रथमानुमित्यर्थप्राक्तनसंस्कारानुसरणापत्तेश्च । तत्र च प्रामाण्यघटकयावदंशाभावान्न प्रामाण्यग्रहाप्यर्थमन्यापेक्षा । उत्पत्तिस्वतस्त्वं तु पूर्ववदेवेति नोक्तम् ।। **अप्रामाण्यं त्विति** । न चैवमप्रामाण्यं दोषादिति सिद्धान्तविरोधः । विसंवादिव्यवहारस्य तदर्थत्वादिति भावः ।

**इन्द्रिय(ादि)मात्रेणैव प्रामाण्यविशिष्टं ज्ञानमुत्पद्यते । गुणास्त्वकिञ्चित्कराः । अप्रामाण्यं दोषसहकृतेन्द्रियादिभिरुत्पद्यते ।**

ननु लौकिकज्ञानं स्वप्रकाशं स्वविषयताप्रयोजकस्वसन्निकर्षाद्यजन्यत्वात् । अन्यथाऽतिप्रसङ्गात् । न च वेद्यत्वेऽनवस्था । अविरलत्वज्ञानज्ञानधारानभ्युपगमात् । कदाचित्केनचित्स्वमतान्तर्भाव्यापि सर्वग्रहणसम्भवादित्यत्र प्राभाकरा इत्यनुशयमुद्भाव्य पारमार्थिकं स्वमतमाह **इन्द्रिय(ादि)मात्रेणेति** । अत्र सर्वाऽपि भेदवासना भेदमतव्युत्पादनावसरे उक्ता ।

**तथा ज्ञानं तत्प्रामाण्यं च साक्षिणैव ज्ञायते ।**

ज्ञप्तौ तु विशेषमाह **तथा ज्ञानमिति** ।। **साक्षिणैवेति** । इदमात्राकूतम् । लौकिके ज्ञानं न स्वप्रकाशं नाप्यनुमेयमित्युक्तम् । नापि मानसव्यवसायगम्यम् । अनवस्थापत्तेः । न च सामान्यप्रत्यासत्त्या शब्दादिना वा कदाचित्सत्त्वे गोचरज्ञानसम्भवान्नैवमिति वाच्यम् । सामान्यप्रकारकज्ञानस्य वैशिष्ट्याज्ञानेऽपि स्वतन्त्रप्रमात्वे शृङ्गत्वादिसामान्ये ज्ञानस्य शशशृङ्गादिप्रमाणत्वापत्तेः । विशेषप्रमाणावतारावश्यकत्वात् । तस्मान्नित्येन साक्षिणैव सर्वज्ञानग्रहणमिति वाच्यम् । स च साक्षी ग्राह्यज्ञानोपनीतविषयावच्छिन्नं तदगोचरयति । अन्यथाऽतिप्रसङ्गादिति तदुपनीतत्वाविशेषाद्विशेष्यविशेषण इव तदुभयवैशेष्यमपि गोचरयतीति मीमांसकमत इव स्वतः सर्वत्र प्रमात्वधीः । अप्रामाण्यघटकस्तु विषयो न व्यवसायोपनीत इति साक्षिवेद्य इति मतान्तरापेक्षत्वात्परतो वेद्यमुच्यते ।

नन्वनित्यं ज्ञानविषयताकारणं नियम्येति भवति । तत्र व्यवसायोपनयानुपनयाभ्यां विशेषः । नित्यज्ञानविषयता तु न तथा । किन्तु स्वाभाविकति विषयसत्तामात्रमपेक्षत इत्यप्रमायामप्रमात्वमपि गृह्णीयादिति चेत् मैवम् । ज्ञानसामग्रीत्वाभिमतस्य नित्यज्ञानसम्बन्धरूपत्वात् । अन्यथा सर्वदा सर्वव्यवहारप्रसङ्गात् ।

ननु साक्षिशब्देन किमात्मसमवेतं ज्ञानमुच्यते । उत आत्मैव । नाद्यः । अस्मदादीनां तादृशज्ञाने मानाभावात् । व्यवहारस्य लौकिकज्ञानाधीनत्वात् । नान्त्यः । आत्मनो ज्ञानरूपतायां मानाभावात् । जानाम्यहं न तु ज्ञानमेवाहमिति सर्वेषामबाधितानुभवात् । न च ज्ञानव्यवहारस्योक्तदोषैः प्रकारान्तरेणासम्भवात्तदर्थं स्वप्रकाशज्ञानात्मकत्वमात्मन इति वाच्यम् । तथ सति ग्राह्यज्ञानानामेवान्यथाऽनुपपत्तिसमाधाने स्वप्रकाशताकल्पनौचित्यात् । इति ।

उच्यते । आत्मनः कदाऽपि संशयविपर्ययागोचरत्वात्स्वप्रकाशज्ञानरूपत्वं वाच्यम् । अनित्यज्ञानान्तरवेद्यत्वे तदभावे संशयाद्यपत्तेः । न च सुखादिन्यायस्तत्रापि साक्षिसिद्धमेव । संशयविरोधित्वात् । घटादिव्यवहारस्तु न साक्षिमात्रादिति तत्र संशयः । न च सुखादिवद्वेद्यत्वे न संशयादिविषयत्वम् । जीवात्मनो नित्यत्वाज्ज्ञानाधारत्वाच्च तदनुपपत्तेः ।

*साक्षिकार्यचिन्ता*

## अप्रमाणज्ञानस्वरूपमात्रं साक्षिवेद्यम् ।

किञ्च श्रुतिरप्यत्र मानम् । यद्वैतं न पश्यति पश्यन्नेव तं पश्यति । न हि द्रष्टुर्दृष्टेर्विपरिलोपो विद्यत इति श्रुत्या विशेषविज्ञानाभावेऽपि नित्यस्वरूपविज्ञानावगतेः । विज्ञानमानन्दं ब्रह्मेति । अयं पुरुषः स्वयंज्योतिरिति च श्रुतिरित्यत आह **अप्रमाणज्ञानस्येति** ।। मात्रपदेन प्रामाण्यव्यवच्छेदः । यद्यपीदं परमात्मविषयं तथाऽप्यात्मनः सामान्यतस्तत्त्वे किं मानमित्यत्रैतच्छ्रुतिवाक्यमुदाहृतमिति । आत्ममात्रस्य तत्त्वे भाष्यादौ श्रुतिरवगन्तव्या । न चात्मनो ज्ञानसाधनत्वेन गौणम् । तत्र ज्योतिष्टं ज्योतिः साधनत्वस्य सर्वदा सत्त्वेनात्रेति विशेषणवैय्यर्थ्यात् । गौणत्वव्यावर्तकस्वयंशब्दविरोधाच्च । नापि परमार्थपरेयं श्रुतिः । अत्रेत्यनेन परामृष्टावस्थायास्तत्रासम्भवात् । अयमिति प्रत्यक्षनिर्देशानुपपत्तेश्च । घटं जानामीत्यादिप्रत्ययस्तु साक्षिरूपान्तःकरणविषयकः । नित्यं साक्षिसत्वेऽपि कदाचिद्घटाद्यव्यवहारेण तस्यावश्यकत्वात् ।

## तदप्रामाण्यं त्वनुमेयमित्याचार्याः ।

नन्वेवं साक्षि एवानुव्यवसायरूपस्य प्रामाण्यग्राहकत्वे तस्य भ्रमत्वासम्भवादप्रमायां प्रमात्वग्रहानुपपत्तिः । अत एव तत्र मनोवृत्त्यन्तरस्यैव ग्राहकत्वं न तु साक्षिण इत्यभ्युपगमात् । न चैवं प्रमायामपि तदेवास्तु

किमर्धजरतीयन्यायेनेति वाच्यम् । उक्तन्यायेन साक्षिण आवश्यकत्वात् । ज्ञाने प्रामाण्ये वा ज्ञानधाराभ्युपगमेऽनवस्थापत्तेरित्याशयः । नन्वेवं प्रमात्ववदप्रमात्वमपि साक्षिवेद्यमेवास्त्वित्यत आह **तदप्रामाण्यं त्विति** ।। अत्र च वासना प्रागुक्ता । अत एव तत्र कदाचित्सन्देहेऽपि साक्षिवेद्यत्वे तु सुखादाविव स न स्यादिति भावः । नन्वेवं साक्षिवेद्यतया प्रमात्वे सन्देहो न स्यादिति चेन्न । दोषाभावरूपग्राहकसामग्र्याः साक्षिसम्बन्धत्वाभिधानेन सर्वसामञ्जस्यात् । यद्यप्यन्तरर्थे ज्ञानसुखादौ न साक्षिणः प्रत्यासत्त्यन्तरापेक्षा । तथाऽपि बहिरर्थघटितत्वात् प्रामाण्ये तथात्वेऽपि न काऽप्यनुपपत्तिरिति ।

**करणानां तु ज्ञानजनकत्वशक्तिरेव स्वकारणासादिता प्रामाण्यजनकत्वशक्तिः ।**

करणप्रामाण्यस्योत्पत्तौ स्वतस्त्वमाह **करणानां त्विति** ।। करणप्रामाण्यं हि प्रमाकरणत्वरूपम् । तच्च योग्यतावच्छेदकशक्त्यात्मकम् । सा च शक्तिर्न ज्ञानजननशक्तितो भिन्ना । गौरवान्मानाभावाच्च । सैव कार्यबले सिद्धौ नागन्तुकहेतुसापेक्षा । किन्तु भावसामग्रीजन्यैवेत्येतदेव तस्याः स्वतस्त्वनाम । तदाहुः । 'नित्यनियतैव सा शक्तिरनित्ये भावहेतुजे'ति ।

न च भावकार्यत्वेन समवायिजन्यत्वान्नास्या आश्रयेण सहोत्पादसम्भव इति वाच्यम् । स्वसमवायिमात्रस्य सर्वत्राप्यभावात् । समवायित्वेन तत्र हेतुत्वे मानाभावात् । अव्यवहितोत्तरक्षणे भावानामशमक्तत्वेन रूपादिकार्यजनकतापत्तेश्च । शक्त्यनुकूलशक्तेरपि समानाधिकरणायाः स्वीकार्यत्वेन व्यवस्थापत्तेश्च । न चैवं प्राणाणिक प्रथमशक्तेरेवमेवादौ कार्येऽनुभवाद्प्रसङ्गेन परस्परविरोधात् । नन्वेकत्वं शक्तौ ज्ञानत्वस्य कार्यतावच्छेदकत्वान्न तस्यामपि प्रमात्वमपि तथेति वाच्यम् । दोषाभावान्मनस्त्वस्य जन्यज्ञाने साक्षिसाक्षात्कारे चोभयत्र हेतुतावच्छेदकत्वात् ।

**अप्रामाण्यजनने त्वन्या शक्तिर्दोषवशादाविर्भवति । ज्ञप्तिस्तु परत एव । इन्द्रियादिस्वरूपस्य यथायथं स्वप्रमाणवेद्यत्वात् । यथार्थज्ञानसाधनत्वस्यानुमानवेद्यत्वादिति । तदेवं भूतैः प्रमाणैः पदार्थानां नित्यानित्यत्वादिकं निश्चित्य विषयेषु विरक्तस्य शमदमादिसम्पत्तिमतो वासुदेवैकशरणस्य तद्विषयाणि श्रवणमनननिदिध्यासनान्यादरनैरन्तर्याभ्यां बहुकालमनुष्ठितवतो भगवत् साक्षात्कारे सत्यत्युद्रिक्तया भक्त्या भगवत्प्रसादादशेषानिष्टनिवृत्तिविशिष्टानन्दादिस्वरूपाविर्भावलक्षणा मुक्तिर्भवतीति ।।**

एतेन ज्ञानशक्तिव्यापिका शक्तिरन्यैव प्रमात्वप्रयोजिकेत्यपास्तम् । नन्वेवं चक्षुरादिप्रमात्वशक्तेरपि भावहेतुजज्ञानशक्तिरूपैवेति साऽपि स्वत एव स्यादित्यत आह **प्रामाण्यजनने त्विति** ।। अयमाशयः । न तावत् ज्ञानशक्तिरेव प्रमाशक्तिः । एकशक्तिप्रयोजकत्वे प्रमाप्रमयोः सर्वत्र सङ्करापत्तेश्च । न चैवं प्रमाशक्तिरेवान्याऽस्तु । ज्ञानशक्तेरेव कल्पनीये लाघवेन प्रमाप्रयोज्यस्यैव कल्पनात् । नन्वन्याऽपि सा भावहेतुजैवास्त्विति स्वमतमनिवार्यमिति चेन्न । तस्या ज्ञानशक्त्यनपेक्षाया अप्रमाप्रयोजकत्वे तत्र ज्ञानत्वानापत्तेः । तदपेक्षणे तु तस्याः प्रमाशक्तित्वेन प्रमाभ्रमसंस्कारापत्तेः । तथा च दोषेण पूर्वशक्तिं निरुध्य विनाश्रयाच्च प्रमाशक्तिरेवान्योत्पद्यत इत्येवं वाच्यम् । साहजिकज्ञानशक्तिप्रमाशक्तिं विना स्यादिति सुस्थमेव तत् ।

ननु चक्षुरादिकरणानां प्रमारूपफलानुमेयत्वापत्तेः । न च प्रमा प्रमाकारणत्वेनैवानुमानाद्यावत्स्वाश्रयग्राहकग्राह्यत्वं स्वतस्त्वं तत्रापि स्यादित्याशङ्क्याह **ज्ञप्तिस्त्विति** । अत्र हेतुः **यथायथमिति** । ज्ञानक्रियामात्रेण कारणमात्रस्य प्रमां विनाऽप्यनुमातुं शक्यत्वादित्यर्थः ।। **अनुमानेति** । अनुमानविशेषेत्यर्थः ।।

**जयतीर्थमुनीन्द्रेण बालबोधाय निर्मिता ।**
**प्रमाणपद्धतिर्भूयात्प्रीत्यै माधवमध्वयोः ।।**

*।। इति श्रीमज्जयतीर्थपूज्यचरणविरचितप्रमाणपद्धतौ*
*आगमपरिच्छेदः सम्पूर्णः ।। ३ ।।*

विजयीन्द्रयतिः कश्चित्कृतवान् भाववर्णनम् ।
प्रमाणपद्धतेः प्रीत्यै जयश्रीपूर्णमध्वयोः ।।

*इति श्रीमज्जयतीर्थपूज्यचरणविरचितायाः प्रमाणपद्धतेष्टीकायां विजयीन्द्रयतिविरचितायां*
*तृतीयप्रकरणं (आगमप्रकरणं) समाप्तम् ।।*



॥ श्रीः ॥

# प्रमाणपद्धतिविषयानुक्रमणिका



कायेन वाचा मनसेन्द्रियैर्वा
बुद्ध्याऽऽत्मना वाऽनुसृतः स्वभावम् ।
करोमि यद्यत् सकलं परस्मै
नारायणाय इति समर्पयामि ॥

॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्विजयीन्द्रभिक्षुविरचितं

# तुरीयशिवखण्डनम्

॥ श्रीः ॥

श्रीमद्विजयीन्द्रभिक्षुविरचितं

# तुरीयशिवखण्डनम्

## विषयानुक्रमणिका

★ ★ ★

॥ श्रीः ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

श्रीमद्विजयीन्द्रभिक्षुविरचितं

# तुरीयशिवखण्डनम्

### १. मङ्गलाचरणम्

सर्वदोषातिदूराय कल्याणगुणशालिने ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ १ ॥

उर्व्यां सत्कर्णतां यान्ति यद्गुणाकर्णने रताः ।
अर्णवं गुणरत्नानां पूर्णबोधं तमाश्रये ॥ २ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रमक्षोभ्यतपसः फलम् ॥ ३ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ४ ॥

मूकोऽपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ स्मृत्वा भवेत् सुखी ॥ ५ ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा ।
तन्यते तत्त्वविद्रीत्या तुरीयशिवखण्डनम् ॥ ६ ॥

### २. ब्रह्मविष्णुशिवव्यतिरिक्तस्य तुरीयस्य परमशिवस्यैव सकलजगत्कारणत्वमिति पूर्वपक्षः

नन्वत्र प्रसिद्धब्रह्मविष्णुशिवातिरिक्तः परमशिव एव सकलजगत्कारणमिति मयोपगमात् तस्मिन्नेव कारणवाक्यानां पर्यवसानं सेत्स्यति । न च तस्मिन् मानाभावः । तस्यानेकश्रुतिस्मृतिपुराणादि-

सिद्धत्वेन दुर्निरसत्वात् । तथाहि— उत्तरतापनीये[1] "सप्तात्मानं चतुरात्मानमकारं ब्रह्माणं नाभौ सप्तात्मानं चतुरात्मानमुकारं विष्णुं हृदये सप्तात्मानं चतुरात्मानं मकारं रुद्रं भ्रूमध्ये सप्तात्मानं चतुरात्मानं चतुःसप्तात्मानं चतुरात्मानमोङ्कारं सर्वेश्वरं द्वादशान्ते" इत्यादिना नाभिहृदयभ्रूमध्येषु अकारादिमात्रा-त्रयवाच्यानां ब्रह्मविष्णुरुद्राणामुपासनाविधानानन्तरं प्रणववाच्यद्वादशान्तोपास्यं सर्वेश्वर्यशालि तेभ्यः परं तत्त्वान्तरं दर्शितम् । तथा अथर्वशिखायां[2] "प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या द्वितीया शुभा शुक्ला रौद्री रुद्रदेवत्या तृतीया कृष्णा विष्णुमती विष्णुदेवत्या चतुर्थी विद्युन्मती सर्ववर्णा पुरुषदैवत्या स एष ह्योङ्कारश्चतुष्पादश्चतुश्शिराश्चतुर्थ्यर्धमात्रा स्थूलह्रस्वदीर्घप्लुत इति" मात्रात्रयवाच्यानां ब्रह्मविष्णुरुद्राणा-मुपासनाविधानानन्तरं अर्धमात्रावाच्यं परं तत्त्वान्तरं दर्शितम् । तथा ब्रह्मबिन्दूपनिषदि[3]—

**"अत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोऽग्नयः ।**
**तिस्रो मात्रा अर्धमात्रा च त्र्यक्षरस्य शिवस्य तु ।**
**ऋग्वेदो गार्हपत्यं च पृथिवी ब्रह्मदेवता ।**
**अकारस्य शरीरं तु व्याख्यातं ब्रह्मवादिभिः ।**
**यजुर्वेदोऽन्तरिक्षं च दक्षिणाग्निस्तथैव च ।**
**विष्णुश्च भगवान् देव उकारः परिकीर्तितः ।**
**सामवेदस्तथा द्यौश्चाहवनीयस्तथैव च ।**
**ईश्वरः परमो देवो मकारः परिकीर्तितः ।**
**अर्धमात्रा तथा ज्ञेया प्रणवोपरिसंस्थिता ।**
**पद्मसूत्रनिभा सूक्ष्मा शिवादित्यसमप्रभा ।**
**वरदः सर्वभूतानां सर्वं व्याप्यैव तिष्ठति ।"**

इति अकारादिमात्रात्रयवाच्यानां ब्रह्मविष्णुरुद्राणामुपासनाविधानानन्तरं अर्धमात्रावाच्यं परं तत्त्वान्तरं दर्शितम् । तथा ब्रह्मोपनिषदि[4] "अथास्य पुरुषस्य चत्वारि स्थानानि भवन्ति । नाभिर्हृदयं कण्ठं मूर्धेति । तत्र चतुष्पादं ब्रह्म विभाति । जागरितं स्वप्नं सुषुप्तं तुरीयमिति । जागरिते ब्रह्मा स्वप्ने विष्णुः सुप्तौ रुद्रस्तुरीयं परमाक्षरं स आदित्यश्च विष्णुश्चेश्वरश्च स पुरुषः स प्राणः स जीवः सोऽग्निः सेश्वरश्च" इत्यादिना ब्रह्मादिभ्यः अक्षरशब्दितं सर्वदेवतात्मकं तत्त्वान्तरं दर्शितम् ।

१. आथर्वणीयनृसिंहतापनीयोपनिषत्सु तृतीयखण्डः पु. २३० ।
२. अथर्वशिखोपनिषत् प्रथमखण्डः पु. १७५ ।
३. ब्रह्मबिन्दूपनिषत् । ४. ब्रह्मोपनिषत् पु. १६७ ।

तथा सुबालोपनिषदि[1]— बुद्धिरध्यात्मं बोद्धव्यमधिभूतं ब्रह्मा तत्राधिदैवतं नाडी तेषां निबन्धनं यो बुद्धौ यो बोद्धव्ये यो ब्रह्मणि यो नाड्यां ..... यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एष एतस्मिन्सर्वस्मिन्नन्तरे सञ्चरति सोऽयमात्मा तमात्मानमुपासीताजरममृतमभयमशोकमनन्तम्' इति ब्रह्मविष्णुरुद्रान्तर्यामिभूतं तेभ्यः परं मुमुक्षूपास्यं तत्त्वान्तरं दर्शितम् । तथा अथर्वशिखायाम्[2]— "अथ यो ह खलु वास्य राजसोंऽशोऽसौ ब्रह्मचारिणो योऽयं ब्रह्मः । अत यो ह खलु वास्य सात्त्विकोंऽशोऽसौ ब्रह्मचारिणो योऽयं विष्णुः । योऽथ यो ह खलु वास्य तामसोंऽशोऽसौ ब्रह्मचारिणो योऽयं रुद्र" इत्यादिना ब्रह्मविष्णुरुद्राणामंशत्वमुक्त्वा अस्येति षष्ठ्यन्तेन, तदंशभूतं तत्त्वान्तरं दर्शितम् ॥

नन्वस्तूक्तरीत्या ब्रह्मविष्णुशिवातिरिक्तं वस्तु तच्च शिवरूपमेवेत्यत्र किं प्रमाणम् ? इति चेत् उच्यते—

**"हृत्पुण्डरीकं विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।**
**अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम्** ॥ ६ ॥

**तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ।**
**उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।**
**ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात्** ॥ ७ ॥

**स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।**
**स एव विष्णुः स प्राणः स कालोऽग्निः स चन्द्रमाः** ॥ ८ ॥"

इति [3]कैवल्योपनिषद्वाक्येनानेकश्रुतिलिङ्गादिभिः ब्रह्मविष्णुरुद्रेन्द्रादिविभूतिमान् शिवः प्रतिपाद्यते । तथा "यो वै रुद्रः स भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः । यो वै रुद्रः स भगवान् यश्च विष्णुस्तस्मै वै नमो नमः । यो वै रुद्रः स भगवान् यश्च महेश्वरः तस्मै वै नमो नमः" इति [4]अथर्वशिरोवाक्येन ब्रह्मविष्णुरुद्रेन्द्रादिविभूतिमान् शिवोऽभिधीयते । तथा— "ब्रह्मविष्णुरुद्रेन्द्राः सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सहभूतानि करणं सर्वमैश्वर्यं सम्पन्नं शिवमाकाशं मध्ये ध्रुवस्थम् । सहभूतैर्न कारणं कारणानां धाता कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्यगः । शिव एको ध्येयः शिवङ्करः

---

१. सुबालोपनिषदि पञ्चमः खण्डः पृ. २४४ ।

२. मैत्रायण्युपनिषदि किञ्चिद्व्यत्यासेन पञ्चमप्रपाठकेऽयं मन्त्रः दृश्यते । पृ. १८१ ।

३. कैवल्योपनिषदि प्रथमखण्डे ६, ७, ८ मन्त्राः । पृ. १४३ ।

४. अथर्वशिरः मन्त्राः १, २, पृ. १७१ ।

सर्वमन्यत्परित्यज्य'' इत्यथर्वशिखावाक्येन[1] ब्रह्मविष्णुरुद्रादीनाम् इन्द्रादितुल्यतया कार्यकोटौ निवेश-मुक्त्वा कारणत्वाच्छम्भुशिवाद्यनन्यसाधारणाभिधानश्रुतिमतेशानस्यैव ध्येयत्वमुच्यते । तथा ''तं वा एतं त्रिशरीरमात्मानं त्रिशरीरं परं ब्रह्मानुसन्दध्यात् स्थूलत्वात् स्थूलभुक्त्वाच्च सूक्ष्मत्वात् सूक्ष्म-भुक्त्वाच्चैक्यानन्दभोगाच्च सोऽयमात्मा चतुष्पाज्जागरितस्थानः स्थूलप्रज्ञः सप्ताङ्गः एकोनविंशतिमुखः स्थूलभूक् चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः स्वप्नस्थानः सूक्ष्मप्रज्ञः सप्ताङ्ग एकोनविंशतिमुखः सूक्ष्मभुक् चतुरात्मा तेजसो हिरण्यगर्भो द्वितीयः पादो यत्र सुप्तो न कञ्चन कामं कामयते न कञ्चन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थानैकीभूतः प्रज्ञानघन एवानन्दमयो ह्यानन्दभुक् चेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पाद एष सर्वेश्वरः एष सर्वज्ञ एषोऽन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानां त्रयमप्येतत्सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्ययमात्माऽथ चतुर्थश्चतुरात्मा तुरीयावसितत्वादेकैक-स्योतानुज्ञात्रनुज्ञाविकल्पैस्त्रयमत्रापि सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्यथायमादेशो न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञं नोभयतःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिन्त्यमव्यप-देश्यमेकात्मप्रत्ययसारं प्रपञ्चोपशमं शिवं शान्तमद्वैतं चतुर्थं मन्यन्ते स एवात्मा स विज्ञेय'' इत्युक्त-तापनीयवाक्येन[2] पूर्वतापनीयमाण्डूक्योपनिषद्रामोपनिषदादिषु एवमेव किञ्चिदानुपूर्वीभेदभिन्नतया समानेन वाक्येन च विश्ववैश्वानरशब्दितविष्णुहिरण्यगर्भादिभ्योऽन्यस्तुरीयः शिवः प्रतिपाद्यते ।

एवमेव— ''अन्तश्चरति भूतेषु गुहायां विश्वमूर्तिषु । त्वं यज्ञस्त्वं वषट्कारस्त्वमिन्द्रस्त्वं रुद्रस्त्वं विष्णुस्त्वं ब्रह्म त्वं प्रजापतिः'' इति तैत्तिरीयवाक्येन[3] ब्रह्मविष्णुरुद्रादिविभूतिमान् शिवोऽभिधीयते । यद्यप्यत्र त्वमित्येव श्रूयते, तथाप्युपक्रमोपसंहारानुसारेण तस्य शिवपरत्वमेवावसीयते ।

तत्र हि— ''ऋतं सत्यं[4] परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षम्'' इत्यादिरूपोपक्रमः ''ईशानः सर्वविद्यानाम्''[5] इत्याद्युपसंहारश्च प्रसिद्ध एव । योगयाज्ञवल्क्ये च प्रणवतन्मात्रादेवतानिरूपणे

**''अक्षरत्रयमेतत्तु कारणत्रयमिष्यते ।**
**त्रयाणां कारणं ब्रह्म भारूपं सर्वकारणम् ।**
**एकाक्षरं परंज्योतिस्तदाहुः प्रणवं बुधाः''**

---

१. अथर्वशिखा पु. १७५ मन्त्राः २ ।
२. नृसिंहोत्तरतापनीयः प्रथमः खण्डः पु. २२७-२२८ ।
३. तैत्तिरीयमहानारायणोपनिषत् खण्डः १५ मन्त्रः, १ पु. १५८
४. तैत्तिरीयमहानारायणोपनिषत् खण्डः १२ मन्त्रः १. पु. १५८
५. तैत्तिरीयमहानारायणोपनिषत् खण्डः १७ मन्त्रः ५, पु. १६१

इत्यादिमात्रात्रयदेवताभ्यः "अहं ब्रह्मा च सर्वश्च जगतः कारणं त्रयम्" इत्यादिभागवतादिपठित-भगवद्वचनादिभिः कारणत्रयमितिप्रसिद्धेभ्यो गुणमूर्तिभ्यः परमन्यद्देवतातत्त्वान्तरं स्पष्टीकृतम् । तथा विष्णुपुराणे[1]— "ब्रह्मविष्णुशिवा ब्रह्मन् प्रधाना ब्रह्मशक्तयः" इत्यादिवचनेन मूर्तित्रयातीतं परं ब्रह्म विभावितम् । तथा पूर्वभागे ब्रह्मविष्णुरुद्रान् प्रस्तुत्योक्तम्—

"एभ्यः परतरो देवस्त्रिमूर्तिः परमा तनुः ।
माहेश्वरी त्रिनयना योगिनां शान्तिदा सदा ॥" इति ।

उत्तरभागेऽप्युक्तम्—

"सर्वासामेव शक्तीनां ब्रह्मविष्णुशिवात्मिकाः ।
प्रधानाः संस्मृता देवाः शक्तयः परमात्मनः ।
त्रिभ्यः परस्माद्भगवान् परमात्मा सनातनः ।
गीयते सर्वशक्त्यात्मा शूलपाणिर्महेश्वरः ।
एतमेके वदन्त्यग्निं नारायणमथापरे ।
इन्द्रमेके परे प्राणान् ब्रह्माणमपरे जगुः ।
ब्रह्मविष्ण्वग्निवरुणाः सर्वे देवाः सहर्षयः ।
एकस्यैवाथ रुद्रस्य भेदास्ते परिकीर्तिताः ॥" इति ।

तथा शिवपुराणे—

"सृष्टेः प्रवर्तको ब्रह्मा स्थितौ विष्णुर्विमोहकः ।
संहारस्य तथा रुद्रः तयोर्नित्यं नियामकः ।
तस्मात् त्रयस्ते कथ्यन्ते जगतः कारणं त्रयम् ।
कारणत्रयहेतुश्च शिवः परमकारणम् ॥" इति ।

तथा स्कान्दे—

"ब्रह्मा विष्णुश्च रुद्रश्च परतत्त्वविभूतयः ।
एषां त्रयाणामधिकः सर्वकारणमीश्वरः ॥" इति ।

एवं लैङ्गसौरपाद्मगारुडशिवधर्मादिष्वपि वचनानि द्रष्टव्यानि । तानि विस्तरभिया नात्र लिख्यन्ते।

---

१. विष्णुपुराणम्, अंशः १ अध्यायः २२ श्लोकः ५२ । पू. खण्डः ।

ननु 'तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरि'ति ब्रह्मविष्णुरुद्राणां 'तत्परेणेरितं विषमत्वं प्रयाती'ति पूर्ववाक्ये परशब्दार्थं कञ्चित्प्रस्तुत्य तदग्र्यं तत्त्वमुत्तरत्र वर्णयित्वा 'स एवैकस्त्रिधाभूत्' इति ततोऽप्युत्तरवाक्ये तैत्तिरियोपनिषदि सावधारणं तेषां परशब्दार्थभिन्नत्ववर्णनात्, 'सैषा'[1] विचित्रा सुदृढा बह्वङ्कुरा स्वयं गुणभिन्नाङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी, चैतन्यदीप्ता तस्मादात्मन एव त्रैविध्यमि'ति विष्णुरीशानो ब्रह्मेति चोत्तरतापनीयेऽपि[2] तेषां, तत्रैव पूर्वकाख्ये 'ब्रह्माणमेव विष्णुमेव रुद्रमेव विभक्तांस्त्रीनेव विभक्तांस्त्रीनेव लिङ्गरूपानेव च सम्पूज्येति' त्रयाणां ब्रह्मविष्णुरुद्राणां भेदाभेदवर्णनात् कथं अत्यन्ताभेद इति वाच्यम् । विभक्तानित्यनेन तदौपाधिकभेदवर्णनेनाविरोधात् । अन्यथा तत्रैवोत्तरत्र 'न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया ह्यन्यदेवे'ति तेषां द्वैतशब्दिते परस्परभेदे प्रमाणाभावमुक्त्वा भेदव्यवहारनिर्वाहार्थं तद्भेदस्य मायोपाधिकत्ववर्णनं न स्यात् । किञ्च—

"विष्णोरन्यं तु पश्यन्ति ये मां ब्रह्माणमेव च ।
कुतन्त्रमतयो मूढाः पच्यन्ते नरकेष्वधः ॥
ये च मूढा दुरात्मानो भिन्नं पश्यन्ति मां हरेः ।
ब्रह्माणं वा तथा तेषां भ्रूणहत्यासमं त्वघम् ॥" इति ।

तथा—

"भवानहं चैव विश्वात्मन्नेकमेव हि कारणम् ।
जगतोऽप्यस्य भूतानां भेदानां वा व्यवस्थितौ ।
त्वया यद्दत्तमखिलं तद्दत्तमखिलं मया ।
मया ह्यभिन्नमात्मानं द्रष्टुमर्हसि शङ्कर ।
अविद्यामोहितात्मानः पुरुषा भिन्नदर्शिनः ।"

इत्यादिपुराणवाक्यैः ।

"सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तै-
र्युक्तः परः पुरुष एक इहास्य धत्ते ।
स्थित्यादये हरिविरिञ्चिहरेतिसंज्ञाः
श्रेयांसि तत्र खलु सत्त्वतनौ नृणां स्युः ॥"

इति भागवतवचनेन[3] ।

---

१-२ नृसिंहोत्तरतापनीयोपनिषत् खण्डः ९. पु. २३५ । ३. भागवतम् स्कन्धः १ अध्याय २ श्लोकः २४ ।

**"सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवन् एक एव जनार्दनः ॥"**

इति विष्णुपुराणवचनेन[1] च ब्रह्मविष्णुशिवानामत्यन्ताभेदस्यैव वर्णनात् मह्यादिदेहावच्छिन्न-चैतन्यवत् ब्रह्मविष्णुशिवशब्दितमूर्तित्रयावच्छिन्नचैतन्यं दुर्वारमिति तद्भेदाभ्युपगमे न मूलमिति चेन्न, एको ह वै नारायण आसीत् न ब्रह्मा नेशानः ब्रह्मविष्णुरुद्रास्ते सम्प्रसूयन्ते । नारायणाद् ब्रह्मा जायते । नारायणाद्रुद्रो जायते – नारायणादिन्द्रो जायते – नारायणात् द्वादशादित्या रुद्रा वसवः, यो ब्रह्माणं विदधाति पूर्वम् । यो देवानां प्रभवः सोद्भवश्च विश्वाधिको रुद्रो महर्षिः हिरण्यगर्भं जनयामास पूर्वम्" इति महोपनिषदथर्वशिखानारायणोपनिषच्छ्वेताश्वतरोपनिषद्वाक्यैः ब्रह्मविष्णुशिवानां प्रसिद्धानां कार्यत्ववर्णनेन परस्परकार्यत्ववर्णनेन च कार्यकोटिनिविष्टकृत्स्नजगत्कारणभूते परमात्मशब्दिततुरीय-शब्दितपरमशिवेनाभिन्नत्वायोगात् । परमशिवस्य "न चास्य कश्चिज्जनिता न चाधिप" इति श्वेताश्वतरे जनकमात्रनिषेधात् "न तत्समश्चाभ्यधिकश्च दृश्यते" इति तत्रैतस्य समाभ्यधिकराहित्यवर्णनविरोधात् च । तस्मादात्मन एव त्रैविध्यम् । "स एकैकस्त्रिधाभूत" इत्यादि तापनीयमैत्रेयोपनिषद्वाक्यजातस्योदा-हृतस्मृतिवाक्यजातस्य च 'अयमात्मा ब्रह्म', 'तत्त्वमसि', 'स एवेदं सर्वम्, 'ऐतदात्म्यमिदं सर्वं', 'मृत्योः स मृत्युमाप्नोति', 'य इह नानेव पश्यति', 'नात्र काचन भिदास्ति', 'यश्च भिदामिव मन्यमानः शतधा सहस्रधा मृत्योः स मृत्युमाप्नोति', 'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम्', 'वचसामात्मसंवेद्यं तज्ज्ञानं ब्रह्मसंज्ञितम्' इत्यादिसर्वात्मकत्वावेदकश्रुतिस्मृतिवदुपपत्तेः । अन्यथा तत्रैव तापनीये[2] 'सर्वे जीवाः सर्वमयाः' इति श्रवणात् सर्वजीवानां सर्वविकारत्वस्य वा सर्वतादात्म्यस्य वा सर्वप्राचुर्यस्य वाऽनुपपत्तेः । यथाश्रुतार्थाङ्गीकारे वैयर्थ्येन तच्छास्त्रानारम्भापत्तेश्च । किञ्च प्रसिद्धशिवस्य अनपहत-पाप्मा वा अहमस्मीति शतपथवाक्येन पापित्वश्रवणात् । 'एष आत्मा[3] अपहतपाप्मे'ति छान्दोग्य-प्रतिपन्नसर्वदोषविदूर(स्य )परशिवेनाभिन्नत्वमुपपन्नम् । अपि च सौबालश्रुतौ— "अपहतपाप्मा दिव्यो देव एको नारायण" इति विष्णोरपहतपाप्मत्वश्रवणात्, तत्रैव चतुर्मुखब्रह्मणः सोऽग्रे भूतानां मृत्युं सृजन् त्र्यक्षं त्रिशिरस्कं त्रिपादं खण्डपरशुं तस्य ब्रह्मा बिभेतीति भयश्रवणात्, उदाहृतशतपथे रुद्रभवशर्वे-शानपशुपतिभीमोग्रमहादेवनामभिः प्रसिद्धस्य शिवस्य अनपहतपाप्मत्वश्रवणात् परस्परविरुद्धधर्मा-क्रान्ततया ब्रह्मविष्णुशिवानामन्योन्यमभेदायोगेन अत्यन्तभेदस्य वावश्यम्भावेन परस्परभिन्नानां तेषां तथाभूतेन परमशिवेन तुरीयशब्दितेनाभेदः सर्वात्मना युज्यत इति ।

---

१. विष्णुपुराणम् अंशः १ अध्यायः ६६ ।
२. नृसिंहोत्तरतापनीये खण्डः ९, पु. २३५ ।
३. छान्दोग्ये अध्यायः ८ खण्डः १ ।

केचित्तु— शिवनारायणोर्भेद एव स्वीकार्यः विरुद्धधर्माधिकरणत्वात् । तथाहि— 'विश्वाधिको रुद्रो महर्षिरि'ति शिवस्य विश्वाधिकत्वश्रवणात् विश्वं नारायणमिति नारायणस्य विश्वात्मकत्वश्रवणात् 'आगोराजानमध्वरस्य रुद्रमि'ति शिवस्य यज्ञपतित्वश्रवणात् 'यज्ञो विष्णुरि'ति नारायणस्य यज्ञात्मकत्वश्रवणात्, 'यः कारणानि निखिलानि तानि कालात्मयुक्तानि अधितिष्ठत्येक' इति शिवस्य केवलजगन्निमित्तत्वश्रवणात्, वासुदेवपरा प्रकृतिरिति श्रुत्या—

**"राजसी मामकी शक्तिः करोति निखिलं जगत् ।**
**आस्थाय ब्रह्मणो रूपमात्मना सम्प्रवर्तिता ।**
**अन्या च शक्तिः सत्त्वाख्या संस्थापयति मे जगत् ॥'** इति

**"भूत्वा नारायणोऽनन्तो जगन्नाथो जगन्मयः ।"**

इत्यादिकूर्मपुराणवचनेन च नारायणस्य जगदुपादानत्वावेदनाच्च ।

तदुक्तं—

**"विश्वाधिकस्त्वमसि विश्वमयं मुरारिः**
**यज्ञेश्वरस्त्वमसि यज्ञममुं गृणन्ति ।**
**आद्या जगत्प्रकृतिरेष भवान्निमित्तं**
**चातः कथं नु युवयो भगवन्नभेद ॥"** इति ।

एवञ्च—

**"हरः श्रेष्ठो हरेर्जातः ।**
**हीनं वाथ समं वापि हरिणा ब्रह्मणा हरम् ।**
**ये पश्यन्ति सदा तेषु पच्यन्ते नरकार्णवे ।**
**हरिब्रह्मादिदेवेभ्यः श्रेष्ठं पश्यन्ति ये हरम् ।**
**ते महाघोरसंसारान्मुच्यन्ते नात्र संशयः ।"**

इति हरिहरयोर्न्यूनाधिकभावावेदकश्रुतिगीतावचनानि सङ्गच्छन्त इत्याहुः ।

अन्ये तु— "अस्मान्मायां सृजते विश्वमेतत् मायिनं तु महेश्वरम्" इत्यादिश्रुत्या जगत्कारणं ब्रह्म मायोपाधिचैतन्यमित्यविवादम् । ब्रह्मविष्णुरुद्राः तुरीयगुणविशेषोपाधित्वरूपा इति तस्य प्रोक्ता अग्र्यास्तनवो ब्रह्मा रुद्रो विष्णुरिति । 'अथ यो ह खलु राजसोंऽशो योऽयं ब्रह्मा अथ योऽह खलु वास्य

तामसोंऽशः सोऽयं विष्णुरिति मैत्रेयोपनिषद्वाक्यशेषात्[1]। सैषा[2] विचित्रा सुदृढा बह्वङ्कुरा स्वयङ्गुण-भिन्नाङ्कुरेष्वपि गुणभिन्ना सर्वत्र ब्रह्मविष्णुशिवरूपिणी'ति तापनीयोपनिषदि सकलपुराणेषु च विवादेन प्रतिपन्नं ततश्चोपाधिभेदे उपहितभेदस्य वैचित्र्यात् गुणमूर्तिभ्यः परममायं चैतन्यं जगत्कारणं ब्रह्मेति वज्रलेपायते, तस्य चोमासाहित्यमुत्कृष्टरूपं वपुश्च।

**"उमासहायं[3] परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्।**
**ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्।**
**ऊर्ध्वरेतं विरूपाक्षं ........................।"**

इत्यादिकैवल्योपनिषत्तैत्तिरीयादिमन्त्रेभ्यः प्रतिपन्नशिवशम्भुरुद्रेशानमहेश्वरमहादेवादिशब्दवाच्यत्वं च अथर्वशिखादिषु प्रयोगानिर्वचनाभ्यां निर्णीतम्। न च उदाहृतोपनिषन्त्रिकुरुम्बप्रतिपाद्यो गुणी रुद्र इति शङ्कनीयम्। तत्र सर्वत्रापि तद्विभूतिषु ब्रह्मनारायणयोरिव गुणिरुद्रस्यापि पाठात्। न च तत्रापि विभूति-मध्याम्नातरुद्रशब्दो गुणिरुद्रांशभूतरुद्रान्तरपरोऽस्त्विति वाच्यम्। प्रसिद्धब्रह्मविष्णुसंनिध्यान्मातरुद्र-शब्दस्य संहारमूलरुद्रपरत्वौचित्यात्। 'प्रायेण श्रूयते यच्च तादृगेवावगम्यते' इति न्यायात्।

ननु तथापि कैवल्यादिमन्त्राणामुपासनापरत्वायारोपितविग्रहेणाप्युपासनोपपत्तेर्न परस्य वर्णित-विग्रहसिद्धिरिति चेन्न। उपासनापरेभ्योऽप्यविरोधे देवताधिकरणन्यायेन प्रतीयमानार्थसिद्धेरनिवार्य-त्वात्। 'न च अपाणिपादः तदपाणिपादम्' इत्यादिश्रुतिविरोधोऽस्त्विति वाच्यम्। एवं हि निर्गुण-श्रुतिविरोधात् सत्यकामत्वादिगुणानामनभ्युपगमापत्तिः। इष्टापत्तिरिति वदतां यथा ध्यानार्थत्वेऽपि सत्यकामत्वादिगुणोपदेशे तद्गुण ईश्वरः प्रसिद्ध्यति तद्वदैक्यमपि सिद्ध्यतीति व्यतिहाराधिकरण-भाष्यविरोधः। मायाकल्पिता गुणास्तत्त्वतो निर्गुण इति न्यायस्त्विहापि तुल्यः।

यत्तु 'रूपोपन्यासाच्चेती'ति सूत्रे (शां.भा.ब्र.सू. १-२-२३) विग्रहोपन्यासपरत्वेन सूत्रव्याख्या-नानन्तरं ब्रह्मणो विग्रहाभावात्तद्व्याख्यानमयुक्तं मन्यमानानां परेषामन्यथाव्याख्यानमुपन्यस्तं भाष्यकारैः तन्मुण्डकश्रुतौ निर्विशेषब्रह्मपरोपक्रमविरोधान्न विग्रहोपन्यासः सङ्गच्छत इत्यभिप्रायेणोक्तेश्च तैरेवान्यत्र परस्य विग्रहसद्भावः स्यात् परमेश्वरस्यापीच्छावशान्मायामयरूपं साधकानुग्रहार्थमिति, सूत्रकारेण च भोगमात्रसाम्यलिङ्गाच्चेत्यहङ्ग्रहोपासकानां ब्रह्मणश्च भोगसाम्यं वदता परस्य विग्रहसद्भावः स्फुटीकृतः। शरीरसापेक्षवैषयिकानन्दभोगशब्दप्रसिद्धेः।

---

१. मैत्रायण्युपनिषद्। २. नृसिंहोत्तरतापनीयोपनिषत् ९ खण्डः, पु. २३५।
३. कैवल्योपनिषत् खण्डः १ मन्त्रः ७, पु. १४३।

नवेन्वं सति मानान्तरविरोधेऽन्यतरशब्देभ्यो नार्थसिद्धिः। अस्त्विह विरिञ्चादिविग्रहत्रयव्यतिरेकेण ब्रह्मणः चिरन्तनतुरीयविग्रहाभ्युपगमे श्रुत्यन्तरविरोधः। मैत्रेयोपनिषदि 'तमो वा इदमेकमास तत्परेणेरितं विषमत्वं प्रयाती'ति तमःशब्दितमायोपाधिकं परशब्दितं ब्रह्म प्रस्तुत्य 'तस्य प्रोक्ता अग्र्यस्तनवो, ब्रह्मा रुद्रो विष्णुरि'ति परविग्रहाणां मध्ये विरिञ्चादिविग्रहत्रयस्यैवाग्र्यत्वश्रवणात्। यदि हि ततोऽपि प्राचीनं मूर्त्यन्तरं स्यात् ब्रह्मणः कथमेतेषामग्र्यत्वं भवेत्? अग्रे भवा ह्यग्र्या उच्यन्ते। अतो ब्रह्मादिमूर्तित्रितयातिरेकेण परस्य तुरीयमूर्तिरस्ति। तदवलम्बेनैव वृद्धानां विग्रहवत्त्वव्यवहार इत्याद्यवसीयते। अमुमेवार्थमुपोद्बलयन्ति अत्रितपश्चर्यायां भागवतवचनानि। तत्र ह्यत्रेस्तपश्चर्यास्तुत्या—

"शरणं[१] तं प्रपद्येऽहं य एव जगदीश्वरः।
प्रजामात्मसमां मह्यं प्रयच्छत्विति चिन्तयन्॥"

इति तस्य तत्फलाभिसन्धिं चोक्त्वा चिराद्वरप्रदानाय ब्रह्मविष्णुरुद्राणां तत्र सन्निधाने सति प्रणामाद्युपचारानन्तरं तान्प्रत्यत्रेः—

"एको मयेह भगवान् विबुधप्रधान-
श्चित्तीकृतः प्रजननाय कथं नु यूयम्।
अत्रागतास्तनुभृतां मनसो विदूरा
ब्रूत प्रसीदत महानिह विस्मयो मे॥"

"यथाकृतस्ते सङ्कल्पो भाव्यं तेनैव नान्यथा।
सत्सङ्कल्पस्य ते ब्रह्मन् यद्वै ध्यायसि ते वयम्॥"

इति तेषां प्रतिवचनोपन्यासेन विरिञ्चादिमूर्तित्रयातिरेकेण परस्य सर्वैश्वर्याभिव्यक्तिस्थानभूतं तुरीयं मूर्त्यन्तरं नास्तीति व्यक्तीकृतम्। तत्सम्भवे तेनैव रूपेण परस्य तत्र प्रादुर्भावापत्तेः। अन्यथा ऋषेः सत्सङ्कल्पत्वविरोधात्। गजेन्द्रमोचनस्थल इव ध्यातृभावगृहीतेन रूपेण प्रादुर्भाव इत्यपीह वक्तुमशक्यत्वात्। तथा कामये इत्यादिप्रस्तावायोगात्। तस्मान्न तुरीयस्य विग्रहाभ्युपगमो युक्त इति।

अत्राभिधीयते— तत्र तावत् 'उमासहायम्' इत्यादिकैवल्यमन्त्रवर्णेभ्यः तुरीया उमासहायत्वादिविशिष्टा मूर्तिः, साऽपि न ध्यानार्थमारोपितेति शक्यं वक्तुम्। छान्दोग्ये— समानप्रकरणे गुणोपसंहारन्यायेन उपास्यस्य ब्रह्मण उदाहृतमन्त्रवर्णसिद्धमूर्तिसिद्धवत्कारेण 'एष आत्मा अपहतपाप्मा

१. भागवतं स्कन्धः ४, अध्यायः १, श्लो. २०।

विजरो विमृत्युरि'त्यादिना शरीरवत्त्वसाम्येनान्येन प्रसक्तानां जरामरणजिघत्सापिपासादीनां प्रतिषेध-दर्शनात् । अन्यथा तेषामप्रस्तुतप्रतिषेधत्वापातात् । न च मूर्तिवदजरत्वादयोऽपि केवलमुपासनार्थ-मारोपिता एवोपन्यस्यन्त इति वाच्यम् । तत्रैवास्मिन् कामाः समाहिता इत्यादिना तेषामनारोपितेश्वर-गुणत्वास्फुटीकरणात् ।

नन्वजरत्वादिरपि न विग्रहगुणत्वेनोपास्यः । 'एष आत्माऽपहतपाप्मे'त्यादिनात्मगुणत्वोक्तेः । तद्गुणैः सत्यकामादिभिः सहपाठाच्च । आत्मनो जरादिप्रसक्त्यभावेऽपि स्वतःसिद्धाजरत्वस्तव एवेति तदेवोपास्यन्त्वेन निर्गुणप्रकरणभूताजरत्वादिवत् अनिध्यादावनुयाजादिनिषेधवच्च स्तुत्यर्थत्वेन वा निर्दिश्यत इति चेन्न । सर्ववेदान्तप्रत्ययन्यायेन तत्र विग्रहविशिष्टस्यैव ब्रह्मण उपास्यत्वस्थितेरेव औचित्यात् ॥ 'तस्योपरि शिवं ध्यायेत् साम्बं सर्वमनोहरम् । सर्वलक्षणसम्पन्नं गाढयौवनशोभनम् ॥' इत्याद्युपबृंहणानुरोधाच्च । अजरत्वादेर्विग्रहगुणत्वेनान्वयात् । तथात्वेऽपि तद्द्वारा आत्मगुणत्वसम्भवेन तद्व्यपदेशस्य तद्गुणैः सह पाठस्य 'त्रिलोचनं[1] नीलकण्ठं प्रशान्तमि'त्यस्य 'बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्छत्रुनिबर्हणः । विपुलांसो महाबाहुरि'त्यादाविवोपपत्तेश्च ।[2] तस्मिन्यदन्तस्तदन्वेष्टव्यमित्यादिना अनूद्यमानस्य स्तुत्यर्थत्वायोगाच्च । तस्माद्विग्रहगुणस्याजरत्वादेः स्वरूपतो विद्यमानत्वेन निर्दिश्यो-पास्यतया विधानेनारोपितत्वावसायाद्धर्मिणो विग्रहस्यानारोपितता निश्चीयत इत्यभ्युपगन्तव्यैव तुरीयस्यापि मूर्तिः । उक्तं च सूतसंहितायाम्—

> **"उमार्धविग्रहा शुक्ला त्रिनेत्रा चन्द्रशेखरा ।**
> **नीलग्रीवा परानन्दप्रमोदा ताण्डवप्रिया ।**
> **ब्रह्मविष्णुमहादेवैरुपास्या गुणमूर्तिभिः ।**
> **सर्वमूर्तिविहीनस्य सर्वभूताधिपस्य च ।**
> **तथाप्येषा परा[3] मूर्तिरित्येषा शाश्वती श्रुतिः ।"**

इति पराशरोपपुराणेऽपि[4] 'साक्षात्परतरस्यैव वस्तुनः सर्वसाक्षिणः । अस्ति मूर्तिः परा शुद्धा स्वतन्त्रा पापनाशनी । तस्याऽसाधारणी मूर्तिः साम्बा चन्द्रार्धशेखरे'त्यारभ्य 'ब्रह्मविष्णुमहेशानास्तां ध्यायन्ति निरन्तरमि'त्यन्तेनोक्तम् । 'य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' इति रविबिम्बमध्यवर्तित्वेन प्रसिद्धवन्निर्देशस्य तलवकारश्रुतावथर्वशिरसि च श्रुतस्य ब्रह्मणो दैवसंवादस्य चानुपपत्तिः । 'अजात-मिममेवैकं मत्त्वा जन्मनि भीरवः । रुद्रस्यास्य प्रपद्यन्ते रक्षार्थं दक्षिणं मुखमि'ति वायूक्तोपबृंहिते-

१. कैवल्योपनिषत् १ खण्डः मन्त्रः ७ । २. वाल्मीकिरामायणम् बालकाण्डः सर्गः १, श्लो. ९ ।
३. महामूर्तिः – पा० । ४. पराशरोपपुराणे अध्यायः १७, श्लोकः २६, २७ पूर्वार्धम् ।

तरव्यवच्छेदेन जन्मराहित्यप्रतिपादनेन स्फुटीकृतं अनादिन्वितात्पर्यम् । विग्रहे अजात इत्येव कैश्चिदुपपाद्यते । 'रुद्र यत्ते दक्षिणं मुखं तेन मुक्तिमि'ति श्वेताश्वतरोपनिषन्मन्त्रश्च भगवतः शिवस्य दिव्यविग्रहसद्भावे प्रमाणम् । श्वेताश्वतरादिमन्त्राणां तुरीयविषयत्वमुत्तरत्र स्फुटीकरिष्यते । तस्मादनेक-श्रुतिसद्भावात् परब्रह्मणो हि विग्रहवत्त्वस्य तदविरोधाय मैत्रेयश्रुतौ तनुशब्दो राजसोंऽश इत्याद्यग्रिम-वचनस्वारस्यादंशपरः अग्र्यशब्दस्त्वादिब्रह्ममूर्त्यन्तरापेक्षयाऽग्र्यत्वपर इति व्याख्येयः ।

यद्वा— अग्र्याख्यायामुरसः[1] (पा.सू. ५-४-९३) इत्यादावग्र्यशब्दस्य प्रधानेऽपि प्रसिद्धेः प्रधाने परमशिवविग्रहे भव इति व्याख्येयम् । त्रिमूर्तीनां परमशिवग्रहेण जननात् । यद्यपि भवे च्छन्दसि (पा.सू. ४-४-११०) इत्यधिकारे अग्राद्यत् इति (पा.सू. ४-४-११६) 'यत्प्रत्ययः', स्मृतितो भवार्थश्च । सन्तानं जन्म तत्र जातस्तत्र[2] भव इति पृथगधिकारदर्शनादिति । 'नमः काट्याय च नमस्सूद्याय च सरस्याय चे'त्यादौ, काटादिषु परमेश्वरस्य सद्भावमात्रेण भवार्थप्रत्ययदर्शनाच्च । तथापि 'नासतो विद्यते भाव' इति स्मृतेर्जन्मस्थले सत एव कार्यस्योत्पत्तिरिति जातेऽपि भवार्थप्रत्ययो न विरुद्ध्यते । ऊरव्या ऊरुजा इति भवार्थप्रत्ययस्यान्यत्रापि दर्शनात् । दर्शितं च महाभारते— तिसृणां मूर्तीनां परमशिवविग्रहे जननम् ।

**"स एष भगवानीशः सर्वतत्त्वादिरव्ययः ।**
**सर्वतत्त्वविधानज्ञः प्रधानपुरुषेश्वरः ।**
**सोऽसृजद्दक्षिणादङ्गात् ब्रह्माणं लोकसम्भवम् ।**
**वामपार्श्वात्तथा विष्णुं लोकरक्षार्थमीश्वरः ।**
**युगान्ते चैव सम्प्राप्ते रुद्रं प्रभुरथासृजन् ॥"** इति ।

शिवराघवसंवादे च—

**"य एकः शाश्वतो देवो ब्रह्मवन्द्यः सदाशिवः ।**
**त्रिलोचनो गुणाधारो गुणातीतोऽक्षरोऽव्ययः ।**
**जाता सिसृक्षा तस्याथ वीक्ष्यात्मस्थं गुणत्रयम् ।**
**वेदत्रयमिमं देवं गुणत्रयमिदं हि यत् ।**
**पृथक्कृत्यात्मनस्तद्धि तत्र सारं विभज्य च ।**

---

१. टच् स्यात् । अश्वानामुर इव अश्वोरसम् । मुख्योऽश्व इत्यर्थः —सिद्धान्तकौमुदी ।
२. सू. ४-३-२७, ४-३-५३ ।

**दक्षिणेनासृजत् पुत्रं ब्रह्माणं वामतो हरिम् ।**
**पृष्ठदेशेऽमरेशानं त्रीन् पुत्रानसृजत् प्रभुः ॥"** इति ।

यत्तद्भागवतवचनजातमुदाहृतं तदपि परममूर्तेरतिरहस्यत्वेनालभ्यदर्शनतया अत्रेः सत्सङ्कल्पताप्रामये सोमाद्यवतारत्रयेण लोकतन्त्रनिर्वाहाय च मूर्तित्रयेण प्रादुर्भाव इत्येतदभिप्रायेणेति न विरोधः । अलभ्यदर्शनत्वं च परमशिवमूर्तेर्दर्शितं शिवपुराणे[1] 'अप्राकृतवपुः श्रीमान् लक्ष्यलक्षणवर्जित' इत्यादिना तन्महिमविशेषानुपवर्णयता कमलासनेन—

**"हरिश्चाहं च रुद्रश्च तथाप्यन्ये सुरासुराः ।**
**तपोभिरुग्रैरद्यापि तस्य दर्शनकाङ्क्षिणः ॥"** इति ।

नन्वस्त्वेवं परस्य विग्रहसद्भावः तथापि शिवभावादिशब्दानां गुणिरुद्रवाचिनामेव वस्त्वभेददृष्ट्या तत्रापि प्रयोगोपपत्तेः न तस्य तद्वाक्यमङ्गीकरणीयमिति चेन्न । नीलकण्ठत्वादिविशिष्टमूर्तिशब्दिते ब्रह्मणि तेषां व्युत्पत्तेः प्रसिद्धत्वात् । अथर्वशिखादिषु महेश्वरमहादेवादिशब्दानां स्तुतिनामत्वेन निर्वचनाच्च तस्य शिवादिशब्दवाच्यत्वस्याभ्युपगन्तव्यत्वात् ।

ननु यदुमासहायत्वत्रिलोचनत्वादिविशिष्टमूर्तिशब्दितशिवपरेषु पुराणेषु विविधमहिमाकरत्वेन लिङ्गादिषूपास्यत्वेन प्रतिपाद्यमानः पुरुषस्त्रिमूर्त्यतीतं परमेव किं स्रष्टृपालकयोर्ब्रह्मनारायणयोः तृतीयः संहर्ता कः ? किं वास्य प्रतिपादकं पुराणादिकं च ।

### ३. तुरीयस्य परमशिवस्य स्वरूपनिरूपणम्

उच्यते— यादृशं परमशिवस्य रूपं यानि च नामानि तादृशमेव तस्यापि रूपं नामवचनानि च । तदुक्तं सूतसंहितायाम्—

**"तत्रायःपिण्डवद्विप्र[2] रुद्रमूर्तिः परस्य तु ।**
**मूर्त्या तुल्या न मूर्तिभ्यां लक्षणैर्मुनिसत्तमाः ।**
**परतत्त्वस्य नामानि प्रत्यासत्त्या मुनीश्वराः ।**
**त्रिमूर्तीनां तु रुद्रस्याप्यभिधानानि सुव्रत ॥"** इति ।

शिवपुराणेऽपि[3] संहाररुद्रमाहात्म्यं प्रस्तुत्योक्तम् —

---

१. ७-१-३ श्लो. १७ २. तत्रायःपिण्डवत्, तप्तायःपिण्डवत् इति पाठद्वयं अत्र सम्भाव्यते ।
३. शिवपुराणे वायवीयसंहितापूर्वभागः ७-१-१८ (५ तः ७ पर्यन्तम्) ।

"स एव भगवानेकस्तेजोराशिरनामयः ।
अनादिनिधनो धाता भूतसङ्कोचको विभुः ।
परमेश्वरसंयुक्तः परमेश्वरभावितः ।
तच्छक्त्याधिष्ठितः शश्वत् तच्चिह्नैरपि चिह्नितः ।
तन्नामनामा तद्रूपस्तत्कार्यकरणक्षमः ।
तत्तुल्यव्यवहारश्च तदाज्ञापरिपालकः ॥" इत्यादि ।

यद्यपि तस्यासाधारण्येन प्रतिपादकं पुराणं नास्ति । तथापि प्रत्यासत्त्यतिशयात् परमशिवपरेष्वेव पुराणेषु तत्प्रतिपादनम् । यथानुपाद्ये चोदाहृतम् । शिवपुराणे उक्तं च पराशरेण—

"महेश्वरपुराणानि समस्तानि महामुने ।
असाधारणया मूर्त्या नाम्नाऽसाधारणेन च ।
वदन्ति परमं तत्त्वं शिवं साम्बं त्रिलोचनम् ।
त्रिमूर्तीनां हरं चापि तदंशं तस्य वैभवम् ।
तदंशस्वाभिमानं च वदन्ति च महामुने ॥" इति च ।

आराधननमस्कृतयश्च परमशिवाभिव्यक्तिस्थानेष्वेव लिङ्गादिषु । एवं परमशिवस्य गुणिरुद्रस्य च नामरूपादिसाम्यादविस्फुटं ब्रह्मविष्णुयोगाभ्यां प्रत्यासत्त्यतिशयावगमाद्विशिष्य परमशिवाभेदेन गुणि-रुद्रस्य व्यवहारः ।

पुराणादिषु शैवानां च तत्राभिमानातिशयो गुणचरितादिसाधारण्यव्यपदेशश्च । अत एव केषा-ञ्चिदद्यापि तयोर्विवेकाग्रहः ।

अथ पुराणादिषु प्रसिद्धासु शैवमूर्तिषु काः परमशिवमूर्तयः ? काश्च गुणिरुद्रमूर्तयः ?

अत्र केचिदाहुः— 'आनन्दताण्डवविग्रहो दक्षिणामूर्तिविग्रहः । ताण्डवपरोमार्धविग्रहश्चेति विग्रहत्रयमेव परमशिवस्य । अन्ये तु गुणिरुद्रस्य' इति । तन्न रोचयामहे । योगयाज्ञवल्क्ये—

"पृथिव्यां वायुमारोप्य लकारेण समन्वितम् ।
ध्यायंश्चतुर्भुजाकारं ब्रह्माणं परमेष्ठिनम् ।
धारयेत् पञ्चघटिकाधारणात् सिद्धिमाप्नुयात् ।
वारुणे वायुमारोप्य वकारेण समन्वितम् ।

स्मरन्नारायणं सौम्यं चतुर्बाहुं किरीटिनम् ।
शुद्धस्फटिकसंकाशं पीतवाससमच्युतम् ।
धारयेत् पञ्चघटिकाः सर्वपापैः प्रमुच्यते ।
वह्नौ चानिलमारोप्य रेफाक्षरसमन्वितम् ।
बिम्बरूपं महादेवं व्योमाकारं सदाशिवम् ।
शुद्धस्फटिकसंकाशं बालेन्दुकृतशेखरम् ।
पञ्चवक्त्रधरं सौम्यं दशबाहुं त्रिलोचनम् ।
सर्वायुधोद्यतकरं सर्वभूषणभूषितम् ।
उमार्धदेहं वरदं सर्वकारणकारणम् ।
चिन्तयंश्चित्तविन्यस्तं मुहूर्तमपि धारयेत् ।
स एवं मुक्त इत्युक्तस्तान्त्रिकेष्वपि शिक्षितैः ।"

इति परमेश्वरस्य पञ्चवक्त्रश्रीसदाशिवमूर्तेरपि प्रतिपादनात् । वायुसंहितायां च योगेश्वरस्य पूजाविधाने तथैव तस्याः प्रतिपादनात् । कूर्मपुराणे[1] च— नीललोहितकारितब्रह्मपञ्चमशिरोलवनप्रस्तावे—

"अथान्वपश्यद्गिरिशं मण्डलान्तरसंस्थितम् ।
समासीनं महादेव्या महादेवं सनातनम् ॥"

इत्यादिना एकासनस्थितोमासहायशूलधरमूर्तेरपि तदीयायाः प्रतिपादनात् ।

तस्माद्यथागमाचार्योपदेशमन्येऽपि विग्रहाः परशिवस्य प्रतिपत्तव्याः । तेषां तु परिच्छेदोऽति-रहस्यत्वाद्गुरूपदेशैकगम्यो नात्र प्रदर्श्यते ।

"एवं मायावपुर्ब्रह्म तुरीयं विश्वकारणम् ।
उमासहायो भगवानिन्दुमौलिरिति स्थितम् ॥"

### ४. पूर्वपक्षे नारायणस्यैव मूर्तित्रयातिरिक्तस्य तुरीयब्रह्मत्वाक्षेपः तत्खण्डनं च

ननु मूर्तित्रयातिरिक्तं मायोपाधिकं ब्रह्म नारायण इत्यपि केभ्यश्चिद्वचनेभ्योऽवसीयते । तथाहि — विष्णुपुराणे तावत्—

---

१. कूर्मपुराण, उत्तरार्धम्— अध्याय ३१ श्लोकः ३२ ।

"ब्रह्मा[1] दक्षादयः कालः तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ।
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ।
रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रलयायैते जनार्दनविभूतयः ॥" इति ।

एवं भागवतबृहन्नारदीयादिष्वपि वचनानि क्वचित्क्वचिदुपलभ्यन्ते । प्रपञ्चसारोपक्रमे च— त्रिमूर्तिनां शेषशायिनः पुरुषोत्तमस्य प्रष्टुपदेष्टृभावनिबन्धनेन स्फुटीकृतोऽयमर्थः । उत्तरतापनीये[2] "नारसिंहेन वानुष्टुभा मन्त्रराजेन तुरीयं विद्यादेष ह्यात्मानं प्रकाशयति सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः सदोज्वलोऽविद्याकार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति तस्मादेवमेवेममात्मानं परं ब्रह्मानुसन्दध्यादेष वीरो नृसिंह एव" इत्यादिना नृसिंहस्य तुरीयत्वव्यपदेशात् । पूर्वतापनीये[3]

"यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् यश्च महेश्वरस्तस्मै वै ननो नमः ।
यो वै नृसिंहो देवो भगवान् या सरस्वती तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् या श्रीः तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् या गौरी तस्मै वै नमो नमः ॥"

इत्यारभ्य— "यो वै नृसिंहो देवो भगवान् यश्च सर्वं तस्मै वै नमो नमः" इत्यन्तेन ब्रह्मविष्णुमहेश्वराणां नृसिंहविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलताप्यस्यार्थस्य प्रतीयते । एवमेव— "यो वै श्रीरामचन्द्रः स भगवान् यो ब्रह्मा विष्णुरीश्वरो यः सर्वदेवात्मा भूर्भुवस्स्वस्तस्मै वै नमो नमः" इति रामोपनिषदि[4] ब्रह्मविष्णवीश्वराणां रामचन्द्रविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलतास्यार्थस्यावगम्यते । तथाच कथं तुरीयः परमशिव इति ।

---

१. विष्णुपुराणम् – अंश १, अध्यायः २२ श्लोकः ३१ तः ३३ पर्यन्तम् ।
२. नृसिंहोत्तरतापनीये खण्डः २, मन्त्रः २, पु. २२९ ।
३. नृसिंहपूर्वतापनीये चतुर्थोपनिषत् १ तः ३२ मन्त्रपर्यन्तम्, पु. २२३-२२४ ।
४. रामोत्तरतापिन्युपनिषत् मन्त्रः ५, पु. ४०३ ।

अत्राभिधीयते—

"पादो वैश्वानरादीनां तुरीयो निर्गुणः स्मृतः ।
उत्तरस्मिंस्तापनीये न गुणिभ्यः परो हरिः ।
सगुणांशप्रतिक्षेपाच्छिवांशं तमिति श्रुतेः ।
तुरीयश्शिव एव स्यादैन्द्रीन्यायष्टुभः[१] ।
अस्तु वासौ नृसिंहस्तत्तुरीयं पादमात्मनः ।
कुर्वतानेन नोक्ता स्याद्गुणिभ्यः परता हरेः ।"

पूर्वतापनीयमन्त्रस्तु अथर्वशिरआद्यनेकश्रुत्यन्तरसिद्धं शम्भोस्त्रिमूर्त्यतीतमायोपहितब्रह्मरूपत्वं प्रतिक्षिप्य न विष्णोस्तथाऽत्र विधानक्षमोऽस्ति । मूर्त्यन्तर्गतस्यैतस्य वस्तुकृतसार्वात्म्यख्यापनाय प्रवृत्तः सन्— 'वृष्णीनां वासुदेवोऽस्मि' इति कृष्णवचनवत् त्वमपि विभूतिमध्ये गणयसीति । अथ कैर्मन्त्रैः देवः स्तुतः प्रीतो भवति ? एतैर्मन्त्रैर्देवं स्तुवन्नूर्ध्वमित्युपक्रमोपसंहाराभ्यां स्तुतिपरत्वाव-सायात् । तदवताररूपे नृसिंहे— 'विरिञ्चनारायणशङ्करात्मन' इति वचनं सवितरीव स्तुत्यर्थं सत् ब्रह्माद्यात्मकत्वं व्यपदिशतीति वा नेतव्यम् । एवमेव रामोपनिषन्मन्त्रोऽप्युदाहृतो नेय इति ।

एवञ्च पुराणवचनानि विष्णोरनिरुद्धादिपरत्वतात्पर्येणापि चरितार्थानि मूर्तित्रयपरत्वं न व्यव-स्थापयितुं क्षमन्ते । तथाहि— शिवस्य ब्रह्मविष्णुरुद्रा इव तेषामपि सन्ति व्यूहा जगतां हरणभरण-समुत्पादनेष्वधिकृता वायुसंहितादिप्रसिद्धा ब्रह्मणो विराट्कालपुरुषाख्यास्त्रयः, विष्णोः सङ्कर्षणप्रद्युम्ना-निरुद्धाख्याः, रुद्रस्य हरमृडभवाख्याः । एते न दक्षमन्वन्तरादिवत् सृष्ट्यादिष्ववान्तराधिकारिणः । एवञ्च विष्णोस्त्रिमूर्तिपरत्वपराणि पुराणवचनानि स्वव्यूहत्रयपरत्वपराण्युपपद्यन्ते । तद्व्यूहानामपि सृष्ट्या-द्यधिकारादिसामान्यात्, ब्रह्मादिव्यपदेशोपपत्तेश्च ।

"एका भागवती मूर्तिर्ज्ञानरूपा शिवामला ।
वासुदेवाभिधाना सा गुणातीता सुनिष्कला ।
द्वितीया रुद्रसंज्ञा स्यात्तामसी शेषसंज्ञिता ।
निहन्ति सकलं चान्या वैष्णवी परमा तनुः ।
सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च संज्ञिता ।
जगत्स्थापयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा ।

१. अत्र ग्रन्थपातः ।

"ब्रह्मा' दक्षादयः कालः तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ।
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ।
रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रलयायैते जनार्दनविभूतयः ॥" इति ।

एवं भागवतबृहन्नारदीयादिष्वपि वचनानि क्वचित्क्वचिदुपलभ्यन्ते । प्रपञ्चसारोपक्रमे च— त्रिमूर्तिनां शेषशायिनः पुरुषोत्तमस्य प्रष्टुपदेष्टृभावनिबन्धनेन स्फुटीकृतोऽयमर्थः । उत्तरतापनीये[2] "नारसिंहेन वानुष्टुभा मन्त्रराजेन तुरीयं विद्यादेष ह्यात्मानं प्रकाशयति सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः सदोज्वलोऽविद्याकार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति तस्मादेवमेवमात्मानं परं ब्रह्मानुसन्दध्यादेष वीरो नृसिंह एव" इत्यादिना नृसिंहस्य तुरीयत्वव्यपदेशात् । पूर्वतापनीये[3]

"यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् यश्च महेश्वरस्तस्मै वै ननो नमः ।
यो वै नृसिंहो देवो भगवान् या सरस्वती तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् या श्रीः तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् या गौरी तस्मै वै नमो नमः ॥"

इत्यारभ्य— "यो वै नृसिंहो देवो भगवान् यश्च सर्वं तस्मै वै नमो नमः" इत्यन्तेन ब्रह्मविष्णुमहेश्वराणां नृसिंहविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलताप्यस्यार्थस्य प्रतीयते । एवमेव— "यो वै श्रीरामचन्द्रः स भगवान् यो ब्रह्मा विष्णुरीश्वरो यः सर्वदेवात्मा भूर्भुवरस्वस्तस्मै वै नमो नमः" इति रामोपनिषदि[4] ब्रह्मविष्णवीश्वराणां रामचन्द्रविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलतास्यार्थस्यावगम्यते । तथाच कथं तुरीयः परमशिव इति ।

---

१. विष्णुपुराणम् – अंश १, अध्यायः २२ श्लोकः ३१ तः ३३ पर्यन्तम् ।
२. नृसिंहोत्तरतापनीये खण्डः २, मन्त्रः २, पु. २२९ ।
३. नृसिंहपूर्वतापनीये चतुर्थोपनिषत् १ तः ३२ मन्त्रपर्यन्तम्, पु. २२३-२२४ ।
४. रामोत्तरतापिन्युपनिषत् मन्त्रः ५, पु. ४०३ ।

अत्राभिधीयते—

"पादो वैश्वानरादीनां तुरीयो निर्गुणः स्मृतः ।
उत्तरस्मिंस्तापनीये न गुणिभ्यः परो हरिः ।
सगुणांशप्रतिक्षेपाच्छिवांशं तमिति श्रुतेः ।
तुरीयश्शिव एव स्यादैन्द्रीन्यायद्वृभः[१] ।
अस्तु वासौ नृसिंहस्तत्तुरीयं पादमात्मनः ।
कुर्वतानेन नोक्ता स्याद्गुणिभ्यः परता हरेः ।"

पूर्वतापनीयमन्त्रस्तु अथर्वशिरआद्यनेकश्रुत्यन्तरसिद्धं शम्भोस्त्रिमूर्त्यतीतमायोपहितब्रह्मरूपत्वं प्रतिक्षिप्य न विष्णोस्तथाऽत्र विधानक्षमोऽस्ति । मूर्त्यन्तर्गतस्यैतस्य वस्तुकृतसार्वात्म्यख्यापनाय प्रवृत्तः सन्— 'वृष्णीनां वासुदेवोऽस्मि' इति कृष्णवचनवत् त्वमपि विभूतिमध्ये गणयसीति । अथ कैर्मन्त्रैः देवः स्तुतः प्रीतो भवति ? एतैर्मन्त्रैर्देवं स्तुवन्नूर्ध्वमित्युपक्रमोपसंहाराभ्यां स्तुतिपरत्वावसायात् । तदवताररूपे नृसिंहे— 'विरिञ्चनारायणशङ्करात्मन' इति वचनं सवितरीव स्तुत्यर्थं सत् ब्रह्माद्यात्मकत्वं व्यपदिशतीति वा नेतव्यम् । एवमेव रामोपनिषन्मन्त्रोऽप्युदाहृतो नेय इति ।

एवञ्च पुराणवचनानि विष्णोरनिरुद्धादिपरत्वतात्पर्येणापि चरितार्थानि मूर्तित्रयपरत्वं न व्यवस्थापयितुं क्षमन्ते । तथाहि— शिवस्य ब्रह्मविष्णुरुद्रा इव तेषामपि सन्ति व्यूहा जगतां हरणभरणसमुत्पादनेष्वधिकृता वायुसंहितादिप्रसिद्धा ब्रह्मणो विराट्कालपुरुषाख्यास्त्रयः, विष्णोः सङ्कर्षणप्रद्युम्नानिरुद्धाख्याः, रुद्रस्य हरमृडभवाख्याः । एते न दक्षमन्वन्तरादिवत् सृष्ट्यादिष्ववान्तराधिकारिणः । एवञ्च विष्णोस्त्रिमूर्तिपरत्वपराणि पुराणवचनानि स्वव्यूहत्रयपरत्वपराण्युपपद्यन्ते । तद्व्यूहानामपि सृष्ट्याद्यधिकारादिसामान्यात्, ब्रह्मादिव्यपदेशोपपत्तेश्च ।

"एका भागवती मूर्तिर्ज्ञानरूपा शिवामला ।
वासुदेवाभिधाना सा गुणातीता सुनिष्कला ।
द्वितीया रुद्रसंज्ञा स्यात्तामसी शेषसंज्ञिता ।
निहन्ति सकलं चान्या वैष्णवी परमा तनुः ।
सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च संज्ञिता ।
जगत्स्थापयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा ।

[१] अत्र ग्रन्थपातः ।

"ब्रह्मा[1] दक्षादयः कालः तथैवाखिलजन्तवः ।
विभूतयो हरेरेता जगतः सृष्टिहेतवः ।
विष्णुर्मन्वादयः कालः सर्वभूतानि च द्विज ।
स्थितेर्निमित्तभूतस्य विष्णोरेता विभूतयः ।
रुद्रः कालोऽन्तकाद्याश्च समस्ताश्चैव जन्तवः ।
चतुर्धा प्रलयायैते जनार्दनविभूतयः ॥" इति ।

एवं भागवतबृहन्नारदीयादिष्वपि वचनानि क्वचित्क्वचिदुपलभ्यन्ते । प्रपञ्चसारोपक्रमे च— त्रिमूर्तिनां शेषशायिनः पुरुषोत्तमस्य प्रष्टुपदेष्टृभावनिबन्धनेन स्फुटीकृतोऽयमर्थः । उत्तरतापनीये[2] "नारसिंहेन वानुष्टुभा मन्त्रराजेन तुरीयं विद्यादेष ह्यात्मानं प्रकाशयति सर्वसंहारसमर्थः परिभवासहः प्रभुर्व्याप्तः सदोज्वलोऽविद्याकार्यहीनः स्वात्मबन्धहरः सर्वदा द्वैतरहित आनन्दरूपः सर्वाधिष्ठानः सन्मात्रो निरस्ताविद्यातमोमोहोऽहमेवेति तस्मादेवमेवेममात्मानं परं ब्रह्मानुसन्दध्यादेष वीरो नृसिंह एव" इत्यादिना नृसिंहस्य तुरीयत्वव्यपदेशात् । पूर्वतापनीये[3]

"यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् यश्च विष्णुस्तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् यश्च महेश्वरस्तस्मै वै ननो नमः ।
यो वै नृसिंहो देवो भगवान् या सरस्वती तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् या श्रीः तस्मै वै नमो नमः ।
यो वै नृसिंहो देवो भगवान् या गौरी तस्मै वै नमो नमः ॥"

इत्यारभ्य— "यो वै नृसिंहो देवो भगवान् यश्च सर्वं तस्मै वै नमो नमः" इत्यन्तेन ब्रह्मविष्णुमहेश्वराणां नृसिंहविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलताप्यस्यार्थस्य प्रतीयते । एवमेव— "यो वै श्रीरामचन्द्रः स भगवान् यो ब्रह्मा विष्णुरीश्वरो यः सर्वदेवात्मा भूर्भुवस्स्वस्तस्मै वै नमो नमः" इति रामोपनिषदि[4] ब्रह्मविष्णवीश्वराणां रामचन्द्रविभूतिषु पाठाच्च प्रत्यक्षश्रुतिमूलतास्यार्थस्यावगम्यते । तथाच कथं तुरीयः परमशिव इति ।

---

१. विष्णुपुराणम् – अंश १, अध्यायः २२ श्लोकः ३१ तः ३३ पर्यन्तम् ।

२. नृसिंहोत्तरतापनीये खण्डः २, मन्त्रः २, पु. २२९ ।

३. नृसिंहपूर्वतापनीये चतुर्थोपनिषत् १ तः ३२ मन्त्रपर्यन्तम्, पु. २२३-२२४ ।

४. रामोत्तरतापिन्युपनिषत् मन्त्रः ५, पु. ४०३ ।

अत्राभिधीयते—

"पादो वैश्वानरादीनां तुरीयो निर्गुणः स्मृतः ।
उत्तरस्मिंस्तापनीये न गुणिभ्यः परो हरिः ।
सगुणांशप्रतिक्षेपाच्छिवांशं तमिति श्रुतेः ।
तुरीयश्शिव एव स्यादैन्द्रीन्यायद्भ्रमः[1] ।
अस्तु वासौ नृसिंहस्तत्तुरीयं पादमात्मनः ।
कुर्वतानेन नोक्ता स्याद्गुणिभ्यः परता हरेः ।"

पूर्वतापनीयमन्त्रस्तु अथर्वशिरआद्यनेकश्रुत्यन्तरसिद्धं शम्भोस्त्रिमूर्त्यतीतमायोपहितब्रह्मरूपत्वं प्रतिक्षिप्य न विष्णोस्तथाऽत्र विधानक्षमोऽस्ति । मूर्त्यन्तर्गतस्यैतस्य वस्तुकृतसार्वात्म्यख्यापनाय प्रवृत्तः सन्— 'वृष्णीनां वासुदेवोऽस्मि' इति कृष्णवचनवत् त्वमपि विभूतिमध्ये गणयसीति । अथ कैर्मन्त्रैः देवः स्तुतः प्रीतो भवति ? एतैर्मन्त्रैर्देवं स्तुवन्नूर्ध्वमित्युपक्रमोपसंहाराभ्यां स्तुतिपरत्वावसायात् । तदवताररूपे नृसिंहे— 'विरिञ्चनारायणशङ्करात्मन' इति वचनं सवितरीव स्तुत्यर्थं सत् ब्रह्माद्यात्मकत्वं व्यपदिशतीति वा नेतव्यम् । एवमेव रामोपनिषन्मन्त्रोऽप्युदाहृतो नेय इति ।

एवञ्च पुराणवचनानि विष्णोरनिरुद्धादिपरत्वतात्पर्येणापि चरितार्थानि मूर्तित्रयपरत्वं न व्यवस्थापयितुं क्षमन्ते । तथाहि— शिवस्य ब्रह्मविष्णुरुद्रा इव तेषामपि सन्ति व्यूहा जगतां हरणभरणसमुत्पादनेष्वधिकृता वायुसंहितादिप्रसिद्धा ब्रह्मणो विराट्कालपुरुषाख्यास्त्रयः, विष्णोः सङ्कर्षणप्रद्युम्नानिरुद्धाख्याः, रुद्रस्य हरमृडभवाख्याः । एते न दक्षमन्वन्तरादिवत् सृष्ट्यादिष्ववान्तराधिकारिणः । एवञ्च विष्णोस्त्रिमूर्तिपरत्वपराणि पुराणवचनानि स्वव्यूहत्रयपरत्वपराण्युपपद्यन्ते । तद्व्यूहानामपि सृष्ट्याद्यधिकारादिसामान्यात्, ब्रह्मादिव्यपदेशोपपत्तेश्च ।

"एका भागवती मूर्तिर्ज्ञानरूपा शिवामला ।
वासुदेवाभिधाना सा गुणातीता सुनिष्कला ।
द्वितीया रुद्रसंज्ञा स्यात्तामसी शेषसंज्ञिता ।
निहन्ति सकलं चान्या वैष्णवी परमा तनुः ।
सत्त्वोद्रिक्ता तृतीयान्या प्रद्युम्नेति च संज्ञिता ।
जगत्स्थापयते सर्वं सा विष्णुप्रकृतिर्ध्रुवा ।

---

१. अत्र ग्रन्थपातः ।

चतुर्थी वासुदेवस्य मूर्तिर्ब्रह्मेतिसंज्ञिता ।
राजसी चानिरुद्धाख्या पुरुषः सृष्टिकारिका ।"

इति कौर्मे तेषां तद्व्यपदेशदर्शनाच्च । एवं ब्रह्मणस्त्रिमूर्तिपरत्ववचनानामप्युपपत्तिरुन्नेया । वायुसंहितायां— "तदण्डेऽस्मिन्विवृद्धोऽभूत्क्षेत्रज्ञो ब्रह्मसंहित" इति ब्रह्माणं प्रस्तुत्य "त्रिधा विभज्य चात्मानं त्रैलोक्ये सम्प्रवर्तते । सृजते ग्रसते चैव रक्षते च त्रिभिः स्वयम्" इत्यादिना तद्व्यूहान् प्रदर्श्य "सत्त्वं रजश्च ब्रह्मत्वे कालत्वे च तमो रजः । विष्णुत्वे केवलं सत्त्वं गुणवृत्तिस्त्रिधा विभोः" इति तद्व्यूहानां गुणविभागश्लोकेऽपि ब्रह्मादिशब्दप्रयोगाच्च ।

**९. पूर्वपक्षे तुरीयस्य परमशिवस्य शिवव्यूहान्तर्गतत्वाक्षेपः**

ननु तर्हि शिवस्य त्रिमूर्तिपरत्ववचनान्यपि संहाररुद्रव्यूहभूतभवमृडहरपरत्वपराणीति संहाररुद्र एव तदभिमतश्शिवोऽस्तु, तस्य गुणमूर्तिभ्यः परत्वे न मानमिति चेन्न ।

सृजत्यशेषमीशस्य शासनाच्चतुराननः ।
तिसृभिर्मूर्तिभिश्चापि पाति शास्ति निहन्ति च ।
विष्णुः पालयते विश्वं विश्वयोनेर्नियोगतः ।
सृजते ग्रसते चापि स्वकाभिस्तनुभिस्त्रिभिः ।
हरत्येतज्जगत्सर्वं हरस्तस्यैव शासनात् ।
सृजत्यपि च विश्वात्मा त्रिधा भिन्नस्तु रक्षति ।

इति शिवपुराणे स्वस्वव्यूहसहितानां ब्रह्मविष्णुरुद्राणां शिवनियोगेन स्वस्वकृत्ये प्रवृत्त्युपन्यासेन तत्रैव योगेश्वराख्यपूजाविधौ स्वव्यूहावरणकानां तेषां शिवावरणे पूजाविधानेन योगयाज्ञवल्क्येन तत्तद्रूपोपन्यासेन प्रसिद्धानेव ब्रह्मादीन् प्रस्तुत्य सदाशिवस्य तेभ्यः परत्वकथनेन च तस्य त्रिमूर्त्यतिरेकसिद्धेः ।

एवं तर्हि विष्णुपुराणे (४-१-८५) 'यस्य प्रसादादहमच्युतस्ये'त्यादि ब्रह्मवचनाद्विष्णोस्त्रिमूर्त्यतिरेकः कुतो न सिद्ध्येत् ? न हि ब्रह्मवक्तृके वाक्ये अनिरुद्धेऽहंशब्दप्रयोग उपपद्यत इति चेन्न, अहङ्काराभिमानित्वादनिरुद्धस्य— 'वैकारिकस्तैजसश्च तामसश्चेत्यहं त्रिधे'त्यत्रेव तत्रापि नामैकदेशत्वेनाहं प्रयोगोपपत्तेः । तस्य वक्तृपरत्वेऽपि 'यस्माच्च मध्यं पुरुषः पुराण' इत्यत्र पुरुषशब्दस्य प्रद्युम्नपरत्वेनाप्युपपत्त्या तत्र श्रुत्यननुरोधिनो विष्णोस्त्रिमूर्तिपरत्वस्यासिद्धेः । विष्णुपुराण एव पुराणप्रतिपाद्यनारायणं प्रस्तुत्य 'स परस्सर्वशक्तीनां ब्रह्मणस्समनन्तर' इति तस्य जगत्कारणब्रह्मपरत्वोक्तेः ।

भागवतोपक्रमे च—

**तस्मादेकेन[1] मनसा भगवान् सात्वतां पतिः ।**
**श्रोतव्यः कीर्तितव्यश्च ध्येयः पूज्यश्च नित्यदा ।**

इत्यादिना भागवतस्य श्रवणादिकं विधाय कोऽसौ भगवानिति जिज्ञासायां 'सत्त्वं[2] रजस्तम' इत्यादि-श्लोकेन सत्त्वगुणोपहितं परमपुरुषांशं श्रेयस्करत्वानुवादन प्रागुपक्षिप्तनियतभजनीयत्वोपपादनपूर्वकं भगवन्तं विधाय, 'भेजिरे[2] मुनयोऽथाग्र' इत्यादिना तद्भजनस्य क्रममुक्तिफलमुपपाद्य तस्य सकल-वेदप्रतिपाद्यत्वादिकमुक्त्वा 'जगृहे पौरुषं[3] रूपमि'त्यादिना तस्य लीलाविग्रहसद्भावं प्रतिपाद्य 'एतन्नाना-वताराणां[4] निधानं बीजमव्ययमि'ति— तस्य सकलवैष्णवावतारमूलविग्रहत्वप्रदर्शनेन सत्त्वोपहितः परमपुरुषांश एव परं विष्णुतत्त्वमिति स्फुटीकरणात् ।

पराशरपुराणे— माहेश्वरपुराणनीत्यादिना[5] शैवपुराणानां परमशिवसंहाररुद्रोभयपरत्वमुक्त्वा

**"वैष्णवानि[5] पुराणानि समस्तानि महामुने ।**
**त्रिमूर्तीनां हरेर्नाम्ना मूर्त्या तस्य परं पदम् ।**
**प्रवदन्ति पुराणे द्वे ब्राह्मी चैवानया दिशा ॥"** इति

वैष्णवपुराणानां त्रिमूर्त्यन्तर्गतविष्णौ पर्यवसानोक्त्या स एव विष्णुतत्त्वमिति स्फुटीकरणाच्च । तस्माद्युक्तः तुरीयः परमशिव एवेति निर्णयः । अथवाऽस्तु तुरीयकोटावेकरूपैव मूर्तिर्ब्रह्मण इति नियमः । तस्यात्रैव अविगीतसकलशैवपुराणप्रसिद्धेः 'गिरामाहुर्देवीं द्रुहिणगृहिणीमागमविद' इत्याद्यभियुक्तोक्तेश्च भवानी-मूर्तेरपि सद्भावात् । इहापि 'गुणातीतोऽपि त्वं सगुण इव मायाशबलितः परिष्कुर्वन् साम्बं वपुरि'ति तथैवाभ्युपगमाच्च । किन्तु पराशक्तेर्भवान्या एवंरूपो विलासः—

**"एकैव शक्तिः परमेश्वरस्याभिन्ना चतुर्धा विनियोगकाले ।**
**भोगे भवानी पुरुषेषु विष्णुः कोपेषु काळी समरेषु दुर्गा ॥"**

इत्यागमिकोपदेशात् । 'उमा या स हरिः साक्षाद्यो हरिः सा शिवा स्मृते'त्यादिपुराणवचनात् ।

**"प्रकृतिस्त्वं पुमान् रुद्रस्त्वयि तद्वीर्यमाहितम् ।**
**त्वन्नाभिपङ्कजाज्जातः पञ्चवक्त्रः पितामहः ॥"** इति ब्रह्माण्डपुराणे ।

---

१. भागवतम् स्कन्धः १, अ. २, श्लो. १८ । २-२. भागवतम् स्कन्धः १, अ. २, श्लो. २३-२४ ।
३. भागवतम् स्कन्धः २, अध्यायः ३, श्लोक १ । ४. भागवतम् स्कन्धः १, अध्यायः ३, श्लोक ४ ।
५-५ पराशरपुराणम् अध्यायः ३, श्लोक १२, १८ ।

"नावयोर्विद्यते भेदो मच्छक्तिस्त्वं न संशयः ।
त्वं चन्द्रमास्त्वहं सूर्यः शर्वरी त्वमहं दिनम् ।"

इत्यादित्यपुराणे च विष्णोः शिवशक्तित्वव्यपदेशात् कौर्मवासिष्ठलैङ्गादित्यपुराणेषु शिवनारायणयो-र्भर्तृभार्याभावेन दारुकावनप्रवेशोपवर्णनात् । तत्प्रकरणे 'या तस्य पार्श्वगा बाला सा पार्वत्यंशजो हरिरि'त्याद्युक्तेः । लिङ्गपुराणे[1]

"एष बीजी भवान् बीजमहं योनिः सनातनः ।
स एवमुक्तो विश्वात्मा ब्रह्मा विष्णुमपृच्छत ।
भवान्योनिरहं बीजं कथं बीजी महेश्वरः ।
एवं मे सूक्ष्ममव्यक्तं संशयं छेत्तुमर्हसि ।
ज्ञात्वा च विविधोत्पत्तिं ब्रह्मणो लोकतन्त्रिणः ।
इमं परमसूक्ष्मार्थं[2] प्रश्नमभ्यवदद्धरिः ।
अस्मान्महत्तरं भूतं गुह्यमन्यन्न विद्यते ।
महतः परमं धाम शिवमध्यात्मिनां पदम् ।
द्वैधीभावेन[3] चात्मानं प्रविभज्य व्यवस्थितः ।
निष्कलं सूक्ष्ममव्यक्तं सकलस्तु महेश्वरः ।
यस्य माया विधिज्ञस्य अगम्यगहनस्य च ।
पुरा लिङ्गादभूद्बीजं प्रथमं त्वादिसर्गिकम् ।
मम योनौ समासिक्तं तद्बीजं कालपर्ययात् ।
हिरण्मयमकूपारे योन्यामण्डमजायत ।"

इति विष्णोः शिवक्षेत्रत्वस्फुटीकरणात् । शिवकेशवयोः शिवानाभिशिलायां लिङ्गक्षेत्रयोः सन्निधानेन हरिहरात्मके रूपे हरेर्वामार्धत्वेन लिङ्गेन चास्यार्थस्य स्फुटीकरणात् ।

"योऽयं चकास्ति गगनार्णवरत्नमिन्दु-
र्योऽयं सुरासुरगुरुः पुरुषः पुराणः ।

---

१. पराशरपुराणम् अध्याय ३, श्लोक १२,१८ ।   २. परमसादृश्यं – पा. ।
३. द्विविधं चैव – पा. १-२०-७३ तः ७९ ।

यद्वा ममार्धमिदमन्तकसूदनस्य
देवि ! त्वमेव तदिति प्रतिपादयन्ति ॥"

इत्यभियुक्तोक्तेश्च । एवं तुरीयकोटिनिविष्टस्यापि नारायणस्य भवानीवदेव शिवोपसर्जनत्वादिह व्यवतिष्ठापयिषितस्य शिवमूर्तेः सर्वतः परत्वस्य न विरोधः । एवं मतद्वयमप्युपन्यस्तम् ।

विष्णुतत्त्वनिर्णये[1]

"यदत्र युक्तं तद्ग्राह्यं विमृश्य विबुधोत्तमैः ।
मतद्वयेऽपि भगवानम्बिकारमणः शिवः ।
अशेषब्रह्ममूर्तीनामादिभूतो जगत्पतिः ।
भैरवाद्यास्तु तस्यैव मह्याद्याः श्रीपतेरिव ।
ब्रह्मविष्णुहरास्तस्य कलालेशा इति स्थितिः ।"

इत्याहुः इति पूर्वपक्षः । सिद्धान्तस्तु—

### ६. नारायणस्यैव तुरीयरूपत्वसिद्धान्तः

सर्वे देवा यत्रैकीभवन्तीति श्रुत्या, वेदा वा एते । अनन्ता वै वेदाः इत्यसङ्ख्यातत्वेन श्रुतिप्रतिपन्नवेदाननूद्य तेषामेकत्वमावेद्यत इत्यविवादम् । तच्चैकत्वं न व्यक्तितः, अनन्तत्वावेदनात् । सर्वे वेदा इति सर्वशब्दबहुवचनयोरयोगात् । सर्वे वेदा इत्यनुवादानुरोधेन अनन्ता वै वेदा इति पुरोवादस्यानन्तत्वपरत्वावश्यम्भावाच्च ।

न च तदानन्त्यं नित्यत्वरूपमेवाऽस्तु न तु बहुसङ्ख्याकत्वरूपमिति वक्तुं शक्यम् । तथा सति अनुवादाननुरोधित्वापत्तेः । अस्य महतो भूतस्य विश्वसितमेवैतद् ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः । 'अङ्गानि वेदाश्चत्वार' इत्यादिश्रुतिस्मृतिषु वेदानेकत्ववर्णनविरोधाच्च । किन्त्वर्थतः । अत एव यत्र तत्रेति विषयसप्तम्यन्तो यच्छब्दः । यद्यपि वेदानामर्था अपि बहवस्तथापि महातात्पर्यविषयीभूतार्थैक्यं सर्वसम्प्रतिपन्नमिति तदाशयेनैव वेदानामेकत्वं निर्वाह्यं नान्यथा ।

अत एव [2]"सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्', [3]"गतिसामान्यादि'ति न्यायावेतदेवाभिप्रेत्य भगवता सूत्रितौ । महातात्पर्यविषयीभूत एकश्चार्थो विष्णुरेव नान्यः । 'सर्वे वेदा यत्पदमामनन्ति तपांसि

---

१. नायं विष्णुतत्त्वनिर्णय इति प्रसिद्धः वैष्णवग्रन्थः । किन्तु शैवानां विभिन्नमतप्रकारेण विष्णोः तत्त्वनिर्णये उत्तरत्रोक्तः प्रकारः तदीयैर्ग्राह्यः इत्यर्थः ।

२. ब्रह्ममीमांसा अध्यायः ३, पाद ३, सू. १ । ३. ब्रह्ममीमांसा अध्यायः १, पाद १, सू. १० ।

सर्वाणि च यद्वदन्ति । वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहमि'ति कठवल्लीभगवद्गीता-वाक्यात् । कठवल्ल्या विष्णुपरत्वं सोपपत्तिकमुपपादितमधस्तात् ॥

यद्यपि— "तावा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषा एकैव व्याहृतिः । प्राण एव प्राण ऋच इत्येव विद्यादि"त्यैतरेयोपनिषदि सावधारणं प्राणस्य सर्ववेदप्रतिपाद्यत्वं प्रतीयते ।

तथा—

**"अहं विजानामि विविक्तरूपो[1] न चास्ति वेत्ता मम चित्सदाहम् ।**
**वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ॥"**

इति कैवल्यश्रुतावहंशब्दार्थस्य साधकस्य तत्प्रतीयते । तथा 'इमा रुद्राय स्थिरधन्वये गिर' इति तैत्तिरीये रुद्रस्य सर्ववेदप्रतिपाद्यत्वं प्रतीयते । तथापि सर्ववेदान्तप्रत्ययन्यायेन गतिसामान्यादिति न्यायेन च सर्ववेदानां महातात्पर्येण ब्रह्मैकमेव प्रतिपाद्यमिति सर्वसम्प्रतिपन्नम् । तथाच श्रुतिरपि— 'ब्रह्मैव वाचः परमं व्योमे'ति । अन्यथा ब्रह्मैवेत्यवधारणानुपपत्तिः । ब्रह्मशब्दार्थश्च विष्णुरेव वाच्यः । 'यमन्तस्समुद्रे कवयोऽवयन्ति । तदेव ब्रह्म परमं कवीनाम्' इति तैत्तिरीयमहोपनिषदि समुद्रान्तःस्थत्वरूपलोकवेद-प्रसिद्धविष्णुलिङ्गोपन्यासपूर्वकं ज्ञानिनां मते तदेव ब्रह्मेति सावधारणं विष्णोरेव ब्रह्मशब्दार्थत्ववर्णनात् । आहुरिति विष्णावेव ब्रह्मशब्दस्यार्थप्रसिद्धिसद्भाववर्णनाच्च । आर्यप्रसिद्धेश्चानार्यप्रसिद्ध्यपेक्षया बलीय-स्त्वाच्च । न च यमन्तःसमुद्र इति समुद्रशब्दः कोशादिप्रसिद्धाब्धितोऽन्यपरो भवितुमर्हति । न हि बाधकं विना प्रसिद्धार्थत्यागो युज्यते । 'क्षीरोदार्णवशायिनं[2] नृकेसरिं योगिध्येयं परमं पदमि'ति पूर्वतापनीये द्वितीयोपनिषदि— 'ततः पश्यति ज्योतिर्मयं श्रियाऽलिङ्गितं सुपर्णरथं शेषफणाच्छादितमौलिं मृगमुखं नरवपुषं शशिसूर्यहव्यवाहात्मकनयनत्रयं, ततः प्रजापतिः प्रणिपपाते'ति प्रथमोपनिषदि चाम्नात-वाक्याभ्यां श्रीरसमुद्रे शयनप्रतिपादनात् । श्रियालिङ्गितत्वसुपर्णरथत्वशेषफणाच्छादितत्वादिविष्णव-साधारणधर्मवर्णनाच्च । तदनुरोधेन 'यमन्तः समुद्रे कवयो वयन्ती'ति वाक्यस्य क्षीरसमुद्रशायिनारायण-परतास्वीकारौचित्याच्च ।

न च शेषशायित्वमन्यलिङ्गं भवितुमर्हति । 'कालिको[3] नाम सर्पो नवनागसहस्रफणः । यमुनह्रदे ह्यसौ जातो ३ यो नारायणवाहन' इति ऋक्परिशिष्टे नारायणस्यैव सहस्रफणामण्डितशेषवाहनत्व-श्रवणात् ।

१. कैवल्यश्रुतिः खण्डः १, मन्त्रः २१, उत्तरार्धम्, २२ पूर्वार्धम्, पु. १४४ ।
२. नृसिंहपूर्वतापनीये प्रथमोपनिषदि ५ मन्त्रः पु. २१९ । ३. ऋग्वेदखिले स्वप्नसूक्ते ४ मन्त्रः ।

एतेन समुद्रान्तःस्थत्वमात्रं मीनादावतिप्रसक्तत्वान्न विष्णुलिङ्गतामर्हतीति निरस्तम् । उदाहृत-तापनीयाम्नातवचनद्वयबलेन विशिष्टावस्थानलाभेन 'यमन्तरसमुद्रे कवयोऽवयन्ती'ति वाक्यस्य विशिष्टावस्थानपरत्वावसायात् ।

किञ्च 'अहं विजानामि विविक्तरूप' इति कैवल्यश्रुतेर्न साधकपरत्वं युज्यते । 'वेदैरनेकै-रहमेवे'त्यवधारणविरोधात् कैवल्यश्रुतावेवोत्तरत्र—

**"त्रिषु[1] धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।**
**तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ।"**

इति यो भोक्तृसाधकविलक्षणः सर्वदा मङ्गलरूपोऽज्ञानगन्धविधुरश्च स एवाहंशब्दार्थ इति वर्णनेन तथाभूतसाधकविलक्षणस्यैव तत्राहंशब्दार्थतावश्यम्भावाच्च । विष्ण्वेकनिष्ठपुरुषसूक्ते—

**"सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते ।**
**धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः ।**
**तमेवं विद्वानमृत इह भवति ।"**

इति विष्णोरेव सर्वशब्दमुख्यार्थत्ववर्णनेन वैदिकप्राणरुद्रादिशब्दानां मुख्यत एव विष्णुवाचकत्वौचित्याच्च । 'न तादृशी प्रीतिरीड्यस्य विष्णोर्गुणोत्कर्षज्ञातरि यादृशी स्यात् । तत्प्रीणनान्मोक्षमाप्नोति सर्वस्ततो वेदास्तत्परास्सर्व एवे'ति श्रुत्यन्तरेण सर्ववेदानां विष्णौ मुख्यतात्पर्यवत्त्वावेदनाच्च,

**"नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति ।"**

इति श्रुत्यन्तरेण विष्णोरेव सकलशब्दमुख्यार्थत्वाभिधानेन,

**"नामानि तव गोविन्द यानि लोके महान्ति च ।**
**तान्येव मम नामानि नात्र कार्या विचारणा ॥"**

इति हरिवंशे[2] कैलासयात्रायां शिवेन विष्णुनामव्यतिरेकेण स्वातन्त्र्येण स्वस्य नामवत्त्वं नास्तीत्यभिधानेन—

**"सृष्टिस्थित्यन्तकरणीं ब्रह्मविष्णुशिवात्मिकाम् ।**
**स संज्ञां याति भगवानेक एव जनार्दनः ॥"**

---

१. कैवल्योपनिषत् खण्डः १, मन्त्रः १८, पु. १४३ ।

२. हरिवंशे ३ पर्वणि. ८८ अध्याये. श्लोक ६१ ।

इति विष्णुपुराणे[1] सावधारणं जनार्दनशब्दितस्य हरेरेव ब्रह्मविष्णुशिवपर्यायिनामात्मसकलशब्दमुख्यार्थत्वाभिधानेन च मुख्यामुख्ययोरिति न्यायेन 'इमा रुद्राय स्थिरधन्विने गिर' इति श्रुतिगतरुद्रशब्दस्यापि विष्णुपरत्वावश्यम्भावाच्च । न च बाधकं विना मुख्यार्थत्यागो युज्यते ।

किञ्च 'यो देवानां नामधा एक एव तं संप्रश्नं भुवनायन्त्यन्या' इति श्रुत्या सकलदेवनाममुख्यार्थत्वमेकस्यावेद्यते । अन्यथा एक एवेत्यवधारणवैयर्थ्यात् । स चैको विष्णुरेव उत्तरत्र 'अजस्य नाभावध्येकमर्पितं यस्मिन्विश्वानि भुवनानि तस्थुरि'ति पद्मनाभलिङ्गत्वप्रतिपादनात् । पूर्वत्र

"विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात् ।
सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावापृथिवी जनयन्देव एकः ॥"

इति विश्वतश्चक्षुष्ट्वादिविष्णवसाधारणधर्मोपन्यासाच्च । 'सहस्रशीर्षं देवं विश्वाक्षमि'ति नारायणानुवाके विश्वतश्चक्षुष्ट्वादेर्नारायणधर्मत्वस्य क्लृप्तत्वाच्च । न च अजस्य नाभावध्येकमर्पितमिति विश्वकर्मसूक्तवाक्यस्यान्य एवार्थः । 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृग्विश्वरूप' इति महोपनिषद्वाक्यानुसारेण—

"अजस्य नाभाविति यस्य नाभेरभूच्छ्रुतेः पुष्करं लोकसारम् ।
तस्मै नमो व्यस्तसमस्तविश्वविभूतये विष्णवे लोककर्त्रे ॥"

इति स्कान्दवचनानुसारेण च विष्णुपरत्वावश्यम्भावाच्च । तथाच विष्णुरेव महातात्पर्यतः सर्ववेदप्रतिपाद्य इति ।

### ७. ब्रह्मविष्णुशिवनामकमूर्तित्रयान्तर्गतस्य नारायणस्य सर्ववेदप्रतिपाद्यत्वाक्षेपः तत्खण्डनं च

नन्वेवं महातात्पर्यतः सर्ववेदप्रतिपाद्यत्वं किं मूर्तित्रयान्तर्गतस्य विष्णोरुच्यते ? किं वा ततोऽन्यस्य । नान्त्यः इष्टापादनात् । न प्रथमः । तस्य कार्यकोटिनिविष्टत्वेनोक्तरीत्या शिवविभूतिषु परिगणितत्वेन च परतत्त्वशब्दितपरब्रह्मलक्षणभूतकृत्स्नजगज्जन्मादिकारणत्वायोगेन ब्रह्मशब्दमुख्यार्थत्वासम्भवेन महातात्पर्यतः सर्ववेदप्रतिपाद्यत्वासम्भवादिति चेन्न । मूर्तित्रयान्तर्गतस्य नारायणापरनाम्नो योगरूढिभ्यां विष्णुशब्दमुख्यार्थस्यैव मुख्यतः सर्ववेदतात्पर्यगोचरत्वोपगमात् । भक्तानुजिघृक्षया स्वेच्छामात्राधीनोत्पत्तिमत्त्वेन तस्य कादाचित्कावताररूपकार्यत्वसत्त्वेऽपि सर्गाद्यकाले नारायणा-

---

१. अंश १, अध्याय २, श्लोकः ६६ ।

साधारणाभिधानश्रुतिप्रसिद्धस्य कृत्स्नजगजन्मादिनिर्वाहकस्य मूलरूपेण सतो विष्णोर्ब्रह्मलक्षण-वत्त्वाविघातित्वात् । 'अजायमानो बहुधा विजायत' इति संसारिसाधारणप्रसिद्धजन्म निषिध्य बहुधा रामकृष्णादिबहुप्रकारेण विजायत इति विलक्षणोत्पत्तिमान् भवतीति विष्णोरस्मदादि जन्मविलक्षण-कर्मानधीनस्वेच्छामात्राधीनप्रादुर्भावरूपजन्मावेदनाच्च । अन्यथा विशब्दवैयर्थ्यात् । अजायमानत्वस्य लोकप्रसिद्धोत्पत्तिराहित्यरूपस्य स्वेच्छामात्राधीनप्रादुर्भावरूपजन्मावेदनाच्च । उत्पत्त्यविरोधित्वाच्च । विष्णोरुत्पत्तिरस्मदादिसाधारणी नेत्यत्र 'तस्य धीराः परिजानन्ति योनिमि'त्याद्युत्तरवाक्यस्यैव साक्षि-त्वाच्च । तस्य भगवज्जन्मनो योनिं कारणं प्रयोजनविशेषं धिया रमन्त इति धीरा बुद्धिशालिनः परि-जानन्ति सम्यक् जानन्तीत्यर्थस्य स्फुटप्रतीतेः । पिता पुत्रेण पितृमान्योनियोनाविति प्रागुदाहृतश्रुत्या विष्णोः पितृत्वेऽपि पुत्रेण स्वकार्यभूतेन दशरथादिपितृमत्त्ववर्णनेनावतारवत्त्वसिद्धेश्च । अत एव—

"रूपं[१] रूपं प्रतिरूपो बभूव तदस्य रूपं प्रतिचक्षणाय ।
इन्द्रो मायाभिः पुरुरूप ईयते युक्ता ह्यस्य हरयः शता दश ॥"

इति परमैश्वर्यसम्पन्नविष्णोरनेकरूपाणि श्रूयन्ते । न हीन्द्रशब्दार्थः परमैश्वर्यं ब्रह्मणोऽन्यत्र सम्भवति । परब्रह्मत्वं च न विष्णोरन्यत्रास्ति प्रमाणाभावादित्युक्तम् । न च 'अजायमानो बहुधा विजायते, पिता पुत्रेण पितृमान्योनियोनाविति विष्णोरेवावतारः प्रतिपाद्यत' इत्यत्र न विशेषनियामकमस्तीति वाच्यम् । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यावि'ति श्रीलक्ष्मीपतित्वरूपनिरवकाशलिङ्गेन 'वेदाहमेतं पुरुषं महान्तमि'त्युप-क्रमगतनारायणासाधारणपुरुषाभिधानश्रुत्या च अद्भ्यः सम्भूत इत्युत्तरानुवाकस्य कात्स्न्येन विष्णु-परत्वावश्यम्भावात् ।

यद्यपि 'प्रजापतिश्चरति गर्भे अन्तः' इति श्रुतिरप्यस्ति । तथापि पुरुषश्रुतिश्रीलक्ष्मीपतित्व-लिङ्गाभ्यां प्रजापतिश्रुतेः 'प्रजानां पतिरि'ति योगेन 'यो देवानां नामधा एक एवे'त्युदाहृतप्रमाणेन विष्णौ मुख्यतो वृत्तिसिद्ध्या च तत्परत्वमेवेत्युक्तमिति । 'हिरण्मयः शकुनिर्ब्रह्म नामे'ति पूर्ववाक्यानुसारेण 'पिता पुत्रेण पितृमान्योनी'ति वाक्यस्यापि विष्णुपरत्वावश्यम्भावाच्च 'हिरण्मयः शकुनिरि'ति पूर्व-वाक्यस्यापि नभोगन्तृत्वलिङ्गेन 'संहाररूपिश्रीहंसरूपी भगवान् योनिरित्युक्त्वा तिरोदध' इति श्रीरङ्ग-माहात्म्यगतोपबृंहकवचनानुसारेण च विष्ण्ववतारभूतहंसरूपविषयपरत्वेनैव नेतव्यत्वाच्च ।

एतेन 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इत्यादिश्रुत्या विष्णोः कृत्स्नजगत्कारणत्वे सिद्धे 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्ते' इति श्रुतिप्रतिपन्नविष्णूत्पत्तेरेवावताररूपत्वसिद्धिः

१. ऋक्संहिता ६ मण्डलं, ४७ सूक्तम्, १८ मन्त्रः ।

तत्सिद्धौ च ब्रह्मरुद्रेन्द्रादितुल्यतया कार्यकोटिनिविष्टत्वाभावसिद्धौ कृत्स्नजगज्जन्मादि कारणत्वसिद्धिरित्यन्योन्याश्रय इति निरस्तम् ।

'एको ह वै नारायण आसीदि'त्यादिश्रुत्या 'ब्रह्मविष्णुरुद्रेन्द्राः सर्वे सम्प्रसूयन्त' इत्यादिवाक्यनैरपेक्ष्येणैव नारायणस्यैकस्यैव सर्गाद्यसमयसत्त्वावेदनपूर्वकं कृत्स्नजगत्कारणत्वावेदनात् । अन्यथा चेतनविशेषस्य ब्रह्मणः कृत्स्नजगत्कारणत्वे सिद्धे आकाशप्राणादिशब्दानां तादृशब्रह्मपरत्वसिद्धिः । तत्सिद्धौ च ब्रह्मणः कृत्स्नजगत्कारणत्वसिद्धिरिति अन्योन्याश्रयः स्यात् । 'एको ह वै नारायण आसीदि'त्यादिश्रुतेः शिवपरत्वे सिद्धे शिव एव कृत्स्नजगत्कारणमित्यर्थः सिद्ध्यति । तस्मिंश्च सिद्धे 'एको ह वा' इत्यादिवाक्यस्य शिवपरत्वं सिद्ध्यतीत्यन्योन्याश्रयश्च स्यान् । 'एष सर्वभूतान्तरात्माऽपहतपाप्मा, दिव्यो देव एको नारायणः स ह वै सर्वेभ्यः पाप्मभ्य उदितः', 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा', 'न सा कर्मनिमित्तजा', 'गृहीताभिमतौ रुद्रे ह' इत्यादिश्रुतिस्मृतिसहकारेण 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इति श्रुत्या 'अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात् प्रथमं बभूव । तत्र ब्रह्मा विष्णुर्जातो जातवेदा', इत्यादिश्रुत्यन्तरेण चावगम्यमानविष्णूत्पत्तेरवताररूपत्वमेव । न त्वस्मदादिसाधारणोत्पत्तित्वमिति निश्चयसम्भवेनाऽन्योन्याश्रयानवकाशाच्च । न हि विष्णूत्पत्तेराविर्भावरूपायाः कर्मानधीनत्वस्वेच्छामात्राधीनत्वादितोऽन्यदवतारत्वं नामास्ति ।

### ८. विष्णोरवताराणां कर्माधीनत्वाक्षेपः तत्खण्डनं च

एतेन विष्णूत्पत्तिरप्यवतारशब्दितास्मदाद्युत्पत्तिवत्, कर्माधीनैव, न तु तदिच्छामात्राधीना 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति, य एतां महोपनिषदं वेद कृतपुरश्चरणो महाविष्णुर्भवती'त्यादिश्रुत्या विष्णुत्वप्राप्तेः कर्माधीनत्वावेदनात् । लिङ्गपुराणादौ विष्ण्वतारूपाणां मत्स्यकूर्मादीनां भृगुपत्नीवधप्रयुक्तभृगुशापनिमित्तत्ववर्णनाच्च । भारतादौ विष्णूत्पत्तेः कर्मानधीनत्ववर्णनस्य उदाहृतश्रुतिस्मृतिविरोधेन गुणवादत्वमेव । तथाच उक्तं—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ।

यथाहुः—

''इच्छापि नूनमनुयाति पुराकृतानि
कर्माणि शङ्कर शुभाशुभलक्षणानि ।

इच्छावतारवदनानि तु भारतादौ

नारायणस्य गुणवादमुदाहरन्ति ॥" इति निरस्तम् ।

विष्णुरेव भूत्वेमान् लोकानभिजयतीत्यादेर्विरोधे गुणवादः स्यादिति न्यायेन 'य उ चैनमेवं वेदे'त्यादेरिवार्थवादत्वेन फलसमर्पकत्वायोगात् । परमतेऽपि विष्णुत्वस्य क्रतुशतसाध्येन्द्रत्वापेक्षया आधिक्येन वामनपश्वालम्भनमात्रसाध्यत्वाभावेन स्पर्धमानो विष्णुरेव भूत्वेत्यादेर्यथाश्रुतार्थपरत्वस्यानभ्युपेयत्वाच्च । अन्यथा—

"सोमः[1] पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ।"

इत्यादेरपि यथाश्रुतार्थपरत्वाङ्गीकारप्रसङ्गात् । मृदब्रवीत्यादेरपि यथाश्रुतार्थपरत्वाश्रयणप्रसङ्गाच्च ।

एतेन— 'सोमः पवते' इत्यत्र उमया सहितः सोम इति सोमशब्देन शिव एव गृह्यते । न तु यथाश्रुतार्थः, अतो न विरोधः । यदाहुः 'सोमे लतात्मनि महेश्वरगौणवृत्त्या विष्णोरवादि जनकत्वमृचा कयाचित् । त्वय्येव तद्भवितुमर्हति मुख्यवृत्त्या नेन्द्रे न पङ्कजभवे न तरां मुरारौ' इति निरस्तम् । सोमशब्दस्य लताविशेषे रूढत्वेन पूर्वोत्तरवाक्यपर्यालोचनया तत्परत्वस्यैव न्याय्यत्वात् । 'नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते' इति श्रुत्या उमापते रुद्रस्य ब्रह्मोत्पत्त्यनन्तरं नारायणादुत्पन्नत्वावेदनेन तस्य विष्णुशब्दितनारायणजनकत्वायोगात् । किञ्चैवं सोमशब्दस्य चन्द्रपरत्वमेव किं नाश्रयितव्यम् ? तस्य तत्र रूढत्वात् शिवे तस्य यौगिकत्वात् । रूढिर्योगमपहरतीति हि न्यायः । न च पुरुषसूक्ते 'चन्द्रमा मनसो जात' इति चन्द्रमसो विष्णुमनोजन्यत्वावगमात् न विष्णुजनकत्वं युक्तमिति वाच्यम् । 'नारायणाद्रुद्रो जायत' इति शिवस्यापि नारायणजन्यत्वश्रवणेन साम्यात् । त्वदुक्तन्यायेन चन्द्रद्वैविध्यस्याप्यापत्तेश्च । न च नारायणजन्यत्वेन श्रुतो रुद्रोऽन्य एव तत्र, प्रकृते तु विष्णुजनकत्वेन श्रुतः परमशिवः साम्बोऽन्य एवेति न विरोध इति वाच्यम् । नारायणोपनिषदि— 'नारायणाद्रुद्रो जायते इति पराभिमतपरमशिवस्य प्रधानस्यैव नारायणजन्यत्वमावेद्यत इति स्वीकार्यत्वात् । तत्रैवाग्रे 'नारायणाद् द्वादशादित्या रुद्रा वसव' इति बहुवचनान्तरुद्रशब्देन रुद्रमात्रग्रहणसिद्धेः प्रथममेकवचनान्तरुद्रशब्दस्य प्रधानरुद्रपरत्वावश्यम्भावात् । न च सोऽपि संहाररुद्र एव न तु साम्बशिवशब्दितः प्रधानरुद्र इति वाच्यम् । संहाररुद्रातिरिक्तस्य साम्बशिवस्य सत्त्वे विवादात् । तस्मात् 'सोमः पवत' इत्यत्र विरोधे गुणवादः स्यादिति न्यायेन सोमलतायाः स्तुतिरेव क्रियते इति स्वीकार्यं

१. ऋग्वेद नवमं मण्डलं, ९६ सूक्तं मन्त्रः ५, ६ ।

तत्सिद्धौ च ब्रह्मरुद्रेन्द्रादितुल्यतया कार्यकोटिनिविष्टत्वाभावसिद्धौ कृत्स्नजगज्जन्मादि कारणत्वसिद्धिरित्यन्योन्याश्रय इति निरस्तम् ।

'एको ह वै नारायण आसीदि'त्यादिश्रुत्या 'ब्रह्मविष्णुरुद्रेन्द्राः सर्वे सम्प्रसूयन्त' इत्यादिवाक्यनैरपेक्ष्येणैव नारायणस्यैकस्यैव सर्गाद्यसमयसत्त्वावेदनपूर्वकं कृत्स्नजगत्कारणत्वावेदनात् । अन्यथा चेतनविशेषस्य ब्रह्मणः कृत्स्नजगत्कारणत्वे सिद्धे आकाशप्राणादिशब्दानां तादृशब्रह्मपरत्वसिद्धिः । तत्सिद्धौ च ब्रह्मणः कृत्स्नजगत्कारणत्वसिद्धिरिति अन्योन्याश्रयः स्यात् । 'एको ह वै नारायण आसीदि'त्यादिश्रुतेः शिवपरत्वे सिद्धे शिव एव कृत्स्नजगत्कारणमित्यर्थः सिद्ध्यति । तस्मिंश्च सिद्धे 'एको ह वा' इत्यादिवाक्यस्य शिवपरत्वं सिद्ध्यतीत्यन्योन्याश्रयश्च स्यात् । 'एष सर्वभूतान्तरात्माऽपहतपाप्मा, दिव्यो देव एको नारायणः स ह वै सर्वेभ्यः पाप्मभ्य उदितः', 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा', 'न सा कर्मनिमित्तजा', 'गृहीताभिमतौ रुद्रे ह' इत्यादिश्रुतिस्मृतिसहकारेण 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इति श्रुत्या 'अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात् प्रथमं बभूव । तत्र ब्रह्मा विष्णुर्जातो जातवेदा', इत्यादिश्रुत्यन्तरेण चावगम्यमानविष्णूत्पत्तेरवताररूपत्वमेव । न त्वस्मदादिसाधारणोत्पत्तित्वमिति निश्चयसम्भवेनाऽन्योन्याश्रयानवकाशाच्च । न हि विष्णूत्पत्तेराविर्भावरूपायाः कर्मानधीनत्वस्वेच्छामात्राधीनत्वादितोऽन्यदवतारत्वं नामास्ति ।

### ८. विष्णोरवताराणां कर्माधीनत्वाक्षेपः तत्खण्डनं च

एतेन विष्णूत्पत्तिरप्यवतारशब्दितास्मदाद्युत्पत्तिवत्, कर्माधीनैव, न तु तदिच्छामात्राधीना 'वैष्णवं वामनमालभेत स्पर्धमानो विष्णुरेव भूत्वेमान् लोकानभिजयति, य एतां महोपनिषदं वेद कृतपुरश्चरणो महाविष्णुर्भवती'त्यादिश्रुत्या विष्णुत्वप्राप्तेः कर्माधीनत्वावेदनात् । लिङ्गपुराणादौ विष्ण्वताररूपाणां मत्स्यकूर्मादीनां भृगुपत्नीवधप्रयुक्तभृगुशापनिमित्तत्ववर्णनाच्च । भारतादौ विष्णूत्पत्तेः कर्मानधीनत्ववर्णनस्य उदाहृतश्रुतिस्मृतिविरोधेन गुणवादत्वमेव । तथाच उक्तं—

विरोधे गुणवादः स्यादनुवादोऽवधारिते ।
भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः ॥ इति ।

यथाहुः—

''इच्छापि नूनमनुयाति पुराकृतानि
कर्माणि शङ्कर शुभाशुभलक्षणानि ।

**इच्छावतारवदनानि तु भारतादौ**
**नारायणस्य गुणवादमुदाहरन्ति ॥"** इति निरस्तम् ।

विष्णुरेव भूत्वेमान् लोकानभिजयतीत्यादेर्विरोधे गुणवादः स्यादिति न्यायेन 'य उ चैनमेवं वेदे'त्यादेरिवार्थवादत्वेन फलसमर्पकत्वायोगात् । परमतेऽपि विष्णुत्वस्य क्रतुशतसाध्येन्द्रत्वापेक्षया आधिक्येन वामनपश्वालम्भनमात्रसाध्यत्वाभावेन स्पर्धमानो विष्णुरेव भूत्वेत्यादेर्यथाश्रुतार्थपरत्व-स्यानभ्युपेयत्वाच्च । अन्यथा—

**"सोमः[1] पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्याः ।**
**जनिताग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोः ।"**

इत्यादेरपि यथाश्रुतार्थपरत्वाङ्गीकारप्रसङ्गात् । मृदब्रवीत्यादेरपि यथाश्रुतार्थपरत्वाश्रयणप्रसङ्गाच्च ।

एतेन— 'सोमः पवते' इत्यत्र उमया सहितः सोम इति सोमशब्देन शिव एव गृह्यते । न तु यथाश्रुतार्थः, अतो न विरोधः । यदाहुः 'सोमे लतात्मनि महेश्वरगौणवृत्त्या विष्णोरवादि जनकत्वमृचा कयाचित् । त्वय्येव तद्भवितुमर्हति मुख्यवृत्त्या नेन्द्रे न पङ्कजभवे न तरां मुरारौ' इति निरस्तम् । सोमशब्दस्य लताविशेषे रूढत्वेन पूर्वोत्तरवाक्यपर्यालोचनया तत्परत्वस्यैव न्याय्यत्वात् । 'नारायणा-द्ब्रह्मा जायते, नारायणाद्रुद्रो जायते' इति श्रुत्या उमापते रुद्रस्य ब्रह्मोत्पत्त्यनन्तरं नारायणादुत्पन्न-त्वावेदनेन तस्य विष्णुशब्दितनारायणजनकत्वायोगात् । किञ्चैवं सोमशब्दस्य चन्द्रपरत्वमेव किं नाश्रयितव्यम् ? तस्य तत्र रूढत्वात् शिवे तस्य यौगिकत्वात् । रूढिर्योगमपहरतीति हि न्यायः । न च पुरुषसूक्ते 'चन्द्रमा मनसो जात' इति चन्द्रमसो विष्णुमनोजन्यत्वावगमात् न विष्णुजनकत्वं युक्तमिति वाच्यम् । 'नारायणाद्रुद्रो जायत' इति शिवस्यापि नारायणजन्यत्वश्रवणेन साम्यात् । त्वदुक्तन्यायेन चन्द्रद्वैविध्यस्याप्यापत्तेश्च । न च नारायणजन्यत्वेन श्रुतो रुद्रोऽन्य एव तत्र, प्रकृते तु विष्णुजनकत्वेन श्रुतः परमशिवः साम्बोऽन्य एवेति न विरोध इति वाच्यम् । नारायणोपनिषदि— 'नारायणाद्रुद्रो जायते इति पराभिमतपरमशिवस्य प्रधानस्यैव नारायणजन्यत्वमावेद्यत इति स्वीकार्य-त्वात् । तत्रैवाग्रे 'नारायणाद् द्वादशादित्या रुद्रा वसव' इति बहुवचनान्तरुद्रशब्देन रुद्रमात्रग्रहणसिद्धेः प्रथममेकवचनान्तरुद्रशब्दस्य प्रधानरुद्रपरत्वावश्यम्भावात् । न च सोऽपि संहाररुद्र एव न तु साम्ब-शिवशब्दितः प्रधानरुद्र इति वाच्यम् । संहाररुद्रातिरिक्तस्य साम्बशिवस्य सत्त्वे विवादात् । तस्मात् 'सोमः पवत' इत्यत्र विरोधे गुणवादः स्यादिति न्यायेन सोमलतायाः स्तुतिरेव क्रियते इति स्वीकार्यं

१. ऋग्वेद नवमं मण्डलं, ९६ सूक्तं मन्त्रः ५, ६ ।

न त्वन्यथा । तथासति रूढिबाधापत्तेः । किञ्च प्रसिद्धसोमलताया एवादृष्टद्वारा मत्यादिजनकत्वात् विष्णवभिव्यक्तिरूपजन्मकारणत्वमुपपन्नमिति न यौगिकार्थाश्रयणे विशेषकारणं पश्यामः । विष्णोर्जनिस्तु तत्कालीनसुकृतिदर्शनात्मिकैव न त्वस्मदादिजनिवदिति सप्रमाणं प्रपञ्चितमधस्तादित्यलम् ।

केचित्तु 'ब्रह्म वेद ब्रह्मैव भवती'त्यत्रेव 'विष्णुरेव भूत्वेमान् लोकानभिजयती'त्यत्र 'विष्णुः शिवः भूत्वे'त्यर्थ इत्याचक्षते ।

एतेन 'य एतां महोपनिषदं वेद कृतपुरश्चरणो महाविष्णुर्भवती'ति तामपनीत्य श्रुतिरपि व्याख्याता ।

यत्तूक्तं 'विष्णववताराणां भृगुपत्नीवधप्रयुक्तभृगुशापनिमित्तत्वं लिङ्गपुराणादौ वर्णितमित्येतत्सत्यमेव । किन्तु तत्रैव लिङ्गपुराणादौ भृगुशापस्य व्याजमात्रत्ववर्णनात्, भगवदवतारस्य लोकसंरक्षणमात्रहेतुकत्वेन वर्णनाच्च न कर्माधीनं तज्जन्म । अत एव लैङ्गे भृगुं प्रति हरेर्वचनं एवंविधं प्रत्यक्षमुपलभ्यते—

"तपसाऽऽराधितो देवो ह्यब्रवीद्भक्तवत्सलः ।
लोकानां सम्प्रियार्थं तु शापं तं ग्राह्यमुक्तवान् ॥" इति ।

तत्रैव पुनः—

"सर्वात्मरक्षको विष्णुर्जननं स्वेच्छयैव तत् ।
ऋषिशापच्छलेनैव स्वेच्छयाऽऽगमनं हरेः ।
द्विजशापच्छलेनैवमवतीर्णो[1] हि लीलया ।

इति चेति विवक्षितार्थसमर्पकं वचनान्तरम् ।

तथा श्रीविष्णुपुराणे[2]—

"देवतिर्यङ्मनुष्येषु शरीरग्रहणात्मिका ।
न कारणात्कारणात्मा कारणं कारणानि च ।
शरीरग्रहणं तस्य धर्मत्राणाय केवलम् ।
कृतकृत्यो ह्यहं ब्रह्मन् भक्तानां हितकाम्यया ।
भजामि विविधं रूपं स्वेच्छयैवात्मलीलया ।

१. लिङ्गपुराणम् १-९०-२६ पू. । २. विष्णुपुराणम् अंशः ५, अध्यायः ३३, श्लोक ४२ ।

समस्तकल्याणगुणात्मकोऽसौ स्वशक्तिलेशात्कृतभूतसर्गः ।
इच्छागृहीताभिमतोरुदेहः संसाधिताशेषजगद्धितोऽसौ ॥

समस्तशक्तिरूपाणि तत्करोति जनेश्वर ।
देवतिर्यङ्मनुष्याख्याचेष्टावन्ति स्वलीलया ।
जगतामुपकाराय न सा कर्मनिमित्तजा ॥" इति ।

तथा भगवद्गीतायाम्—

"अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् ।
प्रकृतिं स्वामधिष्ठाय सम्भवाम्यात्ममायया ।
यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ।
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥' इति ।

तथा पुराणान्तरे—

"इच्छयापि हि देवत्वं मनुष्यत्वमपीच्छया ।
सूकरत्वं च मत्स्यत्वं नरसिंहत्वमेव च ॥" इति ॥

तथा पैङ्गिखिलेषु वाराहे च—

"न तस्य प्राकृता मूर्तिर्मांसमेदोऽस्थिसम्भवा ।
न योगित्वादीश्वरत्वात्सत्यरूपाच्युतो विभुः ।
सद्देहः सुखगन्धश्च ज्ञानभाः सत्पराक्रमः ।
ज्ञानज्ञानः सुखसुखः स विष्णुः परमेश्वरः (परमोऽक्षरः) ॥" इति ।

तथा ब्रह्मवैवर्ते—

"देहोऽयं मे सदानन्दो नायं प्रकृतिनिर्मितः ।
परिपूर्णश्च सर्वत्र तेन नारायणोऽस्म्यहम् ॥" इति ।

एतेन भारतादौ विष्णोः कर्मानधीनोत्पत्तिकत्वस्वेच्छामात्रोत्पत्तिकत्वप्रतिपादकवचनानि यानि तानि विरोधे गुणवादः स्यादिति न्यायेन अत्यन्तकुत्सितोत्पत्तिराहित्यप्रतिपादनपराणि न तु सर्वथा कर्मानधीनोत्पत्तिकत्वपराणीति निरस्तम् ।

'स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति सौबालश्रुतौ विष्णोरपहत-पाप्मत्वप्रतिपादनेन कर्मवत्त्वराहित्यावश्यम्भावेन प्रत्यक्षश्रुतिविरोधेनोदाहृतलैङ्गादिवचनानामेव 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'ति न्यायेन बाधकावश्यम्भावेनोदाहृतभारतादिवचनानां विष्णोरकर्म-वश्यत्वावेदकानामेव उदाहृतसौबालश्रुतिसहकारेण प्राबल्यात् 'विरोधे गुणवादः स्यादि'ति न्यायस्यैव प्रकृते अनवतारात् ।

यद्यपि सौबालश्रुतौ[1]— 'नारायणस्य पापरूपकर्मविशेषराहित्यमेवोच्यते न तु कर्मविशेषराहि-त्यम्, तथापि न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोक' इति श्रुत्यन्तरानुसारेण 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' इति भगवद्वचनानुसारेण च सौबाल-श्रुतौ 'नारायणस्य पुण्यपापकर्मराहित्यं प्रतिपादयिष्यत' इति न काचिदनुपपत्तिः । तथाच श्रुतिः— 'अनन्वगतं पुण्येन अनन्वागतं पापेन' इत्यादिका ।

यद्यपि ततः प्रथमपादादुग्ररूपो रुद्रो देवः प्रादुर्भवति इति पूर्वतापनीये रुद्रस्यापि प्रादुर्भाव-शब्दितोत्पत्तिः श्रूयते । तथा तलवकारिणामुपनिषदि 'ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्तास्माकमेवायं महिमेति । तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत किमिदं यक्षमिति तेऽग्निमब्रुवन्' इति शिवस्यापि यक्षरूपेण प्रादुर्भावः श्रूयते । तथा तत्रैवोत्तरत्र तस्मात्तिरोदध इति तिरोधानं श्रूयते । तथा पुराणेषु 'द्वैपायनाच्छुको जज्ञे भगवानेव शङ्करः । अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पदमि'ति शङ्करशब्दितस्य रुद्रस्यापि शुकादिरूपेणावतारः प्रतीयते । तथापि शतपथे अष्टमूर्तिब्राह्मणे 'अनपहतपाप्मा वा अहमस्मी'त्युदाहृतवाक्येषु रुद्रस्यानपहतपाप्मत्वाश्रवणात्, तदु-त्पत्तिरस्मदाद्युत्पत्तिवत् कर्माधीनैव । अन्यथा तत्रैव पाप्मरूपकर्मणोऽपहत्यै प्रजापतिसकाशादुत्पन्नेन तेन रूपेण प्रजापतिं प्रति नामकरणरूपसंस्कारप्रार्थनोक्तिरसङ्गता स्यात् । तथाच तापनीये प्रादुर्भाव-श्रवणमप्यस्मदादिसाधारणकर्माधीनोत्पत्तिपरमेव । अन्यथा जननमात्रस्य प्रादुर्भावरूपतया कर्मानधीन-त्वापत्तिः । न चैवम्, अस्मदादिजननस्य प्रादुर्भावशब्दितस्यापि कर्माधीनतायाः सुप्रसिद्धत्वात् । कपूयां योनिमापद्यन्ते रमणीयचरणा रमणीयां योनिमापद्यन्ते—

१. सुबालोपनिषत् सप्तमखण्डः अन्तिमभागः पृ. २४५ ।

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयंति यथाकर्म यथाश्रुतम् ॥"

इत्यादिश्रुतेः ।

तथाच— "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणादिन्द्रो जायते । अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत । तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते" इति नारायणाद्ब्रह्मरुद्रेन्द्रादीनामुत्पत्तिः श्रूयमाणा कर्माधीनैवावसीयते । न च "या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ता अभिचाकशीहि"ति श्रीरुद्रे श्वेताश्वतरे च शिवस्य देहस्य पापसम्बन्धाभावप्रतिपादनात् शतपथादौ तस्य कर्माधीनत्ववर्णनाद्विरोधेन वाक्यद्वय-स्योदाहृतस्य भिन्नविषयकत्वमावश्यकम् । तथाच अपहतपाप्मा संहाररुद्रोऽन्य एव जन्यः स्वीकार्यः । तापनीयादौ यस्य रुद्रस्य प्रादुर्भाव उच्यते सोऽन्य एव कर्मानधीनोत्पत्तिकः परमशिवः सिद्ध्यतीति वाच्यम् । (परन्तु) अतः संहाररुद्रातिरिक्तपरमशिवे मानाभावः । न चैवमुक्तविरोधः । उदाहृतश्रीरुद्र-श्वेताश्वतरवाक्ययोर्नामकरणभाविपापरहितरुद्रदेहविषयत्वेनाविरोधोपपत्तौ संहाररुद्रत्वेन परशिवत्वेन च रुद्रानेकत्वकल्पनायोगात् । अन्यथा ब्रह्मविष्ण्विन्द्राकाशादीनां च कार्यत्वकारणत्वरूपविरुद्धधर्मद्वय-प्रतिपादकवाक्यद्वयस्याविरोधाय ब्रह्मविष्ण्वादिशब्दितचतुर्मुखविष्ण्वादिद्वैविध्यस्वीकारप्रसङ्गः । त्वद-भिमतपरशिवशब्देनेव मत्कल्पितानामपि परचतुर्मुखपरविष्णुपराकाशादिशब्दैः परिभाषायाः सम्भवात् । न हि 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । हिरण्यगर्भं जनयामास पूर्वं, एको ह वै नारायण आसीत्, ब्रह्मविष्णुरुद्रेन्द्राः ते सम्प्रसूयन्ते, आकाशो ह वै नाम नामरूपयोर्निर्वहिता', 'आत्मन आकाशः सम्भूत' इति ब्रह्मविष्ण्वाकाशादीनां कार्यत्वकारणत्वावेदकानि श्रुतिवाक्यानि न सन्तीत्यस्ति । तलवकाराणामुपनिषदि शिवस्यैव प्रादुर्भावतिरोभावौ प्रतिपाद्येते इत्यत्र विशेषनिया-मकाभावात्, ब्रह्मशब्दस्य विष्णवेकनिष्ठत्वस्य प्रतिपादितत्वात्, 'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचि-दिष्यत' इति स्मृत्या, ब्रह्मशब्दश्च विष्णावेव मुख्य इत्यावेदनेन मुख्यामुख्ययोरिति न्यायेन बाधकं विना ब्रह्मशब्दमुख्यार्थस्य विष्णोरेव तत्र ग्राह्यत्वाच्च । यक्षशब्दस्य साधारणत्वाद्यक्षतिरोधानानन्तरमुमा-प्रादुर्भावस्य यक्षे उमापतित्वासाधकत्वाच्च । न हि यत्तिरोधानानन्तरं यत्प्रादुर्भावस्तं प्रति सा पत्नीति नियमोऽस्ति । व्यभिचारस्यास्य व्यक्तत्वात् ।

एतेन 'द्वैपायनाच्छुको जज्ञे' इत्यादिपुराणवचनान्यपि व्याख्यातानि । शुकाश्वत्थामदुर्वाससां शङ्करावतारत्वेऽपि रामावतारसमये शाखामृगादिभावेन देवानामिव तदुपपत्तेः ।

एतेन भारतादौ विष्णोः कर्मानधीनोत्पत्तिकत्वस्वेच्छामात्रोत्पत्तिकत्वप्रतिपादकवचनानि यानि तानि विरोधे गुणवादः स्यादिति न्यायेन अत्यन्तकुत्सितोत्पत्तिराहित्यप्रतिपादनपराणि न तु सर्वथा कर्मानधीनोत्पत्तिकत्वपराणीति निरस्तम् ।

'स एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायण' इति सौबालश्रुतौ विष्णोरपहत-पाप्मत्वप्रतिपादनेन कर्मवत्त्वराहित्यावश्यम्भावेन प्रत्यक्षश्रुतिविरोधेनोदाहृतलैङ्गादिवचनानामेव 'विरोधे त्वनपेक्षं स्यादसति ह्यनुमानमि'ति न्यायेन बाधकावश्यम्भावेनोदाहृतभारतादिवचनानां विष्णोरकर्म-वश्यत्वावेदकानामेव उदाहृतसौबालश्रुतिसहकारेण प्राबल्यात् 'विरोधे गुणवादः स्यादि'ति न्यायस्यैव प्रकृते अनवतारात् ।

यद्यपि सौबालश्रुतौ[1]— 'नारायणस्य पापरूपकर्मविशेषराहित्यमेवोच्यते न तु कर्मविशेषराहि-त्यम्, तथापि न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतो निवर्तन्ते अपहतपाप्मा ह्येष ब्रह्मलोक' इति श्रुत्यन्तरानुसारेण 'न मां कर्माणि लिम्पन्ति न मे कर्मफले स्पृहा' इति भगवद्वचनानुसारेण च सौबाल-श्रुतौ 'नारायणस्य पुण्यपापकर्मराहित्यं प्रतिपादयिष्यत' इति न काचिदनुपपत्तिः । तथाच श्रुतिः— 'अनन्वगतं पुण्येन अनन्वागतं पापेन' इत्यादिका ।

यद्यपि ततः प्रथमपादादुग्ररूपो रुद्रो देवः प्रादुर्भवति इति पूर्वतापनीये रुद्रस्यापि प्रादुर्भाव-शब्दितोत्पत्तिः श्रूयते । तथा तलवकारिणामुपनिषदि 'ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्मणो विजये देवा अमहीयन्तास्माकमेवायं महिमेति । तद्धैषां विजज्ञौ तेभ्यो ह प्रादुर्बभूव । तन्न व्यजानत किमिदं यक्षमिति तेऽग्निमब्रुवन्' इति शिवस्यापि यक्षरूपेण प्रादुर्भावः श्रूयते । तथा तत्रैवोत्तरत्र तस्मात्तिरोदध इति तिरोधानं श्रूयते । तथा पुराणेषु 'द्वैपायनाच्छुको जज्ञे भगवानेव शङ्करः । अंशांशेनावतीर्योर्व्यां स्वं प्राप परमं पदमि'ति शङ्करशब्दितस्य रुद्रस्यापि शुकादिरूपेणावतारः प्रतीयते । तथापि शतपथे अष्टमूर्तिब्राह्मणे 'अनपहतपाप्मा वा अहमस्मी'त्युदाहृतवाक्येषु रुद्रस्यानपहतपाप्मत्वाश्रवणात्, तदु-त्पत्तिरस्मदाद्युत्पत्तिवत् कर्माधीनैव । अन्यथा तत्रैव पाप्मरूपकर्मणोऽपहत्यै प्रजापतिसकाशादुत्पन्नेन तेन रूपेण प्रजापतिं प्रति नामकरणरूपसंस्कारप्रार्थनोक्तिरसङ्गता स्यात् । तथाच तापनीये प्रादुर्भाव-श्रवणमप्यस्मदादिसाधारणकर्माधीनोत्पत्तिपरमेव । अन्यथा जननमात्रस्य प्रादुर्भावरूपतया कर्मानधीन-त्वापत्तिः । न चैवम्, अस्मदादिजननस्य प्रादुर्भावशब्दितस्यापि कर्माधीनतायाः सुप्रसिद्धत्वात् । कपूयां योनिमापद्यन्ते रमणीयचरणा रमणीयां योनिमापद्यन्ते—

---

१. सुबालोपनिषत् सप्तमखण्डः अन्तिमभागः पृ. २४५ ।

"योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः ।
स्थाणुमन्येऽनुसंयंति यथाकर्म यथाश्रुतम् ॥"

इत्यादिश्रुतेः ।

तथाच— "नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणादिन्द्रो जायते । अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत । तस्य ध्यानान्तःस्थस्य ललाटात् त्र्यक्षः शूलपाणिः पुरुषो जायते" इति नारायणाद्ब्रह्मरुद्रेन्द्रादीनामुत्पत्तिः श्रूयमाणा कर्माधीनैवावसीयते । न च "या ते रुद्र शिवा तनूरघोरा पापकाशिनी । तया नस्तनुवा शन्तमया गिरिशन्ता अभिचाकशीही"ति श्रीरुद्रे श्वेताश्वतरे च शिवस्य देहस्य पापसम्बन्धाभावप्रतिपादनात् शतपथादौ तस्य कर्माधीनत्ववर्णनाद्विरोधेन वाक्यद्वयस्योदाहृतस्य भिन्नविषयकत्वमावश्यकम् । तथाच अपहतपाप्मा संहाररुद्रोऽन्य एव जन्यः स्वीकार्यः । तापनीयादौ यस्य रुद्रस्य प्रादुर्भाव उच्यते सोऽन्य एव कर्मानधीनोत्पत्तिकः परमशिवः सिद्ध्यतीति वाच्यम् । (परन्तु) अतः संहाररुद्रातिरिक्तपरमशिवे मानाभावः । न चैवमुक्तविरोधः । उदाहृतश्रीरुद्रश्वेताश्वतरवाक्ययोर्नामकरणभाविपापरहितरुद्रदेहविषयत्वेनाविरोधोपपत्तौ संहाररुद्रत्वेन परशिवत्वेन च रुद्रानेकत्वकल्पनायोगात् । अन्यथा ब्रह्मविष्णिवन्द्राकाशादीनां च कार्यत्वकारणत्वरूपविरुद्धधर्मद्वयप्रतिपादकवाक्यद्वयस्याविरोधाय ब्रह्मविष्ण्वादिशब्दितचतुर्मुखविष्णवादिद्वैविध्यस्वीकारप्रसङ्गः । त्वदभिमतपरशिवशब्देनेव मत्कल्पितानामपि परचतुर्मुखपरविष्णुपराकाशादिशब्दैः परिभाषायाः सम्भवात् । न हि 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् । हिरण्यगर्भं जनयामास पूर्वं, एको ह वै नारायण आसीत्, ब्रह्मविष्णुरुद्रेन्द्राः ते सम्प्रसूयन्ते, आकाशो ह वै नाम नामरूपयोर्निर्वहिता', 'आत्मन आकाशः सम्भूत' इति ब्रह्मविष्ण्वाकाशादीनां कार्यत्वकारणत्वावेदकानि श्रुतिवाक्यानि न सन्तीत्यस्ति । तलवकाराणामुपनिषदि शिवस्यैव प्रादुर्भावतिरोभावौ प्रतिपाद्येते इत्यत्र विशेषनियामकाभावात्, ब्रह्मशब्दस्य विष्ण्वेकनिष्ठत्वस्य प्रतिपादितत्वात्, 'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यत' इति स्मृत्या, ब्रह्मशब्दश्च विष्णावेव मुख्य इत्यावेदनेन मुख्यामुख्ययोरिति न्यायेन बाधकं विना ब्रह्मशब्दमुख्यार्थस्य विष्णोरेव तत्र ग्राह्यत्वाच्च । यक्षशब्दस्य साधारणत्वाद्यक्षतिरोधानानन्तरमुमाप्रादुर्भावस्य यक्षे उमापतित्वासाधकत्वाच्च । न हि यत्तिरोधानानन्तरं यत्प्रादुर्भावस्तं प्रति सा पत्नीति नियमोऽस्ति । व्यभिचारस्यास्य व्यक्तत्वात् ।

एतेन 'द्वैपायनाच्छुको जज्ञे' इत्यादिपुराणवचनान्यपि व्याख्यातानि । शुकाश्वत्थामदुर्वाससां शङ्करावतारत्वेऽपि रामावतारसमये शाखामृगादिभावेन देवानामिव तदुपपत्तेः ।

### ९. विष्णोः शिवविभूतिषु परिगणितत्वेन जगत्कारणत्वाक्षेपः तत्खण्डनं च, विभूतिविभूतिमतोर्भेदाभेदविचारश्च कैवल्यश्रुतेः विष्णुपरत्वसमर्थनं च

एतेन विष्णोः शिवविभूतिषु परिगणितत्वेन परतत्त्वशब्दितपरब्रह्मलक्षणभूतकृत्स्नजगज्जन्मादि-कारणत्वायोगेन ब्रह्मशब्दमुख्यार्थत्वाऽसम्भवेन महातात्पर्यतः सर्ववेदप्रतिपाद्यत्वं न सम्भवतीत्युक्तं दूषणान्तरमप्यपास्तम् ।

शिवविभूतिषु शिवस्य परिगणितत्वेऽपि यथा तस्य न जगत्कारणत्वादिक्षतिस्तव मते, तथा विष्णोः तद्विभूतिषु परिगणितत्वेऽपि तस्य न जगत्कारणत्वादिक्षतिः मत्पक्षेऽपीति सुवचत्वात् । विभूतिषु गणितस्य शिवस्य विभूतिमतः शिवादन्यत्वे शिवविभूतिषु गणितस्य विष्णोरपि विभूतिमतः परविष्णोरन्यत्वस्य सुवचत्वाच्च । अत एव 'जनितोत विष्णोरि'त्यत्र विष्णुशब्दार्थो जगत्कारणभूत-विष्णोरन्य एवेत्युक्तमन्यत्र भगवत्पादैः ।

त्वयापि च 'अण्डं हिरण्मयं मध्येसमुद्रं रुद्रस्य वीर्यात् प्रथमं बभूव । तत्र ब्रह्मा विष्णुर्जातो जातवेदा' इति वर्णितत्वाच्च ।

किञ्च कैवल्यश्रुतौ[१]—

> "स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराट् ।
> स एव विष्णुः स प्राणः स कालाग्निः स चन्द्रमाः ॥"

इति ब्रह्मादिरूपविभूतिसामानाधिकरण्यनिर्देशमात्रं कृत्वा विष्णुरूपशिवविभूतौ स एव विष्णुरिति सावधारणसामानाधिकरण्यनिर्देशकरणबलेन विष्णोर्विभूतिमता शिवशब्दार्थेनात्यन्ताभेदप्रतिपादन-परत्वावसायात् विष्णोर्विभूतिरूपत्वेऽपि जगत्कारणभूतशिवशब्दार्थात्यन्ताभिन्नत्वेन जगत्कारणत्वा-द्यवश्यम्भावेन 'यद्यद्विभूतिमत्सत्त्वं तत्ततोऽत्यन्तं विभिद्यते' इति नियमस्य विष्णावेव भङ्गात् । अन्यथा 'स एव विष्णुरि'ति इतरापेक्षया स एवेति सामानाधिकरण्यस्य विलक्षणतया निर्देशो व्यर्थः स्यात् । अत एव भगवद्गीतायां 'वृष्णीनां वासुदेवोऽस्मि, रामः शस्त्रभृतामहम् । आदित्यानामहं विष्णुः' इत्यादौ विभूतिमत्कृष्णतोऽत्यन्ताभेदेऽपि वासुदेवादीनां विभूतित्ववर्णनम् । अत एव च रामोपनिषदि[२] 'यो ह वै श्रीरामचन्द्रः स भगवानद्वैतपरमानन्दात्मा यत्परं ब्रह्म भूर्भुवः सुवस्तस्मै वै नमो नमः' इति विभूति-मता श्रीरामचन्द्रेणात्यन्ताभेदेऽपि परब्रह्मणस्तद्विभूतित्ववर्णनम् ।

---

१. कैवल्योपनिषत् – खण्डः १, ८ मन्त्र, पृ. १४३ । २. रामोपनिषत् – मन्त्र १, पृ. ४०३ ।

ननु कैवल्यश्रुतौ विभूतिमता शिवशब्दार्थेन 'स एव[1] विष्णुः सप्राण' इति विभूतित्वेनोक्तस्य विष्णोरवधारणबलेनात्यन्ताभेदे 'उमासहायं[2] परमेश्वरं विभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् । ज्ञात्वा मुनिर्गच्छति भूतयोनिमि'ति यदुक्तमुमासहायत्वादिरूपं शिवासाधारणं लिङ्गं तदनुपपत्तिः । न हि विष्णोर्माङ्गल्यादिगुणयोगेन अन्यथा वा कथञ्चित्तत्र्यशिवशब्दावाच्यत्वसम्भवेऽप्युमासहायत्वादि-रुद्रासाधारणधर्मवत्त्वमुपपद्यते । तथासति विष्णुशिवयोरभेदप्रसङ्गात् । न च उमापतिना विष्णोरभेद-स्त्वया स्वीकृतः ॥ यदुक्तं 'वृष्णीनां वासुदेवोऽस्मि, रामः शस्त्रभृतामहम् । आदित्यानामहं विष्णुः' इत्यादिना विभूतिविभूतिमद्भावेऽभेदोऽप्यस्तीति ।

तन्न । अन्यत्र विभूतिविभूतिमतोर्भेददर्शनेनाभेदे विशेषप्रमाणाभावेन चात्रापि तयोर्भेदावश्यं-भावात् । 'ममात्मा भूतभावनः । तमेव चाद्यं पुरुषं प्रपद्ये' इत्याद्यनुसारेण गीतायाः कात्स्न्येन कृष्णा-न्तर्यामिपरत्वावश्यम्भावेन विभूतिमता परमात्मना तद्विभूतिरूपस्य कृष्णस्य वासुदेवादिशब्दितस्य भेदावश्यम्भावाच्च । गीतायाः कृष्णपरत्वेऽपि वासुदेवादिशब्दार्थस्य तद्देहमात्रविभूतिपरत्वेन वा भगव-दावेशावतारबलभद्ररामजामदग्न्यरामद्वादशादित्यान्तर्गतविष्णुरूपत्वेनोपपत्त्या विभूतिविभूतिमतोरभेदे तस्यादृष्टान्तत्वाच्चेति चेदुच्यते ।

**"हृत्पुण्डरीकं[3] विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् ।**
**अचिन्त्यमव्यक्तमनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिम् ।**
**तमादिमध्यान्तविहीनमेकं विभुं चिदानन्दमरूपमद्भुतम् ।"**

इति शिवशब्दार्थं किञ्चित्प्रस्तुत्यानेकविशेषणविशिष्टतया कैवल्यश्रुतौ पूर्ववाक्ये तस्य ध्येयत्वमुच्यत इत्यविवादम् । स च शिवशब्दार्थो विष्णुरेव वाच्यः । 'परात्परं पुरुषमुपैति विद्वान्' इति । 'पुरुषान्न परं किञ्चित्सा काष्ठा सा परागतिः' इति विष्णुपरकठवल्लीवाक्यसमानार्थकोपक्रमात् पुरुषशब्दस्य विष्णव-साधारणाभिधानश्रुतित्वात् । 'तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिव' इत्युत्तरत्र सदाशब्द-समभिव्याहृतशिवशब्देन सर्वदा माङ्गल्यगुणयुक्तस्यैव लाभाच्च ।

**"यच्छौचनिस्सृतसरित्प्रवरोदकेन**
**तीर्थेन मूर्ध्नि विधृतेन शिवः शिवोऽभूत् ।"**
**"शेषं (सेशं) पुनात्यन्यतमो मुकुन्दात् ।"**

१. कैवल्योपनिषत् खण्ड १, मन्त्र ८, पु. १४३ । २. कैवल्योपनिषत् खण्ड १, मन्त्र ६, पु. १४३ ।
३. कैवल्योपनिषत् खण्डः १, मन्त्र ६-७, पु. १४३ ।

इति भागवतवचनपर्यालोचनया प्रसिद्धशिवस्य रूढिमात्रेण शिवशब्दार्थत्वम्, विष्णुपादोदकसेवनानन्तरं माङ्गल्यगुणयोगेन शिवशब्दार्थत्वमिति लाभेन तस्य सदाशिवत्वव्यतिरेकनिश्चयध्रौव्याच्च । 'शाश्वतं शिवमच्युतं नारायणं महाज्ञेयमि'ति नारायणानुवाके नारायण एव सदाशिवत्ववर्णनेन तेनास्यैक-वाक्यत्वोपपत्तेश्च। 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः, नारायणाद् ब्रह्मा जायते। नारायणाद्रुद्रो जायते' इति प्रसिद्धशिवस्य सर्गाद्यसमये असत्त्ववर्णनात्, ब्रह्मोत्पत्त्यनन्तरं तदुत्पत्तिवर्णनाच्च। 'नारायणे प्रलीयन्ते' इति तस्य नारायणे लयवर्णनाच्च । आदिमध्यान्तवत्त्वेन 'तमादिमध्यान्तविहीनमेकमि'ति कैवल्यश्रुत्युक्तविशेषणस्य तत्रायोगाच्च । नारायणे सम्भवाच्च । सति सम्भवे त्यागायोगाच्च । 'दिव्यो देव एको नारायण' इति सौबालोक्तनारायणैकत्वस्यासहायत्वादिरूपस्य एकमिति अत्राप्युक्तेश्च। 'यो यजुर्वेदवाच्यः' इति तापनीयवाक्येन नृसिंहात्मनो विष्णोर्यजुर्वेदवाच्यत्वाभिधानेन यजुर्वेदान्तःपाति-महोपनिषद्वाच्यत्वावश्यम्भावेन तत्र महोपनिषदि 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोमि'ति ब्रह्माधिपतित्वादिरूपोपन्यासपूर्वकं नृसिंहस्य सदाशिवोंशब्दवाच्यत्वोपन्यासेन तस्यैव सदाशिवोंशब्दमुख्यार्थत्वावश्यम्भावाच्च । 'ॐ इति ब्रह्म' इति श्रुत्या ॐशब्दस्य ब्रह्मशब्दपर्यायत्व-सिद्धेश्च । ब्रह्मशब्दश्च विष्णावेवेत्युक्तत्वाच्च । तथाच पूर्ववाक्योत्तरवाक्योपात्तानेकविशेषणघटनाय 'उमासहायं लक्ष्मीसहायमि'त्येवोमासहायशब्दार्थो विज्ञातव्यः। त्रिलोचनत्वं तु शशिसूर्यहव्यवाहात्म-नयनत्रयमिति श्रीनृसिंहपरतापनीयप्रसिद्धत्वात् विष्णावविरुद्धम् ।

नीलकण्ठत्वमपि नीलकण्ठान्तर्यामित्वेन वा विष्णोः सर्वाङ्गे नीलत्वेऽपि हिरण्यश्मश्रुर्हिरण्यकेश इतिवत् नमो हिरण्यबाहवे इत्यादिवाक्योपलक्षणतया चोपपन्नमिति नीलकण्ठमित्युक्तिर्नानुपपन्नेति कृत्स्नापि कैवल्योपनिषन्नारायणपरैवेति न किञ्चिदनुपपन्नम् ।

एवञ्च 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराड्' इति नारायणानुवाकप्रत्यभिज्ञानमपि सङ्गच्छते ।

यद्यपि 'सावधारणः स एव विष्णुः' इति सामानाधिकरण्यनिर्देशः 'स एवाधस्तात्स एवोपरिष्टात्स एवेदं सर्वम् अहमेवाधस्तादहमेवोपरिष्टादहमेवेदं सर्वम् आत्मैवाधस्तादात्मैवोपरिष्टादात्मैवेदं सर्वं यद्भूतं यच्च भव्यम्' इति कैवल्यश्रुतावेवोत्तरत्र[1] 'स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्' इत्यादिसावधारण-सामानाधिकरण्यनिर्देशस्तदत्यन्तभेदेऽप्युपदिश्यत इति शक्यं वक्तुम् । तथापि तत्रेवात्र बाधकाभावात्, बाधकं विना तथाविधनिर्देशस्य लोकवेदयोरत्यन्ताभेदे व्युत्पन्नत्वाच्च अत्र नात्यन्तभेदेऽयं सामानाधि-करण्यनिर्देश इति न किञ्चिदनुपपन्नम् ।

१. कैवल्ये ९ मन्त्र, पु. १४३ ।

तत्र हि बाधकमभेदग्राहि प्रत्यक्षं तन्मूलकविरुद्धधर्माक्रान्तत्वरूपमनुमानम्, अन्यदेव तद्विदितादथो अविदितादधीति सावधारणं ब्रह्मणो योग्यायोग्यप्रपञ्चात्यन्तभिन्नत्वावेदकम् । अन्यत्र[1] धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत् पश्यसि तद्वदे'ति । तथाभेदावेदकं च श्रुतिवाक्यं— 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती'ति श्रौतसावधारणसामानाधिकरण्यनिर्देशालम्बनप्रतिपादकं विशेषश्रुत्यन्तरं च तत्रास्ति । तेन हि नारायणशब्दार्थस्य पुरुषशब्दस्य विश्वशब्दार्थभूत(चेतनाचेतन) जडाजडप्रपञ्चोपजीव्यत्वं तथाविधनिर्देशालम्बनं प्रतिपाद्यत इति स्फुटं प्रतीयते । विश्वमेवेदं पुरुष इति पुरुष एवेदं विश्वमित्येवकारो भिन्नक्रमः, उदाहृतानेकवाक्यानुसारादिति । न च स एव विष्णुरित्यत्रापि यच्छब्दस्य पूर्ववाक्यस्थशिवपरामर्शित्वेन शिवशब्दपर्यायतावसायात्, शिवत्वविष्णुत्वयोश्च गोत्वाश्वत्वयोरिव परस्परविरहव्याप्यत्वात्, तदाधारयोः शिवशब्दविष्णुशब्दार्थयोराबाभ्यामत्यन्तभेदस्वीकाराच्च । न च तत्रापि बाधकमविशिष्टमिति वाच्यम् । तत्र पूर्वोत्तरवाक्यपर्यालोचनायां वाक्यान्तरपर्यालोचनायाञ्चोक्तरीत्या शिवशब्दस्य सदा माङ्गल्यगुणविशिष्टवस्तुपरत्वावश्यम्भावेन नारायणत्वविरुद्धप्रसिद्धशिवत्वविशिष्टार्थकत्वासिद्ध्या बाधकाभावनिश्चयध्रौव्यात् ।

किञ्च कैवल्यश्रुतिरियं कात्स्र्न्येन विष्णुपरेत्यकामेनापि स्वीकार्यम् । उपक्रमे 'परात्परं पुरुषमुपैति विद्वान्' इति नारायणासाधारणपुरुषश्रुतेः । 'अचिन्त्यमव्यक्तमनन्तरूपम्' इति नारायणपरतैत्तिरीयमहोपनिषद्वाक्यप्रत्यभिज्ञानात् । 'शिवं प्रशान्तममृतं ब्रह्मयोनिमि'ति नारायणपरमुण्डकवाक्यप्रत्यभिज्ञानात् । 'स ब्रह्मा स शिवः सोऽक्षरः परमः स्वराट्' इति नारायणानुवाकप्रत्यभिज्ञानात् । 'ज्ञात्वा तं मृत्युमत्येति, नान्यः पन्था विमुक्तये' इति, 'तमेवं विद्वानमृत इह भवति नान्यः पन्था' इति, अर्थतः नारायणपरपुरुषसूक्तप्रत्यभिज्ञानात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । 'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च', 'नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च' इत्यादिना नारायणपरमुण्डकनारायणोपनिषत्प्रत्यभिज्ञानात् । 'वेदैरनेकैरहमेव वेद्य' इति, 'सर्वे वेदा यत्पदमामनन्ति । वेदैश्च सर्वैरहमेव वेद्य' इति नारायणपरकठवल्लीभगवद्गीतावाक्यप्रत्यभिज्ञानाच्च । शिवशब्दोमासहायादिशब्दानां कैवल्यश्रुतिगतानाम् उक्तरीत्या उक्तार्थनादाय नारायणपरत्वेऽप्युपपन्नत्वेन निरवकाशत्वाभावेन कैवल्यश्रुतेः शिवपरत्वे तेषामनन्यथासिद्धप्रमाणत्वासम्भवाच्च । अन्यथा उक्तबहुबाधापत्तेः ।

यद्यपि 'न कर्मणा न प्रजया धनेन, अणोरणीयान्, अहमेवैतद्वित्' इति च शिवपरत्वेन भासमानतैत्तिरीयमहोपनिषद्वाक्यप्रत्यभिज्ञानम्, 'आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिम्'[2], 'अपाणि-

१. काठकः अ. १, वल्ली २, मन्त्र १४, पु. ६ । २. ब्रह्मोपनिषत् अन्तिमभागः पु. १६८ ।

इति भागवतवचनपर्यालोचनया प्रसिद्धशिवस्य रूढिमात्रेण शिवशब्दार्थत्वम्, विष्णुपादोदकसेवनानन्तरं माङ्गल्यगुणयोगेन शिवशब्दार्थत्वमिति लाभेन तस्य सदाशिवत्वव्यतिरेकनिश्चयध्रौव्याच्च । 'शाश्वतं शिवमच्युतं नारायणं महाज्ञेयमि'ति नारायणानुवाके नारायण एव सदाशिवत्ववर्णनेन तेनास्यैक-वाक्यत्वोपपत्तेश्च । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः, नारायणाद् ब्रह्मा जायते । नारायणाद्रुद्रो जायते' इति प्रसिद्धशिवस्य सर्गाद्यसमये असत्त्ववर्णनात्, ब्रह्मोत्पत्त्यनन्तरं तदुत्पत्तिवर्णनाच्च । 'नारायणे प्रलीयन्ते' इति तस्य नारायणे लयवर्णनाच्च । आदिमध्यान्तवत्त्वेन 'तमादिमध्यान्तविहीनमेकमि'ति कैवल्यश्रुत्युक्तविशेषणस्य तत्रायोगाच्च । नारायणे सम्भवाच्च । सति सम्भवे त्यागायोगाच्च । 'दिव्यो देव एको नारायण' इति सौबालोक्तनारायणैकत्वस्यासहायत्वादिरूपस्य एकमिति अत्राप्युक्तेश्च । 'यो यजुर्वेदवाच्यः' इति तापनीयवाक्येन नृसिंहात्मनो विष्णोर्यजुर्वेदवाच्यत्वाभिधानेन यजुर्वेदान्तःपाति-महोपनिषद्वाच्यत्वावश्यम्भावेन तत्र महोपनिषदि 'ब्रह्माधिपतिर्ब्रह्मणोऽधिपतिर्ब्रह्मा शिवो मे अस्तु सदाशिवोमि'ति ब्रह्माधिपतित्वादिरूपोपन्यासपूर्वकं नृसिंहस्य सदाशिवोंशब्दवाच्यत्वोपन्यासेन तस्यैव सदाशिवोंशब्दमुख्यार्थत्वावश्यम्भावाच्च । 'ॐ इति ब्रह्म' इति श्रुत्या ॐशब्दस्य ब्रह्मशब्दपर्यायत्व-सिद्धेश्च । ब्रह्मशब्दश्च विष्णावेवेत्युक्तत्वाच्च । तथाच पूर्ववाक्योत्तरवाक्योपात्तानेकविशेषणघटनाय 'उमासहायं लक्ष्मीसहायमि'त्येवोमासहायशब्दार्थो विज्ञातव्यः । त्रिलोचनत्वं तु शशिसूर्यहव्यवाहात्म-नयनत्रयमिति श्रीनृसिंहपरतापनीयप्रसिद्धत्वात् विष्णावविरुद्धम् ।

नीलकण्ठत्वमपि नीलकण्ठान्तर्यामित्वेन वा विष्णोः सर्वाङ्गे नीलत्वेऽपि हिरण्यश्मश्रुर्हिरण्यकेश इतिवत् नमो हिरण्यबाहवे इत्यादिवाक्योपलक्षणतया चोपपन्नमिति नीलकण्ठमित्युक्तिर्नानुपपन्नेति कृत्स्नापि कैवल्योपनिषन्नारायणपरैवेति न किञ्चिदनुपपन्नम् ।

एवञ्च 'स ब्रह्मा स शिवः सेन्द्रः सोऽक्षरः परमः स्वराड्' इति नारायणानुवाकप्रत्यभिज्ञानमपि सङ्गच्छते ।

यद्यपि 'सावधारणः स एव विष्णुः' इति सामानाधिकरण्यनिर्देशः 'स एवाधस्तात्स एवोपरिष्टात्स एवेदं सर्वम् अहमेवाधस्तादहमेवोपरिष्टादहमेवेदं सर्वम् आत्मैवाधस्तादात्मैवोपरिष्टादात्मैवेदं सर्वं यद्भूतं यच्च भव्यम्' इति कैवल्यश्रुतावेवोत्तरत्र[1] 'स एव सर्वं यद्भूतं यच्च भव्यं सनातनम्' इत्यादिसावधारण-सामानाधिकरण्यनिर्देशास्तदत्यन्तभेदेऽप्युपदिश्यत इति शक्यं वक्तुम् । तथापि तत्रेवात्र बाधकाभावात्, बाधकं विना तथाविधनिर्देशस्य लोकवेदयोरत्यन्ताभेदे व्युत्पन्नत्वाच्च अत्र नात्यन्तभेदेऽयं सामानाधि-करण्यनिर्देश इति न किञ्चिदनुपपन्नम् ।

१. कैवल्ये ९ मन्त्र, पु. १४३ ।

तत्र हि बाधकमभेदग्राहि प्रत्यक्षं तन्मूलकविरुद्धधर्माक्रान्तत्वरूपमनुमानम्, अन्यदेव तद्विदितादथो अविदितादधीति सावधारणं ब्रह्मणो योग्यायोग्यप्रपञ्चात्यन्तभिन्नत्वावेदकम् । अन्यत्र[1] धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात् । अन्यत्र भूताच्च भव्याच्च यत् पश्यसि तद्वदे'ति । तथाभेदावेदकं च श्रुतिवाक्यं— 'विश्वमेवेदं पुरुषस्तद्विश्वमुपजीवती'ति श्रौतसावधारणसामानाधिकरण्यनिर्देशालम्बनप्रतिपादकं विशेषश्रुत्यन्तरं च तत्रास्ति । तेन हि नारायणशब्दार्थस्य पुरुषशब्दस्य विश्वशब्दार्थभूत(चेतनाचेतन) जडाजडप्रपञ्चोपजीव्यत्वं तथाविधनिर्देशालम्बनं प्रतिपाद्यत इति स्फुटं प्रतीयते । विश्वमेवेदं पुरुष इति पुरुष एवेदं विश्वमित्येवकारो भिन्नक्रमः, उदाहृतानेकवाक्यानुसारादिति । न च स एव विष्णुरित्यत्रापि यच्छब्दस्य पूर्ववाक्यस्थशिवपरामर्शित्वेन शिवशब्दपर्यायतावसायात्, शिवत्वविष्णुत्वयोश्च गोत्वाश्वत्वयोरिव परस्परविरहव्याप्यत्वात्, तदाधारयोः शिवशब्दविष्णुशब्दार्थयोरावाभ्यामत्यन्तभेदस्वीकाराच्च । न च तत्रापि बाधकमविशिष्टमिति वाच्यम् । तत्र पूर्वोत्तरवाक्यपर्यालोचनायां वाक्यान्तरपर्यालोचनायाञ्चोक्तरीत्या शिवशब्दस्य सदा माङ्गल्यगुणविशिष्टवस्तुपरत्वावश्यम्भावेन नारायणत्वविरुद्धप्रसिद्धशिवत्वविशिष्टार्थकत्वासिद्ध्या बाधकाभावनिश्चयध्रौव्यात् ।

किञ्च कैवल्यश्रुतिरियं कात्स्न्र्येन विष्णुपरेत्यकामेनापि स्वीकार्यम् । उपक्रमे 'परात्परं पुरुषमुपैति विद्वान्' इति नारायणासाधारणपुरुषश्रुतेः । 'अचिन्त्यमव्यक्तमनन्तरूपम्' इति नारायणपरतैत्तिरीयमहोपनिषद्वाक्यप्रत्यभिज्ञानात् । 'शिवं प्रशान्तममृतं ब्रह्मयोनिमि'ति नारायणपरमुण्डकवाक्यप्रत्यभिज्ञानात् । 'स ब्रह्मा स शिवः सोऽक्षरः परमः स्वराट्' इति नारायणानुवाकप्रत्यभिज्ञानात् । 'ज्ञात्वा तं मृत्युमत्येति, नान्यः पन्था विमुक्तये' इति, 'तमेवं विद्वानमृत इह भवति नान्यः पन्था' इति, अर्थतः नारायणपरपुरुषसूक्तप्रत्यभिज्ञानात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । 'खं वायुर्ज्योतिरापः पृथिवी विश्वस्य धारिणी' इति, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च', 'नारायणात् प्राणो जायते मनः सर्वेन्द्रियाणि च' इत्यादिना नारायणपरमुण्डकनारायणोपनिषत्प्रत्यभिज्ञानात् । 'वेदैरनेकैरहमेव वेद्य' इति, 'सर्वे वेदा यत्पदमामनन्ति । वेदैश्च सर्वैरहमेव वेद्य' इति नारायणपरकठवल्लीभगवद्गीतावाक्यप्रत्यभिज्ञानाच्च । शिवशब्दोमासहायादिशब्दानां कैवल्यश्रुतिगतानाम् उक्तरीत्या उक्तार्थानादाय नारायणपरत्वेऽप्युपपन्नत्वेन निरवकाशत्वाभावेन कैवल्यश्रुतेः शिवपरत्वे तेषामनन्यथासिद्धप्रमाणत्वासम्भवाच्च । अन्यथा उक्तबहुबाधापत्तेः ।

यद्यपि 'न कर्मणा न प्रजया धनेन, अणोरणीयान्, अहमेवैतद्वित्' इति च शिवपरत्वेन भासमानतैत्तिरीयमहोपनिषद्वाक्यप्रत्यभिज्ञानम्, 'आत्मानमरणिं[2] कृत्वा प्रणवं चोत्तरारणिम्', 'अपाणि-

१. काठकः अ. १, वल्ली २, मन्त्र १४, पु. ६ । २. ब्रह्मोपनिषत् अन्तिमभागः पु. १६८ ।

पादोऽयमचिन्त्यशक्तिः पश्याम्यचक्षुः स शृणोम्यकर्णः' इति च, 'अपाणिपादो[1] जवनो ग्रहीता पश्यत्यचक्षुः स शृणोत्यकर्णः' इति शिवपरश्वेताश्वतरवाक्यप्रत्यभिज्ञानं चात्रास्ति, तथाप्युक्त-बहुबाधतादवस्थ्यम् । नहि बहुबाधोऽभ्युपगमार्हः । तैत्तिरीयमहोपनिषच्छ्वेताश्वतरोपनिषदां नारायण-परत्वस्य वक्ष्यमाणत्वाच्च ।

यद्यपि चोपसंहारे 'यः[2] शतरुद्रमधीते सोऽग्निपूतो भवति सुरापानात् पूतो भवति ब्रह्महत्यया पूतो भवति कृत्याकृत्यात् पूतो भवति तस्मादविमुक्तमाश्रितो भवत्यत्याश्रमी सर्वदा सकृद्वा जपेत्, इति शतरुद्राध्ययनफलवर्णनात्, शतरुद्रीयं यो जपति तस्याविमुक्तशब्दितकाशीलक्षणदेशविशेषस्थत्व-वर्णनात्, अत्याश्रमीति 'अग्निरित्यादिभिर्मन्त्रैर्भस्मनोद्धूलनं तथा । त्रिपुण्ड्रधारणं चैव तदित्यत्याश्रमं बुधाः' इति स्मृत्यनुसारेण भस्मोद्धूलनादिविशेषविशिष्टाधिकारिनिरूपणात्, अक्षाद्वा जपेत् इति जप-साधनत्वेन रुद्राक्षमालानिरूपणात्, तथोपक्रमेऽपि 'अत्याश्रमस्थः सकलेन्द्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य । अत्याश्रमिभ्यः परमऋषिभ्यः' इति शिवपरश्वेताश्वतरवाक्यप्रत्यभिज्ञानाच्च । अस्तु कैवल्यश्रुते रुद्रपरत्वमेव । तथापि कैवल्यश्रुतेः शतरुद्रीयत्वमसिद्धम् । त्वमग्ने[3] रुद्र इति शतरुद्रीयस्य 'अग्नाविष्णू[4] इति वसोर्धाराया' इति श्रुतौ अन्यादृशानुपूर्वीविशेषविशिष्टस्यैव वाक्यस्य शतरुद्रीयत्वावेदनात् । न हि तादृशानुपूर्वीविशेषमत्रोपलभामहे । न च कैवल्यश्रुतेः शतरुद्रीयैकवाक्यतायां मानमस्ति येन रुद्रेतर-देवतैकवाक्यतया अस्या अपि तत्परत्वमावश्यकमिति स्यात् । अत्र शतरुद्रीयाध्ययनफलवर्णनं तैत्तिरीयमहोपनिषदि—

"उद्धृतासि वराहेण कृष्णेन शतबाहुना ।
भूमिर्धेनुर्धरणी लोकधारिणी,
मृत्तिके हन मे पापं यन्मया दुष्कृतं कृतम् ।
त्वया हतेन पापेन जीवामि (गच्छामि पा.) परमां गतिम् ।
मृत्तिकं देहि मे पुष्टिं त्वयि सर्वं प्रतिष्ठितम् ।
गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ।
ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ।"

---

१. श्वेताश्वतर अ. ३, मं. १९ । २. कैवल्योपनिषत् २ खण्डः आरम्भभागः पु. १४४ ।

३. त्वमग्ने रुद्रो असुरो महो दिवः । त्व .... शर्धो मारुतं पृक्ष ईशिषे तै. काठकम् १ प्रश्नः २ अनु. २

४. अग्नाविष्णूसजोषसेमावर्धन्तुवांगिरः । द्युम्नैर्वाजेभिरागतम् ॥ (शतरुद्रीयम्) तै.सं. ४ कांड. ७ प्रश्नः, १ अनु. १ वर्गः । त्वमग्ने रुद्र इति शतरुद्रीयस्य रूपम् । अग्नाविष्णू इति वसोर्धाराया – ३ अष्टकम् ८ प्रश्नः २७ वर्गः ।

इति मृत्तिकास्नानादिफलवर्णनवदुपपन्नम् । शतरुद्रीयशब्दे श्रीरुद्राभिधानेऽपि तस्य विष्णुपरतायाः वक्ष्यमाणत्वाच्च । अविमुक्तशब्दितकाशीक्षेत्रस्य—

"अविमुक्ते[1] तव क्षेत्रे सर्वेषां मुक्तिसिद्धये ।
अहं सन्निहितस्तत्र पाषाणप्रतिमादिषु ॥"

इति रामोपनिषद्वाक्यानुसारेण शिवक्षेत्रत्वेऽपि 'अत्र[2] हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे 'येनासावमृतीभूत्वा मोक्षीभवति । तस्मादविमुक्तमेव निषेवेत' इति । जाबालोपनिषद्रामोपनिषद्वाक्याभ्यां अविमुक्तक्षेत्रे स्थित्वा शिवस्य तारकब्रह्मोपदेष्टृत्वावेदनेऽपि तस्य तारकब्रह्मोपदेष्टृत्वेन उपदेश्यतारकब्रह्मभिन्नत्वलाभेन उपदेष्टृभूत शिवस्योपदेश्यभूततारकब्रह्मशब्दितमन्त्रार्थभूतपरब्रह्माभिन्नत्वे विशेषप्रमाणाभावेन च शिवस्य कैवल्योपनिषत्तात्पर्यरहस्यगोचरत्वायोगाच्च ।

### १०. तारकब्रह्मत्वं विष्णोरेवेति समर्थनम्

तारकब्रह्म च षडक्षरीश्रीराममन्त्र एव न तु मन्त्रान्तरम् । तन्मन्त्रप्रतिपाद्यश्च प्रसिद्धो दाशरथिराम एव । तस्य च परब्रह्मत्वं रामोत्तरतापिन्युपनिषदि सुप्रसिद्धम्—

"त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम् ।
जीवन्तो मन्त्रसिद्धाः स्युर्मुक्ता मां प्राप्नुवन्ति ते ।
मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयम् ।
उपदेक्ष्यसि मन्मन्त्रं स मुक्तो भविता शिवः ॥" इति ।

"अर्धमात्रात्मको रामो ब्रह्मानन्दैकविग्रहः ।
तत्परं ब्रह्म रामचन्द्रः ।"

इत्यादिरामोत्तरतापिन्युपनिषद्वाक्यानि विवक्षितार्थसमर्पकाणि सुप्रसिद्धानीति सर्वमनवद्यम् ।

एतेन 'अत्र हि जन्तोः[3] प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृतीभूत्वा मोक्षीभवति' इति जाबालश्रुतावुपदेष्टृरुद्रस्यैव उपदेश्यभूततारकब्रह्मत्वं लभ्यते । 'अथ हैनं[4] ब्रह्मचारिण

१. रामोत्तरतापिन्युपनिषत् मं. ५. पु. ४०२ ।
२. जाबालोपनिषत् खण्ड १, पु. १४४ । श्रीरामोत्तरतापिन्युपनिषत् मन्त्रः - ५ पु. ४०२ ।
३. जाबलोपनिषत् प्रथमखण्डः अन्तिमभागः पु. १४४ ।
४. जाबालोपनिषत् तृतीयखण्डः अन्तिमभागः पु. १४५ ।

ऊचुः किं जप्येनामृतत्वं ब्रूहीति । स होवाच याज्ञवल्क्यः शतरुद्रीयेणेति, एतानि ह वा अमृतनामधेयानि एतैर्ह वा अमृतो भवती'ति उत्तरवाक्ये अमृतशब्दितपरब्रह्मण एव रुद्रत्वावसायात् । तन्न शतरुद्रीयशरीरगतरुद्रादिनाम्नाममृतशब्दितपरब्रह्मनामत्वाभिधानादिति निरस्तम् ।

शतरुद्रीयगतरुद्रनाम्नाममृतशब्दितपरब्रह्मनामत्ववर्णनमात्रेण प्रसिद्धरुद्रामृतशब्दितपरब्रह्मणोरभेदासिद्धेः । न ह्येकशब्दरूपितत्वमात्रेण तत्प्रतिपाद्यानामभेदो दृष्टचरः । विभीतकादौ तदनुपलम्भात् । किञ्च रुद्रनाम्नाममृतशब्दितपरब्रह्मण्येव मुख्यत्वमिति मुख्यामुख्ययोरिति न्यायेन बाधकं विना तैस्तस्यैव ग्रहणं युक्तम् ।

ब्रह्मैवेदममृतं पुरस्तात् इति सावधारणश्रुतिः ब्रह्मशब्दमुख्यार्थस्यैवानन्याधीनममृतत्वमाह । अन्यथा तत्र पुरस्तादादिशब्दवैयर्थ्यात् । तैर्हि शब्दैर्ब्रह्मैवामृतं नान्यदित्यर्थो लभ्यते । ब्रह्मणः सकलनाममुख्यार्थत्वं च 'ब्रह्मैव वाच्यं परमं व्योम', 'न ताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती', 'वचसां वाच्यमुत्तममि'त्यादिश्रुतिस्मृतिसिद्धमित्युक्तम् । ब्रह्मशब्दमुख्यार्थश्च विष्णुरेवेत्यप्युक्तम् ।

## ११. विष्णोः सर्वशब्दवाच्यत्वविचारः

किञ्च 'यो देवानां नामधा एक एव' इति श्रुतिपर्यालोचनया नारायण एव सर्वदेवनाममुख्यार्थ इति सिद्ध्यति । अन्यथा तत्र 'नामधा एक एव' इत्यवधारणस्य बाधितार्थत्वापत्तेः । तदन्येषामपि तन्नामप्रतिपाद्यानां सत्त्वात् । ननु 'यो देवानां नामधा एक एव' इति विश्वकर्मसूक्ते श्रूयते । तथाच सर्वदेवनाममुख्यार्थत्वं तस्यैव भवितुमर्हति न तु विष्णोरिति चेन्न । 'अजस्य[1] नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुरि'ति श्रुतपद्मनाभत्वलिङ्गबलेन तत्सूक्तस्य विष्णुपरताया अवश्यम्भावात् । तथा याजुषीश्रुतिरप्याह— 'अजस्य[2] नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितम् । विश्वकर्मा[3] ह्यजनिष्टे'ति । न च पद्मनाभत्वं लिङ्गम्, 'विश्वकर्मा विमना' इति श्रुतिः, न च श्रुतौ सत्यां लिङ्गेन विष्णुपरत्वनिर्णयो युज्यते, श्रुतिलिङ्गयोः श्रुतेरेव बलीयस्त्वेन तदनुसारेणैव निर्णयौचित्यादिति वाच्यम् । सावकाशश्रुतेर्निरवकाशलिङ्गस्यैव प्रबलत्वेन तदनुसारेणैवंकृतनिर्णयौचित्यात् । अन्यथा आकाशाद्यधिकरणेऽनन्तत्वादिलिङ्गेन आकाशप्राणादिश्रुतीनां ब्रह्मपरत्वनिर्णयाभावप्रसङ्गात् । विश्वं कर्म यस्येति योगेन विश्वकर्मश्रुतेर्विष्णौ प्रवृत्तिसम्भवात् । पद्मनाभत्वस्य च लोकवेदयोर्विष्णवसाधारणधर्मत्वप्रसिद्धेः निरवकाशत्वात् ।

---

१. ऋक्संहिता १०-८२-६ । २. तै. संहिता ४ काण्डः ६ प्रश्नः २ अनुवाकः ८ वर्गः ।
३. ऋक्संहिता १०-८२-२ ।

नन्वजस्य नाभावर्पितमेकं पद्ममेवेति कुतोऽवधार्यत इति चेत् प्रसिद्धेः—

"अजस्य नाभाविति यस्य नाभे-
रभूच्छ्रुतेः पुष्करं लोकसारम्।
तस्मै नमो व्यस्तसमस्तविश्व-
विभूतये विष्णवे लोककर्त्रे॥"

इति स्कान्दपुराणवचनेनोपबृंहणाच्चेति ब्रूमः। अन्यथा प्रसिद्धिबाधापत्तेः।

ननु पद्मनाभो विष्णुरेव कुत इति चेत् प्रसिद्धेरेव। 'पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः' इति हि कोशकारप्रसिद्धिः। तथाच रुद्रनाम्नामपि विष्णुरेव मुख्योऽर्थ इति एतानि[1] वाऽमृतनामधेयानि इति जाबालवाक्यान्यपि तत्पराण्येव पर्यवस्यन्ति। एवञ्च तद्बलेनापि कैवल्यश्रुतिरपि न प्रसिद्धशिवपरा किन्तु सर्वदा माङ्गल्यगुणयुक्तसदाशिवशब्दार्थभूतविष्णुपरैवेति सिद्ध्यति। कैवल्यश्रुतावुपक्रमोपसंहारगता-त्याश्रमशब्दोऽपि यत्याश्रमपर एव युक्त इति न तद्बलेनापि कैवल्यश्रुतेः प्रसिद्धशिवपरत्वाशा युक्ता। सुः पूजायाम् (पा.सू. १-४-८४) अतिरतिक्रमणे च (पा. सू. १-४-९५) इति हि पाणिनिसूत्रम्। तत्र चकारादतेः पूजार्थत्वमपीति लभ्यते। अत्याश्रमः पूज्याश्रमः आश्रमेष्वधिकः पूजाभाक्त्वप्रयो-जकाश्रमो यत्याश्रम एव। अत्रार्थे 'काषायदण्डमात्रेण यतिः पूज्यो युधिष्ठिर' इत्यादि वचनं सुप्रसिद्ध-मेवेति न तत्र विवदितव्यम्।

यद्वा पूजार्थोऽयमिति च आश्रमस्थविशेषणं, न त्वाश्रमविशेषणम्। तथाच विशेषणसामर्थ्यात् तत्तदाश्रमोचितधर्मानुष्ठानपरोऽत्याश्रमस्थशब्दार्थो लभ्यते। तादृशस्यैव पूज्यत्वदर्शनात्। न च उदाहृतश्रुतावत्याश्रमशब्दार्थो निरूपित इति तस्योक्तरीत्याऽर्थवर्णने स्मृतिबाध इति वाच्यम्। तथा सति समुदायशक्तिकल्पनागौरवप्रसङ्गात्। क्लृप्तावयवशक्तिबलेन प्राप्तार्थस्यैवादरे लाघवात्। सति सम्भवे त्यागायोगात्। विश्वकर्मादिशब्दानां (तक्ष)वृक्षविशेषादौ समुदायशक्तिकल्पनस्य क्लृप्तावयव-शक्त्योपपत्तिराहित्यस्यैव मूलत्वात्।

केचित्तु स्मृत्युक्तरीत्या अत्याश्रमशब्दार्थमङ्गीकृत्य तत्स्थस्य प्रकरणादिवशाद् विद्याविशेषे-ऽधिकारमाहुः। यथाच भस्मोद्धूलनत्रिपुण्ड्रधारणादीनां न ब्रह्मविद्यामात्राङ्गत्वं तथाऽथर्वशिरोवाक्यविचारे वक्ष्याम इत्यलम्।

---

१. जाबालोपनिषत् खण्डः ३, अन्तिमवाक्यम्। पृ. १४७।

ऊचुः किं जप्येनामृतत्वं ब्रूहीति । स होवाच याज्ञवल्क्यः शतरुद्रीयेणेति, एतानि ह वा अमृतनामधेयानि एतैर्ह वा अमृतो भवती'ति उत्तरवाक्ये अमृतशब्दितपरब्रह्मण एव रुद्रत्वावसायात् । तच्च शतरुद्रीयशरीरगतरुद्रादिनाम्नाममृतशब्दितपरब्रह्मनामत्वाभिधानादिति निरस्तम् ।

शतरुद्रीयगतरुद्रनाम्नाममृतशब्दितपरब्रह्मनामत्ववर्णनमात्रेण प्रसिद्धरुद्रामृतशब्दितपरब्रह्मणोरभेदासिद्धेः । न ह्येकशब्दरूपितत्वमात्रेण तत्प्रतिपाद्यानामभेदो दृष्टचरः । विभीतकादौ तदनुपलम्भात् । किञ्च रुद्रनाम्नाममृतशब्दितपरब्रह्मण्येव मुख्यत्वमिति मुख्यामुख्ययोरिति न्यायेन बाधकं विना तैस्तस्यैव ग्रहणं युक्तम् ।

ब्रह्मैवेदममृतं पुरस्तात् इति सावधारणश्रुतिः ब्रह्मशब्दमुख्यार्थस्यैवानन्याधीनममृतत्वमाह । अन्यथा तत्र पुरस्तादादिशब्दवैयर्थ्यात् । तर्हि शब्दैर्ब्रह्मैवामृतं नान्यदित्यर्थो लभ्यते । ब्रह्मणः सकलनाममुख्यार्थत्वं च 'ब्रह्मैव वाच्यं परमं व्योम', 'न ताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती', 'वचसां वाच्यमुत्तममि'त्यादिश्रुतिस्मृतिसिद्धमित्युक्तम् । ब्रह्मशब्दमुख्यार्थश्च विष्णुरेवेत्यप्युक्तम् ।

### ११. विष्णोः सर्वशब्दवाच्यत्वविचारः

किञ्च 'यो देवानां नामधा एक एव' इति श्रुतिपर्यालोचनया नारायण एव सर्वदेवनाममुख्यार्थ इति सिद्ध्यति । अन्यथा तत्र 'नामधा एक एव' इत्यवधारणस्य बाधितार्थत्वापत्तेः । तदन्येषामपि तन्नामप्रतिपाद्यानां सत्त्वात् । ननु 'यो देवानां नामधा एक एव' इति विश्वकर्मसूक्ते श्रूयते । तथाच सर्वदेवनाममुख्यार्थत्वं तस्यैव भवितुमर्हति न तु विष्णोरिति चेन्न । 'अजस्य[1] नाभावध्येकमर्पितं यस्मिन् विश्वानि भुवनानि तस्थुरि'ति श्रुतपद्मनाभत्वलिङ्गबलेन तत्सूक्तस्य विष्णुपरताया अवश्यम्भावात् । तथा याजुषीश्रुतिरप्याह— 'अजस्य[2] नाभावध्येकमर्पितं यस्मिन्निदं विश्वं भुवनमधिश्रितम् । विश्वकर्मा[3] ह्यजनिष्टे'ति । न च पद्मनाभत्वं लिङ्गम्, 'विश्वकर्मा विमना' इति श्रुतिः, न च श्रुतौ सत्यां लिङ्गेन विष्णुपरत्वनिर्णयो युज्यते, श्रुतिलिङ्गयोः श्रुतेरेव बलीयस्त्वेन तदनुसारेणैव निर्णयौचित्यादिति वाच्यम् । सावकाशश्रुतेर्निरवकाशलिङ्गस्यैव प्रबलत्वेन तदनुसारेणैवंकृतनिर्णयौचित्यात् । अन्यथा आकाशाद्यधिकरणेऽनन्तत्वादिलिङ्गेन आकाशप्राणादिश्रुतीनां ब्रह्मपरत्वनिर्णयाभावप्रसङ्गात् । विश्वं कर्म यस्येति योगेन विश्वकर्मश्रुतेर्विष्णौ प्रवृत्तिसम्भवात् । पद्मनाभत्वस्य च लोकवेदयोर्विष्णवसाधारणधर्मत्वप्रसिद्धेः निरवकाशत्वात् ।

---

१. ऋक्संहिता १०-८२-६ ।

२. तै. संहिता ४ काण्डः ६ प्रश्नः २ अनुवाकः ८ वर्गः ।

३. ऋक्संहिता १०-८२-२ ।

नन्वजस्य नाभावर्पितमेकं पद्ममेवेति कुतोऽवधार्यत इति चेत् प्रसिद्धेः—

"अजस्य नाभाविति यस्य नाभे-
रभूच्छ्रुतेः पुष्करं लोकसारम्।
तस्मै नमो व्यस्तसमस्तविश्व-
विभूतये विष्णवे लोककर्त्रे ॥"

इति स्कान्दपुराणवचनेनोपबृंहणाच्चेति ब्रूमः। अन्यथा प्रसिद्धिबाधापत्तेः।

ननु पद्मनाभो विष्णुरेव कुत इति चेत् प्रसिद्धेरेव। 'पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रमः' इति हि कोशकारप्रसिद्धिः। तथाच रुद्रनाम्नामपि विष्णुरेव मुख्योऽर्थ इति एतानि[1] वाऽमृतनामधेयानि इति जाबालवाक्यान्यपि तत्पराण्येव पर्यवस्यन्ति। एवञ्च तद्बलेनापि कैवल्यश्रुतिरपि न प्रसिद्धशिवपरा किन्तु सर्वदा माङ्गल्यगुणयुक्तसदाशिवशब्दार्थभूतविष्णुपरैवेति सिद्ध्यति। कैवल्यश्रुतावुपक्रमोपसंहारगता-त्याश्रमशब्दोऽपि यत्याश्रमपर एव युक्त इति न तद्बलेनापि कैवल्यश्रुतेः प्रसिद्धशिवपरत्वाशा युक्ता। सुः पूजायाम् (पा.सू. १-४-८४) अतिरतिक्रमणे च (पा. सू. १-४-९५) इति हि पाणिनिसूत्रम्। तत्र चकारादतेः पूजार्थत्वमपीति लभ्यते। अत्याश्रमः पूज्याश्रमः आश्रमेष्वधिकः पूजाभाक्त्वप्रयो-जकाश्रमो यत्याश्रम एव। अत्रार्थे 'काषायदण्डमात्रेण यतिः पूज्यो युधिष्ठिर' इत्यादि वचनं सुप्रसिद्ध-मेवेति न तत्र विवदितव्यम्।

यद्वा पूजार्थोऽयमिति च आश्रमस्थविशेषणं, न त्वाश्रमविशेषणम्। तथाच विशेषणसामर्थ्यात् तत्तदाश्रमोचितधर्मानुष्ठानपरोऽत्याश्रमस्थशब्दार्थो लभ्यते। तादृशस्यैव पूज्यत्वदर्शनात्। न च उदाहृतश्रुतावत्याश्रमशब्दार्थो निरूपित इति तस्योक्तरीत्याऽथर्वणि स्मृतिबाध इति वाच्यम्। तथा सति समुदायशक्तिकल्पनागौरवप्रसङ्गात्। क्लृप्तावयवशक्तिबलेन प्रासार्थस्यैवादरे लाघवात्। सति सम्भवे त्यागायोगात्। विश्वकर्मादिशब्दानां (तक्ष)वृक्षविशेषादौ समुदायशक्तिकल्पनस्य क्लृप्तावयव-शक्त्योपपत्तिराहित्यस्यैव मूलत्वात्।

केचित्तु स्मृत्युक्तरीत्या अत्याश्रमशब्दार्थमङ्गीकृत्य तत्स्थस्य प्रकरणादिवशाद् विद्याविशेषे-ऽधिकारमाहुः। यथाच भस्मोद्धूलनत्रिपुण्ड्रधारणादीनां न ब्रह्मविद्यामात्राङ्गत्वं तथाऽथर्वशिरोवाक्यविचारे वक्ष्याम इत्यलम्।

---

१. जाबालोपनिषत् खण्डः ३, अन्तिमवाक्यम्। पृ. १४७।

एतेनोदाहृतश्वेताश्वतरवाक्यस्थात्याश्रमशब्दोऽपि व्याख्यातः । अक्षाद्वा जपेदित्येतत् कैवल्यवाक्यं तु रुद्राक्षपद्माक्षस्फटिकाक्षादिसाधारणमिति न तद्बलेन कैवल्यश्रुतेः शिवपरत्वसिद्धिरिति दिक् ।

### १२. शिवस्य गुरुत्वोपपादनपूर्वकं कृष्णस्यैव गीताप्रतिपाद्यत्वस्य मुमुक्षूपास्यत्वस्य च स्थापनम्

केचित्तु अत्र कैवल्यश्रुतौ 'तमादिमध्यान्तविहीनमेकं विभुमि'ति शिवविशेषणबलादेकशब्दस्य 'एके मुख्यान्यकेवलाः' इति कोशकारस्मरणात् मुख्यार्थादिमध्यान्तविहीनैकशब्दसमभिव्याहारात् 'शाश्वतं शिवमच्युतम् । नारायणम्' इति वाक्यार्थप्रत्यभिज्ञानाच्छिवशब्दः शाश्वतरूपनारायणपर एवायमवसीयते । तत्रोमासहायत्वाद्ययोगात् । सन्निध्यपेक्षया—

"यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः ।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम् ॥"[१]

इति मीमांसावार्तिकात् 'अर्थतो ह्यसमर्थानामानन्तर्येऽप्यसम्बन्धः' इति विश्वजिन्न्यायाधिकरणसूत्राच्च अर्थतः सम्बन्धस्यैवान्वयकारणेषु प्राबल्यप्रतीतेः प्रबलत्वावश्यम्भावेन उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तमिति विशेषणानां स्वगुरुमित्यनेनैवान्वयः[२] । योग्यतासत्त्वात् । 'त्वत्तो वा ब्रह्मणो वापि ये लभन्ते षडक्षरम् । तत्र हि जन्तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे' इति रामोप-निषज्जाबालोपनिषद्वाक्याभ्यां रुद्रस्योदाहृतरामोपनिषद्वाक्येन 'तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमीशमि'ति तैत्तिरीयोपनिषद्वाक्येन च ब्रह्मण इव ज्ञानोपदेष्टृत्वेन गुरुत्वावसायात् । एवञ्च स्वगुरुम् उमासहायं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तं परमेश्वरं भक्त्या प्रणम्येति योजना लभ्यते ।

यद्यपि पित्रादिशब्दवत् गुरुशब्दः सम्बन्धिशब्दः इति पितुः पुत्रो धनं गृह्णीयात् इत्यादाविव स्वगुरुरेव लभ्यत इति स्वशब्दः व्यर्थ एव । तथापि स्वस्य गुरुः स्वगुरुः तं स्वगुरुमिति षष्ठ्यर्थलाभाय स्वशब्दः । षष्ठ्यर्थश्च साक्षात्परम्परासाधारणसम्बन्धमात्र एव । अत एव देवदत्तस्य नप्ता इत्यादौ सप्तदशारत्निर्वाजपेयस्य[३] यूपः इत्यादौ च षष्ठी । तथाच दहरविद्योपासकान् सर्वान् प्रति उमापतेः साक्षाद्गुरुत्वाभावेऽपि

"यो देवाना[४] प्रथमं पुरस्तात् विश्वाधिको रुद्रो महर्षिः ।
हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्तु ॥"

१. आनन्तर्यं न कारणम् – पा० ।
२. कैवल्योपनिषत् प्रथमखण्डः मन्त्रः ७, पु. १४३ ।
३. तै. सं. १-८-१३-१
४. नारायण – १० खण्ड, ३ मन्त्र, पु. १५७ ।

इति श्रुत्यनुरोधेन

"ईश्वराद् ज्ञानमन्विच्छेत् मोक्षमिच्छेज्जनार्दनात् ।
ओमित्येवं सदा विप्राः पठध्वं ध्यात केशवम् ।
उपास्योऽयं सदा विप्रा उपायोऽस्ति हरेः स्मृतौ ॥"

इत्यादिस्मृत्यनुसारेण च भगवत्स्मृतावुपायत्वेन तारकब्रह्मविषये साक्षादुपदेष्टृत्वेन च सर्वथा गुरुत्वमस्त्येव च । नहि दहरविद्या स्मृतिर्नेत्यस्ति । तथाच बाधकाभावात् साधकसद्भावाच्च कैवल्यश्रुतिरियं कात्स्न्येन विष्णुपरैवावसीयते ।

नन्विदमनुपपन्नम् । कैवल्यश्रुतौ परमोपक्रमे 'तस्मै' सहोवाच पितामहश्चे'ति आश्वलायनप्रश्ने प्रतिवचनकर्तृत्वेन परमेष्ठिन एवाम्नानात् । तेनैव[1]

"जाग्रत्स्वप्नसुषुप्त्यादि प्रपञ्चं यत्प्रकाशते ।
तद्ब्रह्माहमिति ज्ञात्वा सर्वबन्धैः प्रमुच्यते ।
त्रिषु धामसु यद्भोग्यं भोक्ता भोगश्च यद्भवेत् ।
तेभ्यो विलक्षणः साक्षी चिन्मात्रोऽहं सदाशिवः ॥

मय्येव सकलं जातं मयि सर्वं प्रतिष्ठितम् ।
मयि सर्वं लयं याति तद् ब्रह्माद्वयमस्म्यहम् ॥

अणोरणीयानहमेव तद्वन्महानहं विश्वमहं विचित्रम् ।
पुरातनोऽहं पुरुषोऽहमीशो हिरण्मयोऽहं शिवरूपमस्मि ।

अपाणिपादोऽहमचिन्त्यशक्तिः
पश्याम्यचक्षुः स शृणोम्यकर्णः ।
अहं विजानामि विविक्तरूपो
न चास्ति वेत्ता मम चित्सदाहम् ॥

वेदैरनेकैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम् ।
न पुण्यपापे मम नास्ति नाशो न जन्मदेहेन्द्रियबुद्धिरस्ति ।

१. कैवल्योपनिषत् प्रथमखण्डः २ मन्त्रः पु. १४३ ।
२. कैवल्योपनिषत् प्रथमखण्डः मन्त्रः १७-१८-१९ द्वितीयखण्डः १-२-३ पु. १४३-१४४ ।

इत्यादिना स्वस्य ब्रह्मत्वसदाशिवत्वसकलजगज्जन्मादिकारणत्वाणोरणीयस्त्वाविरतात्मकत्वानन्त-शक्तित्वसकलवेदप्रतिपाद्यत्वपुण्यपापविदूरत्वादिधर्मवत्त्वाभिधानात् कैवल्यश्रुतेः हिरण्यगर्भपरत्वौ-चित्यात् इति चेन्न ।

रुद्रवद्धिरण्यगर्भस्याप्युक्तधर्मवत्त्वासम्भवेन 'अहं मनुरभवं[1] सूर्यश्च' इत्यादिवामदेववाक्यवत् 'अहमेकः प्रथममास वर्तामि च इत्यथर्वशिरोगतरुद्रवाक्यवच्च अहंशब्दसमभिव्याहृतकैवल्यश्रुतिगत-हिरण्यगर्भवाक्यस्यापि स्वान्तर्यामिनारायणाभिप्रायेण प्रवृत्तत्वसम्भवेन विष्णुपरत्वाविरोधित्वात् । अन्यथा हिरण्यगर्भस्य शिवरूपत्वमस्तीति स्वस्मिन् हिरण्यगर्भत्वेन निश्चिते स्वेनैव हिरण्यगर्भत्व-वर्णनवैयर्थ्यात् ।

**"एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।**
**समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥"**

इति परमात्मरूपज्ञानस्य सप्रकारकस्य परमात्मप्राप्तिलक्षणबलेन साफल्यवर्णनविरोधाच्च । परमात्म-शब्दस्य आत्मा नारायणः परः इति नारायणं परमात्मत्वेन उपक्रम्य 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति नारायणे प्रयोगात् । तमेव प्रयोगं हृदि निधाय 'उत्तमः पुरुषस्त्वन्यः परमात्मे-त्युदाहृतः' इति गीतायां श्रीकृष्णेन स्वस्य परमात्मशब्दवाच्यत्वप्रसिद्धिवर्णनाच्च मुख्यार्थो नारायण एवेति स्वीकार्यत्वेन तस्य हिरण्यगर्भपराशङ्कानुदयात् ।

एतेन तद्धैतद्ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे, मनुः प्रजाभ्यः,

**ब्रह्मा देवानां[2] प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।**
**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ।**
**अथर्वणे यां प्रवदेत ब्रह्मा, अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ॥**

**स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ।**
**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ॥**

इति छान्दोग्यमुण्डकादिषु ब्रह्मण एव ब्रह्मविद्यासम्प्रदायप्रवर्तकत्ववर्णनात्, तस्यैव

**यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।**
**तेने ब्रह्म हृदा य आदिकवये ॥**

---

१. ऋ.सं. ४-२६-१ । २. मुण्डक १ खण्डः ।

इति श्वेताश्वतरे भागवते च परमेश्वराल्लब्धब्रह्मविद्यात्ववर्णनाच्च ब्रह्मणः गुरुत्वलाभवद्रुद्रस्य गुरुत्वं न लभ्यते, तथाविधप्रमाणादर्शनादिति निरस्तम् । रुद्रस्य गुरुत्वे श्रुतिस्मृतीनामुदाहृतत्वात् । अत एव भगवत्पादैरपि 'तस्माद् ब्रह्मा गुरुर्मुख्यः सर्वेषामेव सर्वदा' इति प्रमाणेन ब्रह्मणो मुख्यगुरुत्वमभिदधद्भिः रुद्रादिष्वमुख्यगुरुत्वं विभावितम् । अत एव तैरेव 'अन्येऽपि[1] स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः' इति तत्रार्थे प्रमाणमुपन्यस्तमिति दिगित्याहुः ।

यच्चोक्तं विभूतिविभूतिमतोर्भेद एव न कथञ्चिदभेदः । अन्यत्र तथा दर्शनात् । इष्टानुसारिकल्पनाया एवोचितत्वात्, 'वृष्णीनां वासुदेवोऽस्मि, रामः शस्त्रभृतामहम्' इत्यादिभगवद्वचनेष्वपि वासुदेवादि-शब्दानां 'वसुदेवस्यापत्यं पुमान् वासुदेव' इति योगमादाय बलभद्रेऽपि प्रयोगोपपत्तेः । रामो रामश्च रामश्चेति दशावतारेषु जामदग्न्यरामबलभद्ररामदशरथरामसाधारण्येन लोकवेदयोः प्रयोगदर्शनात् । 'ममात्मा भूतभावनः । तमेव चाद्यं पुरुषं प्रपद्ये' इत्यादिना श्रीकृष्णेनैव स्वान्तर्यामिणोऽन्यस्य कथनात् स्वप्रतिपत्तिविषयत्वेनान्यस्य कथनाच्च वासुदेवरामादिशब्दानां तत्तद्देहपरत्वेन तद्देहिन एकत्वेऽपि देहरूपविभूतेः विभूतिमद्देहितः परमात्मनो भेदाच्चेति ।

तन्न । 'पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रम' इति कोशकारप्रसिद्धेरुक्तयोगाच्च वासुदेवशब्दस्य योगरूढिभ्यां कृष्ण एव मुख्यत्वात् वृत्तिद्वयविषयमुख्यार्थसम्भव एव योगमात्रादेरौचित्यात् । अत एव 'द्युभ्वाद्यायतनं स्वशब्दात्', 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इत्यादौ आत्मशब्देन परमात्मैव गृह्यते । 'रामः शस्त्रभृतामहम्' इत्यादिरामादिपदेन दशरथरामादेरेव ग्रहणं युक्तम्, न बलभद्र-रामादेः । दशरथरामादेरेव शस्त्रभृतामग्रगण्यत्वेन सकलसम्प्रतिपत्तेः । अन्यथा तद्विरोधात् । बलभद्रस्य शस्त्रभृत्त्वेन प्रसिद्धेरभावाच्च । न च तथापि वासुदेवादिशब्दानां देहविशेषरूपविभूतिवाचित्वेन विभूति-मदात्मना तस्याभेदासिद्धिरिति वाच्यम् । यदात्मको भगवांस्तदात्मिका व्यक्तिः इत्याद्युदाहृतश्रुत्या परमात्मतद्देहयोरैक्यावेदनात् । यथा चैतत्तथोपपादितमधस्तात् । न च 'ममात्मा भूतभावन' इत्यादिना कृष्णान्तर्यामी तत्प्रतिपत्तिविषयोऽन्य एव सेत्स्यतीति युक्तम् । 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः' इति प्रसिद्धश्वेताश्वतर[2]समानार्थद्वयात्,

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

१. महाभारततात्पर्यनिर्णये प्रथमाध्याये १२२ श्लोकः ।

२. श्वेताश्वतर अ. १, मन्त्रः ८, पूर्वार्धम् । पु. १३७ ।

इत्यादिना स्वस्य ब्रह्मत्वसदाशिवत्वसकलजगज्जन्मादिकारणत्वाणोरणीयस्त्वाविरतात्मकत्वानन्तशक्तित्वसकलवेदप्रतिपाद्यत्वपुण्यपापविदूरत्वादिधर्मवत्त्वाभिधानात् कैवल्यश्रुतेः हिरण्यगर्भपरत्वौचित्यात् इति चेन्न ।

रुद्रवद्धिरण्यगर्भस्याप्युक्तधर्मवत्त्वासम्भवेन 'अहं मनुरभवं[1] सूर्यश्च' इत्यादिवामदेववाक्यवत् 'अहमेकः प्रथममास वर्तामि च इत्यथर्वशिरोगतरुद्रवाक्यवच्च अहंशब्दसमभिव्याहृतकैवल्यश्रुतिगतहिरण्यगर्भवाक्यस्यापि स्वान्तर्यामिनारायणाभिप्रायेण प्रवृत्तत्वसम्भवेन विष्णुपरत्वाविरोधित्वात् । अन्यथा हिरण्यगर्भस्य शिवरूपत्वमस्तीति स्वस्मिन् हिरण्यगर्भत्वेन निश्चिते स्वेनैव हिरण्यगर्भत्ववर्णनवैयर्थ्यात् ।

**"एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयम् ।**
**समस्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपम् ॥"**

इति परमात्मरूपज्ञानस्य सप्रकारकस्य परमात्मप्राप्तिलक्षणबलेन साफल्यवर्णनविरोधाच्च । परमात्मशब्दस्य आत्मा नारायणः परः इति नारायणं परमात्मत्वेन उपक्रम्य 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थितः' इति नारायणे प्रयोगात् । तमेव प्रयोगं हृदि निधाय 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति गीतायां श्रीकृष्णेन स्वस्य परमात्मशब्दवाच्यत्वप्रसिद्धिवर्णनाच्च मुख्यार्थो नारायण एवेति स्वीकार्यत्वेन तस्य हिरण्यगर्भपरताशङ्कानुदयात् ।

एतेन तद्धैतद्ब्रह्मा प्रजापतय उवाच, प्रजापतिर्मनवे, मनुः प्रजाभ्यः,

**ब्रह्मा देवानां[2] प्रथमः सम्बभूव विश्वस्य कर्ता भुवनस्य गोप्ता ।**
**स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वाय ज्येष्ठपुत्राय प्राह ।**
**अथर्वणे यां प्रवदेत ब्रह्मा, अथर्वा तां पुरोवाचाङ्गिरे ब्रह्मविद्याम् ॥**

**स भारद्वाजाय सत्यवहाय प्राह भारद्वाजोऽङ्गिरसे परावराम् ।**
**शौनको ह वै महाशालोऽङ्गिरसं विधिवदुपसन्नः पप्रच्छ ॥**

इति छान्दोग्यमुण्डकादिषु ब्रह्मण एव ब्रह्मविद्यासम्प्रदायप्रवर्तकत्ववर्णनात्, तस्यैव

**यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै ।**
**तेने ब्रह्म हृदा य आदिकवये ॥**

---

१. ऋ.सं. ४-२६-१ । २. मुण्डक १ खण्डः ।

इति श्वेताश्वतरे भागवते च परमेश्वराल्लब्धब्रह्मविद्यात्ववर्णनाच्च ब्रह्मणः गुरुत्वलाभवद्रुद्रस्य गुरुत्वं न लभ्यते, तथाविधप्रमाणादर्शनादिति निरस्तम् । रुद्रस्य गुरुत्वे श्रुतिस्मृतीनामुदाहृतत्वात् । अत एव भगवत्पादैरपि 'तस्माद् ब्रह्मा गुरुर्मुख्यः सर्वेषामेव सर्वदा' इति प्रमाणेन ब्रह्मणो मुख्यगुरुत्वमभिदधद्भिः रुद्रादिष्वमुख्यगुरुत्वं विभावितम् । अत एव तैरेव 'अन्येऽपि[१] स्वात्मनो मुख्याः क्रमाद्गुरव ईरिताः' इति तत्रार्थे प्रमाणमुपन्यस्तमिति दिगित्याहुः ।

यच्चोक्तं विभूतिविभूतिमतोर्भेद एव न कथञ्चिदभेदः । अन्यत्र तथा दर्शनात् । इष्टानुसारिकल्पनाया एवोचितत्वात्, 'वृष्णीनां वासुदेवोऽस्मि, रामः शस्त्रभृतामहम्' इत्यादिभगवद्वचनेष्वपि वासुदेवादि-शब्दानां 'वसुदेवस्यापत्यं पुमान् वासुदेव' इति योगमादाय बलभद्रेऽपि प्रयोगोपपत्तेः । रामो रामश्च रामश्चेति दशावतारेषु जामदग्न्यरामबलभद्ररामदशरथरामसाधारण्येन लोकवेदयोः प्रयोगदर्शनात् । 'ममात्मा भूतभावनः । तमेव चाद्यं पुरुषं प्रपद्ये' इत्यादिना श्रीकृष्णेनैव स्वान्तर्यामिणोऽन्यस्य कथ-नात् स्वप्रतिपत्तिविषयत्वेनान्यस्य कथनाच्च वासुदेवरामादिशब्दानां तत्तद्देहपरत्वेन तद्देहिन एकत्वेऽपि देहरूपविभूतेः विभूतिमद्देहितः परमात्मनो भेदाच्चेति ।

तन्न । 'पद्मनाभो मधुरिपुर्वासुदेवस्त्रिविक्रम' इति कोशकारप्रसिद्धेरुक्तयोगाच्च वासुदेवशब्दस्य योगरूढिभ्यां कृष्ण एव मुख्यत्वात् वृत्तिद्वयविषयमुख्यार्थासम्भव एव योगमात्रादेरौचित्यात् । अत एव 'द्युभ्वाद्यायतनं स्वशब्दात्', 'तमेवैकं जानथ आत्मानमन्या वाचो विमुञ्चथ' इत्यादौ आत्मशब्देन परमात्मैव गृह्यते । 'रामः शस्त्रभृतामहम्' इत्यादिरामादिपदेन दशरथरामादेरेव ग्रहणं युक्तम्, न बलभद्र-रामादेः । दशरथरामादेरेव शस्त्रभृतामग्रगण्यत्वेन सकलसम्प्रतिपत्तेः । अन्यथा तद्विरोधात् । बलभद्रस्य शस्त्रभृत्त्वेन प्रसिद्धेरभावाच्च । न च तथापि वासुदेवादिशब्दानां देहविशेषरूपविभूतिवाचित्वेन विभूति-मदात्मना तस्याभेदासिद्धिरिति वाच्यम् । यदात्मको भगवांस्तदात्मिका व्यक्तिः इत्याद्युदाहृतश्रुत्या परमात्मतद्देहयोरैक्यावेदनात् । यथा चैतत्तथोपपादितमधस्तात् । न च 'ममात्मा भूतभावन' इत्यादिना कृष्णान्तर्यामी तत्प्रतिपत्तिविषयोऽन्य एव सेत्स्यतीति युक्तम् । 'संयुक्तमेतत् क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशः' इति प्रसिद्धश्वेताश्वतर[२]समानार्थद्वयात्,

"द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥

---

१. महाभारततात्पर्यनिर्णये प्रथमाध्याये १२२ श्लोकः ।

२. श्वेताश्वतर अ. १, मन्त्रः ८, पूर्वार्धम् । पु. १३७ ।

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥

यस्मात् क्षरमतीतोऽहमक्षरादपि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥"

इत्यादेः परमाप्तभगवद्वाक्यतया च परमप्रमाणत्वावश्यम्भावात् । तेन च वाक्येन भगवतः श्रीकृष्णस्यैव सर्वोत्तमत्वसिद्धेः । तेनैव [1]"यस्मात् परं नापरमस्ति किञ्चित्' इति श्रुतिसमानार्थेन 'मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय' इति वाक्येन स्वसमाभ्यधिकराहित्यमुक्त्वा स्वापेक्षया नीचवस्त्वन्तरसत्त्वकथनात् । 'यस्मिन् द्यौः पृथिवी चान्तरिक्षम्' इत्यादिश्रुतिसमानार्थेन 'मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव' इत्यादिना भगवता स्वस्य सकलजगदाधारत्ववर्णनात् । 'तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था' इति श्रुतिसमानार्थेन 'मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते' इत्यादिना स्वज्ञानस्यैव मोक्षहेतुत्ववर्णनात् भगवतः श्रीकृष्णस्यैव मुमुक्षूपास्यपरतत्त्वशब्दितपरमस्वतन्त्रपरब्रह्मत्वसिद्धेः अन्यनियम्यत्वायोगेन 'ममात्मा भूतभावनः' इत्यत्र आत्मशब्दस्य 'आत्मैवास्य ज्योतिः' इत्यादाविव अव्यतिरेके षष्ठी, अहमन्तर्यामी सर्वभूतोत्पादकः, इत्येव तद्वाक्यार्थस्य विज्ञातव्यत्वेन भगवतोऽन्यस्तदन्तर्यामी वर्तत इत्याख्यायाः अप्रमाणत्वात् । अत एव—

"अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते ।
न तदस्ति विना यत्स्यान्मया भूतं चराचरम् ॥"

इति भगवतो वचनं स्वस्य सर्वकारणत्वसर्वप्रवृत्तिहेतुत्वावेदकम्, तथैव स्वस्य स्वातन्त्र्यावेदकं स्वेतरचराचरप्रपञ्चस्य स्वाधीनसत्त्वप्रयुक्तपारतन्त्र्यावेदकं च । अत एव च"—

"अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः ।
परं भावमजानन्तो ममाव्ययमनुत्तमम् ॥"

इति भगवतो वचनं स्वस्य सर्वोत्तमत्वावेदकम् ।

ननु त्वं सर्वोत्तमो भवसि चेत् कुतः सर्वे तथा न बुध्यन्त इत्यतस्तत्र कारणप्रतिपादकं च व्यक्तिमापन्नं मानुषदेहसदृशदेहं प्राप्तमित्यर्थः । अबुद्धयः सादृश्यनिबन्धनभ्रमवन्तः, परं भावमजानन्तः सर्वोत्कृष्टत्वरूपपरब्रह्मत्वलिङ्गं मन्निष्ठमसाक्षात्कुर्वन्तः, अनुत्तमम् – न विद्यते उत्तमं वस्तु यस्मात् तत्

१. तै. आ. १०-१०-३ । महानारायणोपनिषत् १०.४ ।

तथोक्तम्, अनेन विशेषादर्शिनः एव मामन्यथा जानते, न तु विशेषदर्शिनोऽपीति विभावितम्। अत एव च ननु प्रकृतिरेव सकलजगत्कारणम्, तथाच कथं तव सकलजगत्कारणत्वम् इत्याशङ्कानिरासकं भगवतो वचनान्तरम्—

"प्रकृतिं स्वामवष्टभ्य विसृजामि पुनः पुनः।
भूतग्राममिमं कृत्स्नमवशं प्रकृतेर्वशात्॥
न च मां तानि कर्माणि निबध्नन्ति धनञ्जय।
उदासीनवदासीनमसक्तं तेषु कर्मसु॥
मयाध्यक्षेण प्रकृतिः सूयते सचराचरम्।
हेतुनानेन कौन्तेय जगद्विपरिवर्तते॥
अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम्।
परं भावमजानन्तो मम भूतमहेश्वरम्॥"

इति प्रकृतेः सकलकारणत्वमपि ममाधीनमेवेति स्वाधीनत्वप्रतिपादकं स्वस्य कर्मनिबन्धनप्रवृत्तिकत्वराहित्यप्रतिपादकञ्च। तर्हि तथा त्वामिमे जनाः कुतो न जानन्तीत्याशङ्कायां तेषां तथाऽज्ञाने कारणप्रतिपादकं च मम भूतमहेश्वरमित्यस्य मत्सम्बन्धितया सन्महेश्वरत्वमित्यर्थः, महेश्वर इति भावप्रधानो निर्देशः। परं भावमित्यस्यैव मम भूतमहेश्वरमिति विवरणम्। परं भावं परमोत्कृष्टत्वमित्यर्थः। यद्वा, भूतेषु चेतनाचेतनरूपसकलपदार्थेषु महेश्वरत्वरूपं मम परं भावम्। उत्कृष्टमाहात्म्यमित्यर्थः। प्रकृतिं स्वामधिष्ठायेत्यस्य स्वां स्वीयां प्रकृतिमधिष्ठायेत्यर्थः। स्वशब्दोऽत्रात्मीयवाची। अनेन प्रकृतेरुपसर्जनत्वं विभावितं भवति। सर्वाप्यचेतनप्रवृत्तिः चेतनाधिष्ठानं विना स्वस्वरूपमवलम्ब्य नेत्येवमर्थः सर्वैरप्यादर्तव्यः। योग्येषु तथैव दर्शनात्। कल्पनायाः दृष्टानुसारित्वाच्च। अत एव च भगवान् श्रीकृष्णः स्वस्य स्वातन्त्र्यात् क्रियमाणं करिष्यमाणं च सर्वं कृतप्रायमित्यभिप्रेत्य 'न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन' इत्याहेति सर्वमनवद्यम्।

एतेन

"ज्ञेयं यत्तत् प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते।
अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते।
सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्।
सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति॥

इत्यादिभगवद्वचनानि व्याख्यातानि । तत्र अनादिमत्परमित्यस्यायमर्थः । आदिरस्तीत्यादिमत् आदिमन्न भवतीत्यनादिमत् । न चैवं मतुपो वैयर्थ्यम् । सर्वतः श्रुतिमदितिवत् तथाऽरसं नित्यमगन्धवच्चेति श्रुतौ मतुब्वद्वावैयर्थ्योपपत्तेः । यद्वा आदिः एषामस्तीति आदिमन्ति, न विद्यन्ते आदिमन्ति यस्य तत् अनादिमत्, अर्थात् पादाद्यवयवेष्वेव अनादिमत्त्वं पर्यवस्यति । अत एवात्र सर्वतः पाणिपादं तदित्यादिना पाण्याद्यवयववत्त्वनिरूपणम् । यद्वा, अनादिमत्परमिति पदविभागः । न विद्यते आदिः यस्य तत् अनादि, अहं च तत् परं चेति कर्मधारय एव लाघवात्, न तु मत्तः परं मत्परमिति पञ्चमीतत्पुरुषः । पञ्चम्यर्थावधित्वे लक्षणाङ्गीकारापत्त्या गौरवादिति तृतीयव्याख्याने अहमर्थस्य श्रीकृष्णस्य कण्ठत एव परब्रह्मत्वं लभ्यते । मद्रूपं परं ब्रह्म न सदित्युच्यते, नाप्यसदित्युच्यते । सर्वमावृत्य चेतनाचेतनात्मकं सर्वं प्रपञ्चं सर्वतो व्याप्य अभिभूय वा तिष्ठतीति क्रियान्वयोपपत्तेः । तथाच ज्ञेयं यत्तदित्यादिवचनैः मोक्षसाधनीभूतज्ञानगोचरोऽहमेव, तस्मादेव परंब्रह्मेत्युक्तं भवतीति । तथाच श्रुतिः—

"सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वाऽत्यतिष्ठद्दशाङ्गुलम् ।
आदित्यवर्णं तमसस्तु पारे तमेवं विद्वानमृत इह भवति ॥"

इत्यादिरूपा । अत एवोदाहृतगीतावचनेभ्यः उत्तरत्र आदित्यवर्णं इत्यादिपुरुषसूक्तार्थप्रत्यभिज्ञापकं ज्योतिषामपि तज्ज्योतिः तमसः परमुच्यते इति वचनम् ।

एतेन 'तद्धाम परमं मम'ेति षष्ठी अव्यतिरेके इत्युक्तं भवति । धामशब्दस्य स्वरूपमात्रपरत्वावश्यम्भावात् । तेज आदिपरत्वाश्रयणस्य प्रकृतानुपयुक्तत्वात् । एतेनैव ब्रह्मणो हि प्रतिष्ठाहमित्यादिगीतावचनं विरुद्धवत्प्रतीयमानं व्याख्यातम् । तत्र ब्रह्मशब्दस्य प्रकृतिपरत्वात् । मम योनिर्महद्ब्रह्म इति ब्रह्मशब्दस्य प्रकृतौ श्रीकृष्णेनैव प्रयोगात् इति । एतेन 'तमेव चाद्यं पुरुषं प्रपद्ये' इति श्रीकृष्णेन स्वप्रतिपत्तिविषयत्वेन पुरुषान्तरकीर्तनात् गीतायाः न कृष्णविषयत्वम् । किन्तु तत्प्रतिपत्तिविषयतया तदन्याद्यपुरुषशब्दितपुरुषपरत्वमेव युक्तमिति निरस्तम् । प्रपद्ये इत्यस्य 'प्रपद्येत' इत्येवमर्थपरत्वावश्यम्भावात् । अन्यथा पूर्वोत्तरवाक्यार्थासङ्गतेः[1] । 'तस्य[2] तावदेव चिरम् यावन्न विमोक्ष्ये अथ संपत्स्यते' इति श्रुतौ न विमोक्ष्येऽथ संपत्स्ये इत्येवमर्थे यावन्न विमोक्ष्ये संपत्स्यते इति पुरुषभेदव-

१. प्रपद्ये इत्यस्य प्रपद्येतेत्यर्थोऽवश्यं स्वीकार्यः, अन्यथा पूर्ववाक्ये यतः यस्मान्मत्तः इयं पुराणी संसारप्रवृत्तिः प्रसृता सोऽहं तं अन्यं पुरुषं प्रपद्ये इति पूर्वोत्तरवाक्यार्थासङ्गतेः इति ।

२. छां. ६ अ. १३. खण्ड पु. १० ।

लृकारभेदवच्च 'तमेव चाद्यं पुरुषं प्रपद्ये' इत्यत्रापि पुरुषभेदलकारभेदोपपत्तेश्च । पूर्वोत्तरवाक्यार्थासङ्गतिश्चैवम् ।

**"अश्वत्थमेनं सुविरूढमूलमसङ्गशास्त्रेण दृढेन छित्त्वा ।**
**ततः परं तत्परिमार्गितव्यं यस्मिन् गता न निवर्तन्ति भूयः ॥ १५-४ ॥**

इति पूर्ववाक्योक्तसाधनजिज्ञासुमर्जुनं प्रति श्रीकृष्णेन साधनवर्णनात् ।

**"निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।**
**द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः गच्छन्त्यमूढाः पदमव्ययं तत् ॥"**

इति उत्तरवाक्ये अव्ययपदप्राप्तिसाधनवर्णनात् । तदनन्तरं प्राप्यमव्ययं पदं कीदृशमित्यपेक्षायां

**"न तद्भासयते सूर्यो न शशाङ्को न पावकः ।**
**यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥"**

इति तत्स्वरूपवर्णनात्, मध्ये 'तमेव चाद्यं पुरुषं प्रपद्ये यतः प्रवृत्तिः प्रसृता पुराणी'ति साधनवर्णनौचित्यादिति । यतः इति श्रवणात् तत इति स्वत एव लभ्यते । यत्तदोर्नित्यसम्बन्धात् । तेन यत इत्यतो जगतः प्रवृत्तिरिति सम्बन्धः । तथाच न तद्बलेनाद्यपुरुषस्य श्रीकृष्णान्यत्वसिद्धिः । किन्तूक्तरीत्या तदनन्यत्वमेव सिद्ध्यति । एवञ्च विभूतिविभूतिमतोर्भेदनियमस्तत्रैव भग्नः इति ।

किञ्च नारायणानुवाके नारायणस्यैव हरिशब्दितस्य 'स ब्रह्मा स शिवः स हरिः सेन्द्रः सोऽक्षरः परमः स्वराड्' इति उत्तरपाठरीत्या नारायणविभूतिष्वाम्नानाद्विभूतेः विभूतिमदन्यत्वस्य तत्रैवाभाव इति । तस्माद्विष्णोः कार्यकोटिनिविष्टत्वप्रयुक्तपरब्रह्मत्वानुपपत्त्यभावात्, विभूतित्वप्रयुक्तजगत्कारणभूतपरब्रह्मभावानुपपत्त्यभावाच्च न तत्त्वानुपपत्तिरिति सिद्धम् ।

केचित्तु गीतायां चरमाध्याये—

**"ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति ।**
**भ्रामयन् सर्वभूतानि यन्त्रारूढानि मायया ॥**

**तमेव शरणं गच्छ सर्वभावेन भारत ।**
**तत्प्रसादात्परां शान्तिं स्थानं प्राप्स्यसि शाश्वतम् ॥**

**इति ते ज्ञानमाख्यातं गुह्याद्गुह्यतरं मया ।"**

इति श्रीकृष्णेन शरण्यमीश्वरशब्दितं परोक्षतया निर्दिश्य तत्प्रसादात्परशान्त्यादिलक्षणफलवर्णनात् तस्य कृष्णान्यत्वप्रतीतेरिदं गीताशास्त्रं तत्परमेव भवितुमर्हतीत्याशङ्क्य—

"न त्वेवाहं जातु नासं न त्वं नेमे जनाधिपाः ।
न चैव न भविष्यामः सर्वे वयमतः परम् ॥"

इति परमोपक्रमे अहंशब्देन श्रीकृष्णस्यैवोपक्रमात्,

"न मे पार्थास्ति कर्तव्यं त्रिषु लोकेषु किञ्चन ।
नानवाप्तमवाप्तव्यं वर्त एव च कर्मणि ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदाऽऽत्मानं सृजाम्यहम् ॥

भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् ।
सुहृदं सर्वभूतानां ज्ञात्वा मां शान्तिमृच्छति ॥

यो मां पश्यति सर्वत्र सर्वं च मयि पश्यति ।
तस्याहं न प्रणश्यामि स च मे न प्रणश्यति ॥

अहं कृत्स्नस्य जगतः प्रभवः प्रलयस्तथा ।
मत्तः परतरं नान्यत् किञ्चिदस्ति धनञ्जय ॥

मयि सर्वमिदं प्रोतं सूत्रे मणिगणा इव ।
अधियज्ञोऽहमेवात्र देहे देहभृतां वर ॥

अन्तकाले च मामेव स्मरन् मुक्त्वा कलेवरम् ।
यः प्रयाति स मद्भावं याति नास्त्यत्र संशयः ॥

मया ततमिदं सर्वं जगदव्यक्तमूर्तिना ।
तेषामहं समुद्धर्ता मृत्युसंसारसागरात् ॥"

इत्यादिषु प्रत्यध्यायमस्मच्छब्देन श्रीकृष्णस्यैव मध्ये परामर्शात्; उपसंहारे, 'सर्वधर्मान् परित्यज्य मामेकं शरणं व्रजे'त्यस्मच्छब्देन श्रीकृष्णस्यैवोपसंहाराच्च, 'तमेव शरणं गच्छ' इत्येवंजातीयकेषु परोक्षवचनसत्त्वेऽपि तेषां श्रीकृष्णपरत्वमेवोचितम् । किञ्च 'तमेव शरणं गच्छे'ति परोक्षवचनस्य श्रीकृष्णविषयत्वेऽपि

"तपस्स्वाध्यायनिरतं तपस्वी वाग्विदां वरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुङ्गवम् ॥"

इत्यादिवत् गोनर्दीय आहेति महाभाष्यवचनवच्चोपपत्तिः । अपि च

"सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण ब्रवीमि ॥

इति विष्णुपरकठवल्लीवाक्यार्थप्रत्यभिज्ञापकात्,

"यदक्षरं वेदविदो वदन्ति विशन्ति यद्यतयो वीतरागाः ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं सङ्ग्रहेण प्रवक्ष्ये ॥

सर्वद्वाराणि संयम्य मनो हृदि निरुध्य च ।
मूर्ध्न्याधायात्मनः प्राणमास्थितो योगधारणाम् ॥

ओमित्येकाक्षरं ब्रह्म व्याहरन् मामनुस्मरन् ।
यः प्रयाति त्यजन् देहं स याति परमां गतिम् ॥

इति गीतावचनादपि गीतायाः विष्णुपरत्वमेव युक्तम् । विष्णुपरत्वेऽपि कृष्णपरत्वमेव सिद्ध्यति । विष्णुर्नारायणः कृष्ण इत्येतेषां पर्यायत्वं प्रसिद्धम् ।

### १३. गीतायाः शिवपरत्वाक्षेपः तत्खण्डनं च

नन्वेवं गीता शिवपरापि किं न स्यात् । 'सर्वतः पाणिपादं तत् सर्वतोऽक्षिशिरोमुखम्'[१] इति शिवपरश्वेताश्वतरयत्किञ्चिद्वाक्यैकदेशार्थप्रत्यभिज्ञापकगीतावचनसद्भावाविशेषात् इति चेन्न । कृष्ण-परत्वे उपक्रमाद्यानुगुण्यवर्णनात् । 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात्' इति शिवतदितरपरानेकोपनिषदनुगतवाक्यार्थप्रत्यभिज्ञाया एकत्वेन शिवपरैवेति निश्चयाप्रयोजकतया दुर्बल-त्वात् । यद्यपि 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्युपसंहारे 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः' इति पूर्वत्र च ईश्वराभिधानश्रुतिरस्ति । तथाप्यनुपसञ्जातविरोध्युपक्रमादितः 'तमेव चाद्यं पुरुषं प्रपद्ये', 'प्रथितः पुरुषोत्तमः' इत्यादिप्रथमपुरुषपुरुषोत्तमाद्यभिधानश्रुतेश्च ईश्वराभिधानश्रुतेः पुरुष-पुरुषोत्तमशब्दितविष्णुपरत्वमेव न्याय्यम् । 'श्रीपतिः पुरुषोत्तमः' इति हि कोशकारस्मृतिः प्रसिद्धैव । किञ्च

---

१. श्वेत. अ. ३, मन्त्रः १६

"कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु ।
उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः ।
परमात्मेति चाप्युक्तो देहेऽस्मिन् पुरुषः परः ।
य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह ।
सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते ॥"

इति गीतायां त्रयोदशाध्याये उपद्रष्टनुमन्तृभर्तृभोक्तृमहेश्वरपरमात्मशब्दानां परमपुरुषवाचकत्वेन अभिधानात् । 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति श्रीकृष्णेन क्षराक्षरातीते स्वात्मन्येव परमपुरुषत्वरूपोत्तमपुरुषत्ववर्णनात् । परमपुरुषशब्दार्थोऽपि क इति विशेषजिज्ञासानिरासाय—

"सृष्टिस्थित्यन्तकरणीं[१] ब्रह्मविष्णुशिवात्मिकाम् ।
स संज्ञां याति भगवान् एक एव जनार्दनः ॥"

इति श्रीविष्णुपुराणे भागवत इव ब्रह्मविष्णुशिवपर्यायाणामेकस्मिन् परमपुरुषे प्रवृत्तिनिमित्तोपन्यासपूर्वकं ब्रह्मविष्णुशिवपर्यायमुख्यार्थत्वज्ञापनाय 'स संज्ञां याति भगवानेक एव जनार्दनः' इति सावधारणं भागवतोपन्यासपूर्वकं जनार्दनशब्दितविषयप्रदर्शनात् तस्यैव परमपुरुषत्वं ब्रह्मविष्णुशिवपर्यायमुख्यार्थत्वं च युक्तम् । न च कारणं गुणसङ्गोऽस्येति गीतावचनस्य परमपुरुषोपद्रष्ट्रादिशब्दाभिधेयत्वप्रतिपादने तात्पर्यं नेति युक्तम् । 'य एवं वेत्ति पुरुषम्' इत्यत्र फलसङ्कीर्तनात् 'य एवमि'त्युक्तप्रकारसङ्कीर्तनाच्च । न च जनार्दनशब्दो विष्णोरन्यवाचकः । 'पीताम्बरोऽच्युतः शार्ङ्गी विष्वक्सेनो जनार्दनः' इति कोशकारस्मरणस्य तत्रैव दर्शनात् अन्यत्रादर्शनात् (पा. तत्रैवान्यत्रादर्शनात्) तथाच भागवते तृतीयस्कन्धतात्पर्यनिर्णये भगवत्पादैरुदाहृतेयं श्रुतिः—

अयं[२] त्रयी वा व प्रकृतिः सत्त्वं रजस्तम इति । तां नारायणः परिपश्यत्यनन्यप्रतिष्ठः तं वा एतमाहुः पुरुष इति । पूर्णो ह्येष भवति । स त्रेधा बभूवैषां गुणानामुपादानाय, विष्णुर्वाव सत्त्वस्य रजसो ब्रह्मेशानो नाम तमसः । स आविवेश ब्रह्मा । ब्रह्माणं चतुर्मुखं ईश ईशानं पञ्चमुखं यो वा ईश ईशानमाविवेश तं काल इत्याचक्षते एतं काल इत्याचक्षत काल-इत्याचक्षते इति ।

१. विष्णुपुराणम् अंशः १, अ. २, श्लो. ६६ ।

२. भागवततात्पर्ये स्कं. ३, अ. ११ । आचार्यैरुदाहृता सौकरायणश्रुतिः ।

यथा वामनवाराहवचनेन च ।

"ब्रह्मविष्ण्वीशरूपाणि त्रीणि विष्णोर्महात्मनः ।
ब्रह्मणि ब्रह्मरूपोऽसौ शिवरूपी शिवे स्थितः ।
पृथगेव स्थितो देवो विष्णुरूपी जनार्दनः ।
हिरण्यगर्भे शर्वे च विष्णुस्तत्सदृशाकृतिः ।
स्थित्वा जगत्सृष्टिलयौ करोति पुरुषोत्तमः ॥ इति ।

किञ्च भागवते षष्ठस्कन्धे चतुर्थाध्याये—

"स वै ममाशेषविशेषमायानिषेधनिर्वाणसुखानुभूतिः[1] ।
स सर्वनामा स च विश्वरूपः प्रसीदतामनिरुक्तात्मशक्तिः ॥"

इति ब्रह्मणा सर्वशब्दवाच्यत्ववर्णनात्, पद्मपुराणे[2] अष्टपञ्चाशाध्याये

"शृणु नामानि वक्ष्यामि रामचन्द्रस्य पार्वति ।
लौकिका वैदिकाः शब्दा ये केचित्सन्ति पार्वति ।
नामानि रामचन्द्रस्य सहस्रं तेषु चाधिकम् ॥"

इति रुद्रेण लौकिकवैदिकसर्वशब्दवाच्यत्ववर्णनात्, पाञ्चरात्रे जितन्तेस्तोत्रे 'कार्याणां[3] कारणं पूर्वं वचसां वाच्यमुत्तमम्' इति ब्रह्मणा सर्वशब्दमुख्यार्थत्ववर्णनाच्च ईश्वरशब्दस्य तत्पर्यायाणां च मुख्यार्थो विष्णुरेव स्वीकार्य इति 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति' इत्युपसंहारगतेश्वराभिधानश्रुतिरप्यविरुद्धेति सर्वमवदातम् ।

### १४. विष्णोरेव सकलवैदिकशब्दवाच्यत्वाक्षेपः तत्परिहारश्च

यद्यपि 'इमा रुद्राय स्थिरधन्वने गिरः' इति श्रुत्या शिवस्य सकलवैदिकशब्दावाच्यत्वमुच्यते, तथा सर्वाणि ह वा एतस्य नामधेयानि इत्याश्वलायनस्मरणात्,

"नामानि तव गोविंद यानि लोके महान्ति च ।
तान्येव मम नामानि नात्र कार्या विचारणा ॥"

इति हरिवंशे शिववचनेन विष्णुनाम्नामन्येषां च प्रकृष्टप्रवृत्तिनिमित्तानां नाम्नां घनसारश्चन्द्रसंज्ञ इति वचनेन चन्द्रनाम्नां कर्पूरनामत्ववत् शिवनामत्वस्य विधानात् ।

---

१. भाग. ६ स्कन्धः, ४ अध्यायः, २८ श्लोकः ।
२. पद्म. अ. २५४, श्लो. २५-२६, पूर्वार्धमात्रम् । ३. जितन्तेस्तोत्रे अ. ४, श्लो. ७ ।

यद्यपि कूर्मपुराणे[1]—

"वशित्वादप्यवश्यत्वादीश्वरः परिभाषितः ।
ऋषिः सर्वगतत्वेन हरिः सर्वगुणैर्युतः ॥

अनुत्पादाच्च पूर्वत्वात् स्वयम्भूरिति स स्मृतः ।
नराणामयनं यस्मात् तेन नारायणः स्मृतः ॥

हरः संसारहरणात् विभुत्वाद्विष्णुरुच्यते ।
भगवान् सर्वविज्ञानादवनादोमिति स्मृतः ॥

सर्वज्ञः सर्वविज्ञानात् सर्वः सर्वमयो यतः ।
शिवश्च निर्मलो यस्मात् विभुः सर्वगतो यतः ॥

इति हरिशब्दपर्यायाणां विशिष्य शिवनामत्ववर्णनाच्च, श्रुतिस्मृत्यादिषु 'इदं वाक्यं विष्णुपरं वा ? शिवपरं वे'ति संशये विष्णुपरमेवेति वा शिवपरमेवेति वा न निर्णयसम्भवः । न ह्युभयत्र तुल्यवत् प्रवृत्तानां शब्दानां स्वघटितमूर्तीनां वाक्यानामन्यतरासाधारणश्रुतित्वेन तत्परत्वनिर्णयहेतुत्वमुपपद्यते । तथापि इमा रुद्राय इति श्रुत्या न रुद्रस्य सर्वशब्दाभिधेयत्वं सिद्ध्यति । तस्यापदार्थत्वादवाक्यार्थत्वाच्च । धनाय वाणिज्यमितिवत् रुद्रप्राप्त्यर्थमिमा गिरः इति, तस्य स्थिरधन्वार्थत्वसिद्धये इति वाक्यार्थोपपत्तेश्च । इमा इति सर्वनाम्नः प्रकृतगीर्मात्रपरत्वोपपत्त्या सकलगीःपरत्वासिद्धेश्च । अन्यथा इमा गिर आदित्येभ्यो घृतस्नुरित्यादिश्रुत्या आदित्यानामपि सर्ववैदिकशब्दवाच्यत्वप्रसङ्गः । ब्रह्मैव[2] वाचः परमं व्योम इति साधारणश्रुत्या सकलशब्दमुख्याभिधेयत्वावेदनाच्च । 'तदेव ब्रह्म परमं कवीनामि'ति सावधारणश्रुत्या ज्ञानिनां मते विष्णोरेव परमब्रह्मत्वेन तत्रैवाहुरित्यार्यप्रसिद्धिवर्णनेन तस्यैव परमब्रह्मशब्दमुख्यार्थत्वौचित्याच्च । 'नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती । वचसां वाच्यमुत्तमम्' इति स्मृतिभ्यां सर्वशब्दानां शक्तिरूपप्रतिष्ठायाः विष्णावेव शाश्वतत्ववर्णनात् । तस्यैव तन्मुख्यार्थत्ववर्णनाच्च । आश्वलायनस्मृतावपि सर्वाणि ह वा एतस्येति ह वै शब्दोपबन्धात् तयोश्च प्रसिद्धद्योतकत्वात् शतपथे अभ (अभ्र) मूर्तिब्राह्मणे शिवस्य डित्थडिवित्थादिनामतुल्यसाङ्केतिकनामवत्त्वप्रतीतेः । 'प्रतिष्ठा यत्र शाश्वती' इति स्मृत्यनुसारेणापि विष्णोरन्यत्र साङ्केतिकनामवत्त्वावश्यम्भावाच्च । सङ्केतितप्रसिद्धनाम्नामेव तत्र तत्र सर्वशब्दार्थत्वमाश्रयणीयमिति न तद्बलेनापि तस्य सर्वशब्दाभिधेयत्वसिद्धिः । हरिवंशे

१. कूर्मपुराणम्, अध्यायः ४, श्लोक ६१-६२-६३-६४ ।
२.... सोममाहुर्वृष्णो अश्वस्य रेतः तै.सं. का. ७, प्र. ४, अनु. १८, वर्गः ४६ ।

नामानि तव गोविन्देति शिववचनेनापि न तस्य विष्णुवाचकसर्वशब्दवाच्यत्वसिद्धिः । हे गोविंद ! लोके यानि तव नामानि रूढ्या प्रवर्तमानाः शब्दाः महान्ति च नामानि योगरूढिभ्यामभिधायकाः शब्दाः तान्येव मम नामानि न तु स्वातन्त्र्येण नामानि सन्तीति स्फुटमर्थप्रतीतेः शिवेनैव सर्वशब्दानां स्वातन्त्र्येण कृष्णाभिधायकत्ववर्णनात् । शब्देतिस्वतन्त्रनामत्वस्यान्यासङ्केतितत्वात् अन्यस्यासम्भवेन तद्वचनबलेनापि विष्णोरेव सर्वशब्दमुख्यार्थत्वं सिद्ध्यति । प्रत्युत शिवस्य विष्णुनामान्तर्गतकतिपयनामवत्त्वमेव सिद्ध्यति न तु तत्सकलनामवत्त्वम् । तान्येव तान्येवेत्येवशब्दस्वारस्यात् । कूर्मपुराणवचनेनापि हरादिशब्दानां शिवे योगमात्रं सिद्ध्यति न तु योगरूढिः । विष्णौ तु योगरूढिः सुप्रसिद्धेति ततोऽपि न शिवस्य हर्यादिशब्दमुख्यार्थत्वं सिद्ध्यति ।

नन्वेवं सर्वशब्दानां मुख्यतो विष्णुवाचकत्वाभ्युपगमे आकाशप्राणाद्यधिकरणेषु आकाशादिशब्दानां विष्णवसाधारणाभिधानश्रुतित्वेनैव ब्रह्मपरत्वनिर्णयसम्भवे लिङ्गेन तन्निर्णयः सूत्रकृता भगवता न कार्यः स्यादिति चेत्सत्यम् । लिङ्गेनापि तन्निर्णयः सम्भवतीत्यभिप्रेत्य भगवता तदुपन्यासात् । अवश्यं चैतदेवं विज्ञेयम् । श्रुत्या पूर्वपक्षे लिङ्गेन सिद्धान्तायोगात् । आकाशादिश्रुतेर्भूताकाशादिपरत्वेन निर्णायकत्वोपपत्तेः । अनन्तत्वस्य यथा 'अनन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः । वायुश्चान्तरिक्षं चैतदुभयममृतम्' इति श्रुतिषु भूताकाशादीनामपि सिद्धवन्निर्देशात् । अन्यथा दृष्टान्तत्वायोगात् । निश्चितसाध्यवत एव दृष्टान्तत्वात् । आकाशवत् सर्वगतश्च नित्य इत्यात्मनः सर्वगतत्वनित्यत्वसाधने आकाशस्य दृष्टान्तत्ववर्णनेन ब्रह्मवदेव तस्यापि भूतभविष्यद्वर्तमानसकलपदार्थानुगततयैव सर्वगतत्वसिद्ध्या अनादित्वसिद्धेरप्यवर्जनीयत्वेन ब्रह्मवत्कृत्स्नजगत्कारणत्वोपपत्तेश्च । 'आत्मन आकाशः सम्भूत' इति श्रुतेः आकाशानाद्यनन्तत्वावेदकश्रुतिद्वयानुरोधेन गौणोत्पत्तिपरत्वोपपत्तेश्च । न चैवमाकाशाद्यधिकरणेषु अनन्तत्वादिलिङ्गेनापि निर्णय इति तव सिद्धान्तो न स्यात् । अनन्तत्वस्य प्रसिद्ध्या(द्धा) आकाशादिसाधारणत्वेन ब्रह्मलिङ्गत्वस्यैवायोगादिति वाच्यम् । परोवरीयस्त्वाद्यनन्यसाधारणलिङ्गेनापि मम सिद्धान्तकरणसम्भवात् । गुणतोऽनन्तत्वस्य ब्रह्मलिङ्गत्वसम्भवाच्च । न चाकाशादिशब्दानां विष्णुतदितराकाशादिवाचकत्वाविशेषात्, श्रुत्या च (अ) निर्णयतादवस्थ्यमिति वाच्यम् । आकाशादिशब्दानाम् उक्तरीत्या विष्णावेव मुख्यतो वाचकत्वेन श्रुतिलिङ्गाभ्यामपि मम निर्णयसम्भवात् ।

केचित्तु आकाशादिश्रुतीनां ब्रह्माकाशाद्युभयश्रुतित्वेन संशायकतया श्रुतिमात्रतो निर्णयासम्भवेऽपि लिङ्गोपेतश्रुत्या निर्णय इत्याहुः ।

अन्ये तु आकाशादिश्रुतीनां वाचकत्वेन साधारण्येऽपि विष्णोरन्यत्र विष्णाविव परममुख्यत्वाभावात् सर्वशब्दानां विष्णौ परममुख्यत्वस्योक्तरीत्या अवश्यमङ्गीकार्यत्वात् मुख्यामुख्ययोर्मुख्ये सम्प्रत्यय इतिवत् मुख्यपरममुख्ययोः परममुख्ये सम्प्रत्यय इति स्वीकारावश्यम्भावात् श्रुत्यैवाकाशाद्यधिकरणेषु मुख्यतो निर्णयोऽभिप्रेतः । लिङ्गेन निर्णयमिच्छतां तादृशश्रुत्यवष्टम्भेन लिङ्गेनापि निर्णयोऽभिप्रेत इति सूत्रकाराशयमाहुः ।

इतरे तु आनर्थक्यप्रतिहतानां विपरीतं बलाबलमितिन्यायेन निरवकाशलिङ्गादेव तत्र निर्णय इत्यातिष्ठन्ते ।

तदेवं विष्णुशिवपर्यायसमभिव्याहृतत्वेऽपि तत्तद्वाक्यानां विष्णुपरत्वनिर्णयो नासम्भवीति सिद्धम् । ततश्च 'ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठती'ति उपसंहारोऽपि विष्णावेव परममुख्यः । न च बाधकं विना परममुख्यार्थत्याग उचितः इति कृत्स्नापि गीता विष्णुपरैवेति सर्वमनवद्यमित्याहुः ।

## १५. सर्वशब्दानां विष्णुवाचकत्वाक्षेपः तत्खण्डनं च

नन्वेवमपि सर्ववैदिकशब्दानां परममुख्यवृत्त्या प्रतिपाद्योऽर्थो विष्णुरेवेत्यङ्गीकारोऽनुपपन्नः । तस्य सर्ववैदिकशब्दवाच्यत्व एव मानाभावेन परममुख्यवृत्त्या तद्वाच्यत्वे सुतरां मानाभावात् । निगमनिरुक्तव्याकरणकोशकारस्मृत्यादयो हि तत्र मानम् । नहि तेषामन्यतमं मुख्यार्थे प्रमाणं पश्यामः । किञ्चैवं विष्ण्वादिशब्दैरिव तदितरशब्दैरपि अविगानेन लोकवेदयोर्विष्णौ व्यवहारप्रसङ्गः । निघण्ट्वादिषु एत एव विष्णुशब्दपर्यायाः इति व्यवस्थाया तच्छब्दानां विभागेनानुक्तिप्रसङ्गश्च । वेदेषु सूक्तनियमाभावप्रसङ्गश्च । अपि चैवं सर्वशब्दानामक्षादिशब्दवन्नानार्थत्वप्रसङ्गः । न चेष्टापत्तिः । कोशादौ कतिपयशब्दानामेव नानार्थत्वव्यवस्थितेः । किञ्चैवं सर्वशब्दानामपि नानार्थत्वे अन्याय्यं चानेकार्थत्वमिति न्यायस्य निर्विषयत्वप्रसङ्गः । किञ्चानाद्यविगीतवृद्धव्यवहारो हि अत्रार्थेऽयं शब्दः शक्त इत्यत्र मानमित्यविवादम् । तथाच तादृशव्यवहारो यत्रास्ति स एव तस्य तस्य शब्दस्य अर्थ इति सिद्ध्यति । न त्वन्यः । एवञ्च विष्णुः सर्ववैदिकशब्दमुख्यार्थः कथमिति न जानीमः ।

किञ्च 'वसन्ते वसन्ते ज्योतिषा यजेत' इतिवाक्यस्थज्योतिरादिशब्दानां लोकवेदयोर्ज्योतिष्टोमादिकर्मस्वेव प्रसिद्धेः तेषामेव तद्वाच्यत्वाश्रयणमुचितम् । न तु विष्णोस्तद्वाच्यत्वाश्रयणम् । प्रसिद्धित्यागे ब्रह्मवाचित्वाङ्गीकारे अन्यस्य कर्मतदङ्गतत्क्रमदेशकालाधिकार्यादिप्रापकप्रमाणान्तराभावेन नियतकर्मानुष्ठानं न सिद्ध्येत् । न च शरीररूपकविन्यस्तगृहीतेः इति न्यायेन अव्यक्तादिशब्दानां ब्रह्मसम्बन्धात् प्रधानादाविव ज्योतिरादिशब्दानामपि कर्मादौ वृत्तेः कर्मसिद्धिरिति वाच्यम् । एवं हि

ब्रह्मणोऽन्यत्र शब्दानां लक्षणैव स्यात् । न चैवम् । अनाद्यविगीतवृद्धव्यवहारादिना ब्रह्मणोऽन्यत्र शक्तिसिद्धेः । नापि तदधीनत्वन्यायेन ब्रह्मणि वृत्तिः । एवं सर्वशब्दसमन्वयेऽपि सर्वनियन्तृत्वाद्यन्यस्य गुणस्यासिद्धेः । न हि सर्वशब्दसमन्वयः सर्वनियन्तृत्वरूपैकगुणसिद्धयर्थोऽङ्गीकृतः । सकलकल्याण-गुणपूर्तये सर्वशब्दानां ब्रह्मणि समन्वयोपगमात् ।

**"विद्यादीनां नियन्तायं पूज्यः प्राप्यश्च तद्वता ।**
**इत्यादिश्रुतिरूपेण विद्यादिश्रुतयोऽपि च ।**
**हरिं विन्दन्ति (वदन्ति) सर्वेषां तन्नामत्वाद्यथापि वा ॥"**

इत्यादिस्मृत्यनुसारेण सिद्धान्तिना तदधीनत्वसत्त्वे देहयोगस्यैव व्युत्पादयितव्यत्वाच्च । जातमोतं हरौ यस्माज्ज्योतिः षः प्राणरूपतः (अनुव्याख्यानम् १-४, १२ ज्योतिरुपक्रमाधिकरणम् - सू.१०) इत्यनुव्याख्या-नोक्तरीत्या योगवृत्त्या ब्रह्मणि पदसमन्वयः, कर्मणि रूढेर्बलवत्त्वात् । किञ्च ज्योतिरादिशब्दावयवानां ज्योतिरित्यादीनामपि ब्रह्मपरत्वे समुदायस्य ब्रह्मणि वृत्तिः स्यात् । न हि पङ्कः पङ्कजशब्दार्थः । एवं जगज्जनकत्वादिगुणश्च न सिद्धचेत् । अवयवसमुदाययोर्द्वयोरपि भगवन्नाममात्रत्वात् । अवयवाना-मन्यत्रप्रसिद्धत्वेन अब्रह्मपरत्वे तु सर्वसमन्वयासिद्धिः । समुदायस्यापि तत एवाब्रह्मपरत्वापातश्च । अमुख्यवृत्त्या अन्यपरतेति तु निरस्तम् । तदुक्तमनुव्याख्याने 'व्युत्पत्तेरप्यशक्यता' । (प्रकृत्यधिकरणम् १-४-२३) इति निरस्तम् ।

तत्र प्रमाणोपन्यासस्य बहुशः कृतत्वात् । ज्योतिरादिशब्दमुख्यार्थत्वेऽपि 'तं[1] यच्छतं वर्षा-ण्यभ्यार्चत् तस्माच्छतर्चिनः तस्माच्छतार्चिनः इत्याचक्षते । एतमेव सन्तम्, य इदं सर्वं मध्यतो दधे यदिदं किञ्च तस्मान्माध्यमाः तस्मान्माध्यमा इत्याचक्षते । एतमेव सन्तम् इत्यादिना ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यादि'त्यन्तेन शतर्चिनः शतर्चिनः इत्यभ्याससहितेन वाक्येन ब्रह्मशब्दमुख्यार्थस्य विष्णोः सर्वशब्दमुख्यार्थत्वोक्तेश्च । 'अव[2] स्वराति गर्गरा गोधा परि सनिष्वणत् । पिङ्गा परि स निष्वणदिन्द्राय ब्रह्मोद्यतमि'ति श्रुतौ गर्गरगोधादि-शब्दानामपि परब्रह्मवाचितामुक्त्वा ब्रह्मशब्दार्थस्य वेदस्य विशिष्य तद्वाचितोक्तेश्च । 'णकारो[3] बलं षकारः प्राण आत्मा इति विष्णुशब्दशरीरप्रविष्टणकारषकारयोरर्थमुक्त्वा स यो हैतौ णकारषकारावनु-संहितमृचो वेद' इति श्रुतौ णकारषकारार्थः सर्वत्र पूर्वोत्तरवर्णसंहितार्थ इत्युक्तत्वाच्च । अ इति ब्रह्मेति

---

१. ऐतरेयोपनिषत् २-२-१, पु. ७१ । ऐतरेयभाष्यार्थरत्नमाला द्वैतवेदान्तप्रतिष्ठाने पुनर्मुद्रितम्.

२. ऋ.सं. ८-६९-९ ३ छां. ७ अध्यायः २-३ । पु. ७१ ।

३. ऐतरेयोपनिषत् ३-२-६ (४३२-४३३ पु.)

ब्रह्मवाचितया उक्तेन अकारेण सह सर्वशब्दानां समानार्थस्य 'अकारो वै सर्वा वागि'ति श्रुत्योक्तेश्च। 'सृजतो हि श्रुतयोऽनुवर्तन्ते नैवासृजतः किं वा विदधते किं वा निषेधन्ति श्रुतिमात्रा एव ते स्युरि'ति श्रुतौ विद्यादिभागस्यापि भगवत्स्तुतित्वोक्तेश्च। 'यद्वै किञ्चिदध्यगीष्ठाः नामैवैतन्नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थः' इत्यादौ नामैवैतदित्यन्ते छान्दोग्ये यद्वाच ओमिति यच्च नेति यच्चास्याः क्रूरं यदु चोल्बणिष्णु, तद्वियूया कवयोऽन्वविन्दन् नामायत्ता समतृप्यञ्छ्रुतेधि' इति ऐतरेये च सर्ववैदिकशब्दानां भगवन्नामत्वोक्तेश्च। 'कश्छन्दसां योगमावेद धीर' इति श्रुतौ इत्यस्या[१] हृदयं साक्षान्नान्यो मद्वेद कश्चने'ति स्मृतौ वैदिकयौगिकार्थस्य तदधीनत्वोक्तेश्च। 'तत्रापि यौगिको मुख्यः सर्वत्रास्ति स वैदिकः। अनवस्थानिवृत्त्यर्थं यौगिके रूढिकल्पना। तत्रापि परमो मुख्यो वाच्यः स परमो हरिः। तत्तन्मुख्याविरोधेन तदन्यार्थस्य सङ्ग्रहः' इत्यादिस्मृतेश्च। न च 'तं यच्छतम्' इत्यादि वाक्य-स्यापि ब्रह्मणि पदसमन्वयान्नानेन सर्वशब्दवाच्यत्वसिद्धिरिति शङ्क्यम्। अस्य लोकप्रसिद्धपदार्थ-संसर्गाबाधकत्वे तद्बोधाधीनस्य पदसमन्वयस्यैवासिद्धेः। बोधकत्वे तु पदसमन्वयो न स्वोपजीव्यं ब्रह्मणः सर्वशब्दवाच्यत्वरूपं संसर्गं बाधते। स्वाध्यायोऽध्येतव्य इति वाक्यवच्चास्य विनियोक्तृत्व-विनियोज्यत्वे न विरुद्धे। अत्र च श्रुतौ एतमित्यनेन प्राणस्तथेत्यत्र ब्रह्मत्वेन निर्णीतं 'प्राणो ह्येष य एष तपति' इति पूर्ववाक्यस्थं प्राणं परामृश्य अवयवार्थोत्तययोगः आचक्षते, इत्यनेन रूढेरुक्त्या अवधारणेन च लौकिकरूढिप्राबल्यप्रसक्तमन्येषां मुख्यार्थत्वं निरस्तम्। तदुक्तमनुव्याख्याने।

> "आचक्षत इति ह्यत्र सन्तमित्यवधारणात्।
> योगस्य रूढेः प्राबल्यं विद्वद्रूढिं च तत्रगाम्।
> बहुशो दर्शयत्यस्मात्पर्यात् सनिरुक्तिकम्[२] ॥ इति।

न चैवं कर्मानुष्ठानस्य व्युत्पत्तेर्वा अनुपपत्तिः। यतः

> उपजीव्यं प्रसिद्धार्थं शतमित्यादिका श्रुतिः।
> न शक्ता बाधितुं तस्माद्युक्तो व्युत्पत्तिकर्मणी ॥

नहि ज्योतिरादिशब्दानां तदवयवानां च प्रसिद्धार्थो विनैव बाधकं त्यक्तुं युक्तः। न च 'तं यच्छतं वर्षाणि' इत्यादिश्रुतिरेव बाधिका। अनया ब्रह्मणि शतचर्यादिशब्दव्युत्पादनाय तदवयवानां लोकप्रसि-द्धार्थमुपजीवन्त्या न्यायसाम्यात् ज्योतिरादिशब्देष्वपि तस्याभ्यनुज्ञातत्वात्। एवञ्च यथा 'डुपचष्

१. भाष्ये समन्वयाधिकरणोदाहृतभागवतवचनम्। ब्र. सू. १-१-४, अधि. ४।
२. अनुव्याख्यानम् अ. १. पा. ४. ३४१-३४२।

पाके', 'डुकृञ् करणे' इत्यादौ पाकादिशब्दानां पच्यादिधातुजत्वेऽपि तेषां लोकप्रसिद्धार्थमादाय धातूनामर्थनिरूपणम्, अन्यथा ह्यन्योन्याश्रयः स्यात् । तथेहापि अवयवानां लोकप्रसिद्धार्थमादायेति व्युत्पादनं तदवयवानां तदनवयवानां च लोकप्रसिद्धार्थमादायेति किमनुचितम् ।

न चैवं लोके लक्षणैव स्यादिति शङ्क्यम् । अभिधानव्याकरणादिभिः प्रमितस्य लोके मुख्यत्वस्य विनैव बाधकं त्यागायोगात् । न च एतमेव इत्यवधारणं बाधकम् । तस्य प्रमितमुख्यत्वाबाधेनैव ब्रह्मण्येव परममुख्यत्वमन्यत्र नेत्येवंपरत्वोपपत्तेः । ब्रह्मणि परममुख्यत्वं च प्रवृत्तिनिमित्तस्य निरवधिकत्वानन्याधीनत्वाभ्यां युक्तम् । युक्तं च मुख्यवृत्तावेव योगरूढ्योरिव अमुख्यवृत्तौ निरूढलक्षणान्यलक्षणयो रूढेरिव च तारतम्यम् । न चैवं सर्वशब्दानामप्यक्षादिशब्दवन्नानार्थत्वप्रसङ्गः । संज्ञात्वेन विनियोगमादाय घटपटादिशब्दानामपि नानार्थत्वस्य दुर्निरसत्वात् । किञ्च सति प्रमाणे सर्वशब्दानामपि नानार्थत्वं सर्वैरपि शिरसा धार्यम् । अन्यथाक्षादिशब्देष्वपि तदभावप्रसङ्गात् । प्रमाणानि चोक्तानि । अन्याय्यं चानेकार्थत्वमिति न्यायश्च अप्रामाणिकानेकार्थत्वस्वीकारविषयः ।

एतेन विष्ण्वादिशब्दैरपि तदितरशब्दैरपि अविगानेन लोकवेदयोः व्यवहारप्रसङ्गः । निघण्ट्वादिषु एत एव विष्णुशब्दपर्यायाः, एते तु इन्द्रपर्याया एव न विष्णुपर्याया इति व्यवस्थाया तत्तच्छब्दानामविगानेन (उत्तय) उक्तिप्रसङ्गः, वेदेषु सूक्तनियमाभावप्रसङ्गश्चेति निरस्तम् ।

उक्तरीत्या प्रमाणैः शक्तिग्रहवतां तथा व्यवहारस्य सत्त्वेनेष्टापादनात् । निघण्टूनां प्रायशो लौकिकशब्दार्थज्ञानरूपप्रयोजनसिद्ध्यर्थत्वेन प्रवृत्ततया नामरूपे व्याकरोत्, 'आकाशो ह वै नामरूपयोर्निर्वहिता, सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वा' इत्यादिश्रुत्यनुसारेण रूपसृष्ट्यनन्तरं तत्तद्रूपेषु परमेश्वरकृतसङ्केताभिप्रायेण च प्रवृत्तत्वेन तथैव व्यवस्थया विभागकरणसम्भवेनाविरोधित्वात् । वेदेषु वैदिकानां वाक्यविशेषाग्न्यादिशब्दविशेषसमभिव्याहारप्रयुक्ताग्न्यादिसूक्तत्वव्यवहारोपपत्तेश्च । अत एव—

"ऋते नारायणादीनि नामानि पुरुषोत्तमः ।
प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरम् ॥"

इत्यादिपुराणवचनानि । अत एव च सृष्टेः पूर्वम् 'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य, नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति' इति श्रुत्यन्तरं सर्वशब्दानां भगवन्मात्रनिष्ठत्वप्रतिपादकम्, तदितरत्र नाममात्राभावप्रतिपादकं च । किञ्च अत एव अविगीतानादिवृद्धव्यवहारो ह्यत्रार्थेऽयं शब्दः शक्तो नान्यत्रेत्यत्र मानमित्यविवादम् । तथाच तादृशव्यवहारो यत्रास्ति स एव तस्य

तस्य शब्दस्यार्थ इति सिद्ध्यति नत्वन्यः । एवञ्च विष्णुः सर्वशब्दमुख्यार्थः कथमिति न जानीम इति प्रत्यूढम् ।

### १६. एकस्य शब्दस्य अनेकार्थत्वे न्यायविरोधाक्षेपपूर्वकं तत्परिहारः

इदानींतननियतविषयव्यवहारस्य नामप्रपञ्चकरणानन्तरभावित्वेन उदाहृतानेकप्रमाणसिद्धविष्णु-सर्वशब्दमुख्यार्थत्वाविघातित्वात् । न च वाच्यं तथापि सकृत्प्रयुक्तस्य शब्दस्यानेकार्थप्रत्यायकत्व-मसम्भवीति । तात्पर्यग्राहकसदसद्भावाभ्यामेव तत्सम्भवतदसम्भवयोर्व्यवस्थितत्वात् । राजा कुव-लयोल्लासकारी इत्यादिश्लिष्टशब्देषु चन्द्रभूपाद्यनेकार्थत्वदर्शनात् 'नानार्थविवक्षायामपि अक्षमानयेति प्रयोगाच्च, बहुगुणवतुडति सङ्ख्या (पा. सू. २-१-२८) इत्यत्र संज्ञार्थस्यापि सङ्ख्याशब्दस्य ष्णान्ता षट् (पा.सू. १.१.२४) इत्यत्र षट्संज्ञार्थत्वदर्शनाच्च । षष्ठी शेषे (पा. सू. २-३-५०) इत्यत्र शेषशब्देन कर्मादिव्यतिरिक्तार्थत्वोपसर्जनार्थत्वयोः, हलन्त्यम् (पा.सू. १-३-३) इत्यत्र हल्शब्दे हकारात्परलका-रार्थत्वव्यञ्जनार्थत्वयोः दर्शनाच्च । 'अग्निर्मूर्धा'[1] इति मन्त्रस्य श्रौते आग्नेययागे स्मार्ते अङ्गारकजपहोमादौ च 'पवित्रं ते' इति मन्त्रस्य पवित्रेऽग्नौ दशापवित्रादौ च, 'आप्यायस्वे'ति[3] मन्त्रस्य सौम्ये पत्नीसंयाजे सोमरसस्याप्यायने च विनियोगेन तत्तत्प्रकाशनाय अनेकार्थत्वस्य स्वीकार्यत्वात् । 'आयङ्गौरि'ति[4] मन्त्रस्य अहिदैवतम्, सौर्यं चेत्यनुक्रमणिकायां, 'दिव्यं सुपर्णमि'ति मन्त्रस्य अन्त्या 'सारस्वते सूर्याय चे'त्यनुक्रमणिकायां 'त्रयः केशिन'[5] इत्यग्निः सूर्यो वायुश्च इत्यनुक्रमणिकायाम् अनेकार्थत्वोक्तेश्च । निरुक्ते 'आनो भर प्रमगन्दस्य' इत्यादौ प्रमगन्दादिशब्दानां[6] व्यक्तिविशेषरूढेः प्रभूतं धनं आगमिष्य-तीति यो ददाति स प्रमगन्दः इति योगस्य चोक्तत्वाच्च ।

---

१. ऋ. सं. ८-४४-१६  २. ऋ.सं. ९-८३-१  ३. ऋ.सं. १-११-१६  ४. १०-१८-१

५. ऋ. सं. १-१६४-५२  त्रयः केशिनः ऋतुथा विचक्षते संवत्सरे वपत एक एषाम् ।
विश्वमेको अभिचष्टे शचीभिर्ध्राजिरेकस्य ददृशे न रूपम् ॥
ऋ.सं. २-३-२२ त्रयः केशिनः अग्निवायुसूर्याः- यास्कनिरुक्तम् (तृतीयम्) पु. (५०९) चौखम्भा ।

६. प्रमगन्दशब्दविचारः— किं ते कृण्वन्ति कीकटेषु गावो नाशिरं दुह्रे न तपन्ति घर्मम् ।
आनो भर प्रमगन्दस्य वेदो नैचाशाखं मघवन् रन्धयानः ॥
(ऋ.सं. ३-३-२१) अत्र प्रमगन्दशब्दव्युत्पत्तिरुक्ता यथा द्वैगुण्यादिलक्षणपरिमाणं गतोऽर्थो मामेव गमिष्यतीति बुद्ध्या परेषां ददातीति प्रमगन्दः वार्धुषिकः, तस्यापत्यं पुत्रादिः प्रमगन्दः । प्रस्कण्वादिवदपत्यार्थः प्रशब्देन द्योत्यते । (एवञ्च प्रमगन्दः इत्यस्य अत्यन्तकुसीदिकुलमित्यर्थः) (यास्कनिरुक्ते नैगमकाण्डम्, द्वितीयम्, पु. ३३३ चौखम्भा १९८९)

"वानात् सूतेर्देवनाद्वासुदेवो वासात् सूतेः च्छादनात् क्रीडया च।"

"बलादसुत्वाच्चावर्तनाच्च तं वासुदेवं प्रवदन्ति वेदाः।
अद्यतेऽत्ति च भूतानि तस्मादन्नं तदुच्यत इति॥"

इत्यादिश्रुतौ,

"गतिश्च सर्वभूतानां प्रजानां चापि भारत।
व्याप्तै मे रोदसी पार्थ कान्तिश्चाभ्यधिका मम॥
अधिभूतनिविष्टश्च तदिच्छुश्चास्मि भारत।
क्रमणाच्चाप्यहं पार्थ विष्णुरित्यभिसंज्ञितः[1]॥"

इत्यादिस्मृतौ च वैदिकवासुदेवादिशब्दानामनेकार्थत्वोक्तेश्च। 'स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि' (ब्र. सू. ४-४-१६) इत्यत्र सुषुप्तिवाक्यस्य व्यर्थतायाः सूत्रकारेणैव वक्ष्यमाणत्वाच्च। 'त्रयोऽर्थाः सर्ववेदेषु दशार्थाः सर्वभारते' इत्यादिस्कान्दस्मृतेश्च। तदुक्तं कर्मनिर्णये[2] भगवत्पादैः— न च बह्वर्थेषु तात्पर्यकल्पने कल्पनागौरवम्। वचनेनैव प्रतीयमानत्वात् अर्थस्य कल्पनाभावादिति। अन्यत्र च 'इति बुद्धौ समारोहादुभयोर्योगरूढयोः। त्यागे च कारणाभावादुभयार्थत्वमिष्यते'[3] इति।

किञ्च चक्षुषा घटद्वयस्येव युगपदेव (एकेन) शब्देन शब्दार्थद्वयबोधने न बाधकम्। सकृत्प्रयुक्तस्य वृत्तिद्वयं नेति न नियमः। 'गङ्गायां मत्स्यघोषौ स्तः' इत्यादौ तददर्शनात्। पङ्कजशब्दे रूढ्या पद्मत्वजातेर्योगेन पङ्कजननस्य च प्रतीतिदर्शनाच्च। न च कर्मविधानाय यजेतेत्यनेन एकवाक्यतामापन्नस्य ज्योतिरादिशब्दस्य ततो व्याघुट्य ब्रह्मज्ञानार्थत्वायोगः। सुबामन्त्रिते पराङ्गवत्स्वरे (२-१-२) सह सुपेत्यादौ (२-१-४) सुब्रित्यादेः सुपेत्यादिना एकवाक्यतामापन्नस्यापि ततो व्याघुट्य अनुव्यचलत् इत्यादौ तिङन्तेन सह समासविधायकत्वदर्शनात्। इष्टसिद्ध्यर्थं बहुस्थलेषु योगविभागस्वीकाराच्च। भूवादयो धातवः (१-३-१) इत्यत्र वाकारस्य एकवाक्यत्वत्यागेन मङ्गलार्थत्वदर्शनाच्च। 'कं बलवन्तं (कंबलवन्तम्) न बाधते शीतम्' इत्यादौ एकस्मिन्नेव वाक्ये प्रश्नोत्तररूपत्वदर्शनाच्च। पुंवाक्येऽभिप्रायेण शक्तिसङ्कोचादेकार्थता, वेदे तु तदभावाद्बाधकाभावे यावच्छक्यार्थता इत्येव न्याय्यत्वाच्च। तदुक्तं शाबरभाष्ये— परार्थो हि वेदो तद्वचनेन कर्तुं शक्यं तस्यैष समाम्नाय इति तेजो वै घृतं, प्रतितिष्ठति ह वा य एता रात्री रूपयन्ति इत्यादौ प्राशस्त्यपरार्थवादपदान्तरैः सह प्राशस्त्यलक्षकानामपि घृतादिशब्दानां स्वार्थमूलघृतादिपरत्वस्यापि दर्शनाच्च।

---

१. आदित्यानामहं विष्णुः (गीता अ. १०, श्लो. २२) अत्र गीताभाष्योदाहृतमोक्षधर्मवचनम्।

२. कर्मनिर्णयः पु. ९०। ३. अनुव्याख्यानम् १-४-५३-५४

'अभित्वा' शूर नो नुमो नत्वावाम्[१] अन्यो' इति ऋचि आद्या बृहती उत्तरा पङ्क्तिः इति पूर्वास्थिते बृहती ककुभा उत्तरेति श्रुतिबलात् बृहत्या आद्यायाश्चतुर्थपादपङ्क्तेः उत्तरस्या ऋचः पूर्वार्धेन (प्रग्रथ्यम्) प्रगातव्यम्, एकां ककुभं सम्पाद्य तस्यां ककुभि चरमं पादं पङ्क्तेरुत्तरार्धेन प्रग्रथ्य ककुभन्तरं सम्पाद्यमिति नवमे उक्तत्वेन आद्यऋगादिस्थपादस्य द्वितीयऋगादावन्वयदर्शनाच्च । 'अपाः[३] पूर्वेषां हरिवः सुतानामथो इदं सवनं केवलं ते । एवाहि शक्र ममाद्धि सोमं मधुमन्तमिन्द्र अशीहि शक्र सत्रा वृषन् जठर आवृषस्व' इति आरणस्थेन एवाह्येवेत्यादिना अन्वयदर्शनाच्च । 'आदित्ये हर्यता हरीव वक्षतुरि'त्यस्य 'जुषाण इन्द्र[४] हरिभिर्न आगहि' इत्यादेश्च 'आदित्ये जुषाण इन्द्र हरिभिर्न आगहि' इति व्यतिषङ्गदर्शनाच्च । अन्यत्र अदृष्टत्वेऽपि प्रकृते उभयार्थत्वस्य उक्तश्रुत्यादिसिद्धत्वेन अनिवार्यत्वाच्च । तदुक्तं शाबरभाष्ये 'किं हि वचनं न कुर्यात् नास्ति वचनस्यातिभारः' इति । वार्तिके च

> **"गौणं लाक्षणिकं वापि वाक्यभेदेन वा स्वयम् ।**
> **वेदो यमाश्रयत्यर्थं को नु तं प्रतिकूलयेत् ॥"** इति ।

**"सर्वोत्कर्षे देवदेवस्य विष्णोः महातात्पर्यं नैव चान्यत्र सत्यम् ।**
**अवान्तरं तत्परत्वम्"**[५] — इत्यादिश्रुत्या,

> **"परस्य वाचकाः शब्दाः समाकृष्येतरेष्वपि ।**
> **व्यवह्रियन्ते सततं लोकवेदानुसारतः ॥"**

इत्यादिस्मृत्या च उभयार्थत्वावगमात् । स्विष्टकृदादीनां दृष्टादृष्टोभयार्थत्ववत् दध्यादीनां क्रत्वर्थत्व-पुरुषार्थत्ववत्, अत्र मन्त्राणां दध्यादिद्रव्यतुल्यतया कारकत्वेऽपि द्रव्यदेवतास्मारकत्ववत्, स्मारक-त्वेऽपि आत्मनोऽङ्गत्वबोधनेन मन्त्रः प्रामाण्यमश्नुते इत्युक्तत्वेन प्रामाण्यवच्चोभयार्थत्वोपपत्तेश्च । किञ्च विधिमन्त्राधिकरणे वार्तिके विनियुक्तमन्त्राणामविधायकत्वमिति शाबरभाष्ये आपातप्रतीतमर्थं

> **"विधिशक्तिर्नियोगेन न मन्त्रस्यापनीयते ।**
> **स्वतो विधास्यति ह्येषो नियोगात् स्मारयिष्यति ॥**
>
> **विधायकं सदप्यर्थं ब्राह्मणं स्मारयत्यपि ।**
> **मन्त्रतस्तु विरोधे स्यादित्यत्रैतद्वदिष्यति ॥"**

---

१. सामसूक्तमञ्जरी साम. ५०-७-३२-२२ । २. तत्रैव २३ । ३. १०-९६-१३ ।
४. ऋ. सं. ३-४४ ५. तदन्यत् । सर्वागमानां पुरुषार्थस्ततोऽतः इति पूर्णं पैङ्गिश्रुतिवाक्यम् । श्रीविष्णुतत्त्वविनिर्णये आचार्यकृतं विष्णुसर्वोत्तमत्वे आगमोदाहरणम्, पुटम् ४४३ ।

इत्यादिना दूषयित्वा 'यस्योभयं[1] हविरार्तिमार्च्छेत्', 'यदि सोमं न विन्देत्' इत्यादिब्राह्मणवाक्येषु यच्छब्दाद् 'वादिभिर्विवदामि निविपामि', 'अग्नीदग्नीन् विहर' इत्यादिमन्त्रेषु उत्तमामन्त्रणादिभिः विधिशक्तिप्रतिबन्धादेव अविधायकता न तु विनियोगेन। 'देवांश्च याभिर्यजते[2] ददाति चे'ति मन्त्रस्यापि गोदेवत्ये यागे याज्याहेन विनियुक्तस्य यस्मिन् कर्मणि विनियोगः तद्विधायकत्वाभावेऽपि गोयागे गोदानविधायकता न विरुध्यते । यच्छब्देन विधिप्रतिबन्धात् तुल्यस्योभयमित्यादिब्राह्मणवाक्यस्यैव न विधायकत्वमिति भाष्यतात्पर्यमुक्तम् । एवञ्च प्रकृतेऽपि तत्र तत्र विनियुक्तानां सर्वमन्त्राणां वाच-(व्रात्य)स्तोमे विनियोगवत् यद्वै किञ्चैतदध्यगीष्ठाः नामैव तदिति तु वेदस्य ब्रह्मणि विनियोगेन ब्रह्मपरत्वम्, स्वतः कर्मादिरूपार्थान्तरपरत्वं चास्तु । अस्ति च प्रकृते अर्थान्तरेऽपि विनियोगः । अवान्तरं तत्परत्वमित्यादिश्रुतेः । अत एव वर्णस्वरादिसमन्वयादेव वर्णक्रमस्वराध्ययनम् । अन्यथा तदंशे अध्ययनविधेरदृष्टार्थत्वं स्यात् । अत एव च 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि न संशयः' इत्यध्यापकप्रसिद्धिः ।

यदि च उक्तप्रमाणसिद्धोऽपि वाक्यान्तरेष्वदृष्टत्वात् वेदे पदादिसमन्वयो न स्यात् तर्हि वाक्यान्तरेष्वदृष्टत्वात् पदक्रमाध्ययनमपि वेदे न स्यात् । न च ज्योतिष आयजेत इति पदच्छेदे ज्योतिषा यजेत इति पदाध्ययनविरोधः । 'कश्छन्दसां[3] योगमावेद धीर' इत्यादिश्रुत्या योगवृत्त्या समन्वयस्यासर्वाधिकारिकत्वोक्तेः । प्रायेण सर्वेषां वाक्यसमन्वय एवाधिकारेण तदुपयुक्तपदानामेवा-ध्ययनात् । 'जातमोतमि'त्यनुव्याख्यानोक्तं निर्वचनं गुणप्रकाशकत्वात् गुणज्ञापने प्रवृत्तम्, यच्छत-मित्यादिश्रुत्यानुपलक्षणपरया विवक्षितमिति न दोषप्रकाशकनिर्वचनान्तरोत्प्रेक्षा युक्ता ॥ तस्मात्

"आम्नायस्य प्रमाणस्य प्रमेयस्येश्वरस्य च ।
अलौकिकत्वादुचितः सम्बन्धोऽलौकिकस्तयोः ॥"

इति न किञ्चिदनुपपन्नम् । वस्तुतस्तु शब्दानां द्वैविध्यम्— केचन नारायणमात्रवाचकाः केचित्तदन्य-जगद्वाचकाः इति । तत्र तदितरवाचका अपि नारायणवाचका अपीति स्वीकार्यम् । उदाहृतानेक-प्रमाणसद्भावात् । न चैवं तेषां विष्णुतदितरोभयवाचकत्वेन अक्षादिशब्दवन्नानार्थत्वप्रसङ्गः । यदेव तेषां शब्दानामितरत्र प्रवृत्तौ निमित्तं तदेव भगवति प्रवृत्तौ निमित्तमित्यङ्गीकारेण तदप्रसङ्गात् । भगवदितरेषु तेषां प्रवृत्तिनिमित्तानां सम्बन्धः समवायो वाऽयुतसिद्धत्वरूपो वा तादात्म्यरूपो वा स्वरूपसम्बन्ध-विशेषो वा भगवति तु स्वातन्त्र्यमित्यन्यदेतत् ।

१. यजुः ३ अष्टकं, ७ प्रश्नः, १ अनु. । २. द्वितीयाष्टकम् ४ प्रश्नः, ६ अनु. ५ वर्गः ।
१. ऋ. सं. १०-११४-९ ।

न चैवं देशकाल्योरपि जगदाधारताप्रयोजकसम्बन्धेन नारायणासाधारणशब्दतत्साधारणतदितरशब्दप्रवृत्तिनिमित्तवत्त्वेन तयोरपि तद्वाच्यत्वप्रसङ्गः । येन सन्बन्धेन नारायणतदितरेषु तत्तत्प्रवृत्तिनिमित्तसत्त्वं तस्य देशकाल्योरसत्त्वात् । जगदाधारताप्रयोजकसम्बन्धस्य तत्तदसाधारणप्रतीतिव्यवहाराप्रयोजकत्वेन तेन सम्बन्धेन प्रवृत्तिनिमित्तवत्त्वस्य तत्तच्छब्दवाच्यतायामतन्त्रत्वात् । अन्यथा घटत्वादीनां पटादिष्विव देशकाल्योरपि सत्त्वाविशेषेण तेष्विव देशकाल्योरपि घटोऽयमित्यादिप्रतीतिव्यवहारप्रसङ्गात् ।

न चैवम् । यथा च घटादीनां घटादिशब्दवाच्यत्वे अनाद्यविगीतवृद्धव्यवहारादिः प्रमाणं तथा भगवतः तद्वाच्यत्वे प्रमाणमनेकमुदाहृतमिति नातिप्रसङ्गावकाशः ।

## १७. नारायणस्य सर्वशब्दवाच्यत्वाङ्गीकारेऽपि सकलगुणपूर्णत्वासिद्धयाक्षेपः तत्परिहारश्च

न चैवं नारायणासाधारणपर्यायशब्देतरसर्वशब्दवाच्यत्वाङ्गीकारे स्वातन्त्र्यलक्षणः गुण एक एव सिद्ध्यति, न भगवतोऽपर्यायानन्तशब्दवाच्यत्वप्रयुक्तकल्याणगुणानन्त्यम् । तथाच भगवतोऽपर्यायानन्तशब्दावाच्यत्वव्युत्पादनं त्वच्छास्त्रकृतं विफलमेवापन्नमिति वाच्यम् । तत्तच्छब्दानां गुणमादाय तत्सिद्ध्यवैकल्यात् । न चैवमग्न्यादिशब्दैर्घटादिशब्दैश्च भगवति प्रयुक्तैः भगवान् अग्रनेता अग्निः, घटको घटः इत्यादिप्रकारेण प्रतीतिप्रसङ्ग इति वाच्यम् । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः, एनमेके वदन्त्यग्निम् इत्यादिश्रुतिस्मृत्यनुसारेण इष्टापादनात् । न ह्यौष्ण्यादिप्रवृत्तिनिमित्तमादाय वह्नाविव जले उष्णं जलमिति वा, जपाकुसुम इव स्फटिके लोहितः स्फटिक इति प्रतीतिव्यवहारौ न स्त इत्यस्ति । एकस्यैवौष्ण्यादेः वह्निजलादिषु सम्बन्धभेदवत् वह्नित्वघटत्वादेरेकैकस्य भगवदग्निघटादिषु सम्बन्धभेदस्यान्यत्र तादृशप्रतीतिव्यवहारनियामकत्वेन क्लृप्तस्याविशेषात् । न चैवमुक्तोभयविधापर्यायानन्तशब्दानां योगमादायैव गुणपूर्त्यङ्गीकारे पद्मत्वजात्याश्रये पङ्कजशब्दात् पङ्कजनिकर्तृत्ववत् देवतान्तरव्यावृत्ताखण्डधर्मस्य मानाभावेन भगवत्यसिद्ध्या तेभ्यः शब्देभ्य ईदृशी देवता अग्रनेत्रीत्यादिविवक्षितप्रतीतिव्यवहारौ न सेत्स्यतः इति वाच्यम् । परपक्षेऽपि तदंशे साम्यात्, तद्दोषसाम्यात् । किञ्च भावे भावत्ववत् अभावमात्रे अभावत्ववत् प्रागभावादिषु प्रागभावत्वादिवत् तत्तत्प्रतियोगिषु तत्तत्प्रतियोगित्वरूपस्वरूपसम्बन्धविशेषवच्च देवतान्तरसकलजीवजडव्यावृत्तविष्णुत्वनारायणत्वादिशब्दितविष्णुरूपत्वमात्रनिष्ठस्याखण्डोपाधेः स्वरूपसम्बन्धविशेषस्य वा पद्मत्वस्थानाभिषिक्तस्य समुदायशक्तिगोचरस्य मयोपगमात्र काचिदनुपपत्तिः । अत एव 'नेति नेती'ति श्रुतिः विष्णोरेव सर्ववैलक्षण्यावेदिकेति सिद्ध्यति ।

एतेन सर्ववैदिकशब्दानाम् एकविष्णुवाचकत्वे पर्यायत्वेन तेषां सह प्रयोगो न स्यादिति दूषण-मप्यपास्तम् । रूढिगोचरोक्ततादृशधर्मोऽस्तीत्यर्थं शब्दान्तरनैरपेक्ष्येऽपि तत्तच्छब्दावयवभूतगुण-विशेषलाभाय सहप्रयोगोपपत्तेः । यत्र सर्वात्मना शब्दद्वयार्थभेदः तत्र तत्र सहप्रयोगस्य अहो दर्शनीया अहो दर्शनीयेत्यादिवत् आदरार्थत्वोपपत्तेश्च ।

एतेनैव— 'एतमेव सन्तं', 'यो देवानां नामधा एक एव', 'ब्रह्मैव वाचः परमं व्योम', 'ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । आत्मब्रह्मादयः शब्दाः तमृते विष्णुमव्ययम्' इत्यादाववधारणादि-सहितश्रुतिस्मृतिभिः विष्णोरेव सर्वशब्दपरममुख्यार्थत्वावेदनात्, मुख्यामुख्ययोर्मुख्ये सम्प्रत्ययः इतिवन्मुख्यपरममुख्ययोः परममुख्ये सम्प्रत्ययः इति सर्वैरपि शब्दैः प्रथमं विष्णोरेवोपस्थितिर्नियतेति ॥

स्वर्गकामो यजेतेत्यादिवाक्येभ्यः कर्मादिबोधाभावापत्तिः, विष्णोः स्वयं प्रति स्वस्य कारण-त्वाद्ययोगेन क्रियाकारकभावेन प्रतीत्यनुपपत्तिश्च, एको ह वै नारायण आसीदित्यादिवाक्येभ्यो विव-क्षितार्थालाभप्रसङ्गः[1], व्याहतभाषित्वेन अप्रामाण्यप्रसङ्गः । नीलमुत्पलमित्यादिवत् शिवस्यापि वेदस्य अभेदसंसर्गमात्रप्रत्यायकत्वं च स्यात् । न तु संसर्गान्तरप्रत्यायकत्वमित्यपास्तम् ।

परममुख्यत्वप्रतीतेः लोकसिद्धमुख्यार्थप्रतीतिमुपजीव्यैव आत्मलाभेन स्वोपजीविप्राथमिक-मुख्यार्थप्रतीत्यबाधकत्वादित्युक्तत्वात् । मुख्यत्वमपि विष्णोः लोकप्रमाणसिद्धमुख्यार्थघटितवाक्यार्थ-प्रतीतिं विना न सेद्धुमर्हतीति सर्वमनवद्यम् ॥

तथाच विष्णोः सर्ववैदिकशब्दमुख्यार्थकार्यकोटिनिविष्टत्वाभावात् भावे वा तस्यैच्छिकत्वेन कर्माधीनत्वेन च कृत्स्नजगत्कारणत्वाविरोधित्वात्, विभूत्यन्तर्गतत्वेऽपि विभूतिमदन्यत्वोपपत्तेश्च, स एव विष्णुर्जगत्कारणं, न तु देवतान्तरमिति सिद्धम् ॥

*श्रीमत्परमहंसेत्याद्यनेकगुणगणालङ्कृत-सर्वतन्त्रस्वतन्त्रश्रीमद्वैष्णवसिद्धान्तप्रतिष्ठापनाचार्य-*
*श्रीमन्मध्वाचार्यमुख्यसंस्थानाधीश्वर-जगद्गुरुवेदान्तचक्रवर्ति-सकलविद्यापारङ्गत-*
*मध्वमताम्बुधिचन्द्र-सकलकलासान्द्र-श्रीमद्विजयीन्द्रभिक्षुकृतं*
*तुरीयशिवखण्डनं सम्पूर्णम् ॥*

॥ श्रीकृष्णार्पणमस्तु ॥

★ ★ ★

---

१. प्रत्युताविवक्षितार्थलाभप्रसङ्गः ।

# परिशिष्टम्

## श्रीविजयीन्द्रभिक्षुविरचिते तुरीयशिवखण्डने उल्लिखिता आकरग्रन्थाः

### वेदाः

१. ऋग्वेदः
२. ऋग्ब्राह्मणम्
३. ऋक्परिशिष्टम्
४. यजुस्संहिता
५. तैत्तिरीयब्राह्मणम्
६. तैत्तिरीयारण्यकम्
७. सामसंहिता
८. अथर्वसंहिता

### उपनिषदः

९. नृसिंहोत्तरतापनीयोपनिषत्
१०. अथर्वशिखोपनिषत्
११. ब्रह्मविन्दूपनिषत्
१२. ब्रह्मोपनिषत्
१३. सुबालोपनिषत्
१४. नृसिंहपूर्वतापनीय-
१५. मैत्रायण्युपनिषत्
१६. कैवल्योपनिषत्
१७. अथर्वशिरउपनिषत्
१८. तैत्तिरीयमहानारायणोपनिषत्
१९. तैत्तिरीयोपनिषत्
२०. श्वेताश्वतरोपनिषत्
२१. छान्दोग्योपनिषत्
२२. मुण्डकोपनिषत्
२३. तलवकारोपनिषत्
२४. रामोत्तरतापनीयोपनिषत्
२५. जाबालोपनिषत्
२६. महोपनिषत्
२७. ऐतरेयोपनिषत्
२८. पैङ्गिखिलश्रुतिः
२९. पुरुषसूक्तम्
३०. अम्भ्रणीसूक्तम्
३१. काठकोपनिषत्

# परिशिष्टम्

## श्रीविजयीन्द्रभिक्षुविरचिते तुरीयशिवखण्डने उल्लिखिता आकरग्रन्थाः

### वेदाः

१. ऋग्वेदः
२. ऋग्ब्राह्मणम्
३. ऋक्परिशिष्टम्
४. यजुस्संहिता
५. तैत्तिरीयब्राह्मणम्
६. तैत्तिरीयारण्यकम्
७. सामसंहिता
८. अथर्वसंहिता

### उपनिषदः

९. नृसिंहोत्तरतापनीयोपनिषत्
१०. अथर्वशिखोपनिषत्
११. ब्रह्मविन्दूपनिषत्
१२. ब्रह्मोपनिषत्
१३. सुबालोपनिषत्
१४. नृसिंहपूर्वतापनीय-
१५. मैत्रायण्युपनिषत्
१६. कैवल्योपनिषत्
१७. अथर्वशिरउपनिषत्
१८. तैत्तिरीयमहानारायणोपनिषत्
१९. तैत्तिरीयोपनिषत्
२०. श्वेताश्वतरोपनिषत्
२१. छान्दोग्योपनिषत्
२२. मुण्डकोपनिषत्
२३. तलवकारोपनिषत्
२४. रामोत्तरतापनीयोपनिषत्
२५. जाबालोपनिषत्
२६. महोपनिषत्
२७. ऐतरेयोपनिषत्
२८. पैङ्गिखिलश्रुतिः
२९. पुरुषसूक्तम्
३०. अम्भ्रणीसूक्तम्
३१. काठकोपनिषत्

## पुराणम्, अन्यग्रन्थाश्च

३२. भागवतम्
३३. विष्णुपुराणम्
३४. शिवपुराणम्
३५. लिङ्गपुराणम्
३६. सौरपुराणम्
३७. पाद्मपुराणम्
३८. गरुडपुराणम्
३९. शिवधर्मोत्तरपुराणम्
४०. कूर्मपुराणम्
४१. श्रुतिगीता
४२. पराशरोपपुराणम्
४३. बृहन्नारदीयपुराणम्
४४. ब्रह्माण्डपुराणम्
४५. आदित्यपुराणम्
४६. वराहपुराणम्
४७. ब्रह्मवैवर्तपुराणम्
४८. स्कान्दपुराणम्
४९. वामनपुराणम्
५०. जितन्तेस्तोत्रम्
५१. हरिवंशम्
५२. महाभारतम्
५३. वाल्मीकिरामायणम्
५४. सूतसंहिता
५५. वायुसंहिता
५६. योगयाज्ञवल्क्यम्
५७. श्रीरङ्गमाहात्म्यम्
५८. वासिष्ठरामायणम्
५९. भगवद्गीता
६०. शिवराघवसंवादः
६१. ब्रह्मसूत्राणि
६२. जैमिनीयसूत्राणि
६३. मीमांसावार्तिकम्
६४. अमरकोशः
६५. व्याकरणमहाभाष्यम्
६६. भागवततात्पर्यनिर्णयः
६७. आश्वलायनस्मृतिः
६८. अभ(भ्र)मूर्तिब्राह्मणम्(?)
६९. शाबरभाष्यम्
७०. यास्कनिरुक्तम्
७१. कर्मनिर्णयः
७२. एकाक्षरकोशः
७३. अनुव्याख्यानम्
७४. चमकम्
७५. प्रपञ्चसारः
७६. नमकम्
७७. तत्त्वप्रकाशिका
७८. शतपथब्राह्मणम्
७९. मुण्डकोपनिषद्भाष्यम्
८०. महाभारततात्पर्यनिर्णयः

## (६४) पुटस्थ - सामगानविषयकटिप्पणी

अभि त्वा शूर नोनुमो, नत्वावाम् अन्यो इति ऋचि आद्या बृहती उत्तरा पंक्तिः इति ॥ सामवेदे उत्तरार्चिकस्थे एते ऋचौ । सामवेदरहस्ये प्रथमं साम रथन्तरम् । तत्र प्रथमा ऋक् बृहती । द्वितीया विष्टारपंक्तिः ।

**अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः ।**
**ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषः ॥**

एतस्याः बृहत्याः चतुर्षु पादेषु ८ + ८ + ८ + १२ = आहत्य ३६ अक्षराणि ।

**न त्वा वाँ अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ।**
**अश्वायन्तो मघवन्निन्द्र वाजिनो गव्यन्तस्त्वा हवामहे ॥**

अस्याः विष्टारपङ्क्तेः ऋचः चतुर्षु पादेषु क्रमेण ८ + १२ + ८ + १२ आहत्य च ४० अक्षराणि । मिलितयोरेतयोः ऋचोः प्रगाथ इति नाम । एते ऋचौ यदा सामगानेन श्राव्येते तदा त्रीणि सामानि, तिस्रः ऋचश्च भवन्ति । एवं गातव्यमिति सामवेदे नियमः ।

प्रथमा ऋक् ८ + ८ + ८ + १२ अक्षरोपनिबद्धा उपरिष्टाद् बृहती । द्वितीया ८ + १२ + ८ + १२ अक्षरोपनिबद्धा विष्टारपङ्क्तिः । एते द्वे ऋचौ यदा त्रिषु सामसु विभज्येते तदा प्रथमसाम बृहतीच्छन्दसि द्वितीयतृतीयसामनी ककुप्छन्दसि भवतः । ककुभः ८ + १२ + ८ = २८ अक्षराणि । इयं ककुप् उष्णिक्प्रभेदरूपा ।

अथ मध्ये यत्र द्वादशाक्षरः सा ककुप् – इति छन्दोविचितिसूत्रम् । प्रथमबृहत्याः अन्तिमपादे अष्टाक्षराणि अनन्तरऋचः प्रथमपादात् द्वादशाक्षराणि द्वितीयपादस्य अवशिष्टाष्टाक्षराणि योज्यन्ते चेत् एका ककुप् भवति ।

**ईशानमिन्द्रतस्थुषः ।** (८)
**न त्वा वां अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते ॥** (१२)

इयमेका ककुप् ।

तृतीयसाम्नः ककुप्—

**न जातो न जनिष्यते ।** (८) **अश्वायन्तो मघवन्निन्द्र वाजिनो ।** (१२)
**गव्यन्तस्त्वा हवामहे ॥** (८)

एतेषां सामानि एवम्—

(१) अभि त्वा शूर नो नुमो वा । आ दुग्धा इव धेनव ईशानमस्य जगतः ।
सुवार्द्दशाम् । आ ईशान माऽ२३ इन्द्राऽ३ । सुस्थू२३४षा ।
ओवाऽ६ । हा३वा ॥

(२) ईशो वा नामिन्द्र सुस्थुषो न त्वा वा अन्यो दिवियः ।
न पाऽ२३र्थिवाः । न जातो नाऽ२३जाऽ३ ।
ना इष्याऽ२३४ ता, ओ वाऽ६ । हा३वा ॥

(३) नजोवा ॥ तो न जनिष्यते अश्वायन्तो मघवान्निन्द्रवाऽ२३जिनाः ।
गव्यन्तस्त्वाऽ२३हाऽ३ । नामाऽ२३४हा ष ओवाऽ६ । हा३वा ॥ अस् ।

एवं ऋचो विभज्य गाने एकवाक्यताभङ्गः स्यादिति न शङ्कनीयम् । स्तोत्रीयसामसु एवं स्वरभेदानामेव महत्त्वम् । तत्रत्यपदानां न । ऋक्स्थं तस्थुष इतिपदं सुस्थुषः इति विकृतिं प्राप्तम् ।

अनिरुक्तेषु मन्त्रेषु देवतागमः कर्तुं शक्यते । गीतीनां न कश्चनमविशिष्टः साङ्केतिकोऽर्थोऽस्ति । ततश्च रथन्तरादिगीतिभ्यः कथं देवतायाः बोधः यासु ऋक्षु सामान्युत्पन्नानि तासु विद्यमानैः पदैः विशिष्टोऽर्थोऽवगतः । देवताज्ञानं च तत एव जातम् । सैव देवता निषादादिस्वरसमूहस्य एकस्य भवितुमर्हति । व्यस्तानां सप्तानां स्वराणाम् तत्र तत्र देवतानिर्देशः कृतः । न तु समवेतानाम् । अतो न कश्चन विरोधः । अपाः तवाहिशक्र इयमपि ऋक् एवमेव बोध्या[1] । (अयं विषयः प्राध्यापकैः एम्. राजगोपालाचार्यैः रजतपीठपुरीयैः विलिख्य प्रेषितः, तेभ्यः धन्यवादान् वितरामः ।)

अत्र एकस्याः ऋचः भिन्नभिन्नछन्दसि गानवत् एकस्य पदस्य रूढ्या, योगेन, योगरूढिभ्यां वा लौकिकार्थपरत्वम्, परममुख्यवृत्त्या विद्वद्रूढ्या च भगवत्परत्वं सम्भवतीति मन्तव्यम् ॥

★ ★ ★

---

१. इत्याशयः श्रीविजयीन्द्रगुरुसार्वभौमानां प्रतीयते ॥ एतद्विषये अन्येषु च बहुषु विषयेषु विचारणीयोंऽशः विद्यते । कालान्तरे ते विषयाः गुर्वनुग्रहेण स्फुरेयुः इत्येवाशास्महे । —*सम्पादकः*

॥ श्रीमन्मूलरामो विजयतेतराम् ॥

॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

॥ श्रीगुरुसार्वभौम प्रसीदतु ॥

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

## जगद्गुरुश्रीमद्विजयीन्द्रतीर्थश्रीपादविरचिता

# परतत्त्वप्रकाशिका

क्रोधोदग्रैः सटाग्रैः शिथिलितविगलत्तारकाहारहारी
नक्षत्रस्वच्छमुक्तावलिवलितविधुछत्रसच्छायकायः ।
रक्षोवक्षो विनिर्यत्क्षतजनिघुसृणालेपजातावलेपः
सोऽव्यान्नो व्याजसिंहो मिलितजयरमो वीरशृङ्गारधारी ॥ १ ॥

कल्याणगुणपूर्णाय वल्लभाय श्रियः सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ २ ॥

तं पाणिपल्लवं बाहुशाखं सद्विजसेवितम् ।
विद्याहासलतापुष्पं मध्वकल्पतरुं भजे ॥ ३ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणोच्छिदं[1] सदा ॥ ४ ॥

श्रीमन्मध्वमताब्धीन्दुं दुर्वादिफणिपक्षिपम् ।
ब्रह्मण्याख्यमुनेः शिष्यं व्यासदेशिकमाश्रये ॥ ५ ॥

मूकोऽपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ नत्वा गिरं भजे ॥ ६ ॥

---

१. पाठान्तरम् – 'घ' तालपत्रं - कामबाणच्छिदं सदा ।

[१]विजयीन्द्रयतीन्द्रेण विद्वदानन्ददायिनी ।
तन्यते तत्त्वविद्रीत्या परतत्त्वप्रकाशिका ॥ ७ ॥

★ ★ ★

## पीठिका

इह नित्यनिर्दोषतया सकलशिष्टैः स्वीकृतप्रमाणभावेषु वेदेषु 'सदेव सौम्येदमग्र आसीत्', 'ब्रह्म वा इदमग्र आसीत्', 'आत्मा वा इदमेक एवाग्र आसीत्' इत्यादीनि जगत्कारणप्रतिपादनपराणि वाक्यानि तावच्छ्रूयन्ते । तथा 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म' इति । 'आत्मा वाऽरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः', 'ब्रह्मविदाप्नोति परम्', 'तरति शोकमात्मवित्', 'तमेवं विद्वानमृत इह भवति नान्यः पन्था विद्यतेऽयनाय' इत्यादीनि तज्जिज्ञासाविधायकानि तज्ज्ञानस्य मोक्षोपायत्वप्रतिपादकानि तदितरज्ञानस्य तु तदभावप्रतिपादकानि च श्रूयन्ते ।

तत्र 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुत्या सर्ववेदान्तप्रत्ययन्यायेन[२] च जगत्कारणपरसर्ववाक्यानां एकविषयत्वे आवश्यके तत्रत्यस्य सच्छब्दस्य बृहदबृहत्साधारणतया सामान्यशब्दत्वेन, ब्रह्मशब्दस्यापि जडाजडसाधारणबृहदर्थतया साधारणत्वेन, आत्मशब्दस्यापि जीवात्मपरमात्माद्यर्थतया, सन्देहा[३]नापादिकविशेषानुपस्थापकतया साधारणशब्दत्वेन, तदाहुः ॥ 'नैवेह किञ्चनाग्र आसीत्', 'अमूलमनाधारा इमाः प्रजाः प्रजायन्ते', 'दिव्यो देव एको नारायणः', 'एको ह वै नारायण आसीन्नब्रह्मा नेशानः', 'देवाह वै स्वर्गलोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति सोऽब्रवीदहमेकः प्रथममासं (भूतस्य जातः पतिरेक आसीत्) वर्तामि च भविष्यामि च नान्यः कश्चिन्मतो व्यतिरिक्तः', 'हिरण्यगर्भः समवर्तताग्रे' इत्यादि कारणवाक्यगतानां अनन्यसाधारणचेतनविशेषवाचिनां नारायणादिपदानां सत्त्वात् ॥ सत्सु च तेष्वनेकेषु (नारायणे) साधारणसद्ब्रह्मादिशब्दानां विशेषे पर्यवसानमपेक्षमाणानामपि एकविशेषपर्यवसनार्थं प्रवृत्तेन 'छागपशु'[४] न्यायेन नारायणादिशब्दितानेकचेतनविशेषूपस्थितेषु सत्सु, तत्रैकस्मिन्नेव पर्यवसानस्यासम्भवात् प्रागुदाहृतकारणवाक्यगतसद्ब्रह्मात्मादिशब्दाः किं नारायणमादाय पर्यवस्यन्ति, किं वा रुद्रमादाय आहोस्विद्धिरण्यगर्भमादायेति सन्देहे रुद्रनारायणहिरण्यगर्भेषु नारायणमेवादाय तेषां पर्यवसानस्य सिद्धये विचारोऽयमारभ्यते ॥

---

१. ख.पु.पा. – सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्यभिक्षुणा । २. 'सर्ववेदान्तप्रत्यय' न्यायः – ब्र.सू. ३-३-१.
३. पाठान्तरम् – 'घ' ताला.पु. – सन्देहेन. ४. 'छागपशुन्यायः' मी.न्या. ६-८-९-३०

तत्र तावत् 'यतो वा इमानि भूतानि जायन्ते', 'ॐ जन्माद्यस्य यतः ॐ'[1], इति श्रुतिसूत्राभ्यां व्यवस्थापितं जगज्जन्मादिकारणत्वमेव मुमुक्षुज्ञेयपरतत्त्वशब्दितस्य परब्रह्मणो असाधारणधर्मतया, मूर्धाभिषिक्तस्य श्वेतच्छत्रादिकमिव लक्षणम् ॥ 'नकिरिन्द्रत्व उत्तरो न ज्यायमस्ति वृत्रहन्', 'नकिरेवा यथात्वम्', 'ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्रतस्थुषः', 'नत्वावां अन्यो दिव्यो न पार्थिवो न जातो न जनिष्यते', यद्वा प्रवृद्धसत्त्वे ते विश्वस्मादिन्द्र उत्तरः', 'इन्द्रो यातोवधीतस्य राजा', 'त्वमग्ने इन्द्रो वृषभः सतामसि । त्वमग्ने रुद्रो असुरो महोदिवः । विश्वेदेवा नमस्यन्', 'त्वामग्ने त्वतामसि तच्छिवांसम्', 'अग्निर्मुखं प्रथमो देवानाम्', 'अग्निरग्ने प्रथमो देवतानाम्', 'सर्वा देवताः, सूर्य आत्मा जगतस्तस्थुषश्च', 'राजानौ वा एतौ देवतानां यदग्नीषोमौ', 'चित्रं देवानाम्' 'हꣳसः शुचिषत्', 'य इमा विश्वा भुवनानि जिह्वत्' इत्यादि मन्त्रार्थवादैरुपवर्ण्यमानं वैभवान्तरं तु देवतान्तराणामपि सचिवादीनां करितुरगादिकमिव, साधारणमित्यविवादम् । तत्र यद्यप्युदाहृतेषु मन्त्रार्थवादवाक्येषु अन्येष्वप्यनुदाहृतेषु अनेकेषु तेषु विरुद्धार्थकपदासमभिव्याहृतपर्यायसामान्यविशेषशब्दोपस्थितार्थस्य तेन तेन वाक्येन जगज्जन्मादिकारणत्वादिरूपलक्षणवत्त्वप्रतिपादनस्य अविरुद्धतया, तस्य मुमुक्षुज्ञेयपरतत्वरूपत्वे विवादाभावेन न विचारावसरः । तथाप्यपर्यायभूतनारायणेशानहिरण्यगर्भादिविरुद्धार्थकशब्दसमभिव्याहृतवाक्योपात्ततत्तत्पदार्थानां भेदस्यौत्सर्गिकत्वेन 'एकमेवाद्वितीयम्, न तत्समश्चाप्यधिकश्च दृश्यते, इत्यादिना एकव्यक्तित्वेन समाभ्यधिकरहितत्वेन च, स्वीकृते परतत्त्वे तद्भेदप्रसक्तौ तल्लक्षणस्य अतिव्याप्तिशङ्कायां तत्परिहाराय तल्लक्षणवत्तया श्रुतौ रुद्र एवैकं परतत्त्वम् ? किंवा, तथाविधो नारायण एवैकः ? आहोस्विद्धिरण्यगर्भादिस्तथेति विशये, तथाविधवाक्यानां तथाविधवस्तुन्येकस्मिन् साक्षात्परम्परया वा समन्वयसिद्धयेऽस्त्येव विचारावसरः । ततश्च विचारयितव्यमेव परतत्वम् ॥ तथाच उक्तं भगवता वेदव्यासेन 'अथातो ब्रह्मजिज्ञासा'[2] इति । यद्यपि गोपदार्थं जिज्ञासमानं प्रति सास्नादिमान् गौरिति लक्षणोक्तितो लक्ष्यावधारणवत् मुमुक्षूपास्यपरतत्त्वजिज्ञासुं प्रति 'यतो वा इमानि भूतानि जायन्ते' इत्यादि तल्लक्षणोक्तित एव लक्ष्मभूतपरतत्त्वावधारणं सम्भवतीति, विचारानवसरतादवस्थ्यम् । शब्दतदुपजीविप्रमाणैकसमधिगम्ये तस्मिन् भृङ्गग्राहिकया लक्षणवत्त्वप्रदर्शनासम्भवेन लक्षणोक्तित एव तदवधारणेऽवश्यकर्तव्ये प्रथमत एव तत्सम्भवाल्लक्षणान्तरोक्तिवैयर्थ्यम् । लक्षणान्तरोक्त्यैव तन्निवृत्त्यापत्त्या तन्निवृत्त्यर्थं तत्रापि लक्षणान्तरोक्त्यनुसरणे तत्राप्येवमित्यनवस्था । लक्षणोक्तित्वाविशेषेण ततोऽप्यनिर्णयतादवस्थ्यञ्च । तथापि ब्रह्मरुद्रनारायणादिशब्दार्थानां श्रौततत्तदसाधारणधर्मैः सिद्धे परस्परभेदे, अनन्यसाधारणतत्तदर्थवाचिरुद्रहिरण्यगर्भादिशब्दसमभिव्याहृतवाक्यविशेषेषु जगत्कार-

१. 'ॐ जन्माद्यस्य यतः ॐ' सूत्रम् १-१-२. २. 'ॐ अथातो ब्रह्मजिज्ञासा ॐ' सूत्रम् १-१-१.

णादिरूपपरतत्त्वलक्षणप्रतीतेः । किं तल्लक्षणम्, नीलपीतादिघटेषु पृथुबुध्नोदराकारत्ववत् रुद्रहिरण्यगर्भ-नारायणादिरूपचेतनविशेषेषु साधारणं किंवा तद्घटत्ववत् तेष्वेकस्यैव धर्म इति संशयसम्भवेन अस्यैव एकस्य धर्म इति निर्णयाय, तत्तदर्थासाधारणशब्दवतां वाक्यनां तत्र समन्वयस्यावश्यकतया तस्य विचारं विनाऽसम्भवेन तदर्थमस्त्येव विचारावसरः ॥

यद्यपि च वक्ष्यमाणतया 'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्', 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ती'त्यादिश्रुत्या विष्णोरन्यत्र नामाभावावेदनात् तस्यैव 'यं सर्वाणि नामान्याविशन्ती'ति सकलनाममुख्यार्थत्वावेदनाच्च ॥ कारणवाक्यगत[१]रुद्रहिरण्यगर्भादि-नाम्नामपि नारायणशब्दस्येव नारायण एव मुख्यार्थ इति निर्णयसम्भवान्न तदर्थं विचार आवश्यकः । तथापि 'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्' इति श्रुतिभागस्य 'नामरूपे व्याकरवाणि', 'नामरूपे व्याकरोत्', 'सर्वाणि रूपाणि विचिन्त्य धीरः', 'नामानि कृत्वाभिवदन्यदास्ते' इत्यादिश्रुतिपर्यालोचनया प्राङ्नामरूपप्रपञ्चसृष्टेः लोक्यते आलोक्यत इति व्युत्पत्त्या 'लोकस्तु भुवने जन' इत्यादि कोशप्रसिद्ध्या वा लोकशब्दार्थे नामाभावप्रतिपादनपरतयाऽप्युपपत्तेः । 'नामानि सर्वाणि यमाविशन्ति' इत्यादिश्रुतिभागस्यापि, तद्गतसर्वशब्दस्य 'सर्वेभ्यः कामेभ्यो दर्शपूर्णमासौ' इत्यादि-वाक्यगतसर्वशब्दस्येव प्रकृतसर्वशब्दपरत्वमादाय अर्थवर्णनसम्भवात् । 'शिवो महेश्वरश्चैव रुद्रो विष्णुः पितामहः । संसारवैद्यः सर्वज्ञः परमात्मेत्युदाहृतः । एतन्नामाष्टकं पुण्यं शिवस्याघविनाशनम्' इत्यादि-वाक्यपर्यालोचनया[२] च विष्णुशब्दस्य प्रसिद्धशिवपरत्वेन सत्समभिव्याहृतोदाहृतश्रुतेरपि प्रसिद्धशिव-परतयाऽप्युपपत्त्य(त्त्या)निर्णायकत्वासम्भवाच्च ॥ किमियं श्रुति[३]र्विष्ण्वन्यस्य तत्तन्नाम प्रति मुख्यार्थत्वं निषेधति ? किंवा प्राङ्नामप्रपञ्चसृष्टेर्लोके नामनामिभावाभावप्रतिपादनपरा, किं विष्णोरेव नाममात्रं प्रति मुख्यार्थत्वमाह ? किं वा प्रकृततत्तन्नाम प्रति मुख्यार्थत्वमिति, विशये तदर्थनिर्णयायापि विचारस्य आवश्यकत्वात् अस्त्येव सर्वत्र श्रुत्यर्थनिर्णये विचारावसर इति ॥

ननु तथापि 'नामानि विश्वाभि न सन्ति लोके', 'नामानि सर्वाणि यमाविशन्ती'ति श्रुतिभागद्वयमेव विचार्यं न सर्वकारणपरवाक्यम् । विचारितश्रुतिभागद्वयेनैव कारणपर[४]तद्भागगतरुद्रादिशब्दमुख्यार्थो विष्णुरेव नान्य इति निर्णयसम्भवादिति चेत्, सत्यम् । 'तस्मादेनं सर्वदेवानधीत्य विचार्य च ज्ञातु-रिच्छेन्मुमुक्षुः' इत्यादिश्रुत्या सर्ववेदाध्ययनवत् सर्ववेदविचारस्यापि विधानात् उपायस्योपायान्तरा-

---

१. 'व' ताला.पु. पा. – कारणवाक्यगतत्वावेदनाच्च । २. 'घ' ताला.पु.पा. शिवसहस्रनामपर्यालोचनया ।
२. ताला.पु.पा.– उपन्यस्य । ४. 'घ' ताला.पु.पा. – तच्छ्रुति ।

दूषकत्वेन, उदाहृतश्रुतिभागद्वयवत् तद्वाक्यविचारस्यापि निर्णयार्थमादर्तव्यत्वाच्च । तस्मादस्त्येव सर्वकारणवाक्यविचारावसर इति ॥ *इति पीठिका ॥*

★ ★ ★

इह केचिद्वैदिकंमन्याः[1] मुमुक्षुज्ञेयं परतत्त्वं रुद्ररूपमेवेत्यङ्गीकुर्वते । अन्ये तु हिरण्यगर्भ इत्याचक्षते । श्रीमत्पूर्णप्रमतिदेशिकसार्वभौमदर्शितशास्त्रसरणीं[2] प्रपन्नास्तु नारायण एव परं तत्त्वमित्याहुः ॥

तत्र रुद्र एव परं तत्त्वमित्यङ्गीकुर्वतामयमाशयः । 'सदेव सौम्येदमग्र आसीत्', 'ब्रह्म वा इदमग्र आसीत्', 'यतो वा इमानि भूतानि जायन्ते', 'आत्मा वा इदमेक एव अग्र आसीत्' इति छान्दोग्य-वाजसनेयतैत्तिरीयादिस्थकारणवाक्येषु सद्ब्रह्मादिशब्दैरुपस्थापितं जगत्कारणं 'सोऽकामयत बहु स्यां प्रजायेयेति', 'तदैक्षत बहु स्यां प्रजायेय' इत्यादिवाक्यपर्यालोचनया चेतनत्वेनावगतं परं तत्त्वं रुद्ररूपमेव । श्वेताश्वतरोपनिषदि जगत्कारणं ब्रह्म किं देवतारूपमित्यर्थकेन किं कारणं ब्रह्म कुतस्माजात इत्यादिवाक्येन [3]ब्रह्मवादिनामुदाहृतवाक्यपर्यालोचनया सदादिशब्दितं किञ्चिज्जगज्जन्मादिकारण-सर्वाधिष्ठातृभूतमस्तीत्येतावत्सामान्यतो निश्चितवतां तत्किंदेवतारूपमिति संशयं प्रदर्श्य तन्निरासाय तत्रैवोत्तरत्र 'संयुक्तमेतत्क्षरमक्षरञ्च व्यक्ताव्यक्तं भरते विश्वमीशः' इति शिवासाधारणेशानाभिधानश्रुत्या तमुपक्रम्य मध्ये 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः', 'तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी' इति मन्त्रेण शिवाद्यपरनामकं रुद्ररूपमेव तदिति विशिष्याभिधानात् । तथाच सदादिसाधारणशब्दानां विशेषे पर्यवसानमाकाङ्क्षमाणानां रुद्र एव पर्यवसानं सिद्ध्यतीति ॥

ननु महोपनिषदि 'एको ह वै नारायण आसीत्' इत्येतद्वाक्योपस्थापितं नारायणरूपमेव तदस्तु । शिवरूपमेव तदित्यत्र विशेषहेत्वभावादिति चेन्न ॥ ह वै शब्देनोपबन्धेनास्य वाक्यस्यानुवादतया स्वयं विशेषोपस्थापनासमर्थत्वात् । किञ्च 'ततःपरं ब्रह्मपरं बृहन्तं यथा निकामं सर्वभूतेषु गूढम्[4] । विश्वस्यैकं परिवेष्टितारमीशं तं ज्ञात्वाऽमृता भवन्ति', 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्', 'तमेवं विदित्वा[5]तिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्वेताश्वतरवाक्यैरितरज्ञानस्य मोक्षोपायत्वं प्रतिषिध्य, शिवज्ञानस्यैव तत्त्वावेदनान्मोक्षोपायज्ञानगोचरस्यैव परतत्त्वरूपतया, शिवस्यैव तत्त्वं सिद्ध्यति । एवञ्च 'हृत्पुण्डरीके विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम्' इत्यारभ्य 'उमासहायं

---

१. 'घ' ताला.पु.पा. – रुद्र एवेत्यङ्गीकुर्वन्ति ।
२. 'घ' ताला.पु.पा. – सरणिं ।
३. 'घ' ताला.पु.पा. – ब्रह्मवादिभिः ।
४. 'ख' 'घ' 'च' पु.पा. – रूढम् ।
५. 'क' 'घ' ताला.पु.पा. – अमृतत्वमेति ।

परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्[१]। ध्यात्वा मुनिर्गच्छति' इति विचिन्त्यस्य वस्तुनोऽनन्य-साधारणोमासहायादिशब्दैर्मध्ये शिवत्वं निरूप्य 'ज्ञात्वा तं मृत्युमत्येति', 'नान्यः पन्था विमुक्तये' इति उक्तार्थसंवादिकैवल्योपनिषद्वाक्यजातमप्यनुकूलितं भवति ॥

न च एवं[२] नारायणैकनिष्ठेन पुरुषसूक्तेन 'तमेवं विद्वानमृत इह भवति । नान्यः पन्था अयनाय विद्यते' इति नारायणेतरज्ञानस्य मुक्त्युपायत्वं प्रतिषिध्य तज्ज्ञानस्य (तद्ध्यानस्य ?) तदुपायत्वाभि-धानात् शिव एव परं तत्त्वं मुमुक्षुज्ञेयमिति निर्णयो न युज्यत इति वाच्यम् । तस्य नारायणैकनिष्ठत्वे मानाभावात् । 'उतामृतत्वस्येशान' इत्यनन्यसाधारणेशानाभिधानश्रुत्या, पुरुषसूक्तस्य शिवपरताया एव न्याय्यत्वाच्च । 'ह्रीश्च ते लक्ष्मीश्च पत्न्यौ' इति तत्रोत्तरत्रश्रुतलक्ष्मीपतित्वलिङ्गस्य श्रुतितो दुर्बलत्वेन नारायणपरत्वासाधकत्वात् ।

ननु नारायणोपनिषदन्तरे 'पुरुषो ह वै नारायणोऽकामयत, प्रजाः सृजेयेति, नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते' इति वाक्येन नारायणात्सर्वभूतनिदानहिरण्यगर्भोत्पत्त्यनन्तरं रुद्रोत्पत्त्यवगमात् तस्य कार्यकोटिनिविष्टत्वेनावगततया तदसम्भवात् । जगत्कारणं ब्रह्मरुद्ररूपमेवेत्यवधारणानुपपत्तिरिति चेन्न । अथर्वशिरसि 'देवा ह वै स्वर्गं लोकमगमन्, ते देवा रुद्रमपृच्छन् को भवानिति । सोऽब्रवीत् । अहमेवः प्रथममासं वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यादिना रुद्रस्य सर्गा-द्यसमयवर्तित्वावगमेन तदितरस्यातथात्वावगमेन च नारायणोपनिषत्प्रतिपन्ननारायणकार्यभूतरुद्रस्य च सर्वकारणत्वेन सर्वात्मकत्वेन चावधारिताद्रुद्रादन्यत्वेन तथाऽवधारणे बाधकाभावात् । अत एव श्वेताश्वतरीये 'यदा तम' इति मन्त्रे सर्गाद्यसमये 'शिव एव केवल' इति शिवेतरसत्त्वं प्रतिषिध्य शिव-सत्त्वावेदनमुपपद्यते । अन्यथा केवलेव ? केवलशब्दवैयर्थ्यापत्तेः । किञ्च परशिवस्य नारायणकार्यत्वे अथर्वशिखायाम् 'अथ हैनं पैप्पिलादौङ्गिरासनत्कुमारश्चाथर्वाणमुवाच भगवन् किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तद्ध्यानम् ? को वा ध्याता ? कश्च ध्येयः ? स एताभ्यामाथर्वणः प्रत्युवाच[४] ॐ इत्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायितव्यम्' इत्यादिना प्रश्नप्रतिवचनेन प्रदर्श्य 'ध्याता रुद्रः प्राणं मनसि सहकरणैर्नाशान्ते सम्प्रतिष्ठाप्य ध्यायीतेशानं प्रध्यापितव्यम्' इति ध्येयत्वेनेशानं निरूप्य 'सर्वमिदं ब्रह्माविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इति ब्रह्मविष्णुरुद्रेन्द्रादीनां 'सर्वाणि चेन्द्रियाणि च सहभूतैः' इति इन्द्रियादितुल्यतया रुद्रादुत्पत्त्यनुपपत्तिः । तदन्यत्वे तु ब्रह्मविष्णुरुद्राणां गुणभूतमूर्तित्रयान्तर्गतानां

---

१. 'घ' ताला.पु.पा. – महान्तम् ।
२. 'घ' ताला.पु.पा. – पुरुषसूक्तस्य नारायणैकनिष्ठत्वेन ।
३. 'क' 'च' पु.पा. – चतुर्मुख
४. 'घ' ताला.पु.पा. – स एभ्योऽथर्वाः प्रत्युवाच ।

तदुत्पत्त्युक्तिः सङ्गच्छते । अत एव 'नारायणाद्ब्रह्मा जायत' इति श्रुत्या परशिवादुत्पन्नस्यैव नारायणस्य सिद्धान्ते वक्ष्यमाणशिवपुराणवचनोपबृंहणानुरोधेन स्वतुल्यतया तदुत्पन्नमूर्तित्रयान्तर्गतावान्तरकारणभूतं चतुर्मुखं प्रति क्वचित्क्वचित्कल्पविशेषे कारणत्वप्रतिपादनात् ॥ न तद्बलेन 'कारणं तु ध्येय' इति श्रुतिप्रतिपन्नशम्भुशब्दितपरशिववत् तस्य कृत्स्नजगत्कारणत्वशङ्कावकाशः । अपि च नारायणस्य परशिवजनकत्वे कथमत्र विष्णुशब्दितस्यैव तस्य रुद्रादुत्पत्त्युक्तिः । न ह्येकस्मिन्नेव सर्गाद्यसमये विष्णुरुद्रयोरन्योन्योत्पाद्योत्पादकभाव उपपद्यते । अत एव 'कारणं तु ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्य' इत्युपसंहारे कार्यभूतरुद्रव्यावर्तनाय कारणभूतेशानशब्दितरुद्र एव परशिवासाधारणेन शम्भुशब्देनोपात्तः । अत एव च 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह-भूतैरि'ति देवेषु प्रमुखत्वज्ञापनाय 'ब्रह्मविष्णुरुद्रेन्द्रा' इति विशिष्य तत्तन्नामग्रहणपूर्वकं तेषां भूतेन्द्रियतौल्येन परमेश्वरात् प्रसूतिमत्त्वेनोपन्यासेन ध्येयत्वाभावं विभाव्य 'कारणं तु ध्येय' इति वाक्येन सर्वदेवेभ्यो जीवेभ्यः शिवस्य सर्वैश्वर्यसम्पन्नत्वसर्वेश्वरत्वरूपातिशयप्रतिपादनमुपपद्यते ॥ किञ्च रुद्रस्य सर्वजगत्कारणत्वपरतत्त्वरूपत्वाभावे तैत्तिरीये– 'यो देवानां प्रथमं पुरस्तात्', 'विश्वाधिको रुद्रो महर्षिः', 'हिरण्यगर्भं पश्यत जायमानम्' इति सकलजगन्निदानहिरण्यगर्भस्य तस्मादुत्पत्तिप्रतिपादनानुपपत्तिः । न च यदुपबन्धेनायं मन्त्रः 'नारायणाद्ब्रह्मा जायत' इति नारायणोपनिषद्वाक्यं प्रत्यर्थानुवादी । ततो हिरण्यगर्भस्य रुद्रादुत्पत्तेः सर्वथा प्राप्त्यभावात् । न हि रुद्रनारायणशब्दौ पर्यायौ । प्राप्त्यभावे च यदुपबन्धसहस्रेणाप्यनुवादत्वं न शक्यमभ्युपगन्तुम् । अत एव 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवती'त्यादीनामप्राप्तार्थत्वेन सत्यपि यदुपबन्धे 'वचनादिष्टिपूर्वत्वमि'त्यादिना[1] विधित्वमेव पूर्वतन्त्रे व्यवस्थापितम् । न च 'विश्वाधिको रुद्र' इति रुद्रशब्दस्य नारायणे लक्षणायां 'यो देवानामि'ति मन्त्रस्य 'नारायणाद्ब्रह्मा जायत' इति वाक्यप्राप्तार्थानुवादित्वं सम्भवतीति युक्तम् । यदाग्नेयादिवाक्यानामपि आग्नेयादिपदेषु यत्किञ्चिदर्थलक्षणकत्वस्य सुलभ्य(भ)त्वेनानुवादकत्वापत्तेः । किञ्च रुद्रशब्दस्य नारायणलक्षणकत्वे सिद्धे प्रापकसत्त्वेन 'यो देवानामि'ति मन्त्रस्यानुवादकत्वसिद्धिः । सिद्धे चानुवादकत्वे पुरोवादानुसारेण तन्मन्त्रस्य रुद्रपदस्य नारायणलक्षकत्वसिद्धिरित्यन्योन्याश्रयापत्तिः ।

ननु रुद्रनारायणयोरुभयोरपि एककाले जगन्निदानहिरण्यगर्भजनकत्वासम्भवात्पुरोवादानुवादत्वाभिमतवाक्यस्थरुद्रनारायणपदयोः अन्यतरस्य रुद्रनारायणान्यतरलक्षकत्वे आवश्यके, यदुपबन्धानुरोधेन तत्र रुद्रपदस्य नारायणे लक्षणाऽङ्गीकार्येति चेन्न । रुद्रनारायणयोर्द्वयोरप्यण्डपद्मयोरिव कल्पभेदेन

१. 'वचनादिष्टिपूर्वत्वम्' मी.सू. १५-४-५.

जगज्जनकत्वसम्भवात् । यत्त्वस्य मन्त्रस्य शिवपरत्वमुपेत्यापि केषाञ्चिद्व्याख्यानं महर्षिः महाद्रष्टा योगबलेन कालत्रयवृत्तान्तसाक्षात्करणसमर्थो रुद्रः स्वजन्मनः प्रागेव नारायणाद्वस्तुतो जातं हिरण्यगर्भं जायमानावस्थाविशिष्टमेव योगबलादपश्यदिति ॥ तन्न । श्वेताश्वतराम्नाते 'यो देवानां प्रभवश्चोद्भवश्च विश्वाधिको रुद्रो महर्षिः, हिरण्यगर्भं जनयामास पूर्वमि'ति मन्त्रेण रुद्रस्यैव हिरण्यगर्भजनकत्वावेदनात् । तत्रापि 'अपरिमितादिकरण'न्यायेन[1] 'महर्षिः रुद्रः स्वात्मनः सकाशाज्जायमानं हिरण्यगर्भमपश्यदि'ति व्याख्याने बाधकाभावाच्च । अत एव पूर्वतन्त्रे 'अधिकं वा स्याद्बह्वर्थत्वादितरेषां सन्निधानात्' ।[2] एका देया, षड् देया, द्वादश देया, चतुर्विंशतिर्देया, शतं देयं, सहस्रं अपरिमितं देयमि'ति दक्षिणाकल्पभेदश्रुतावपरिमितशब्दस्य[3] प्रतियोगिसंव्यपेक्षबहुत्वसामान्यवाचिनः सन्निहितसहस्रशब्दानुरोधेन सहस्राधिकबहुत्वे पर्यवसानं दर्शितम् । सम्भवति प्रकृतेऽपि हिरण्यगर्भशब्दस्य जन्यपरस्य जनकरूपप्रतिसव्यपेक्षस्य सन्निहितेशानशब्दानुरोधेन तदर्थभूतरुद्रजन्ये पर्यवसानमिति ।

ननु 'अम्भस्यपार' इति तैत्तिरीयोपनिषदि 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशम्भुवम् । विश्वं नारायणं देवमक्षरं परमं पदमि'त्युत्तरवाक्ये अनन्यसाधारणनारायणशब्दाभ्यासात् न तस्याः शिवचरत्वमिति चेन्न । तत्रैव 'अणोरणीयानि'ति पूर्ववाक्ये उपक्रमाधिकरणन्यायेना[4]नुपसञ्जातविरोधिन्या 'तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम्' इत्यनन्यसाधारणेशानाद्यभिधानश्रुत्या शिवस्यैवोपक्रमात् ॥ 'विश्वाधिको रुद्रो महर्षिः', 'यो वेदादौ स्वरः प्रोक्तः' इत्यत्र मध्ये 'यः परः स महेश्वरः'' इति महेश्वरशब्देन तस्यैव परामर्शाच्च तस्याः रुद्रपरत्वावसायात् । ततश्च जगत्कारणत्वेन सर्वाधिष्ठातृत्वेन मोक्षप्रदातृत्वेन च सर्ववेदान्तवेद्यो भगवान् शिव एव सद्ब्रह्मादिशब्दितमुमुक्षुज्ञेयं परं तत्त्वमिति पूर्वपक्षसङ्क्षेपः ॥

अत्र ब्रूमः—— नारायणरूपमेव मुमुक्षुज्ञेयं परं तत्त्वम् । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानो नेमे द्यावापृथिवी न नक्षत्राणि नापो नाग्नीषोमौ न सूर्यः स एकाकी न रमते तस्य ध्यानान्तस्थस्यैका कन्या दशेन्द्रियाणि' इत्यादिना 'अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् ता इमा आपस्तद्धिरण्मयमण्डमभवत् तत्र ब्रह्मा चतुर्मुखोऽजायत । अथ पुनरेव नारायणः सोऽन्यं कामं मनसा ध्यायीत तस्य ध्यानान्तःस्थस्य ललाटात्स्वेदोऽपतत् स्वेदाद्बुद्बुदमभवद्बुद्बुदात्त्र्यक्षः शूलपाणिः पुरुषोऽजायत' इत्यन्तेन महोपनिषद्वचनजातेन । अथ पुरुषो ह वै

१. अपरिमिताधिकरणन्यायः ६-७-११.

२. अधिकं वा स्याद्बह्वर्थत्वादितरेषां सन्निधानात् । मी.सू. ६-७-११-२४

३. ग.पु.पा. अपरिमितदानप्रतियोगिसापेक्ष ।   ४. उपक्रमाधिकरणन्यायः ३-३-१-१ ।

नारायणोऽकामयत । प्रजाः सृजेयेति । अथापः ससर्ज, नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रो जायते । नारायणात् प्रजापतिः प्रजायते । नारायणादिन्द्रो जायते । नारायणाद् द्वादशादित्या रुद्रा वसवः सर्वे देवाः समुत्पद्यन्ते । सर्वे लोकाः सर्वाणि च भूतानि नारायणादेव समुत्पद्यन्ते । नारायणे प्रलीयन्त' इति नारायणोपनिषद्वचनजातेन च सर्गाद्यसमये ब्रह्मेशानादिसत्त्वाभावविशिष्टतया तस्यैव सत्त्वावेदनेन जगत्कारणभूतदेवप्रमुखचतुर्मुखेशानादिकारणत्वावेदनेन च ब्रह्मेशानादिसहितकृत्स्नजगत्कारणत्वस्यावधारणात् ।

कृत्स्नजगत्कारणत्वस्यैव मुमुक्षुज्ञेयपरतत्त्वलक्षणत्वाभ्युपगमात् । न च तत्समये सत्त्वरहितयोः ब्रह्मेशानयोः तत्समयसत्त्वविशिष्टनारायणतुल्यतया कृत्स्नजगत्कारणत्वमुपपद्यते । न हि ब्रह्मेशानतुल्यतया सर्गाद्यसमये विशेषतो नारायणसत्त्वनिषेधिकां श्रुतिं पश्यामः । येन विशेषहेत्वभावाद् ब्रह्मेशाननारायणान्तत्रयाणामपि कल्पभेदेन जगत्कारणत्वमिति व्यवस्था आश्रीयेत । 'नान्यः कश्चिन्मत्तो व्यतिरिक्तः', 'एको रुद्रो न द्वितीयोऽवतस्थे', 'शिव एव केवल' इति चाथर्वशिरश्वेताश्वतरस्थसामान्यनिषेधस्तु 'नासदासीन्नोसदासीदि'त्यादिवद्विशिष्य निषिद्धवस्तुविषयतयाऽप्युपपन्नः । विशिष्य विहितेतरपरो वा । अन्यथा 'आनीदवातं तम आसीदि'ति वाक्यशेषप्रतिपन्नब्रह्मतमसोरपि 'नासदासीदि'त्यादि सामान्यनिषेधविषयत्वापत्तेः । न चाथर्वशिरसि 'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छत् को भवानिति, सोऽब्रवीदहमेकः प्रथममासं वर्तामि च भविष्यामि च' इति वाक्येन रुद्रशब्दितेशानस्यापि नारायणवत् सर्गाद्यसमये नारायण एव सत्त्वविधिदर्शनाद्विशिष्य विहितस्य च ईशानस्येशाने'त्युदाहृतश्रुतिवाक्येन विशिष्य निषेधे षोडशग्रहणाग्रहणवद्विकल्पे प्राप्ते ईशानसत्त्वासत्त्वयोः कल्पभेदेनोपपादनीयतया यस्मिन्कल्पे तस्य नारायणतुल्यतया सत्त्वं तत्कल्पीयसृष्टौ विनिगमनाविरहेण नारायणस्येवेशानस्यापि कारणत्वे वाच्ये जगत्कारणत्वरूपपरतत्त्वलक्षणस्य तत्र कथं नातिव्याप्तिरिति वाच्यम् । वक्ष्माणरीत्या अथर्वशिरोवाक्यगतरुद्रशब्दस्य तदन्तर्यामिपरत्वेन वा लक्षणया वा ब्रह्मेशानादिसहितकृत्स्नजगत्कारणत्वेनोदाहृतश्रुतिप्रतिपन्ननारायणपरत्वेनैवोपपत्तौ अष्टदोषदुष्टविकल्पस्यानाश्रयितव्यत्वात् । रुद्रस्य 'नेशान' इति विशिष्य सर्गाद्यकाले सत्त्वं निषिध्य नारायणसत्त्वविधानादन्यथानुपपत्तेरेव लक्षणाबीजत्वात् । उदाहृताथर्वशिरोवाक्यस्यात्मीयोत्कर्षप्रतिपादकरुद्रवाक्यतया अर्थनिर्णयाय तदन्येषां श्रुतिवद(ह)भियुक्तवचनानामेव तत्वेन[1] विकल्पाप्राप्तेश्च ।

न च अतुल्यबलयोर्विकल्पाश्रयणं युक्तम् । अस्तु वा कथञ्चिद्विकल्पप्राप्तिः । तथापि यत्सर्गाद्यसमये ईशानस्यासत्त्वं तत्कल्पीयसृष्टौ तस्य नारायणतुल्यतया ब्रह्मेशानादिसहितकृत्स्नजगत्कारण-

१. क.पु.पा. – प्रबलत्वेन ।

त्वासम्भवेन तज्जन्यत्वेन च सर्वसृष्टिकारणत्वरूपपरतत्त्वभूतनारायणलक्षणस्य कथमपि तत्र नातिव्याप्तिः । रुद्रस्य नारायणादुत्पत्त्यनन्तरभाविसृष्टौ कारणत्वप्रतिपादनपरत्वं च विरुद्धमेव । एतेन नारायणजन्यत्वेनोदाहृतश्रुतिप्रतिपन्नो रुद्रः गुणभूतमूर्तित्रयान्तर्गतोऽन्य एवेशानशब्दितपरशिवादिति निरस्तम् । नेशान इत्यनन्यसाधारणेशानशब्दितस्यैव सर्गाद्यसमये श्रुत्या निषिद्धत्वेन तस्यैव श्रुतिप्रतिपन्ननारायणकार्यतया स्वीकार्यत्वात् ।

किञ्च अथवा 'इदं तर्हि प्रजापतौ हर आसीद्यस्मिन्नादित्य' इत्यादि श्रुत्या शिवासाधारणहराभिधानश्रुतिसिद्धस्य नारायणजातप्रजापतिजन्यत्वावेदनादपि न तस्य कृत्स्नजगत्कारणत्वमुपपद्यते । एतेनैवोदाहृतमहोपनिषन्नारायणोपनिषद्वचनजातस्य ह वै शब्दोपबन्धेनानुवादकत्वेन विधिनिषेधयोः न तात्पर्यमिति निरस्तम् ।

यदुपबन्धसहितयदाग्नेयादिवाक्यवदप्राप्तार्थत्वेन ह वै शब्दोपबन्धसहितस्यापि उदाहृतोपनिषद्वाक्यस्याननुवादत्वात् । अस्तु वा अनुवादत्वमस्य, तथाऽपि न दोषः । अनुवादो हि विधानाय निषेधाय वा वाच्यः । तत्र विभिन्नार्थदिवान्तरप्रतिपादककारणवाक्यस्य पुरोवादत्वासम्भवेन तदाहुः— अमूलमनाधारा इमाः प्रजाः प्रजायन्ते', 'दिव्यो देव एको नारायणः' इत्यादि सुबालोपनिषद्वचनेनान्येन वा तुल्यविषयेण जगत्कारणत्वेन प्राप्तं नारायणमनूद्य उदाहृतमहोपनिषन्नारायणोपनिषद्वचनजातेन तदप्राप्तस्यैव ईशानाद्यभावस्य नारायणे तज्जनकत्वस्य तल्लक्षणस्य च तत्र विधानात् ।

न च असाधारणसद्ब्रह्मादिशब्दार्थानां जगत्कारणत्वं विधातुं प्रवृत्तेभ्यः ''स देव सोम्येदमग्र आसीत्', 'ब्रह्म वा इदमग्र आसीत्', 'यतो वा इमानि भूतानि जायन्ते', '..... तद्ब्रह्म', 'आत्मा वा इदमेक एवाग्र आसीदि'त्यादि कारणवाक्येभ्यो वा अनन्यसाधारणनारायणशब्दार्थस्य जगत्कारणत्वं, सर्वात्मकत्वं, सर्वान्तर्यामित्वं च विधातुं प्रवृत्ताद्वा ॥

तदाहुः— 'किं तदासीन्नैवेह किञ्च नाग्र आसीत्', 'अमूलमनाधारा इमाः प्रजाः प्रजायन्ते', 'दिव्यो देव एको नारायणः, चक्षुश्च द्रष्टव्यं च नारायणः, श्रोत्रं च श्रोतव्यं च नारायणः, घ्राणं च घ्रातव्यं च नारायणः, जिह्वा च रसयितव्यं च नारायणः, त्वक्च स्पर्शयितव्यं च नारायणः, मनश्च मन्तव्यं च नारायणः, बुद्धिश्च बोद्धव्यं च नारायणः, अहङ्कारश्च अहङ्कर्तव्यं च नारायणः, चित्तं च चेतयितव्यं च नारायणः, वाक्च वक्तव्यं च नारायणः, हस्तौ च धर्तव्यं च नारायणः, पदौ च गन्तव्यं च नारायणः, पायश्च विसर्जयितव्यं च नारायणः, उपस्थश्चानन्दयितव्यं च नारायणः, धाता विधाता, कर्ता विकर्ता, दिव्यो देव एको नारायणः, आदित्या रुद्रा मरुतो वसवोऽश्विना ऋचो यजूंषि सामानि मन्त्रोऽग्नि-

राज्याहुतिः नारायणः, उद्भवः सम्भवो दिव्यो देव एको नारायणः, माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणो विरजा सुदर्शनाजिता सौम्या मोघा उभामृता सत्या मध्यमा नाडीशिशुः आसुरा सूर्या भास्वती विष्णोर्नाडी नामानि(ति)? दिव्यानि गर्जति ? गायति वा(प)यति वर्तति वरुणोऽर्यमाश्चन्द्रमा कलिर्धाता ब्रह्मा प्रजापतिर्मघवा दिवसश्चार्धदिवसश्च कलाकल्पाश्चाधश्चोर्ध्वश्च दिशश्च सर्वे नारायणः', 'पुरुष एवेदꣳसर्वं, यद्भूतं यच्च भव्यम्', 'तद्विष्णोः परमं पदं, सदा पश्यन्ति सूरयः, दिवीव चक्षुराततम्, तं निर्वाणमनुशासनमिति वेदानुशासनम्', 'अन्तःशरीरे निहितो गुहायाम्, अज एको यस्य पृथिवी शरीरम्, यः पृथिवीमन्तरे सञ्चरन् यं पृथिवी न वेद, यस्यापः शरीरम्, योऽपोन्तरे सञ्चरन् यमापो न विदुः, यस्य तेजःशरीरम्, यस्तेजसोऽन्तरे सञ्चरन्, यं तेजो न वेद, यस्य वायुः शरीरम्, यो वायुमन्तरे सञ्चरन्, यं वायुर्न वेद, यस्याकाशः शरीरम्, य आकाशमन्तरे सञ्चरन्, यमाकाशो न वेद, यस्य मनः शरीरम्, यो मनोऽन्तरे सञ्चरन्, यं मनो न वेद, यस्याहङ्कारः शरीरं योऽहङ्कारमन्तरे सञ्चरन्, यमहङ्कारो न वेद, यस्य बुद्धिः शरीरम्, यो बुद्धिमन्तरे सञ्चरन्, यं बुद्धिर्न वेद, यस्य चित्तं शरीरम्, यश्चित्तमन्तरे सञ्चरन्, यं चित्तं न वेद, यस्याव्यक्तं शरीरम्, योऽव्यक्तमन्तरे सञ्चरन्, यमव्यक्तं न वेद, यस्याक्षरं शरीरम्, योऽक्षरमन्तरे सञ्चरन्, यमक्षरं न वेद, यस्य मृत्युः शरीरम्, यो मृत्युमन्तरे सञ्चरन्, यं मृत्युर्न वेद, एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादि सुबालोपनिषद्वचनजाताद्वा, अन्यतो वा तुल्यविषयात् सर्गाद्यसमये नारायणस्य ब्रह्मेशानाभाववत्त्वं वा तज्जनकत्वं वा तल्लयाधारत्वं वा प्राप्तमुपलभामहे । तथाच अन्यतो प्राप्तस्य विधानाय निषेधाय वा उदाहृतवाक्यद्वयं प्रवृत्तमिति तस्यानुवादत्वेऽपि किमनुपपन्नम् ।

एतेन 'एको ह वै नारायण आसीन्न ब्रह्मे'त्युदाहृतवाक्ये नारायणस्य प्रपञ्चस्रष्टृत्ववचनं यत् तत् क्वचित्कल्पविशेषे कल्पादौ वा प्रथमं शिवादुत्पन्नस्य तदितरप्रपञ्चसृष्टत्वपरतया योजयितुं शक्यमिति न कथञ्चिदपि शिवस्य परमकारणत्वाङ्गीकारविरोधि । तथाहि— 'एको ह वै नारायण आसीदि'त्यस्य 'प्रादुरासीदि'त्याद्युपबृंहणानुसारेण सर्गाद्यसमये ब्रह्मरुद्राद्युत्पत्तेः पूर्वं 'एको सहायो नारायणः शिवादासीदुत्पन्न' इत्यर्थप्रतीतेरिति वैदिकंमन्यानां व्याख्यानं निरस्तम् । तत्र महोपनिषद्वाक्ये सर्गाद्यसमये चतुर्मुखस्येवासाधारणेशाननाम्नो'[1] जीवस्याप्यसत्त्वप्रतीत्या तदा सत्त्वेन प्रतिपन्ननारायणं प्रत्युत्पादकत्वासम्भवेनोक्तयोजनानुपपत्तेः । 'शिवादि'त्यध्याहारे मानाभावाच्च । न च एतदतिरिक्त एव शिवः नारायणजनकत्वेनाभिमतः । 'सदास्ती'त्यत्र विशेषप्रमाणमस्ति । येनोक्तयोजना सालम्बा[2] स्यात् । तस्माद्ब्रह्मेशानयोर्नारायण इव कृत्स्नजगत्कारणत्वानुपपत्तेः । तत्कारणमनन्यसाधारणनारायणशब्दितमेव

१. ग.पु.पा. – शिरस्य । २. घ. ताला.पु.प. – स्वालम्बा ।

नान्यदिति स्थिते सद्ब्रह्मादिशब्दानां कारणवाक्यगतानां ब्रह्मेशानादिषु साधारणतया प्रवृत्तानां यत् 'अग्नीषोमीयं पशुमालभेते'ति विधिवाक्यगतपशुशब्दस्य गवाश्वादिषु साधारणतया प्रवृत्तस्य छागस्य 'वपाया मेधस' इति मन्त्रवर्णप्रतिपन्ने छाग इव 'एको ह वै नारायण आसीत्' इत्याद्युपनिषत्प्रतिपन्न-नारायण एव, 'छागो वा मन्त्रवर्णात्'[1] इति षष्ठान्त्याधिकरणन्यायेन पर्यवसानमित्यनुकूलमिति ।

नन्वहमेकः प्रथममासमि'त्यथर्वशिरसि देवान् प्रति शिवस्य प्रतिवचनेन 'यदा समस्तं न दिवा न रात्रिर्न सन्न चासच्छिव एव केवल' इति श्वेताश्वतरमन्त्रेण शिवस्य सर्गाद्यसमये तमोमात्रावशिष्टे सर्व-कारणभावेनावस्थानमुपदिश्यते । 'यो देवानां प्रथमं पुरस्तात्', 'विश्वाधिको रुद्रो महर्षिः', 'हिरण्यगर्भं पश्यत जायमानं स नो देवः शुभया स्मृत्या संयुनक्ति'[2] इति तैत्तिरीयमन्त्रेण जगत्कारणभूतसर्वदेव-प्रमुखहिरण्यगर्भजनकत्वप्रतिपादनेन रुद्रशब्दितस्य शिवस्यापि सर्वकारणत्वं प्रतीयते । अथर्वशिखायां च 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सर्वे सम्प्रसूयन्त' इति ब्रह्मविष्ण्वादीनां कार्यमुक्त्वा 'कारणं तु ध्येयः सर्वैश्वर्य-सम्पन्नः सर्वेश्वरश्च शम्भुराकाशमध्य' इति वाक्येन शिवस्य ब्रह्मविष्ण्वादिदेवप्रमुखान् प्रति कारणभावा-वेदनेन कृत्स्नजगत्कारणत्वं साक्षादेव प्रतिपाद्यते । तत्कथमिह 'छागपशु'न्यायेन नारायण एव उदाहृत-कारणवाक्यानां पर्यवसानमनुकूलमिति चेदुच्यते । इदं हि अथर्वशिरसि श्रूयते— 'देवा ह वै स्वर्गं लोकमगमम्, ते देवा रुद्रमपृच्छन्, को भवानिति, सोऽब्रवीदहमेकः प्रथममासम्, वर्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो व्यतिरिक्त इति, सोऽन्तरादन्तरं [3]प्राविशत्, दिशश्चान्तरं प्राविशत्, सोऽहं नित्यो-ऽनित्यो ब्रह्माब्रह्माहं प्राञ्चः प्रत्यञ्चोऽहम्' इत्यादि । अस्य च रुद्रवचनस्योदाहृतसुबालोपनिषन्महोप-निषन्नारायणोपनिषद्वचनजातप्रतिपन्नार्थाविरोधेनैवार्थवर्णनसम्भवेन छागपशुन्यायावतारविरोधः स्फुटः । तथाहि— अस्मिन् ग्रामे अहमेकः प्रथममासम्, इदानीं वर्ते, उत्तरत्रापि भविष्यामीति लौकिकासवाक्य-वत् सर्गाद्यसमये अविद्यमानः नारायणाद्ब्रह्मोत्पत्त्यनन्तरं उत्पन्नोऽहं, मृदुत्पत्त्यनन्तरभाविकार्यजातात् प्रथमं एकः तत्सर्जनाद्यर्थमसहायः अन्यनिरपेक्षः समर्थ आसमिति अर्थपरतया तद्योजयितुं शक्यत इति।

न च अत्राप्यध्याहारे मानाभावः । 'नारायणाद्रुद्रो जायते' इति वाक्यस्यैव मानत्वात् । न चैत-दनुरोधेन तदेव वचनजातं किं न योज्यते, विशेषहेत्वभावादिति शङ्क्यम् । सर्गाद्यसमये ब्रह्मेशानयोरिव नारायणस्य श्रुतौ विशेषतः सत्त्वावगमेन नारायणात् तयोरिव नारायणस्य ताभ्यां तदोत्पत्त्यनवगमेन च तयोरेव तत्र विशेषहेतुत्वादित्युक्तम् । अत एव पूर्वतन्त्रे 'यदाहवनीये जुहोती'त्यस्य सामान्यशास्त्रस्य 'पदे जुहोति', 'गार्हपत्ये पत्नीसंयाजान् जुहोती'त्यादि विशेषशास्त्रेण बाधः स्वीकृतः । न च नारायणात्

१. 'छागो वा मन्त्रवर्णात् ।' । मी.सू. ६-८-९-३१. २. घ. ताल.पु.पा. शुभमस्मत्सु युनक्ति ।
३. घ. ता.पु.पा. प्राविशन् ।

ब्रह्मोत्पत्त्यनन्तरं शिवस्योत्पत्तौ मानाभावः । 'नारायणाद्ब्रह्मा जायते । नारायणाद्रुद्रो जायते' इति पाठक्रमस्यैव तत्र मानत्वादिति । किञ्चोदाहृताथर्वशिरोवाक्ये रुद्रशब्दितस्य प्रसिद्धशिवस्योदाहृत-महोपनिषद्वाक्ये उदाहृतनारायणोपनिषद्वाक्ये च नारायणशब्दितस्य विष्णोरिव तत्कृत्स्नजगत्कारणत्वं प्रतीयते । किन्तु कालत्रयसम्बन्धित्व[1]रूपनित्यत्वमिति कथं तेन रुद्रस्य परतत्त्वतारूपपरब्रह्मत्व-सिद्धिः । कृत्स्नजगत्कर्तृताया एव तल्लक्षणत्वात् । वाक्यान्तरबलात् तत्सिद्धेः निरसिष्यमाणत्वाच्च ।

न च अथर्वशिरस्युत्तरवाक्ये तत्सर्वान्तर्यामित्ववर्णनस्यापि परतत्त्वलिङ्गत्वात् तत एव तत्सिद्धि-रविकलेति वाच्यम् । सौबालश्रुत्या नारायणस्यैवाथर्वशिरोवाक्येन रुद्रस्य सर्वान्तर्यामित्वानावेदनात् तस्यैव तल्लिङ्गत्वेन अन्यादृशस्य अतल्लिङ्गत्वादिति तथैव तथाविधसर्वात्मकत्वस्यापि ततो प्रतीतेश्च । अथवा अत्र रुद्रशब्दितस्य शिवस्य सर्गाद्यसमये सर्वकारणभावेनावस्थानस्य सर्वात्म्यस्य चोपदेशो न स्वात्माभिप्रायेण किन्तु 'अहं मनुरभवं सूर्यश्चे'ति वामदेवसार्वात्म्योपदेशवत् स्वान्तर्याम्यभिप्रायेण । स्वान्तर्यामी च न नारायणादन्यः स्वीकार्यः । सुबालोपनिषदि सर्वान्तर्यामित्वेन तस्यैव प्रतिपादनात् । न च विशेषपर्यवसानं विना जिज्ञासा निवर्तते । न च रुद्रवचनत्वेन भासमानस्य 'अहमेकः प्रथममासम्' इत्यादेरन्तर्यामिपरत्वे प्रमाणाभावः । सर्गाद्यसमये शिवस्य सर्वकारणभावेनावस्थानस्योदाहृतसौबाला-द्यनेकोपनिषद्विरुद्धत्वेन तदनुपपत्तेरेव तत्र मानत्वात् । अत एव अथर्वशिरसि उत्तरवाक्ये 'हे रुद्र नारायण एव प्रसिद्धं सर्वकारणत्वं तव कथमुपपद्यते । तदनुपपत्तौ च कथं '' 'अहमेकः प्रथममासमि'ति तत्त्वेन आत्मानं वदसि ? तथा सति मिथ्यावादी स्याः ?'' इत्याशङ्कानिरासाय शिवस्यैव वचनं 'सोन्तरा-दन्तरं प्रविशद्दिशश्चान्तरं प्रविशदि'ति । तत्र स इत्यन्तर्यामी नारायणो गृह्यते । 'तेन रक्तं रागात्'[2] इति पाणिनिस्मृताविव तच्छब्देन बुद्धिसन्निहितस्य परामर्शसम्भवात् । वक्ष्यमाणरीत्या शब्दोपस्थापित-त्वाच्च । तथाच सोऽन्तर्यामी नारायणः अन्तरात्प्राणादेरप्यन्तरं, स्वात्मानं दिशश्च सकलदिग्वर्तिवस्तु-जातस्य च अन्तरं जीववर्गं अन्तर्यामिभावेन प्राविशदिति तद्वाक्यार्थः सम्पद्यते । ततश्च तदभिप्रायेणैव मम सर्वकारणत्वाद्युक्तिरिति न मिथ्यावादित्वप्रसक्तिरिति शिववचनाभिप्रायोऽवसीयते । न च इदं वाक्यं रुद्रस्यैव सर्वान्तर्यामितया प्रवेशकथनपरं 'सोऽब्रवीदहमेकः प्रथममासमि'ति पूर्ववाक्यमपि तस्यैव सर्व-कारणत्वादि कथम् ? अपरं किं न स्यादिति शङ्क्यम् । तथा सति अ(त)स्य वाक्यस्य रुद्रवचनत्वेन 'अहं प्रविशामि' इति प्रयोगापत्तेः । न च 'नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्येतदन्तरं इति करणेन रुद्रवचनसमास्यवगमात् 'सोऽन्तरादि'त्यादिश्रुतिवचनमेवेति वाच्यम् । 'सं प्राविशदि'त्यनन्तरमपि 'सोऽहं नित्यानित्य' इत्यादि रुद्रवचनानुवृत्त्या तत्समास्यसिद्धेः । अन्यथा मध्ये श्रुतिवचनेन रुद्र-

१. घ. ता.पु.पा. – कालत्रयवर्तित्व । २. तेन रक्तं रागात् । पाणिनिसूत्रम् ४-२-१ ।

वचनसन्दर्भविच्छेदे उत्तरत्र पुनः 'सोऽब्रवीदि'त्यस्यापेक्षितत्वेन तदध्याहारप्रसङ्गात् । तस्यान्तर्याम्यभिप्रायत्वे तु इति करणं अन्तर्याम्यनुप्रवेशरूपहेत्वर्थमिति न काचिदनुपपत्तिः । 'सोन्तरादन्तरं प्राविशदि'ति हेतोः 'अहमेकः प्रथममासमि'ति सर्वकारणभावेन सर्गाद्यसमये ममावस्थानोक्तिरिति 'स रुद्रोऽब्रवीदि'त्याहेति इति करणेन 'देहलीदीप'न्यायेन प्रश्नोत्तरयोरन्वितेनेति 'सोऽब्रवीदि'ति श्रुतिवचनेनान्वयसम्भवात् । न चात्र पक्षे 'प्राविशमि'ति प्रयोगापत्तिदोषः । यथा श्रुतस्यैवोक्तरीत्याऽन्वयसम्भवात् ।

एतेन इदमिति करणं प्रकारार्थं[1] 'सोन्तरादि'त्याद्यपि 'अहमेकः प्रथममासमि'तिवत् रुद्रवचनमति निरस्तम् । रुद्रवचनत्वेऽप्यस्मद्रीत्यैव तत्त्वस्य वर्णनीयत्वात् । अन्यथा 'प्राविशमि'ति प्रयोगापत्तिदोषापत्तेः । यद्वा समास्यर्थमेव इदमिति करणम् । न च तथात्वे सन्निहितेन केनापि नान्वयस्तस्य सम्भवतीति वाच्यम् । तथापि 'सत्यं सत्येन धर्मं धर्मेण तर्पयामि स्वेन तेजसे'ति स्वान्तर्याम्यभिप्रायकृत्स्नशिववचनसमाप्तावन्वयसम्भवात् । तदनन्तरं 'ततो देवा रुद्रं नापश्यन्नि'त्यादि श्रुतिवचनदर्शनेन तत्समाप्तौ वा तदन्वयसम्भवाच्च । तादृशशिववचनस्य 'ततो देवा रुद्रं नापश्यन्नि'त्यादि शिवान्तर्धानप्रतिपादकश्रुतिवचनस्य च समास्यर्थेतिकरणसाकाङ्क्षत्वात् सत्यां आकाङ्क्षायां असन्निधानस्य अदोषत्वात् ॥ सन्निधानात् आकाङ्क्षायाः बलवत्त्वात् । यस्य येनार्थसम्बन्धो दूरस्थेनापि तेन सः । 'अर्थतो ह्यसमर्थानामानन्तर्यमकारणमि'ति[2] मीमांसावार्तिकात् । 'अर्थतो ह्यसमर्थानामान्तर्येऽप्यसम्बन्धः'[3] इति विश्वजिदधिकरणसूत्राच्च ।

ननु 'अहमेकः प्रथममासमि'ति प्रतिवचनरूपशिववचनस्यान्तर्याम्यभिप्रायकत्वे 'को भवानि'ति देवकर्तृकशिवासाधारणधर्मविषयप्रश्नस्य शिवविषयत्वेन प्रश्नप्रतिवचनयोर्वैयधिकरण्यापत्तिः । न च 'सोऽन्तरादि'त्याद्यनन्तरसन्दर्भसङ्गत्यनुरोधेन प्रश्नवाक्यस्याप्यन्तर्यामिपरत्वं कल्प्यमिति वाच्यम् । उपक्रमस्यानुपसञ्जातविरोधिनः प्रबलत्वेन तदनुरोधेनैवान्तरसन्दर्भस्य नेयत्वात् ॥ 'को भवानि'ति भवच्छब्देन तदन्तर्यामिणं पृच्छतां देवानां सर्वशब्दानामन्तर्यामिपर्यन्तधावननिश्चयवतां प्रतिवचनस्थाहंशब्दस्यापि तत्पर्यन्तधावननिश्चयोऽस्तीति तत्र तान् प्रति व्युत्पादनीयाभावेन प्रतिवचनानुत्थानं चेति चेन्न । प्रश्नानुपपत्त्यैव प्रश्नप्रतिवचनयोरन्तर्यामिविषयत्वस्यावश्यकत्वात् । तथाहि— सर्वोऽपि जिज्ञासितव्यमेव पृच्छति । जिज्ञासा च सामान्यतो ज्ञाते विशेषतश्चात इति सर्वसिद्धम् । प्रश्नप्रतिवचनयोरन्यतरस्य स्फुटार्थत्वे तदनुरोधेनैवान्यतरस्य अस्पष्टार्थस्य तद्विषयकत्वं कल्प्यत इति अवि-

१. घ. ता.पु.पा. प्रकारवाचि । २. 'अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्' मी.वार्तिकम् ।
३. 'अर्थतो ह्यसमर्थानां आनन्तर्येऽप्यसम्बन्धः' मी.सू ४-३-६-११.

वादम् । एवं च 'को भवानि'ति रुद्रं प्रति देवानां प्रश्नस्य अस्पष्टार्थस्य प्रतिवचनानुरोधेन भूतभविष्यद्वर्तमानकालसम्बन्ध एव विषयत्वेन स्वीकार्यः । तत्र प्रश्नकाले साक्षात्कृते रुद्रे वर्तमानत्वस्य निश्चिततया तदंशे प्रश्नो युक्त एवेति तत्समानाधिकृतभूतभविष्यत्वविषयत्वोपपत्तये सन्निहितत्वादन्तर्यामिविषयकत्वकल्पनमावश्यकमिति न प्रश्नप्रतिवचनयोर्वैयधिकरण्यशङ्कावकाशः । अत एव लोके स्निग्धं प्रति अन्याभिप्रायेण तव मयि स्नेह एव नास्तीत्युक्ते तस्यान्याभिप्रायेण कथं मम त्वयि स्नेहो नास्ति, न हि हृदयं भित्त्वा सम्प्रदर्शयितुं शक्यते । तर्हि कुतो निरन्तरमहं न सेवनीय इत्युक्ते अन्यासक्तिविनाशायेत्याद्यन्याभिप्रायकप्रत्युक्तिरपि सङ्गच्छते । एतेनैवोपक्रमस्य अनुपसञ्जातविरोधिनः प्रबलत्वेन तदनुरोधेनैवानन्तरसन्दर्भस्य 'सोऽन्तरादि'त्यादेः नेयत्वात्रोपक्रमस्यैतदनुरोधेन नयनं युक्तमिति निरस्तम् । उपक्रमस्याप्युक्तरीत्या अन्तर्यामिविषयत्वस्यावश्यकतयान्तरसन्दर्भेणाविरोधात् ।

यत्तु 'को भवानि'ति तदन्तर्यामिणं पृच्छतां देवानां तुल्यन्यायेन प्रतिवचनगताहंशब्दस्यापि अन्तर्यामि[1]परतया निर्णीतत्वेन व्युत्पादनीयभावात् प्रतिवचनानुत्थानमिति । तत्र । तस्यान्तर्यामिनिष्ठत्वनिश्चयेऽपि तत्प्रतिपाद्यान्तर्यामिणो जगत्कारणत्वकालत्रयसम्बन्धादिविशिष्टत्वेन अनिश्चिततया व्युत्पादनीयसत्त्वेन प्रतिवचनोत्थानसम्भवात् । एतेन 'तेन रक्तं रागात्'[2] इत्यादौ असमभिव्याहृतपदस्य शब्दोपस्थापितार्थपरत्वसम्भवेऽपि इह समभिव्याहृतव्यवस्थितैकार्थपरस्य 'सोऽन्तरादि'ति वाक्यगततत्पदस्य अशाब्दसन्निधापितपरत्वायोगात्र तद्वाक्यं पूर्ववाक्यस्य शिवान्तर्यामिपरत्वोपपादकमिति निरस्तम् । उक्तरीत्या प्रश्नप्रतिवचनयोरन्तर्यामिनिष्ठतया तद्गताहंशब्देनैव तत्सन्निधानसम्भवात् ॥

एतेनैव इति करणस्य 'सोऽन्तरादि'त्यादेश्च स्वस्थानेऽन्वयासम्भवात् 'सत्यं सत्येन, धर्मं धर्मेण तर्पयामि स्वेन तेजसे'ति कृत्स्नशिववचनसमाप्तावन्वयः । तदनन्तरं 'ततो देवा रुद्रं नापश्यन्नि'त्यादि श्रुतिवचनदर्शनेन शिववचनसमाप्त्यर्थस्य इतिकरणस्य शिवान्तर्धानप्रतिपादकश्रुतिवचनस्याकाङ्क्षितत्वात् 'सोऽन्तरादि'त्यादेश्च देवदृश्यं स्थूलं रूपं विहाय ततःपरं सर्वान्तरं सर्वतो रहस्यं परिपूर्णं रूपं प्राविशदिति तदन्तर्धानप्रतिपादनसमर्थत्वादिति निरस्तम् । सन्निहिताकाङ्क्षितेन त्वया सम्भवादेव आकाङ्क्षामात्रेण अन्वयस्यास्वीकार्यत्वात् । सन्निहिताकाङ्क्षासम्भवे त्यागायोगात् । 'अणुरपि विशेषोऽध्यवसाय(क)परः'[3] इति न्यायात् इतिकरणस्य 'सोऽन्तरादि'त्यादेश्च हेत्वर्थत्वेन पूर्ववाक्यस्यान्तर्यामिपरत्वोपपादकतया सन्निहितेन तेनान्वयसम्भवस्य[4] उक्तत्वात् ।

---

१. घ. ता.पु.पा. निष्ठ ।

२. तेन रक्तं रागात् । पाणिनिसूत्रम् ४-२-१ ।

३. 'अणुरपि विशेषोऽध्यवसायपरः । मी.न्यायः ।

४. घ. ता.पु.पा. अन्वयसम्भवस्य ।

एतेनैव प्रश्नप्रतिवचनयोरन्तर्यामिविषयत्वे तस्य रुद्रवत्प्रत्यक्षत्वाभावेन 'ततो देवा रुद्रं नापश्यन्' इत्युत्तरत्र तदन्तर्धानप्रतिपादनमसङ्गतमिति निरस्तम् । प्रश्नात् प्राक् 'यो रुद्रो देवैर्दृष्ट' इति श्रुत्युक्तम् । तमेव ततः कृत्स्नं प्रतिवचनानन्तरं 'नापश्यन्नि'ति तस्यैव रुद्रस्यादर्शनश्रुत्या प्रतिपाद्यत इति सङ्गतिसम्भवात् । रुद्रदर्शनोत्तरकालीनयोः प्रश्नप्रतिवचनयोरन्याभिप्रायत्वेऽपि दर्शनं विना प्रश्नासम्भवेन 'देवा ह वै स्वर्गं लोकमगमन्नि'ति श्रुतिवचनानन्तरं 'ते तत्र रुद्रमपश्यन् तदनन्तरमि'ति वाक्यपूर्तये श्रुत्यभिप्रेतत्वेनाध्याहार्यस्यापि अन्तर्यामिविषयत्वे मानाभावेन तत्समानविषयस्य देवान्प्रति प्रतिपादकस्यापि श्रुतिवचनस्यान्तर्यामिविषयत्वे मानाभावात् । अत एव 'विष्णुरात्मा भगवतो भवस्यामिततेजस' इति भारते कर्णपर्वणि विष्णो रुद्रान्तर्यामि[१]प्रतिपादनमुपपद्यते । न चैतद्वचनस्थस्यात्मशब्दस्य 'तस्मादात्मानमेवाग्रे रुद्रं संपूजयाम्यहमि'ति तत्रैव मोक्षधर्मे कृष्णवचनस्थितात्मशब्दस्येव मुक्ते उपचारितेऽपि अभेदे तात्पर्यसम्भवेन नान्तर्यामिपरत्वमिति वाच्यम् ।

उक्तरीत्या अथर्वशिरसो रुद्रान्तर्यामिपरत्वे सिद्धे तदनुरोधेनास्यापि रुद्रशब्दस्य तदन्तर्यामिपरताया एवावश्यकत्वात् । एवञ्च 'येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयान्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकमि'ति सावधारणगीतास्थकृष्णवचनमपि सङ्गच्छते । तस्मात् सर्वथापि 'अहमेकम्' इत्यादिवाक्यं किमन्तर्यामिविषयं किं वा प्रसिद्धरुद्रपरमिति संशयनिरासकत्वेन 'सोऽन्तरादि'त्यादेः अस्मदभिमतार्थ एवाञ्जस्यं स्यात् । अथर्वशिरोवचनं रुद्रान्तर्यामिणो नारायणस्यैव सर्वकारणत्वं प्रतिपादयतीति सिद्धम् ।

एवञ्च कृत्स्नस्याप्यथर्वशिरसो नारायणपरत्वे बाधकाभावात् साधकत्वाच्च तत्राम्नातं 'विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् । संबाहुभ्यां धमति सम्पतत्रैर्द्यावा भूमी जनयन् देव एक' इत्यपि नारायणस्य जगत्कारणत्वप्रतिपादनेऽव्याहतप्रसरमिति दिक् ।

यदुक्तं— 'यदा तमस्तन्न दिवा न रात्रमसन्न चासच्छिव एव केवलः । तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात् प्रसृता पुराणी'ति श्वेताश्वतरमन्त्रे तमोमात्रावशिष्टे सर्गाद्यसमये शिवस्य सर्वकारणभावेनावस्थानमुपदिश्यत इति तन्न ।

यदेति कालविशेषप्राप्तस्य तमसोऽनुवादात् । अनुवादस्य पुरोवादसापेक्षत्वात् । तत्र 'अव्यक्तमक्षरे लीयते । अक्षरं तमसि लीयते । तमः परे देव एकी भवती'ति सुबालोपनिषद्वचनस्य तदर्थप्रापकस्य पुरोवादतया 'यदा तम' इत्यस्य सौबालोपनिषद्वाक्यसापेक्षत्वे स्थिते तस्याञ्चोपनिषदि तमोऽधिष्ठातृत्वेन

१. ख.पु.पा. रुद्रान्तर्यामित्व ।

नारायण एव प्रतिपादित इति उपजीव्य पुरोवादावरोधाय अस्यापि मन्त्रस्य नारायण एव पर्यवसान-स्यावश्यकत्वात् । एवञ्च 'शिव एव केवल' इति मन्त्रस्थशिवादिशब्दोऽपि बलान्नारायणनिष्ठ आपतित इति कथं तद्वतोक्तमन्त्रेण शिवस्य सर्गाद्यसमये तमोमात्रावशिष्टसर्वकारणभावेनावस्थानमुपदिश्यत इति ।

ननु भवेदेवं यदि सौबालवाक्यमेव तस्य पुरोवादः स्यात् न चैतदस्ति । अन्येषामप्यनूद्यमान-प्रापकाणां 'तमो वा इदमेकमास तत्परेणेरितं विषयत्व प्रयाति', 'नासदासीन्नोसदासीत्तदानीं नासीदजो नो व्योमापरो यत्', 'प्रजापतिर्वा इदमेक आसीत्', 'नाहरासीत् न रात्रीरहरासीत् सोऽस्मिन्नन्धेतमसि प्रासपदि'त्यादि मैत्रायणादिवाक्यानां श्रवणात् न चास्य सौबालवाक्यमेव पुरोवाद इत्यत्र विशेषहेतु-रस्ति । अस्ति च तस्मिन् कथमयं मन्त्रो नारायण एव पर्यवस्यतीति विशेषतो व्यवस्थासिद्धिः । किञ्च त्वत्पक्षे विधेयस्य निषेध्यस्य वा कस्यचिदप्रतीतेरनुवादवैयर्थ्यम् । 'नान्तरिक्षे दिवी'त्यादिवन्नित्यानु-वादाश्रयणस्यानन्यगतिकत्वात् । किञ्चैवं तद्वृत्तयोगेन तत्काले कस्यचिद्विधेयत्वेन प्रतीत्यनुपपत्तिः । न च तत् 'न दिवे'त्यादिना तत्र दिननिशाविभागस्य सदसदात्मकप्रपञ्चविभागाभावस्य विधेयस्य प्रतीतेः तदनुपपत्तिरिति वाच्यम् । उदाहृतपुरोवादवचनजातादेव तयोः प्राप्तत्वेन विधेयत्वानुपपत्तेः । न हि किञ्चिदनूद्य किञ्चिद्विधातुं निषेद्धुं वा प्रवृत्तं वाक्यमनुवादायावश्यापेक्षिततत्त्वात्पुरोवादायैव प्राप्तेऽर्थे पर्यवस्यत्साफल्यमश्नुते । अतस्तत्र 'यदा तम' इति भागवत् 'न दिवा न रात्रिरि'त्यादिभागोऽप्यनुवाद इति ।

न च तेन शिवादिशब्दानां नारायण एव वृत्तिर्विधीयत इति वाच्यम् । तस्यापि नारायणसर्वा-त्मकत्वप्रतिपादकपुरोवादरूपसौबालवचनजातादेव प्राप्तेः । न च सर्वशब्दस्य प्रतिपाद्यत्वं विना नारा-यणस्य सर्वात्मकत्वप्रतिपादनं सुशकम् । ततश्च त्वन्मते वाक्यमेवेदं व्यर्थं स्यात् । तस्मात् सर्गाद्यसमये तमःप्रापकेषु वाक्येषु क्वचिदधिष्ठाता नारायणशब्देनोच्यते क्वचित्प्रजापतिशब्देन क्वचित्साधारणपर-शब्देनेति तत्र विरुद्धानेकविशेषश्रवणात् अनिर्धारितविशेषे तेषां पर्यवसानासम्भवात् एकविशेषवत्त्वं दर्शयितुं यन्मन्त्रेभ्यः प्राप्तं सर्गाद्यकालीनं तमोऽनूद्य शिवशब्देन तदधिष्ठातुः शिवत्वमेव तेभ्यो प्राप्तं विदधातीति तत्सार्थक्यस्य वक्तव्यत्वात् पुरोवादस्थितशब्दानामेव शिवे प्रवृत्तिर्वक्तव्येति ।

न चैवं नारायणादिशब्दानां शिवे लक्षणाप्रसङ्गः । वाक्यवैयर्थ्यापेक्षया पदलक्षणास्वीकारस्य ज्यायस्त्वात् । तदेवं 'यदा तम' इति पूर्वार्धे 'तमो वा इदमेकमासमि'त्यादीनां केषाञ्चित्कारणवाक्यानां शिव एव पर्यवसानं प्रतिपादयतीति स्थिते उत्तरार्धे च 'तदक्षरमि'ति भागो 'यथा सुदीप्तात्पावकात् स्फुलिङ्गाः सहस्रशः प्रवर्तन्ते सरूपास्तथाक्षराद्विविधाः सोम्यभावाः प्रजायन्ते तत्रैवापियन्ती'त्यादि मुण्डकादिश्रुतीनां 'तत्सवितुर्वरेण्यमि'ति भागश्च सवितृमण्डलानां शिवे पर्यवसानं प्रतिपादयतीति स्थिते

कृत्स्नकारणवाक्यानां मध्यवर्ति-र्नियतसर्वान्तर्यामिलिङ्गं 'धियो यो नः प्रचोदयात्' इत्युपवर्णयित्र्याः सावित्र्याः 'प्रजा च तस्मात् प्रसृता पुराणी'ति भागः 'तदैक्षत बहुस्यां प्रजायेयेति स ईक्षत लोकान्सृजत इति सोऽकामयत बहुस्यां प्रजायेयेति तदवसायेतीति तपसा चीयते ब्रह्म ततोऽन्नमभिजायत' इति स्रष्टृरादिशब्दैः प्रतिपादयतां छान्दोग्यादिश्रुतिकारणवाक्यानां शिवविषयत्वं निर्धारयन्नयं मन्त्रः तस्यैव सर्वकारणत्वमतितरामाविष्करोतीति कथमस्य नारायणविषयत्वम् ? कथं चैवोत्थाप्योदाहृतपुरोवादानां तदिति चेत् ॥ (कथं) शिवशब्दो हि— 'सुश्रेयसं शिव भद्रं कल्याणं मङ्गलं शुभम्', 'शम्भुरीशः पशुपतिः शिवः शूली महेश्वरः' इत्यादि कोशे— 'शिवस्तु सर्वजगतां', 'शिवाः सन्तु पन्थानः शिवं कुर्यास्तु शिवः शिवोऽभूत्, शिवः शिवानां शिवो शिवानाम्', 'यो वः शिवतमो रस' इति लोकवेदयोः शुद्धिमाङ्गल्यादिधर्मेण तत्र तत्र शक्तत्वेन प्रयुज्यमानो विशेषहेतुं विना विशेषनिष्ठतया निश्चेतुं शक्यः तावत् । तथा च कथमेवंविधशिवशब्दसमभिव्याहृतोऽयं श्वेताश्वतरमन्त्रः सर्गाद्यसमये तमःप्रापको-दाहृतवाक्यानामनिर्धारितविशेषे पर्यवसानासम्भवात् तेषामेकविषयत्वं दर्शयितुं तेभ्यो प्राप्तं तमोऽनूद्य शिवशब्देन तदधिष्ठातृ ईशानत्वं तेभ्यो प्राप्तं विधातुं कथमेवं सत्ये तन्मन्त्रोऽथ पुरोवादरूपसौबाल-श्रुतिगतनारायणादिशब्दानामीशान एव वृत्तिर्वक्तव्येति युज्यते । कथं च तथाविधैतन्मन्त्रस्थ 'तदक्षरम्' इत्यादिभागोऽपि 'यदा सुदीप्तादि'त्याद्युदाहृतवाक्यानां रुद्रे पर्यवसानं प्रतिपादयत्विति ।

किञ्च 'तमो वा इदमेकमासे'त्यादिवाक्यतः प्राप्तं सर्गाद्यकालीनं तमोऽनूद्य तदधिष्ठातुरीशानत्व-विधानं युक्तम् । तथा सति वस्तुतो नारायणाद्यवरुद्धस्यैव वस्तुतो व्रीहित्वयवत्वविरुद्धानामेव प्रकृता-पूर्वसाधनत्वपुरस्कारेण प्रोक्षणादिविधानवत् तमोधिष्ठातृपुरस्कारेण शिवत्वविधानेऽपि तदधिष्ठातृत्वेन प्राप्तेर्वक्तव्यतया तस्य चेशानत्वविधाने तत्र तत्प्रतिपादकरूपपुरोवादरूपतमोरूपविधिबाधोपपत्तेः ।

न च तद्बाधं विना एतद्विधिपर्यवसानं युज्यते । न च शिवत्वविरुद्धनारायणत्वाविरुद्धे तमो-विधिमुपजीव्य प्रवृत्तशिवत्वविधेः कुशप्रापकत्वोदकं प्रतिशरोपदेशवत् बाधकत्वं सम्भवति । न च नारायणादौ तमःसम्बन्धो बाधकम् । न च तद्विधायकमप्रवृत्तानात्मकत्वाभावादिति वाच्यम् । सामान्यरूपतया लाघवेन विधित्वे आप्राप्तप्रापकत्वस्यैव तन्त्रत्वात् ।

किञ्च शिवत्वविधानेऽपि, नारायणेशानप्रजापतिशब्दार्थानामभेदापत्त्या, तदतिरिक्तत्वेन त्वदभि-मतस्येशानस्य जगत्कारणत्वासिद्धिः । अत एव 'जुह्वा जुहोती'ति होमसाधनतया विहितां जुहुं 'यस्य पर्णमयी जुहुर्भवति' इति वाक्येन, तत्प्रत्यभिज्ञापकजुहुशब्देनानूद्य, तस्यां पर्णमयत्वविधाने जहुत्व-पर्णमयत्वयोरैकाधिकरण्यं सिद्ध्यति । न हि नारायणत्वादिनिर्मुक्तं सौबालादिवाक्यं, यत्तमोऽधिष्ठातृत्वेन प्राप्तं, येन तत्रेशानत्वविधाने तद्भेदो न स्यात् । अपि च 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान'

इति महोपनिषदा, सर्गाद्यकालेऽविद्यमानत्वेन प्रतिपन्नस्य तस्यैवोत्तरत्र 'तस्य ध्यानान्तस्थस्य ललाटात्र्यक्षः शूलपाणिः पुरुषोऽजायत' इत्यादिना नारायणादुत्पन्नत्वेन च प्रतिपन्नस्येशानस्य, न तत्पूर्वकालीननारायणेनाभेदविधानं युज्यते । तत्कालीनतमोऽधिष्ठातृत्वं वा । तथात्वे महोपनिषद्विरोधापत्तेः ।

एतेन सर्गाद्यसमये तमःप्रापकेषु वाक्येषु क्वचिदधिष्ठाता नारायणशब्देनोच्यते । क्वचित्प्रजापतिशब्देन, क्वचित्साधारणेन परशब्देनेति । तत्र विरुद्धानेकविशेषश्रवणादनिर्धारितविशेषे तेषां पर्यवसानायोगात् । तदर्थमेकविषयत्वं दर्शयितुमयं मन्त्रस्तेभ्यः प्राप्तसर्गाद्यकालीनं तमोऽनूद्य, शिवशब्देन तदधिष्ठातुरीशानत्वं तत्त्वं तेभ्योऽप्राप्तं विदधातीति, तत्सार्थक्यस्य वक्तव्यतया, तदुत्थाप्यपुरोवादस्थितनारायणादिशब्दानामेव ईशाने वृत्तिर्वक्तव्या । न चैवं नारायणादिपदानां ईशाने लक्षणाप्रसङ्गः । वाक्यवैयर्थ्यात् पदमात्रलक्षणयाऽभ्यर्हितत्वादिति निरस्तम् । तत्रेशानत्वादिविधानस्योक्तरीत्या अनुपपन्नत्वात् । असति च गत्यन्तरे 'नान्तरिक्षे न दिवी'त्यादिवदस्य मन्त्रस्य नित्यानुवादतायाः सद्यत्वात् । किञ्च पुरोवादरूपसौबालादिवाक्यगतानां अनेकेषां नारायणादिव्दानामीशाने लक्षणा, तन्मन्त्रवैयर्थ्यभयादङ्गीकार्याविधेयासम्भवेनोक्तरीत्या स्वत एव व्यर्थस्य लक्षणाकल्पकत्वानुपपत्तेः । अन्यथा अग्य मन्त्रस्य सिद्धे शिवत्वविधायकत्वे, तदनुरोधेन सौबालादिश्रुतिगतानन्यसाधारणानेकनारायणादिपदानां शिवलक्षणकत्वसिद्धिः । सिद्धे च तस्मिन् विरोध्यभावेनास्य शिवत्वविधायकत्वसिद्धिरिति अन्योन्याश्रयापत्तेः ।

किञ्च भवेदेवं तेषामेकविषयत्वप्रदर्शनाय तदधिष्ठातुः शिवत्वविधानम् । यदि तदधिष्ठाता क्वचिन्नारायणशब्देन, क्वचित्प्रजापतिशब्देन, क्वचित्साधारणेन, परशब्देन प्रतीयेत । न चैवं 'प्रजापतिर्वा इदमेक आसीदि'ति वाक्ये[1] 'तमो वा इदमेकमास, न तत्परेणेरितमि'ति वाक्ये च प्रजापतिशब्दार्थपरशब्दार्थस्य वा तमोऽधिष्ठातृत्वाप्रतीतेः । प्रत्युत 'प्रजापतिर्वा इदमेक आसीदि'ति वाक्ये, सप्तम्यन्ततमःशब्दार्थस्यैव प्रजापत्यधिष्ठानत्वप्रतीतेः । तमोऽधिष्ठातृत्वं न तमःप्रत्याधारत्वं, किन्तु तन्नियामकत्वमिति चेत्, तथाऽपि प्रजापतेस्तमप्रेरकत्वासिद्धेः ।

एतेनोक्तरीत्या 'यदा तम' इति पूर्वार्धं 'तमो वा इदमेकमासे'त्यादीनां केषाञ्चित्कारणवाक्यानामीशाने पर्यवसानं प्रतिपादयति । तदुत्तरार्धं 'तदरमि'ति भागः 'यथा सुदीप्तात्पावकादि'त्यादि मुण्डकादिश्रुतीनां तत्र पर्यवसानम् । तथा 'तत्सवितुर्वरेण्यमि'ति भागः सवितुर्मण्डलमध्यवर्तिनि स्थितजगत्कारणत्वनियतसर्वान्तर्यामित्वलिङ्गं 'धियो यो नः प्रचोदयादि'त्युपवर्णयित्र्याः सावित्र्याः ऋचः ईश्वरे पर्यवसानम् । तथा 'प्रज्ञा च तस्मात्प्रसृता पुराणी' इति भागः 'तदैक्षत बहुस्यां प्रजायेयेति' इति

1. ताला.पु.पा. वाक्येन – 'तमो वा इदमेकमासम्, तत्परेणेरितमिति वाच्यम् ।

स्रष्टुः सादिसर्गपूर्वकालीनं, स्रष्टव्यवस्तुजातालोचनमीक्षणादिशब्देन प्रतिपादयतां छान्दोग्यादिश्रुत-कारणवाक्यानां, ईशाने पर्यवसानं प्रतिपादयतीत्येव, अयं मन्त्रः कृत्स्नकारणवाक्यानामीशानविषयत्वं निर्धारयन् तस्य सर्वकारणभावमतितरामाविष्करोतीति निरस्तम् । उक्तरीत्या विधायकत्वासम्भवात् । वस्तुतस्तु मम पक्षे, तवेव न विधायकत्वासम्भवः । सर्गादिकाले तमोऽधिष्ठातृत्वे 'नैकाकी रमते', तथाच पुरोवादप्राप्ते नारायणे, अनेन मन्त्रेण लोकतः 'अन्धन्तमः प्रविशन्ति येऽविद्यामुपासते', 'तस्मा-देकाकी न रमते', 'तस्मादेकाकी बिभेति' इति वेदतश्च, बहुभयापादकतया प्रतिपन्नतमःसम्बन्धस्य, युक्तापादितरोदनादिरूपामाङ्गल्यादिप्रसक्तौ, केवलशब्दसमभिव्याहृतशिवशब्देन, पुरोवादाप्राप्ततदभाव-सहितस्य माङ्गल्यसम्बन्धस्य विधानसम्भवात् । एवञ्च पूर्वार्धेनोत्तरार्धेन च सकलकारणवाक्यानां नारायण एव पर्यवसानं निर्धारयन्नयं मन्त्रः, तस्यैव सर्वकारणत्वमाविष्करोतीति किमनुपपन्नम् । यद्वा उक्तरीत्या प्राप्तं नारायणमनूद्य, तत्र मानान्तराप्राप्तं मुख्यतः शिवादिशब्दवाच्यत्वमनेन मन्त्रेण विधीयत इति नैतद्वैयर्थ्यशङ्केति ।

न चैतद्विधानस्य स्वतोप्रयोजनत्वात् फलवत्सम्बन्धरहितत्वाच्च वैयर्थ्यतादवस्थ्यमिति शङ्क्यम् । भगवति नारायणे सत्यकामत्वादिविधानवच्छिवाक्षरत्वादिशिवविधानशब्दवाच्यत्वविधानस्यापि 'ब्रह्म-विदाप्नोतिपरं', 'तरति शोकमात्मवित्' इति श्रुतिप्रतिपन्नफलवत् तदज्ञानप्रकारतया तत्साफल्यस्य स्फुटत्वात् ।

न चैवं तमःप्रापकपुरोवादानां बहूनां सत्त्वात् । तत्र 'तमो वा इदमेकमास, तत्परेणेरितं विषयत्वं प्रयाती'ति सामान्यतः प्रवृत्तस्य, सौबालश्रुतिप्रतिपन्ननारायणरूपविशेषपर्यवसानाविरोधित्वेऽपि 'प्रजा-पतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धेतमसि प्रासर्पदि'त्यस्य विशेषहेत्वभावेन पुरोवादत्वेन स्वीकार्यस्यैकविशेषपर्यवसानविरोधि प्रजापतिपदसहितस्य सत्त्वान्नारायण एव पर्यवसान-विषय इति निर्धारणासम्भवात् कथं 'यदा तम' इति मन्त्रः तत्रैव पर्यवसानमर्हतीति वाच्यम् । उक्तरीत्या सर्गाद्यकाले निषिद्धसत्त्वस्य, प्रजापतिशब्दार्थस्य चतुर्मुखस्यान्यस्य वा कस्यचित् तदैव नारायणा-दुत्पन्नस्य नारयणवत् तमोऽधिष्ठातृत्वासम्भवेन, प्रत्युत 'सोऽन्धेतमसि 'प्रासर्पदि'ति तमस एव प्रजापत्यधिष्ठानत्वप्राप्त्या च, प्रजानां पतिरिति योगार्थप्रजापतिशब्दस्य नारायण एव प्रवृत्तेरावश्यकत्वेन विशेषनिर्धारणोपपत्तेः । न चैवं रूढ्यननुग्रहप्रसङ्गः । अन्यथानुपपत्त्या तन्मात्रबाधस्य सह्यत्वात् । एतेन 'नासदासीदि'ति श्रुतिर्व्याख्याता । नन्वेवं श्वेताश्वतरस्थस्य 'यदा तम' इत्यस्य मन्त्रस्य, नारायण एव पर्यवसानाङ्गीकारे कथं न तत्रत्यानेकमन्त्रविरोधः । तथा हि— इयं ह्युपनिषदुपक्रममारभ्य हीश-हर-

१. घ. ता.पु.पा. – प्रासदिति ।

रुद्र-शिवेशानमहेश्वरादिपदपरामृष्टस्य, सर्वकारणत्वं सर्वाधिष्ठातृत्वं च, प्रतिपादयन्त्येवान्तं लभते[१] । तत्रोपक्रमे तावदस्यामुपनिषदि 'किं कारणं ब्रह्म, कुतस्माज्जाता जीवाः, केन क्व च सम्प्रतिष्ठाः, अधिष्ठिताः केन, सुखेतरेषु वर्तामहे, ब्रह्मविदोऽप्यवस्थामि'ति मन्त्रेण, केषाञ्चिद्ब्रह्मवादिनामृषीणां 'यतो वा इमानि भूतानि जायन्त' इत्यादि वैदिकवाक्यपर्यालोचनया ब्रह्म जगज्जन्मादिकारणं, सर्वाधिष्ठातृभूतं च इत्येतावन्निश्चितवतां तत् ब्रह्म किंदेवतारूपमित्यजानतां संशयं प्रदर्श्य, तन्निरासायो[२]द्गीथमेतत्परमं तत्तु ब्रह्म तस्मिन् स्वयं स्वप्रतिष्ठाक्षरं च । अत्रान्तरं वेदविदो विदित्वा लीना ब्रह्मणि तत्परा योनिमुक्ताः । संयुक्तमेतत्क्षरमक्षरं च व्यक्ताव्यक्तं भरते विश्वमीशम्' इति मन्त्रेणेतदीशरूपमिति अभिधानात् । तथा 'अक्षरं प्रधानं अमृताक्षरं हर' इति हरशब्देनापि तदित्यभिधानाच्च । तथाहि— 'एको हि रुद्रो न द्वितीयाय तस्थुर्य इमां लोकानीशतः शनीभिः प्रत्यञ्जनास्तिष्ठति संयुगे चान्तकाले संसृत्य विश्वाभूतानि योयीतः[३], विश्वतश्चक्षुरुत विश्वतो मुखो विश्वतो बाहुरुत विश्वतस्पात् । सम्बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः । 'यो देवानां प्रथम[४]श्चोद्भवश्च, विश्वाधिको रुद्रो महर्षिः, हिरण्यगर्भं जनयामास पूर्वं, याते रुद्र शिवा तनूः, विश्वस्येशं[५] परिवेष्टितारं, ईशं तु ज्ञात्वा अमृता भवन्ति' । 'वेदाहमेतं पुरुषं महान्तं, तमेवं विदित्वाऽ[६]तिमृत्युमेति । नान्यः पन्था विद्यते अयनाय । ततो यदुत्तरोत्तरं [७]तद्रूपमनामयं एव तद्विदुरमृतास्ते भवन्ति' । 'सहस्रशीर्षा पुरुषः, उतामृतत्वस्येशानः', 'सर्वस्य प्रभुमीशानं सर्वस्य शरणं सुहृत्', तत्रैव पुनरपि 'यो यो देवानां प्रभवश्चोद्भवश्च । विश्वाधिको रुद्रो महर्षिः । हिरण्यगर्भं जनयामास पूर्वं, स नो बुद्ध्या शुभयाः संयुनक्तु । यो देवानामधिपो यस्मिन् लोकाः अधिश्रिताः सर्वव्यापी च भगवान् । तस्मात्सर्वगतः शिवः । तथेशः सर्वाधिपः[८] महात्मा । सकारणं कारणाधिपो न चास्य कस्यचिज्जनिता चाधिपः, छन्दांसि प्रज्ञाः क्रतवो वृतानि भूतं भव्यं यच्च देवा वदन्ति । अस्मान्मायी सृजते विश्वमेतत्, तस्मिंश्चान्यो मायया संविरुद्धाः', 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम् । तमीश्वराणां परमं महेश्वरमि'ति । तत्र अनन्यसाधारणशिववाचिशब्ददर्शनात् । एवं च सर्वकारणं सर्वाधिष्ठाता मुमुक्षुज्ञेयश्च । न केवलं तस्य सर्वकारणत्वमात्रं 'विश्वतश्चक्षुरि'त्यादि वाक्या[९]दवगम्यते । किन्तु जगत्कारणहिरण्यगर्भजनकत्वादपि । तथाच शिवः कृत्स्नजगत्कारणं परतत्त्वं च । न च महोपनिषन्नारायणोपनिषद्भ्यां हिरण्यगर्भजनकत्वस्य नारायणे प्रतिपादनात् । अत्रापीनरशब्दा अपि तत्परा एव, सर्वविदान्तप्रत्ययन्याया[१०]दिति वाच्यम् । तदुपनिषद्गतनारायणादिशब्दानामेव शिवपरत्वात् । तथापि सर्वविदान्तप्रत्ययन्यायनिर्वाहादुभयोरेककाले तज्जनकत्वासम्भवेऽपि घटं प्रति युगप-

---

१. घ. ता.पु.पा. लक्ष्यते । २. घ. ता.पु.पा. अयोगात् । ३. घ. ता.पु.पा. गोपातः । भुवनानि गोप्ता ।
४. प्रभवः । ५. घ. पु.पा. विश्वस्यैकम् । ६. घ. ता.पु.पा. अमृतत्वमेति । ७. घ. ता.पु.पा. तदरूपम् ।
८. घ. ता.पु.पा. सर्वाधिपतिस्ते । ९. घ. ता.पु.पा. वाक्यादेव । १०. सर्वविदान्तप्रत्ययन्यायः ॥ ब्रा.सू. ३.३.१.

दण्डचक्रयोरिव हिरण्यगर्भं प्रत्येव कल्पभेदेनाण्डपद्मयोरिव वा तयोर्जनकत्वसम्भवादिति चेन्नैवम् । श्रुतिवाक्यानां परस्परविरोधाय 'सर्वे वेदा यत्पदमामनन्ती'ति श्रुत्या सर्ववेदान्तप्रत्ययन्यायेन चैकविषयत्वं तावदावश्यकम् । अन्यथा व्याहतभाषित्वापत्तेः । अविरोधश्च तत्र कारणवाक्येषु श्रुतानां, नारायणासाधारणशब्दानां केवलशिवपरत्वेन वा तत्र श्रुतानां शिवासाधारणशब्दानां केवलनारायणपरत्वेनोपपादनीयः । अथवा उभयोरन्यतरस्यान्यतराधीनतया कारणत्वमाश्रित्य प्रकारान्तरासम्भवात् ।

न चोभयोरपि स्वातन्त्र्येण कृत्स्नजगत्कारणत्वमुपपद्यते स्वीकृतं वा । कल्पभेदेन उभयोरपि जगत्कारणत्वे मानाभावात् । तथात्वे[1] परतत्त्वलक्षणस्य अतिव्याप्त्यापत्तेश्च । आवाभ्यामेकमेव परतत्त्वमित्यभ्युपगमात् । न च श्रुतिवाक्यानि तयोस्तथाकारणत्वव्यवस्थापकान्युपलभामहे । कृत्स्नजगत्कारणे कल्पभेदेनेति विशेषणस्य सार्थकत्वानुपपत्तेश्च । तदनुपादाने, व्यक्त्यन्तरेऽपि कृत्स्नजगत्कारणत्वस्य सत्त्वेन, अतिव्याप्तेर्वज्रलेपत्वात् । न च ईशाधीनो नारायण इति मया वा, नारायणाधीनो ईश इति त्वया स्वीकृतं वैपरीत्यस्योपगमात्[2] । एवञ्च उपनिषदि कारणं ब्रह्म किमिति ब्रह्मवादिप्रश्नगोचरार्थो नारायण एव वाच्यः । अन्यथा महोपनिषन्नारायणोपनिषत्सु बालोपनिषत्सु, तस्य हरशब्दितस्येषितव्यकोटिनिविष्टव्यत्वात् । बृहदारण्यकादिषु 'बुद्बुदस्त्र्यक्षः शूलपाणिः पुरुषोऽजायत', 'नारायणाद्रुद्रोऽजायत', 'ललाटात्क्रोधजो रुद्रः', 'इन्द्रो वरुणः सो रुद्रः पर्जन्यो यमो मृत्युरीशान' इति प्रसिद्धशिवस्य नारायणोत्पन्नत्वप्रतिपादकवाक्यविरोधः । 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इति नारायणस्य सन्निधेरेव शिवजन्यत्वं लभ्यते । न तु 'वाक्यत' इति वाक्येन तस्य बाध इति वक्ष्यते । किञ्च, श्वेताश्वतरे एव प्रथमाध्याये 'संयुक्तमेतत्क्षरमक्षरं च, व्यक्ताव्यक्तं भरते विश्वमीश' इति क्षराक्षरव्यक्ताव्यक्तशब्दितप्रमाणसिद्धकृत्स्नजगद्भरणकर्तृत्वरूपविष्णुसाधारणधर्मवत्त्वम्, ईशशब्दितस्योक्त्वा, स न प्रसिद्धः शिवः, किन्त्वनन्य एवेत्यवधारणाय, तदनन्तरमेव 'क्षरं प्रधानममृताक्षरं हरः । क्षरात्मानावीशते देव एक' इति तस्य हरशब्दितस्य ईशितव्यकोटिनिविष्टत्वाभिधानात् । 'तत्र मध्ये महान् प्रभुर्वै पुरुषः । सत्त्वस्यैव[3] प्रवर्तक' इति सत्त्वगुणप्रवर्तकत्वरूपविष्णुलिङ्गाभिधानात् । षष्ठाध्याये 'धर्मावहं पापनुदं भगेशमि'ति 'अर्थापयत्पादनखावसृष्टं जगद्विरिञ्चोपहृतार्हणाम्भः । शेषं पुनात्यन्यतमो मुकुन्दात् को नाम लोके भगवत्पदार्थः । इत्युपबृंहणान्नारायणासाधारणभगवच्छब्दपर्यायभगेशशब्दितस्य प्रसिद्धशिवान्यत्वावश्यम्भावादुपक्रमोपसंहाराभ्यां श्वेताश्वतरप्रतिपाद्यस्य प्रसिद्धशिवान्यत्वावधारणावश्यम्भावात् । यद्यपि 'व्यक्ताव्यक्तं भरत इत्यस्य 'हृग्रहोर्भश्छन्दसि'[4] इति वार्तिकस्मरणात् 'हृञ्हरण' इति धातुजत्वमपि

१. घ. ता.पु.पा. तथाच । २. घ. ता.पु.पा. वैपरीत्यस्योपयोगात् । ३. घ. ता.पु.पा. सत्त्वस्यैशः ।
४. 'हृग्रहोर्भः छन्दसि' ३-१-८४ वार्तिक ।

सम्भवति । तथापि 'डुभृञ् धारणपोषयणोरि'त्यस्यैव रूपमेतत् । भकारस्यौपदेशकस्यैव सम्भवेन शीघ्रोपस्थितिकत्वात् । अन्यथा व्यक्ताव्यक्तशब्दितप्रकृत्यंशयोर्नित्यतया, संहरणक्रियान्वयानुपपत्तेः[3]'' इति । तत्र मध्ये 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक' इति सत्त्वगुणप्रवर्तकत्वरूपविष्णुलिङ्गाभिधानात् । 'मुकुन्दात्को नाम लोके भगवत्पदार्थ' इत्युपबृंहणात् । षष्ठाध्याये 'धर्मावहं पापनुदं भगेशमि'ति भगशब्दितषाड्गुण्यरूपविष्णुलिङ्गत्वावेदनाच्च उपक्रमोपसंहाराभ्यां श्वेताश्वतरप्रतिपाद्यस्य प्रसिद्धशिवान्यत्वावधारणात् । किञ्च सामान्यतो जगत्कारणत्वेन तैर्निश्चितस्य, वस्तुतो नारायणरूपदेवतात्मकत्व एवैतच्छ्रुत्यानुगुण्यम् । श्वेताश्वतरे हि प्रथम खण्डे, हरशब्दार्थस्य 'हरं प्रधानममृताक्षरंहरक्षरात्मानावीशते देव एकः । तमीश्वराणां प्रथमं महेश्वरमि'त्यक्षरशब्दार्थत्वोक्तिपूर्वकमीशतव्यत्वमुच्यते । न हि स्वस्यैव स्वं प्रति ईशत्वमीशतव्यत्वञ्च युज्यते । ततश्च उपक्रमगतेशशब्दस्य मध्ये श्रुतानां तत्पर्यायाणां च, प्रसिद्धहरशब्दार्थादन्यपरत्वमावश्यकम् । स चान्यो नारायण एवेति । श्रुत्यन्तरानुगुण्याच्च । तथाहि— सोबालमहोपनिषन्नारायणोपनिषद्भिः सर्गाद्यसमये नारायणस्य सत्त्वं ब्रह्मेशानयोरसत्वं तज्जन्यत्वं च तयोर्विशिष्य प्रतिपाद्यत इति नैतदुपनिषन्निष्ठेशादिशब्दाः तद्वाच्यत्वेन प्रसिद्धशिवपराः स्वीकर्तुं शक्यः । तथासति विरोधतादवस्थ्यात् । न च वैपरीत्यं शङ्क्यम् । उपक्रमादिविरोधेन तच्छङ्कानुदयात् । सर्गाद्यसमये विशिष्टनारायणनिषेधकश्रुत्यनुपलम्भाच्च । किञ्चास्याः श्वेताश्वतरोपनिषदस्तदुपात्तेशादिशब्दबलात् नारायणान्यप्रसिद्धेशविषयत्वे, तत्र षष्ठाध्याये तमीश्वराणां प्रथमं महेश्वरम्', 'तं देवतान्यं परमं च दैवतम् । पतिं पतीनां परमं परस्ताद्विदाम देवं भुवनेशमीड्यम्, 'न तस्य कार्यं करणं च विद्यते', 'न तत्समश्चाभ्यधिकश्च दृश्यते', 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च', 'न तस्य कश्चित्पतिरस्ति लोके न चेशिता नैव च तस्य लिङ्गम् । सकारणं कारणकारणाधिपो न चास्य कश्चिज्जनिता न चाधिपः' इति वाक्ये 'तमीश्वराणा परमं महेश्वरम्' इति योगरूढमहेश्वरपदादेव निरवधिकैश्वर्यवान् रुद्र एवेति, इतरव्यावृत्तिसिद्धेः परमविशेषणानुपपत्तिः । न हि महेश्वरापेक्षयाऽप्यधिकाभावे परमविशेषणं साफल्यमश्नुते । न चायं स्तुतिप्रस्तावः । वस्तुतत्त्वप्रतिपादनप्रस्तावत्वात् । अपि च घटं प्रति दण्डचक्रयोरिव, हिरण्यगर्भं प्रत्येवाण्डपद्मयोरिव वा रुद्र-नारायणयोरुभयोरपि युगपत्कल्पभेदेन वा सर्गाद्यसमये जगत्सर्जनसमर्थहिरण्यगर्भजनकत्वे, कथं 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति रुद्रतुल्यपुरुषान्तरनिषेधोऽत्रत्योपपद्यते । तत्तुल्यस्य नारायणस्यैव सत्त्वात् । अपि च प्रसिद्धशिवस्य नारायणस्येव हिरण्यगर्भजनकत्वे सामवेदे प्रपदननामके मन्त्रे– 'विरूपाक्षाय दण्डं जये ब्रह्मणः पुत्राय नमः' इति तस्य हिरण्यगर्भपुत्रत्वप्रतिपादनविरोधः । तथा शतपथब्राह्मणे 'संवत्सरे कुमारो जायत

३. ताला.पा. - इत्यभिधानात् ।

तं प्रजापतिरब्रवीत्— कुमार किं रोदिषि यच्छ्रमात्तपसोऽधिजातोऽसि' इत्यादिना ब्रह्मपुत्रत्वतद्दत्त-रुद्रभवसर्वेशानपशुपतिभीमोग्रमहादेवरूपनामाष्टकवत्त्वादिप्रतिपादनेन तद्विरोधश्चेति । अपिच प्रसिद्ध-रुद्रस्य 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत' इति नारायणादुत्पत्त्यवगमात् । तत्परत्वे, अस्या उपनिषदो' न चास्य कश्चिज्जनिता न चाधिप' इत्यत्रैव कथं तज्जनकनिषेधो युज्यते । किञ्च श्वेताश्व-तरस्य नारायणादन्यविषयत्वे 'सहस्रशीर्षा पुरुषः', 'पुरुष एवेदꣳ सर्वमि'ति नारायणपरपुरुषसूक्तस्य, मन्त्राम्नानानुपपत्तिः 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक' इति तत्प्रतिपाद्ये सत्त्वगुणप्रवर्तकत्वरूप-विष्णुलिङ्गाम्नानानुपपत्तिश्च । न हि नारायणादन्यस्य सत्त्वगुणप्रवर्तकत्वं प्रमाणसिद्धम् । पुरुषसूक्तस्य च विष्णुपरत्वं वक्ष्यते । मैत्रायणीयोपनिषदि 'अथ यो ह वै खलु वा अस्य रजसोंऽशः सोऽसौ ब्रह्मचारिणः योऽयं ब्रह्म । अथ यो ह खलु वा अस्य सात्त्विकोंऽशः सोऽसौ ब्रह्मचारिणः योऽयं विष्णुः अथाथ यो ह खलु वा अस्य तमसोंऽशः सोऽसौ ब्रह्मचारिणः योऽयं रुद्र' इति विष्णोरेव सत्त्वांशत्वोक्तेस्तदितरयो-र्ब्रह्मरुद्रयोश्च राजसतामसांशत्वव्यवस्थितेः । तथा वाराहे अगस्त्यवराहसंवादे 'यत्सत्त्वं स हरिर्देवो हरिस्तत्परं पदम्, सत्त्वं रजस्तम इति त्रितयञ्चैतदुच्यते । सत्त्वेन मुच्यते जन्तुः सत्त्वं नारायणात्म-कम् । रजसा सत्त्वयुक्तेन भवेच्छ्रीमान् यशोधिकः । तच्च पैतामहं वृत्तं सर्वशास्त्रेषु पठ्यते । यद्वेद बाह्यकर्म स्यान्मामुद्दिश्योपसेव्यते । तद्रौद्रमिति विख्यातं कनिष्ठं गतितं नृणाम् । यद्धीनतपसा युक्तं केवलं तामसं तु यत् । यच्च मुक्तिप्रदं नृणां[1] इह लोके परत्र चे'ति रुद्रेण विष्णोरेव सत्त्वात्मकत्वाभिधानात् । तथा लिङ्गपुराणे चतुर्दशाध्याये— 'हिरण्यगर्भो रजसा तमसा शङ्करः स्वयम् । सत्त्वेन सर्वगो विष्णुः सर्वात्मा सर्वसन्मयः' । तत्रैव चतुस्त्रिंशाध्याये— 'त्वत्कोपसम्भवो रुद्रस्तमसा च समावृतः । त्वत्प्रसादाज्जगद्धाता रजसा च पितामहः । त्वत्स्वरूपात्स्वयं (त्वत्स्वरूपः स्वयं) विष्णुः सत्त्वेन पुरुषोत्तम' इति । तदनन्तरे चाध्याये— 'परमात्मानमीशानं तमसा रुद्ररूपिणम् । रजसा सर्वभूतानां सर्व[2]लीलाप्रवर्तकम् । सत्त्वेन सर्वभूतानां स्थापकं परमेश्वरम् । सर्वात्मानं महात्मानं परमात्मानमीश्व-रम् । दृष्ट्वा तं प्राह वै ब्रह्मा[3] भगवन्तं जनार्दनमि'त्यादि नन्दिकेश्वरवचनेन विष्णोरेव तथात्वाभिधा-नाच्च । पुराणान्तरेषु— 'सात्त्विकैः सेव्यते विष्णुस्तामसैरेव शङ्करः । राजसैः सेव्यते ब्रह्मा सङ्की-र्णैश्च(स्तु) सरस्वती' इत्युपासकस्वरूपकाभिधानेनोपास्यविष्णवादीनामपि सत्त्वादिधर्मत्वावधारणाच्च । 'यच्छीलस्वभी तच्छीलाः प्रकृतय' इति लोकप्रसिद्धेः[4] । अपिच प्रसिद्धं रुद्रस्यैव महाज्ञेयत्व-सर्वान्त-र्यामित्व-परब्रह्मत्व-परतत्त्वात्मकत्वाभिधानात् । तथाच तदनुरोधेनापि श्वेताश्वतरो नारायणपर एव

---

१. ताला.पा. तद्यद्भक्तिप्रदं नृणां । २. ताला.पा. सर्ग

३. ताला.पा. सर्वात्मानं च तं प्राह ४. 'यच्छील स्वामी तच्छीला प्रकृतयः' – लोकप्रसिद्धिः ।

अङ्गीकार्यः ॥ तैत्तरीयोपनिषदो नारायणपरत्वं वक्ष्यते । नारायणस्य महाज्ञेयत्वोक्त्या इतरस्याल्पज्ञेयत्वेन मुमुक्षुज्ञेयत्वस्य व्यावृत्तनात् । न च 'नारायण परंब्रह्मे'त्यत्र 'नारायणात्परंब्रह्म' इति पञ्चमीतत्पुरुषः शङ्क्यः । निषाधस्थपत्यधिकतरण[1]न्यायेन कर्मधारयत्वनिश्चयात् । उदाहृदानेकश्रुतिविरोधेन नारायणादन्यस्य तत्परत्वानुपपत्तेश्च ।

न च 'तत्त्वं नारायणः पर' इत्यत्र परशब्दस्य विवक्षितार्थलाभाय नपुंसकनिर्देशापत्त्या पुल्लिङ्गनिर्देशोऽनुपपन्न इति वाच्यम् । अथ 'योऽन्यां देवतां उपास्तेऽन्यासावन्योऽहमस्मीति' इति अत्र पुल्लिङ्गनिर्देशोपपत्तेः । अपि चास्याः श्वेताश्वतरोपनिषद उक्तरीत्या नारायणैकनिष्ठसुबालोपनिषत्प्रतिपन्नार्थानुवादितया तद्विरुद्धार्थपरत्वमयुक्तम् । उपजीव्यविरोधात्पुरोवादस्य चानुवादं प्रत्युपजीव्यत्वात् । न चैवं श्वेताश्वतरगतरुद्राद्यसाधारणेशादिशब्दानां नारायणे लक्षणाप्रसङ्गः । योगार्थस्य नारायणे सम्भवात्तद्रूढिमात्रबाधस्योदाहृतानेकश्रुतिन्याया(व)विरोधाय सह्यत्वात् ।

एतेन श्वेताश्वतरे 'यो देवानां[2] प्रथमश्चोद्भवश्च', 'विश्वाधिको रुद्रो महर्षिः । 'हिरण्यगर्भं जनयामास पूर्वमि'ति मन्त्रः, सर्वदेव[3]प्रथमहिरण्यगर्भजनयितृत्वाभिधानेन, शिवस्य सर्वकारणत्वमाविष्करोतीति निरस्तम् ॥ अस्य यदुपबन्धेन 'नारायणाद्ब्रह्मा जायत' इत्यनुवादत्वात् । न च वैपरीत्यं शङ्क्यम् । सर्गाद्यसमये 'नेशान' इति श्रुत्या रुद्रसत्त्वनिषेधेन, तस्य सर्वदेव[4]प्रथमहिरण्यगर्भजनयितृत्वासम्भवात् । 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत' इत्यादिना, नारायणाद्धिरण्यगर्भोत्पत्त्यनन्तरं, रुद्रोत्पत्त्यावेदनेन तदनन्तरभाविनो रुद्रस्य तज्जनकत्वानुपपत्तेश्च ॥ न च तत्र रुद्रेशानशब्दौ गुणभूतमूर्तित्रयान्तर्गतरुद्रपरौ न परशिवपराविति वाच्यम् । तदन्यप्रधानभूतपरशिवसत्त्वे मानाभावात् । भावे वा तस्य नारायणानन्यत्वाभ्युपगमेन विवादापर्यवसानात् । तथासति नाममात्र एव विवादापत्तेश्च । न ह्युभयवादिसम्प्रतिपन्नपरतत्त्वासाधारणधर्मवत्तया श्रुते वस्तुनि नाममात्रभेदेन भेदाभ्युपगमो युक्तः । तथासति जगज्जन्मादिकं प्रति स्वतन्त्रानेकचेतनात्मककारणस्वीकारापत्तेः । न चावाभ्यां तथा स्वीकृतम् । युक्तं वा । मूर्तित्रयान्तर्गतत्वेऽपि ब्रह्मरुद्रवद्विष्णोर्गुणभूतत्वे मानाभावाच्च । तच्च प्रतिपादयिष्यते । 'सर्ववेदान्तप्रत्यय'[5]न्यायानुरोधेन, रुद्रनारायणशब्दयोः रुद्रनारायणान्यतरविषयत्वे आवश्यके, तस्यान्यतरलक्षणां विना निर्वाहायोगेन, तत्स्वीकारस्यावश्यकत्वे 'यो देवानामि'ति मन्त्रस्य रुद्रपदस्यैव यदुपबन्धरूपनियामकसत्त्वेन नारायण एव तत्स्वीकाराच्च ।

---

१. 'निषाधस्थपत्यधिकरण' – मी.सूक्तम्- ६-१-१३-५१ २. ताला.पा. प्रभश्चोद्भवश्च ।
३. ताला.पा. प्रभव । ४. ताला. पा. प्रभव । ५. 'सर्ववेदान्तप्रत्यय'न्यायः – ब्रा.सू. ३-३-१.

एतेन 'यो देवानां[१] प्रथमश्चोद्भवश्चे'ति श्वेताश्वतरमन्त्रानुरोधेन 'यो देवानां[२] प्रथमं पुरस्ताद्विश्वाधिको रुद्रो महर्षिर्हिरण्यगर्भं पश्यत जायमानमि'ति तैत्तिरीयमन्त्रस्यापि विश्वाधिको रुद्रो 'अपरिमिताधिकरण'न्यायेन[३] स्वस्माज्जायमानं हिरण्यगर्भं लोकसृष्ट्यर्थं ज्ञानदृष्ट्या अपश्यदित्यर्थः । अत एव 'अव्यक्तादभवस्थाणुः शिवः परमकारणम् । सत्कार्यकारणोपेत ऋषिः विश्वाधिकः प्रभुः । देवानां प्रथमं दैवं जायमानं मुखाम्बुजात् । ददर्श चाग्रे ब्रह्माणमाज्ञया तमवैक्षत । दृष्टो रुद्रेण देवेशः ससर्ज सकलं जगदि'ति लैङ्गिकवचनोपबृंहणमुपपद्यत इति निरस्तम् । तस्यैवास्यापि यदुपबन्धेन 'नारायणाद्ब्रह्मा जायत' इत्यादिश्रुतिप्रतिपन्नार्थानुवादित्वात् । प्रतियोगिसव्यपेक्षस्य शब्दनिर्दिष्टस्याकाङ्क्षाशान्तये, तत्सन्निहितं तत्प्रतियोगितयाऽन्वेतीति 'ह्यपरिमिताधिकरण'न्याय[३]सिद्धोऽर्थः ॥ एवञ्चाकाङ्क्षारूपप्रकरणं सन्निधिमात्रमेव वा अत्र रुद्रस्य हिरण्यगर्भं प्रति जनकतायान्वये कारणमुक्तं भवति । तच्चायुक्तम् । न ब्रह्मेशानः 'तस्य ध्यानान्तस्थस्य ललाटा त्र्यक्षः शूलपाणिः पुरुषोऽजायत', 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत' इति हि वाक्यम् । तथासति सन्निधेः प्रकरणाच्च वाक्यस्य बलीयत्वेन, तद्विरोधेन तं प्रति सर्गादिसमये रुद्रस्य जनकत्वानुपपत्त्या, क्लृप्तत्वादुक्तरीत्या रुद्रशब्दस्य नारायण एव वर्तयितव्यत्वात् । 'अव्यक्तादभवस्थाणुरि'त्याद्युपबृंहणादपि न शिवस्य परमकारणत्वसिद्धिः । अव्यक्तादुत्पन्नस्य तस्य परमकारणत्वानुपपत्तेः । 'हरिꣳहरन्तमनुयन्ति देवाः विश्वस्येशानं ऋषभं मतीनामि'ति तैत्तिरीयश्रुत्या, रुद्रस्य हरिशब्दितविष्णुसंहार्यत्वावेदनाच्च । विश्वस्येशानं रुद्रं हरन्तं हरिमिति तच्छ्रुत्यर्थज्ञानात् 'ब्रह्माणमिद्रं रुद्रञ्च यमं वरुणमेव च । निगृह्य हरते यस्मात्तस्माद्धरिरिहोच्यत' इति भारतोपबृंहणात् । 'तस्येन्द्रो वम्रिरूपेण धनुर्ज्यामच्छिनत् स्वयं तदि'त्युपक्रम्य 'रुद्रस्यत्वेव धनुरार्त्तिः शिर उत्पिपेष सप्रवर्ग्योभवदि'त्यादि श्रुत्यापि रुद्रस्य तथात्वावेदनाच्च । अत एव ब्रह्माण्डे उदाहृतश्रुत्युपबृंहणम् । 'इन्द्रेण वम्रिरूपेण छिन्नो मम शिरोधरः । यन्नियोगात्प्रवर्ग्येण सहितः पूर्ववक्तृतौ' इति । तथोत्तरकूर्मपुराणोपबृंहणं— नृसिंह शरभ युद्धे शरभं प्रति नृसिंहः 'रक्षितुं नैव शक्तोऽसि (केनापि) स्वात्मानमपि शङ्कर । युद्धे किं जेष्यसि त्वं मां पूर्ववृत्तं मयोच्यते । यदा मद्भक्तशक्रस्य यज्ञध्वंसः कृतस्त्वया । तदाहं ते शिरः च्छित्वा तत्क्रतू रक्षितो मया । ततस्त्वां प्रार्थयामास मामभिष्टूय पार्वती । तदा वै मत्प्रसादेन प्राणान् लेभे भवान् शिवे'ति । तस्मात् 'यो देवानामि'ति तैत्तिरीयमन्त्रस्य रुद्रपरत्वेऽपि, महर्षिदृष्टमहायोगबलेन, कालत्रयवृत्तान्तसाक्षात्कारणसमर्थो रुद्रः, स्वजन्मनः प्रागेव नारायणाज्जातं हिरण्यगर्भं जायमानावशिष्टमेव योगबलादपश्यदित्येवास्मदीयानां तद्व्याख्यान-

---

१. ताला.पा. 'क' 'च' पा. – प्रभवश्चोद्भवश्च ।  २. ताला.पा. 'क' 'च' पा – प्रभवं ।

३. 'अपरिमिताधिकरण'न्यायः – मी.सू. ६-७-११-२३.

मुचितमिति । अत एव विभिन्नार्थकरुद्रनारायणपदसमभिव्याहृतवाक्योरनुवादत्वपुरोवादत्वे न सम्भवतः । सत्यपि यदुपबन्देन प्राप्तार्थत्वाभावेन तयोर्विधायकत्वमेव स्वीकर्तुमुचितमिति प्रत्यूढम् । तथा रुद्रनारायणयोरुभयोरपि जगन्निदानभूतहिरण्यगर्भजनकत्वेन तुल्यवज्जगत्कर्तृत्वोपपत्तेः । न चेष्टापत्तिः । जगज्जन्मादिकारणत्वरूपपरतत्त्वलक्षणस्य, रुद्रनारायणान्यतरमात्रधर्मत्वेन स्वीकृतस्यातिव्यापकत्वप्रसङ्गात् ॥ 'एकमेवाद्वितीयम्', 'न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादि परतत्त्वैकव्यक्तिसमाभ्यधिकराहित्यप्रतिपादकश्रुतिविरोधापत्तेश्च ॥ 'नैवेह किञ्चनाग्र आसीत्', 'अमूलमनाधारा इमाः प्रजा प्रजायन्ते', 'दिव्यो देवो एको नारायणः' इत्यादिना नारायणशब्दाभ्यासयुक्त 'अव्यक्तमक्षरे लीयते अक्षरं तमसि लीयते तमः परे देव एकीभवति । यदातमस्तं न दिवा न रात्रिः न सन्न चासच्छिव एव केवलः' इति विभिन्नार्थकनारायणशिवशब्दसमभिव्याहृतसौबालश्वेताश्वतरमन्त्रयोः पुरोवादत्वानुवादत्वोपलब्धेश्च । 'प्रजापतिर्वा इदमेक आसीत्, न रात्रिरासीत्, सोऽस्मिन्नन्धेतमसि प्रासर्पदि'त्यादिवाक्यवत् विनिगमकाभावेन उदाहृतसौबालवाक्यस्यापि 'यदा तम' इति श्वेताश्वतरं प्रति पुरोवादत्वमस्तीति वदता, विभिन्नार्थकपदसमभिव्याहृतयोरपि पुरोवादत्वानुवादत्वयोरभ्युपगमाच्च ।

एतेनैव तैत्तिरीये 'अणोरणीयानि'त्युपक्रमे हिरण्यगर्भप्रसादोत्थसाक्षात्कारविषयतया 'धातुप्रसादान्महिमानमीशमि'त्यसाधारणेशाभिधानश्रुतेः, 'विश्वाधिको रुद्रो महर्षिरि'ति तस्यैवोपक्रान्तस्येशस्य हिरण्यगर्भजनकतया रुद्रशब्देन परामर्शात् । 'यो वेदादौ स्वरः प्रोक्तो वेदान्ते च प्रतिष्ठितः । तस्य प्रकृतिलीनस्य यः परः स महेश्वरः' इति[१] तस्यैव महेश्वरशब्देनोपसंहाराच्च ॥ तस्य कृत्स्नानुवाक्यस्यैव शिवपरत्वमवसीयत इति निरस्तम् ॥ अस्मिन्नेव तैत्तिरीये परोपक्रमे[२] 'अम्भस्यपारे भुवनस्य मध्ये नाकस्य पृष्ठे महतो महीयानि'ति सामान्यतः किञ्चिदर्थं प्रस्तुत्य, विशेषतः प्रजापतिशब्देन तमभिधाय तस्य सर्वाधिष्ठातृत्वं सर्वान्तर्यामित्वं सर्वदेवाश्रयत्वं सर्वदेवात्मकत्वं मुमुक्षुज्ञेयत्वं सर्वेश्वरत्वादिकं चाभिधाय, मध्ये 'प्रजापतिः प्रथमजा ऋतस्ये'ति प्रजापतिशब्देन तं परामृश्य, 'सूर्याचन्द्रमसौ धाता यथापूर्वमकल्पयदि'ति प्रजापतिपर्यायधातृशब्दस्य तस्यैव पूर्वकालीनसर्जकत्ववद्वैषम्यराहित्येन सर्वजनकत्वोक्तेः । 'अणोरणीयानि'त्यत्रापि 'महतो महीयानि'ति प्रागुक्तस्यैव प्रत्यभिज्ञानाच्च ग्राह्यत्वात् । अन्यथाऽसञ्जातविरोधिपरमोपक्रमपरामर्शादिविरोधापत्तेः । एवञ्च प्रजापतिशब्दस्य हिरण्यगर्भपर्यायत्वे, उपक्रमाद्यविरोधाय ईशरुद्रशब्दाभ्यामपि हिरण्यगर्भस्यैव प्राप्त्या, 'विश्वाधिको रुद्रो महर्षिरि'ति मन्त्रे 'हिरण्यगर्भं जायमानमपश्यत्'[३] इत्यर्थाश्रयणापत्तेः । तस्य च सर्वथाऽनुपपन्नत्वात् । नारायणोपनिष-

---

१. ताला.पा. 'क' 'ख' पा.– इत्यदि । २. ताला.पा. – परमोपक्रमे ।

३. ताला.पा. 'च' पा. - इत्याश्रवणापत्तेः ।

न्महोपनिषद्भ्यां सर्गाद्यसमये प्रजापतेः नारायणोत्पन्नत्वप्रतिपादनाच्च, विशिष्य महोपनिषदि 'विश्वस्यायतनं हरिः' इत्यारभ्य 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड्विश्वरूपः', 'तमेवं विदित्वाऽतिमृत्युमेति', 'नान्यः पन्था' इति नारायणस्यैव प्रजापतिजनकत्वावेदनात् ॥ इतरज्ञानस्य मोक्षोपायत्वं प्रतिषिध्य, तज्ज्ञानस्यैव तत्त्वावेदनाच्च । तदविरोधायात्र प्रजानां पतिः प्रजापतिरिति रूढिमात्रं बाधित्वा योगाश्रयणेन, परमोपक्रमपरामर्शगतप्रजापतिशब्दस्य नारायणपरताया आवश्यकत्वेन, तदविरोधाय तद्गतेशरुद्रशब्दयोरपि नारायणपरत्वे वाच्ये, रुद्रस्य हिरण्यगर्भजनकत्वशङ्काया एवानुत्थानात्, अन्यथा अत्रैवोत्तरत्र 'सहस्रशीर्षत्वस्य, 'सहस्रशीर्षं देवं सहस्राक्षमि'ति नारायणधर्मत्वेन महोपनिषत्प्रतिपन्नस्य, बहुधा नारायणशब्दाभ्यासस्य चासङ्गत्वापत्तेः । बहुबाधस्यान्याय्यत्वात् । 'अम्भस्य पारे' इत्यनेन अपारे अम्भसि महतो महीयानिति तदाश्रिततया कस्यचिन्महतोमहीयस्त्ववर्णनबलेन, 'आपो नारा इति प्रोक्ता' इति मानववचनसंवादेन, अपाराम्भसाश्रितस्य महतोमहीयसो योगरूढनारायणशब्दार्थत्वावेदनाच्च । एवञ्च तत्रैव 'यमन्तः समुद्रे कवयो वयन्ती'त्यादिना समुद्रान्तःस्थत्वादिरूपनारायणासाधारणधर्मपुरस्कारेणोपक्रान्तप्रजापतेः 'तदेव ब्रह्म परमं कवीनामाहुरि'ति ज्ञानिनां मते परब्रह्मत्वाभिधानं 'यो वेदादौ'[1] स्वरः प्रोक्त' इत्यादि(ना) 'प्रकृतिलीनस्ये'त्यस्य, प्रकृतिप्रत्ययविभागेन साधुशब्दव्याख्याने प्रवृत्तेन परमाभियुक्तेन शाकटायनेन, 'अवतेष्टिलोपश्च'[2] इति उणादिसूत्रेण 'ॐ इति प्रणवस्यावरक्षण' इति धातुप्रकृतिकत्वमङ्गीकृत्य 'व्युत्पादनात् प्रकृतावरक्षण' इति धातौ लीनस्य मग्नस्य, तथा स्फुटं प्रतीयमानस्य तद्धातुनिष्पन्नस्य, रक्षणार्थक(कार्य)स्य तस्य प्रणवस्य, तत्परमिदंपरमित्यादौ प्रतिपाद्येऽपि, परशब्दप्रयोगदर्शनात् परः प्रतिपाद्यः पालनगुणविशिष्ट एव यो नारायणः सोऽत्र महेश्वरो विवक्षितः, न प्रसिद्ध इति चोपपादनं प्रतिपाद्यते । न हि नारायणादन्यो जगत्पालकत्वेन प्रसिद्धः । प्रसिद्धमहेश्वरस्य जगत्संहर्तृत्वेन प्रसिद्धेः ॥ तथा च श्रुतिः— 'अहं रुद्राय धनुरातनोति ब्रह्मद्विषे शरणे हन्त वा उ', 'मा हिंसीः पुरुषं जगदि'त्यादिः । अतोऽयमनुवाकः कृत्स्नोऽपि नारायणपरः ।

एतेनैव 'यो वेदादावि'ति मन्त्रस्य नारायणपरत्वं नोपक्रमानुरोधेन । 'धातुः प्रसादान्महिमानमीशमि'तीशपदेन योगरूढिभ्यां शिवे असाधारणेनोपक्रमात् । नापि परामर्शानुरोधेन । 'विश्वाधिको रुद्रो महर्षीरि'ति मध्ये रुद्रशब्देन शिवस्यैव परामर्शेन, प्रकरणस्य तत्परत्वावसायात् । नाप्यस्मिन् मन्त्रे विधेयानुरोधेन । 'यः परः स महेश्वर' इति महेश्वरपदेन शिवासाधारणेन, 'यः पर' इत्यनूदितस्य परस्य शिवरूपताविधौ तात्पर्यावसायात् । नाप्यनुवादानुरोधेन प्रणवप्रकृते ह्यत्रानुवादः । तस्य च प्रकृतिर्नाद

१. ताला.पा. – यद्वेदादौ । २. अवतेष्टिलोपश्च – पा.उ.सू. – १४७.

एव । भागवते 'समाहितात्मनो ब्रह्मन् ब्रह्मणः परमेष्ठिनः । हृदयाकाशादभूत्राद' इत्यादिना तस्य नादप्रकृतिकत्वावसायात् । नादस्य च शिव एवार्थो न नारायणः 'एवं'[१] तिसृतिरूपेतं मात्राभिरखिलं त्रिधा । अभिध्याय शिवात्मानं बोधयती'त्यादिपुराणवचनैः तस्य शिवप्रतिपादकत्वनिर्णयात् । तस्मादयमपि मन्त्रः प्रकमात्परामर्शाद्विध्यनुवादस्वारस्याच्च शिवपरः । ततश्चैतदनुवाकमध्यविहिता दहरोपासनापि, न शिवान्यविषयमालम्बत इति निरस्ताः ॥ उक्तरीत्या परमोपक्रमगतप्रजापतिशब्दस्य नारायणपरत्वावश्यम्भावेन तदनुरोधेनैव चरमश्रुतसन्दर्भस्य नेयत्वात्, प्रणवस्य स्रवत्यनोङ्कृतं ब्रह्म परस्ताच्च विशीर्यत' इति श्रुतिबलात्, 'यो वेदादौ स्वरः प्रोक्त' इत्यादौ स्वरशब्दार्थत्वेन स्वीकार्यस्यावतिप्रकृतिकत्वेनावतेश्च, पालनापरपर्यायरक्षणार्थत्वेन, रक्षणस्य च विष्णवसाधारणव्यापारत्वप्रसिद्धेः[२]अनुवाद्यानुरोधेनापि एतन्मन्त्रस्य नारायणपरकत्वावश्यम्भावाच्च । अन्यथा 'अहमेकोऽखिलगुणो वाचकः प्रणवो ममे'ति प्रणवस्य विष्णुवाचकत्वप्रतिपादकस्मृतिविरोधापत्तिः । 'समाहितात्मनो ब्रह्मन्नि'त्यादि भागवतवचनस्यापि, ॐकारेण 'सर्ववाक् सन्तृणे'तिवत् स्तावकत्वेन प्रणवशब्दितोङ्कारस्य नादप्रकृतिकत्वे मानत्वायोगाच्च । न हि ततस्तस्य नादप्रकृतिकत्वं कण्ठरवेण प्रतीयते । नादप्रकृतिकत्वेऽपि नादस्य शिवपरत्वे मानाभावाच्च । न च उदाहृतपुराणवचनं तत्र मानम् । तत्र पुराणे 'शिवात्मानमि'त्यस्य शिवस्यात्मानमन्तर्यामिणमित्यर्थपरत्वात् । अन्यथा 'आत्मानमि'त्यस्य वैयर्थ्यात् । अत एव अस्मादयमपि मन्त्रः प्रक्रमाद्विध्यानुवादस्वारस्याच्च शिवपरः । ततश्चैतदनुवाकमध्यविहिता दहरोपासनापि तद्विषयेव, न नारायणविषयेति प्रत्यूढम् । उक्तरीत्या प्रक्रमस्य शिवविषयत्वासिद्धेः । अतः एवैतदन्तर्गतस्य 'तस्मिन्यदन्तस्तदुपासितव्यमि'ति दहरोपासनाविधानस्य नारायणदैवत्यतया, समनन्तरानुवाके 'पद्मकोशप्रतीकाशमि'त्यादिना अपेक्षितगुणविधायके 'सहस्रशीर्षमि'त्यादिना नारायणमहिमा प्रपञ्चत इति किमनुपपन्नम् । तथाच अत्रोदाहृतसुबालोपनिषदादिषु च नारायणस्यैव सर्वकारणत्व-सर्वाधिष्ठातृत्व-सर्वात्मकत्व-मुमुक्षूपास्यत्व-विश्वपतित्व-अनन्येश्वरत्व-रूपस्वातन्त्र्यादीनामसाधारण्येन प्रतिपादनात्, तदनुरोधेनापि श्वेताश्वतरोपनिषदपि कात्स्न्र्येन नारायणपरैवाङ्गीकर्तुमुचिता । एवञ्च कथं न प्रकृते 'छागपशु'[३]न्यायावतारः ।

एतेनैव 'हिरण्यगर्भः समवर्तताग्र' इत्यादेः 'अद्भ्यः सम्भूत' इत्यादिना नैकार्थोऽपि तत्रैव चतुर्मुखासाधारणप्रजापतिशब्ददर्शनात् । पुरुषशब्दस्य तु साधारण्येन चतुर्मुखेऽपि सम्भवात् । 'अम्भस्यपार' इत्यत्रापि 'प्रजापतिश्चरतिगर्भे अन्तः'[४], 'सनो बन्धुर्जनिता संविधाता', 'सूर्याचन्द्रमसौ

१. ताला.पा. – 'एवं तिसृभिरप्येतन्मात्राखिलं' ।
२. ताला.पा. – आपाद्यानुरोधेनापि ।
३. छागपशुन्यायः – मी.न्या. ६-८-९-३०.
४. ताला.पा. – तेन ।

धाता यथापूर्वमकल्पयत्' इति प्रजापत्यादिशब्ददर्शनादेतत्त्रितयानुरोधेन हिरण्यगर्भ एव जगत्कारणतया परतत्त्वमितिपक्षोऽपि प्रत्यूढः । 'न ब्रह्म, नेशाने'ति हिरण्यगर्भादिनिषेधसहितविशेषश्रुत्या, तज्जगत्कारणत्वस्य बाधिततया वक्तव्य'विशेषाभावात् । 'अम्भस्यपारे' इत्यनुवाके 'यमन्तः समुद्रे कवयो वयन्ती'ति प्रतिपन्नसमुद्रशायित्वस्य, 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्तादि'ति प्रतिपन्नतमसः पारवर्तित्वस्य, 'सर्वे निमिषाजज्ञिरे विद्युतः पुरुषादधी'ति प्रतिपन्नादित्यवर्णपुरुषत्वस्य, 'स आपः[2] प्रदुघे उभे इमे'ति प्रतिपन्नविचित्रजगत्कारणत्वस्य, 'एवं विदुरमृतास्ते भवन्ती'ति प्रतिपन्नमोक्षोपायज्ञानविषयत्वस्य, 'विश्वतश्चक्षुरुत विश्वतोमुख' इति नारायणपुरुषसूक्ताम्नातसहस्रशीर्षत्वादिप्रत्यभिज्ञापकप्रतिपन्नविश्वतश्चक्षुष्ट्वादेः, प्रजापतिशब्दिते हिरण्यगर्भेऽनुपपत्तेश्च । प्रसिद्धप्रजापतेश्च नारायणकार्यत्व-तन्नियम्यत्व-कर्मवश्यत्वादिना प्रतिपन्नत्वान्नारायणस्यैव परिशेषात् 'न कर्मणा वर्धते नो कनीयानि'त्यादिश्रुत्या प्रतिपन्नकर्मप्रत्युक्तवृद्धिह्रासनिषेधभाक्त्वस्य, वक्तव्यत्वान्मध्ये 'अणोरणीयान्महतो महीयानि'त्यादौ 'तमक्रतुं पश्यत वीतशोक' इति तत्प्रतिपाद्यस्य कर्मराहित्योक्तेश्च । 'आचार्यवान् पुरुषो वेद' इति श्रुत्यनुसारेणेशशब्दितनारायणज्ञानहेतुप्रसादकारित्वेन धातृशब्दितप्रजापते-(राचार्य)रवार्यत्वावगत्या, तस्य प्राधान्येन मुमुक्षुज्ञेयत्वानुपपत्तेः । यो देवानां प्रथमं पुरस्तादि'ति प्रतिपन्नहिरण्यगर्भजनकत्वानुपपत्तेश्च । न हि स्वयमेव सर्वतः प्रथमकार्यं स्वं प्रति कारणं चेति युज्यते । किञ्चैतन्महोपनिषत्प्रतिपाद्यत्वे हिरण्यगर्भस्य 'यो वेदादौ स्वरः प्रोक्तः' इति प्रतिपन्नप्रणवप्रतिपाद्यत्वमहेश्वरत्वानुपपत्तिः । न ह्यनुवाद्योङ्कारार्थभूतविष्णवसाधारणधर्मभूतपालनत्वमस्योपपद्यते । अपि चास्या महोपनिषदः हिरण्यगर्भपरत्वे 'सहस्रशीर्षं देवमि'त्याद्युत्तरवाक्यप्रतिपन्न नारायणवत् पुरुषसूक्ताम्नात(त)द्धर्मभूतसहस्रशीर्षत्वाद्यनुपपत्तिः । तस्य चतुर्मुखत्वेनैव प्रसिद्धत्वात् । मुखस्य शिरोऽविनाभूतत्वेन सहस्रशीर्षत्वे सहस्रमुखत्वापत्तेः । अपिच एवं दशकृत्वः अनन्यसाधारणनारायणशब्दाभ्यासानुपपत्तिः । हिरण्यगर्भवाचकशब्दापेक्षयाऽत्र नारायणासाधारणाच्युतहरिशब्दसहितनारायणशब्दानां बहुत्वेन, तदनुरोधेनाल्पतद्बाधस्यैव न्याय्यत्वात् । किञ्च 'नारायणं महाज्ञेयमि'ति ज्ञेयेषु नारायणोत्कर्षविधानानुपपत्तिः । तथा 'विश्वं नारायणं', 'विश्वात्मानमि'ति नारायणपरसुबलोपनिषत्प्रतिपन्नसर्वशरीरकत्वसर्वान्तर्यामित्वयोः परमप्रभुत्वस्य च, विधानानुपपत्तिः ।

एतेन नारायणस्य विश्वात्मकत्वे तदभेदापत्तिरिति निरस्तम् । अत्र एवोत्तरत्र 'विश्वमेवेदं पुरुष' इत्युक्ते तत्कुत इत्याक्षिप्ते विश्वमुपजीवतीति उपजीव्योपजीवक(त्व)भावसम्बन्धेन तथा व्यपदेशयति(इति) प्रदर्शनात् । किञ्च हिरण्यगर्भस्यैतदुपनिषत्प्रतिपाद्यत्वे, 'विश्वतःपरमान्नित्यमि'ति

१. ताला.पा. – दोषाभावात् । २. ताला.पा. – प्रदुघ्ये ।

पूर्वोत्तरावधिराहित्यप्रतिपादनानुपपत्तिः । 'नारायणाद्ब्रह्मा जायते', 'नारायणे प्रलीयन्त' इत्यादिश्रुत्या अस्योभयावधित्वप्रतिपत्तेः । किञ्चैवं 'पतिं विश्वस्यात्मेश्वरमि'ति न तस्येशः कश्चन तन्नाम महद्यश इति विश्वपतित्वानन्येश्वरत्वजीवात्मजातेश्वरत्वरूपस्वातन्त्र्यानुपपत्तिः । तथा 'नारायणपरं ब्रह्मे'ति परब्रह्मत्वानुपपत्तिः । न च 'नारायणात्परं ब्रह्मे'ति परब्रह्मत्वानुपपत्तिः । न च 'नारायणात्परं ब्रह्मे'ति पञ्चमीसमासोऽत्र विवक्षितः । 'निषाधरस्थपत्यधिकरण'[1]न्यायेन बाधकं विना कर्मधारयत्यागायोगात् । तत्र हि व्यधिकरणतत्पुरुषात्समानाधिकरणतत्पुरुषस्य विभक्त्यर्थलक्षणागौरवाभावेनाभ्यर्हितत्वस्थितेः ॥ 'अहमेव परंब्रह्म परतत्त्वं पितामह । अहमेव परंज्योतिः परमात्मा त्वहं विभुरि'ति लिङ्गपुराणे ब्रह्माणं प्रति भगवता नारायणेनोक्तेर्नारायणस्यैव परब्रह्मतादिप्रतिपादकलिङ्गवचनरूपोपबृंहणानुगुण्याच्च न समानाधिकरणतत्पुरुषत्यागो युक्तः । प्रक्रमानुरोधेन नारायणप्रतिपादिकादुत्पन्नस्य सुपः 'सुपांसुलु'[2]गित्यादिना लुक्सम्भवेन तथा निर्देशोपपत्तेश्च । एवं 'तत्त्वं नारायणः पर' इति विहितपरतत्त्वरूपवत्त्वानुपपत्तिश्च । न हि नारायणजन्यस्य स्वात्मान्तभविन कृत्स्नजगत्कारणत्वरूपपरतत्त्वरूपत्वमुपपद्यते । 'येऽन्यं देवं परत्वेन वदन्त्यज्ञानमोहिताः । नारायणाज्जगन्नाथान् ते वै पाषण्डिनः स्मृताः ॥ अस्मादन्यं परत्वेन चेतयानो ह्यचेतनः । स पाषण्डीति विज्ञेयः सर्वकर्मबहिष्कृतः ॥ यस्तु नारायणं देवं समत्वेनाभिमन्यते । स तु तेनावमानेन नरकं याति वर्तते', तथा 'ये तु सामान्यभावेन मन्यन्ते पुरुषोत्तमम् । ते वै पाषण्डिनो ज्ञेयाः नरकार्हा नराधमाः' इति ब्रह्माण्डकौर्मयोः साधारणस्यैकस्य भागवतवचनत्रयस्य चानुपपत्तिश्च । एवं 'नारायणपरंज्योतिरि'त्यादिप्रतिपन्नपरंज्योतिश्वपरध्यातृत्व-परध्यानत्व-प्रत्यक्षादिप्रमाणप्रतिपन्नसर्वप्रपञ्चव्याप्तित्वानुपपत्तिश्च ।

किञ्च 'ब्रह्मविदाप्नोतिपरमि'ति श्रुतिप्रतिपन्नमुमुक्षुज्ञेयब्रह्मलक्षणभूतानन्तत्वाव्ययत्वाद्यनुपपत्तिः । न हि देशतः कालतो गुणतश्च परिच्छेदराहित्यरूपानन्तशब्दार्थत्वं हिरण्यगर्भस्योपपद्यते । न च सर्गाद्यकाले 'न ब्रह्मा नेशान' इति निषिद्धसत्त्वस्य कालतः परिच्छेदराहित्यं सम्भवति । एवं 'यमन्तः-समुद्रे कवयो वयन्ती'त्यनुवाके पूर्ववाक्यप्रतिपन्नस्य समुद्रान्तःशायित्वरूपस्य नारायणलिङ्गस्य 'समुद्रेऽन्तं विश्वशम्भुवमि'ति पुनरभ्यासानुपपत्तिः । न हि नारायणाभिधानेकश्रुतीनां तल्लिङ्गाभ्यासस्य च, प्रजापत्याद्यल्पाभिधानश्रुतिभिर्बाधमङ्गीकृत्य अस्या उपनिषदः हिरण्यगर्भपरत्वाङ्गीकारो युक्तः । तस्मादत्र प्रजापत्यादिशब्दाः परमकारणत्वादिना परतत्त्वभूतनारायणमेव प्रतिपादयन्ति ॥ किञ्च 'सप्तदश प्रजापत्यान् पशूनालभत' इत्यादौ 'श्यामा एकरूपा भवन्ति एवमिव हि प्रजापति समृध्या' इति प्रजापतेः शामत्वैकरूपत्वोक्त्या प्रजापतिशब्दस्य विष्णुविषयतायां क्लृप्तत्वेन तद्विषयत्वं कल्प्यम् । तथा

१. निषाधरस्थपत्यधिकरणन्यायः । मी.सू. ६-१-१३-५१. २. 'सुपांसु लुक्' – पाणिनि सू. ७-१-३९.

'आश्रावये'ति चतुरक्षरं 'अस्तुश्रौषडि'ति चतुरक्षरं 'यजे'ति द्व्यक्षरं 'ये यजामह' इति पञ्चाक्षरं 'द्व्यक्षरो वषट्कार एष वै सप्तदशः प्रजापतिरि'त्यस्य 'चतुर्भिश्च चतुर्भिश्च द्वाभ्यां पञ्चभिरेव च । हूयते च पुनर्द्वाभ्यां समे विष्णुः प्रसीदतु' इति महाभारतवचनेन विष्णुविषयत्वव्यञ्जनादपि प्रजापतिशब्दस्य विष्णुविषयत्वं क्लृप्तम् । प्रत्युक्तश्चासौ प्रजापतिशब्दः नारायणविषयता महाभारते । अन्यत्र 'राजाधिराजः सर्वेष्टविष्णुः सर्वमयो महान् । ईश्वरं तं विजानीमः स पिता स प्रजापतिरि'ति ॥ एतेनैतन्महोपनिषत्स्था ईशरुद्रेशानशब्दा व्याख्याताः । तेषां प्रसिद्धशिवविषयत्वे उक्तदोषानतिवृत्तेर्वक्ष्यमाणरीत्या तेषां विष्णुविषयत्वोपपत्तेश्च ॥

नन्वस्या उपनिषदो न विष्णुविषयत्वमुपपद्यते । तथात्वाङ्गीकारे 'परात्परतो ब्रह्मा तत्परात्परतो हरिः । तत्परात्परतो हीशः'[1] इति शिवस्य हरिशब्दितनारायणात् परत्वस्य शिवसङ्कल्पोपनिषद्वाक्येन कण्ठरवेणैव प्रतिपादनात् तद्विरोधापत्तेः । अत एव अत्र उपनिषदि 'नारायण परंब्रह्मे'त्यत्रोक्तन्यायेन न कर्मधारयाश्रयणं युक्तम् । किन्तु पञ्चमीतत्पुरुषाश्रयणमेव युक्तमिति चेन्न । उदाहृतमहोपनिषन्नारायणोपनिषदाद्यनुरोधेन नारायणस्य सर्गाद्यकाले ब्रह्मेशजनकत्वेन प्राधान्याद्ब्रह्मणोऽपि शिवापेक्षया प्रागुत्पन्नत्वेन ज्येष्ठतया प्राधान्यात् शब्दक्रमापेक्षया अर्थक्रमस्य बलीयस्त्वेन तत्परात्परो हीशः, तत्परात्परतो ब्रह्मा, तत्परात् परतो हरिरित्यर्थक्रमस्यैव [2]आदर्तव्यत्वात् । अत एव 'नारायण परंब्रह्मे'त्यत्र नैतच्छ्रुत्यनुरोधेन पञ्चमीतत्पुरुषः । किन्तु उक्तन्यायेन कर्मधारय एव । अन्यथा अत्रैवोत्तरत्र 'तस्याः शिखाया मध्ये परमात्मा व्यवस्थित' इति प्राक्प्रस्तुतस्य नारायणस्य 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत' इति स्मृत्या नारायण एव प्रसिद्धपरमात्मत्वोक्तिरसङ्गता स्यात् । महोपनिषदि समानप्रकरणेन 'नारायणपरं ब्रह्मे'ति पदविच्छेदेनाध्ययनदर्शनानुपपत्तेश्च । किञ्च 'यो देवानां नामधा एक एवे'ति सावधारणश्रुतेः[3] सकलदेवनाम्नामेकस्तावन्मुख्यार्थोऽङ्गीकार्यः ॥ स च 'ब्रह्मैव वाचः परमं व्योमे'ति श्रुतेः ब्रह्मरूप एव स्वीकार्यः । ब्रह्मशब्दश्च 'अथ कस्मादुच्यते ब्रह्मेति, बृहन्तो ह्यस्मिन्गुणा' इत्यादिश्रुतेः 'यमन्तः समुद्रे कवयो वयन्ती'ति पूर्ववाक्यो समुद्रशायित्वरूपनारायणासाधारणधर्मोक्तिपूर्वकं 'तदेवर्तं तदुसत्यमाहुस्तदेव ब्रह्म परमं कवीनामि'त्यादि श्रुत्या [4]कवीनां मते तदेव ब्रह्माहुरिति तद्धर्मवति ब्रह्मशब्दस्यार्थप्रसिद्धेः, एवकारेण मुख्यार्थत्वावगमाच्च, योगरूढिभ्यां नारायण एव स्वीकार्यः ॥ तथा नारायणपरपुरुषसूक्ते— 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदाऽऽस्ते', 'धाता पुरस्ताद्यमुदाजहार शक्रः प्रविद्वान् प्रदिशश्चतस्रः', 'तमेवं विद्वानमृत इह भवति नान्यः पन्था अयनाय

१. ताला.पा. – तत्परात्पर ईशः स्यात् ।
२. ताला.पा. – बलीयस्त्वात् ।
३. ताला.पा. 'च' 'ग' पा. – सकलदेवनाम्नां नामैकस्यभावात् ।
४. ताला.पा. – ज्ञानिनां मते ।

विद्यत' इत्यादिवाक्येन प्रविद्वान् = प्रकृष्टज्ञानवान्, शक्रः तद्वत्परमैश्वर्यसम्पन्नो धाता धीरः, सन्नामरूपात्मकबहुविधप्रपञ्चसर्जने एकेनैव मयैतावत्कथं सर्जनीयमिति[1] बुद्धिरूपालस्यापादितमनोव्यापाररहितः सन्, 'सर्वाणि रूपाणि विचित्य' तथा 'नामानि कृत्वा पुरस्तात् प्रथमतश्चतस्रो दिशः प्रतिचक्षुर्दिक्षुदिक्षु तैर्नामभिः, यमुदाजहार = प्रतिपादितवान् । पश्चात् तन्नामविशिष्टतया, सर्वाणि रूपाणि, अभिवदन्यदास्ते इति यत्तस्मात्सर्वशब्दमुख्यार्थत्वात् । एवमुक्तप्रकारेण सहस्रशीर्षत्यादिना तं विद्वान् प्रक्रान्तं महापुरुषं जानन् पुमानिहामृतो[2] भवति । तज्ज्ञानमेव मोक्षोपायः ॥ न हि तस्योपायान्तरमस्तीत्यर्थकेन नारायणस्यैव सर्वशब्दमुख्यार्थत्वावगमात् । एवमुक्तप्रकारेण नारायण एव सर्वशब्दमुख्यार्थोऽङ्गीकार्यः ॥ तथा 'नामानि विश्वाभि न सन्ति लोके यदाविरासीदनृतस्य सर्वम्', 'नामानि सर्वाणि यमाविशन्ति तं वै विष्णुं परममुदाहरन्ति', 'वचसां वाच्यमुत्तमम्', 'वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः । तावन्ति हरिनामानि कीर्तितानि[3] न संशय' इत्यादिश्रुतिस्मृतिभिरपि नारायणस्यैव सर्वशब्दवाच्यत्वमङ्गीकरणीयम् । एवं 'अहं विजानामि विविक्तरूपो न चास्ति वेत्ता मम [4]चित्सदाहम् ।', 'वेदैरनेकैरहमेव वेद्यः वेदान्तकृद्वेदविदेव चाहम्', 'सर्वे वेदाः यत्रैकीभवन्ति', 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदविदेव चाहम्', 'नारायणपरा वेदाः', 'नताः स्म सर्ववचसां (नतोऽस्मि) प्रतिष्ठा यत्र शाश्वती', 'वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते', 'वेदे रामायणे चैव भारते भरतर्षभ ।[5] आदौ मध्ये तथा चान्ते विष्णुः सर्वत्र गीयते', 'नमो भगवते तस्मै व्यासायामिततेजसे । यस्य प्रसादाद्वक्ष्यामि नारायणकथामिमाम्' इति श्रुति-स्मृति-वैशम्पायनवचनैर्नारायणस्यैव मुख्यतः सर्ववेदमहातात्पर्यगोचरत्वावगतेः[6] ॥ तथाच तैत्तिरीयमहोपनिषद्गतप्रजापत्यादि देवनाम्नामन्योपनिषद्गतदेवनाम्नां च मुख्यवृत्त्या प्रतिपाद्यो नारायण एव स्वीकार्यः ॥ न हि बाधकं विना मुख्यार्थत्यागो युज्यते । एवमेव इतरोपनिषदाञ्च महातात्पर्यविषयोऽपि स एव स्वीकार्य इति कथं ब्रह्मेशानयोः तन्मुख्यार्थत्वप्रसक्तिः ? तन्महातात्पर्यविषयत्वप्रसक्तिर्वेति तस्मान्नारायणविषयैवेऽयमुपनिषत् ॥

ननु नारायणशब्दस्य रूढौ मानाभावात् योगमात्रस्य विष्णुत्वानिश्चायकत्वात् अस्या उपनिषदो नारायणविषयत्वेऽपि न विष्णुविषयत्वनिश्चय इति चेन्न । नारायणशब्दस्य केवलयोगिकत्वे णत्वा-

---

१. ताला.पा. – बुद्धिरूपालस्यादितन्मनोव्यापाररहितः सन् । २. पुमानमृतो ।
३. ताला.पा. – कथितानि । ४. क.पा. – चित्ते ।
५. ताला.पा., क. ग. पा. – वेदे रामायणे चैव पुराणे भारते तथा ।
६. ताला.पा. – गोचर अवगतार्थः ।

नुपपत्तिः रूढत्वे च 'पूर्वपदात् संज्ञायामग'[1] इति विहितस्य संज्ञात्वनिमित्तकस्य णत्वस्य सम्भवात् । न च तथापि नारायणशब्दस्य न संज्ञात्वे मानमिति वाच्यम् । अनाद्यवगीताभियुक्तव्यवहारस्यैव तत्र मानत्वात् । 'विष्णुर्नारायणः कृष्ण' इत्यादिकोशप्रसिद्धेश्च । न हि नारायणशब्दस्य देवतान्तरनामत्वे सास्ति । न च सर्वनामशब्दे संज्ञात्वेऽप्यणत्ववन्नारायणशब्दे णत्वं सम्भवतीति वाच्यम् । तत्र 'सर्वादीनि सर्वनामानि'[2] इति सूत्रकृता णत्वाभावस्य निपातितत्वेन तत्सम्भवेऽपि नारायणशब्दे तदभावेन[3] संज्ञात्वं विना णत्वासम्भवात् । न चैवं नारायणशब्दस्य संज्ञात्वेन विष्णौ रूढत्वे डित्थादि-शब्द इव योगे प्रमाणाभावः । 'आपो नारा इति प्रोक्ताः आपो वै नरसूनवः । तायदस्यायनं पूर्वं तेन नारायणः स्मृतः' इत्यादि वक्ष्यमाणमन्वादिस्मृतेः तत्र मानत्वात् । नारदीये यादवगिरिमाहात्म्ये— 'आपो हि नारशब्दार्थाः नारा विष्णोः समुद्भवः । अयनं तायदस्यासीत्तेन नारायणः स्मृतः', 'नरो हि भगवान् विष्णुः तज्जास्तद्योगिनोऽपि वा । नारास्तदयनं व्याप्य तेन नारायणः स्मृतः'[4] अथवा नेतृ-भूतोऽयं नरो नारं चराचरम् । वासस्थानमिदं सर्वं तेन नारायणः स्मृतः', 'ज्ञानशक्त्यादयो यस्य गुणा [5]नारा इति स्मृताः । षाड्गुण्यपरिपूर्णोऽयं तेन नारायणः स्मृतः' इति नारदेन योगवृत्त्यापि विष्णोरेव नारायणशब्दार्थत्वमित्यभिधानाच्च । तस्मान्नारायणशब्दो विष्णौ योगरूढ एवेति उदाहृतोपनिषदपि तद्विषयैव, नेतरविषयेति ।

एतेन अस्यामुपनिषदि 'निधनपतय' इत्यारभ्य 'सद्योजातं प्रपद्यामी'त्यादिना रुद्रशब्दितस्य सदाशिवस्य सद्योजातवामदेवाघोरतत्पुरुषेशानाख्यानेकरूपाण्यभिधाय 'ईशानः सर्वविद्यानामि'ति सर्व-विद्येशानत्व-सर्वभूतेश्वरत्व-जीवजाताधिपतित्व-जीवश्रेष्ठचतुर्मुखाधिपतित्व-मङ्गलसद्यरूपत्व-प्रति-पादनान्मध्ये रुद्रपरश्रीरुद्राम्नातेन 'नमो हिरण्यबाहव' इति वाक्येन तत्प्रतिपाद्यस्यैव प्रत्यभिज्ञापनात् । 'अम्बिकापतय उमापतये पशुपतये नमो नमः', 'ऋतꣳ सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमो नमः ॥ सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु । पुरुषो वै रुद्रस्तन्महो नमो नमः । विश्वं भूतं भुवनं चित्रं बहुधाजातं जायमानं च यत्सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु । कद्रुद्राय प्रचेतसे मीढुष्टमाय तव्यसे । वोचेम शंतमꣳ हृदे । सर्वो ह्येष रुद्रस्तस्मै रुद्राय नमो अस्तु' इत्यत्र रुद्रासाधारणाम्बिकापतित्वादिलिङ्गाम्नानात् तेषां च रुद्रादन्यत्रासम्भवात् । 'ऋतꣳ सत्यं परं ब्रह्म' इति

---

१ 'पूर्वपदात्संज्ञायामगः' – पाणिनि ८-४-३.  २. 'सर्वादीनि सर्वनामानि' – पाणिनि १-१-२७.

३. ता.पा. – नारायणशब्द तदभावेऽपि ।

४. 'घ' ता.पु.पा. 'नरो हि भगवान्विष्णुस्तज्जानिर्योगिनोऽपि वा । नाराम्य अयनं वाक्यं तेन नारायणः स्मृतः॥'

५. 'घ' ता.पु.पा. – नारायणः स्मृतः ।

रुद्रासाधारणविश्वरूपाभिधानश्रुतिप्राप्तस्य तस्यैव परब्रह्मत्वाभिधानात् । 'विश्वरूपाय वै नम' इत्यादिना सर्वस्य प्रपञ्चस्य पुरुषस्य च रुद्रात्मकत्वं विधाय तस्यैव प्रपञ्चनादुपसंहारानुरोधेनास्या उपनिषदो रुद्रापरनामकसदाशिवविषयत्वमेव युक्तम् । नान्यविषयत्वमिति निरस्तम् ।

उक्तरीत्या असञ्जातविरोधिपरमोपक्रमगतनारायणपरप्रजापतिशब्दाद्यनुरोधेन समुद्रशायित्व-लिङ्गाद्यनुरोधेन मध्ये नारायणशब्दाभ्यासरूपेणोपक्रान्तस्य नारायणस्यैव परामर्शेन च तदुपसंहारस्यापि तत्परताया एव न्यायत्वात् । 'निधना'दिशब्दार्थानां विश्वान्तर्गतत्वेन 'पतिं विश्वस्यात्मेश्वरमि'त्यादि नारायणधर्मत्वेन प्रागवगतानां तत्पतित्वादिना साक्षाद्रुद्रधर्मत्वासम्भवेन अथर्वशिरोवगततद्धर्माणामिव तदन्तर्यामिणि नारायण एव सम्भवेन तेषां तत्रैवाङ्गीकर्तव्यत्वाच्च । 'नमः सहमानाय निव्याधिन आव्याधिनीनां पतये नमो नम' इत्यादाविव 'अम्बिकापतय' इत्यादावपि स्वामित्वलक्षणपतित्वस्य साक्षादपि नारायणे सम्भवाच्च ॥ 'पातेर्डतिः'[1] इति वैयाकरणस्मृतेः पतिशब्दस्य रक्षकपरत्वादिति । एतेनैवेयमुपनिषदुदाहृततत्तदसाधारणशब्दसमभिव्याहृतेन तेन भागेन गुणभूतमूर्तित्रयप्रतिपादनात् तत्पर इति निरस्तम् ॥ ब्रह्मरुद्रयोरुदाहृतमहोपनिषन्नारायणोपनिषद्भ्यां सर्गाद्यसमये सत्त्वं निषिध्य नारायणो-त्पन्नत्वावेदनेन नारायणस्य चातथात्वेन तयोरिव तस्य गुणत्वानुपपत्त्या प्राधान्यस्यैव सिद्धेरिति ।

ननु मैत्रायणीयोपनिषदि 'अथ यो ह खलु वा अस्य राजसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं ब्रह्म, अथ यो ह खलु वा अस्य सात्त्विकांशः सोऽसौ ब्रह्मचारिणो योऽयं विष्णुः अथ यो ह खलु वा अस्य तामसोंऽशः सोऽसौ ब्रह्मचारिणो योऽयं रुद्रः' इत्याम्नातादस्येति प्रकृतपरामर्शात् तद्वाक्यपर्यालोचनया अंशित्वेन परमात्मनः शिवस्य तदंशित्वेन ब्रह्मविष्णुरुद्राणां च प्रतीतेरंशिन एव च प्रधान्यौचित्यात् जगत्सर्जनादौ ब्रह्मरुद्रयोरिव विणोरपि तदंशत्वा[2]विशेषेण न प्राधान्यसिद्धिरिति चेन्न ॥ उक्तवक्ष्य-माणरीत्या शिवपरमात्मादिशब्दस्य नारायण एव मुख्यत्वेन विष्णोरुदाहृतमैत्रायणीयश्रुत्या तदंशत्वा-वगमेऽपि ब्रह्मरुद्रयोरिव भिन्नांशत्वाभावेन प्रामाण्यानपायात् । न च तयोरपि विष्णोरिव[3] तदभिन्नांशत्वं युक्तम् ॥ 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः', 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायत' इत्यादिश्रुत्या सर्गाद्यसमये असत्त्वेन नारायणादुत्पन्नत्वेन च प्रतिपन्नत्वात् ॥ न हि तदानीमसतोस्तयो-स्तत्काले सता नारायणेनाभिन्नांशता युज्यते ॥ एतेन 'ब्रह्म विष्णु शिवा ब्रह्मन् प्रधाना ब्रह्मशक्तय' इत्यादि पुराणवचनं व्याख्यातम् । किञ्च ब्रह्मरुद्रयोरिव विष्णोर्गुणत्वाङ्गीकारे 'अग्निर्वै देवानामवमो विष्णुः परमः', 'तदन्तरेण सर्वा अन्या देवताः अग्निरवमो देवतानां विष्णुः परमः', 'मह इति ब्रह्म स

१. पातर्डतिः – पाणिनि उ. ५०६.  २. 'घ'. ता.पा.- तदंशाविशेषेण ।
३. 'घ'. ताला.पा. – विष्णोरपि ।

आत्मा । अङ्गान्यन्या देवताः', 'नारायणस्तु पुरुषो विश्वरूपो महद्युतिः'[1] नारायणस्य चाङ्गानि सर्वदैवानि चाभवन् । अन्यानि सर्वदैवानि तस्याङ्गानि महात्मनः' इत्यादिश्रुतिस्मृतिविरोधः कथं न स्यात् । न हि परमत्वं प्राधान्यादन्यत्किञ्चिदस्ति । तस्माद्ब्रह्मरुद्रयोरिव न नारायणस्य गुणत्वम् । अपि तु प्राधान्यमेवेति ।

ततश्चोक्तरीत्या नारायणपरतैत्तिरीयमहोपनिषदनुरोधेनापि श्वेताश्वतरोपनिषन्नारायणपरैव वाच्या । एवञ्च नारायणपरतया व्यवस्थापिते अथर्वशिरसि तैत्तिरीयमहोपनिषदि श्वेताश्वतरमहोपनिषदि च 'विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतो बाहुरुत विश्वतस्पात् । संबाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एक' इत्याम्नातमन्त्रेणैकस्यावगतं विश्वतश्चक्षुष्ट्वादिकं पृथिव्यादुपलक्षितं कृत्स्नजगत्कारणत्वं च नारायणादन्यधर्मिणमादायोक्तप्रकारेणालब्धावकाशं परिशेषान्नारायणमेव [2]स्वधर्मिणमादायाव्याकुलम् । तथाच नारायणपरतैत्तरीयमहोपनिषदि— 'न तस्येशे[3] कश्चन तस्य नाम महद्यशः', 'न संदृशे तिष्ठति [4]रूपमस्य', 'अणोरणीयान् महतोमहीयानात्मागुहायां निहितोऽस्य जन्तोः', 'हिरण्यगर्भं पश्यति जायमानं', 'सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवम्', अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः' इत्याम्नातानेकवाक्यैः श्वेताश्वतरोपनिषद्याम्नाते[5] 'न तस्य कश्चित्पतिरस्ति लोके । न चेशिता नैव च तस्य लिङ्गम्', 'सकारणं कारणं[6]कारणाधिपो न चास्य कश्चिज्जनिता न चाधिपः ।', 'अणोरणीयान्महतोमहीयानात्मास्य जन्तोर्निहितो गुहायाम्', 'हिरण्यगर्भं जनयामास पूर्वं', [7]'यो ब्राह्मणं विदधाति पूर्वं', 'यो वेदांश्च प्रहिणोति तस्मै', 'सहस्रशीर्षा पुरुषः सहस्राक्षः', 'न तस्य प्रतिमास्ति', 'यस्य नाम महद्यशः'[8], 'न सन्दृशे तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम्', 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वाननशिरोग्रीवः सर्व[9]व्यापी गुहाशयः । सर्वव्यापी च भागवान् तस्मात् सर्वगतः शिवः' इत्यादि वाक्यान्यनेकार्थतयोपलक्ष्यमानानि नारायणरूपमेवैकार्थमादायाव्याकुलानि भवन्ति । नान्यथा प्रसिद्धशिवमादाय तेषामेकार्थत्वानुपपत्तिरिति । शिवादिपरत्वपक्ष इव नारायणपरत्वपक्षे न काचिदनुपपत्तिरिति स एवास्मत्पक्षो युक्तः ।

अपि च नारायणपर पुरुषसूक्तमहोपनिषदनुरोधेनापि श्वेताश्वतरोपनिषदो नारायणपरत्वमावश्यकम् । अन्यथा तत्रात्र च स्वप्रतिपाद्यगोचरस्य तज्जन्यज्ञानस्य 'तमेवं विद्वानमृत इह भवति', 'तमेवं

---

१. 'क 'ख' 'घ' ताला.पा. – महाद्युतिः । २. 'घ' 'ता.पा. – स्वधर्मिणीत्यव्यकुलम् ।
३. 'घ' ता.पा. न तस्येशः । ४. 'घ' ता.पा. – रूपमध्ये । ५. 'घ' ता.पा. – श्वेतश्वतराम्नातेन ।
६. ग. पु. पा. सकारणं कारणाधिपाधिपो । ७. 'घ'. ता. पा. 'यो ब्राह्मणायापगुरेत् विदधातिपूर्वं' ।
८. घ. ता. पा. यस्य नाम नहत् । ९. ग. पु. पा. भूत ।

विदित्वाऽतिमृत्युमेति' इति मोक्षोपायत्वप्रतिपादनपूर्वकं तदितरज्ञानस्य 'नान्यः पन्था' इति तदुपायत्वनिषेधानुपपत्तेः । 'वेदाहमेतं पुरुषं महान्तमि'ति पुरुषसूक्तश्वेताश्वराम्नातवाक्यप्रतिपन्नमहापुरुषशब्दार्थयोर्भेदस्वीकारापत्तेश्च । न च वचनद्वयप्रामाण्याद्विकल्पः । अष्टदोषदुष्टतदाश्रयणस्य[1] अनन्यगतिकत्वात् । 'सर्ववेदान्तप्रत्ययन्याय'[2]विरोधापत्तेः 'गतिसामान्यन्याय'[3]विरोधापत्तेश्च ॥ ननु भवतु श्रुतीनामेकविषयत्वम् । तावता श्वेताश्वतरोपनिषदः न रुद्रविषयत्वम् । किन्तु नारायणविषयत्वमेवेत्यत्र किमायातम् । तासां रुद्रमात्रविषयत्वेऽप्यविरोधसम्भवात् । न हि पुरुषसूक्तस्य नारायणपरत्वेऽनन्यथासिद्धं प्रमाणं पश्यामः । प्रत्युत 'उतामृतत्वस्येशान' इति शिवपरत्व एवाभिधानश्रुतिं पश्यामः । न च ईशानपदमैश्वर्ययोगेन साधारणमिति वाच्यम् । योगेन साधारण्येऽपि योगरूढ्या तस्य महेश्वर एव असाधारण्यात् । 'ईश्वरः सर्व ईशान, ईशानः शशिशेखरः ॥ पशुपतिः शूली शिवः शङ्कर' इत्याद्यभिधानकोशस्मृतितो साधारण्येन तत्र तस्य योगरूढसिद्धेः । अन्यथा नारायणादिपदानां अपि नारायणे 'विष्णुर्नारायणः, आपो नारा इति प्रोक्ता, आपो वै नरसूनवः । अयनं तस्य ताः पूर्वं तेन नारायणः स्मृतः' इत्याद्यभिधानकोशस्मृतेः असाधारण्येन योगरूढ्यासिद्धयापत्तेः । केवलयोगाच्च शक्तिद्वयानुग्रहलाभेन योगरूढेः प्रबलत्वात् । अत एव ब्रह्ममीमांसायां "ॐ शब्दादेव प्रमितः ॐ'[4] इत्यधिकरणे 'अङ्गुष्ठमात्रपुरुषः' इति काठवल्लीमन्त्रोदाहृत्य अङ्गुष्ठमात्र इति परिमितपरिमाणलिङ्गात् अङ्गुष्ठमात्रपुरुषो जीव इति प्राप्ते तत्रत्यादीशानो भूतभव्यस्येत्यभिधानश्रुतिरूपाच्छब्दात् स परमात्मेति निर्णयः कृतः । अन्यथा तस्य केवलयौगिकत्वे परमात्मसाधारणशब्दाभावात् 'इशानो भूतभव्यस्ये'त्यस्य भूतभव्येश्वरत्वरूपलिङ्गोपस्थापकत्वात् । तत्र लिङ्गादेव तस्य परमात्मत्वनिर्णय इति शब्दादेवेति सूत्रमसङ्गतं स्यात् । न च 'ईशानः प्राणदः प्राणः' इति विष्णुसहस्रनाममध्ये परिगणनादीशानशब्दस्य शिववाचित्ववत् विष्णुवाचित्वमप्यव्याहतप्रसरमिति कथं तस्य शिव एवासाधारण्यम् । किञ्च 'ईशानः प्राणद प्राणः' इत्यस्य वेदोपबृंहणार्थे महाभारते पठितत्वादभिधानकोशस्मृतितो वेदार्थनिर्णये अन्तरङ्गतया तत ईशानशब्दस्य विष्णुपरत्वमेव वक्तुं युक्तम् । अत एव अङ्गुष्ठवाक्यस्य स्वाभिमतपरमात्मपरत्वमीशानाभिधानश्रुत्यैवाभिधीयत इति वाच्यम् । 'स्तुवन्नामसहस्रेणे'त्युपक्रमानुसारेण सर्वात्मतया स्तोतुं प्रवृत्तो 'विश्वं विष्णुरि'त्यादौ सर्वाभिप्रायेण देवतान्तरनाम्नामपि बहुना परिगणनेन ततस्तेषां तत्र शक्तिसिद्धयोगात् । अन्यथा भारते लिङ्गादित्यपुराणादिपठितशिवनामसहस्रानन्तर्गतस्य विष्णुनाम्नो अभावात् । हरिवंशे कैलासयात्रायां 'नामनि तव गोविन्द याति लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणे'ति कृष्णं प्रति शिववचनदर्शनिन विष्णुनाम्नामन्येषां च सारभूतानां शिवनामत्वसिद्धे-

---

१. घ. ता.पा. – अष्टदोषदुष्टताश्रयणस्य । २. 'सर्ववेदान्तप्रत्ययन्यायः' ब्र.सू. ३-३-१.

३. 'ॐ गतिसामान्यात्' ब्र.न्या. १-१-१०. ४. ॐ शब्दादेव प्रमितः ॐ. ब्रह्मसूत्रम् १-३-२४.

रभिधानत्वश्रुत्या क्वचिदपि तव विष्णुपरत्वनिर्णयो न स्यात् । तस्मात् तच्छब्दानां तेषु तेष्वर्थेषु शक्तौ महाजनपरिगृहीताभिधानकोशस्मृत्यादय एव प्रमाणयितव्या इति 'ईशानशब्दस्य तत्सम्भवात् । शिवासाधारण्यं, एवं च पुरुषसूक्तस्य शिवपरत्वप्रतिपादकानि उपबृंहणरूपाणि 'यो मूर्धा विभोरस्तस्य खं नाभिः परमेष्ठिनः । सोमसूर्याग्नयो नेत्रे दिशं श्रोत्रे महात्मनः । वक्त्राद्वै ब्राह्मणा जाताः ब्रह्मा च भगवान् विभुः । इन्द्रा विष्णुभुजाभ्यां तु क्षत्रियाश्च महात्मनः । वैश्याश्चोरुप्रवेशात्तु रुद्राः पादात् पिनाकिनः' इत्यादि लिङ्गपुराणवचनान्यप्यनुकूलिता भवन्तीति चेन्न । महोपनिषदि 'विश्वस्यायतनं हरिः' इत्यारभ्य 'यन्नाभिपद्मादभवन्महात्मा प्रजापतिर्विश्वसृड् विश्वरूपः । तमेवं विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यते' इति इतरज्ञानस्य मोक्षोपायत्वं प्रतिषिध्य नारायणज्ञानस्यैव तदुपायत्ववेदनेन तस्याः 'एको ह वै नारायण आसीत्' इत्युपक्रमावगतनारायणपरताया अनिवारणात् तदनुरोधेनापि श्वेताश्वतरस्य नारायणपरत्वमकामेनापि स्वीकार्यम् । श्वेताश्वतरमहोपनिषदोरुभयोरपि प्रतिपाद्य भेदे उभयत्र 'नान्यःपन्था' इत्याम्नातायोगाद्वयोरितरव्यवच्छेदनमुक्त्युपायत्वावधारणायोगात् । 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैष प्रवर्तक' इति विष्णुसाधारणसत्त्वप्रवर्तकत्वरूपधर्मप्रतिपादकस्वनिष्ठमन्त्रेणापि श्वेताश्वतरस्य नारायणपरत्वावश्यकत्वाच्च । पुरुषसूक्तस्यापि परिशेष्यान्नारायणपरत्वसिद्धवैकल्यात् । तथाहि— न तावत् तस्येशाभिधानश्रुत्या शिवपरत्वम् । 'सहस्रशीर्षा पुरुषः सहस्राक्ष' इति असञ्जातविरोध्युपक्रमगतपुरुषसङ्कीर्तनदर्शनिन 'आखण्डलः सहस्राक्ष' इतीन्द्रासाधारणतथाविधसहस्राक्षसङ्कीर्तनदर्शनिन 'सहस्रपादि'ति सूर्यसङ्कीर्तनदर्शनिन च तस्य पुरुषेन्द्रादिपरताया एव न्यायत्वात् । उपक्रमोपसंहारयोर्विरोधे असञ्जातविरोधितयोपक्रमप्राबल्यस्य 'वेदो वा प्रायदर्शनात्' इति पूर्वतन्त्रे स्थितत्वात् प्रथमावगत्यर्थानुरोधेनैव चरमावगतस्य नेय्यत्वात् । किञ्च 'अमृतत्वस्येशान' इतिपदस्य तेनैश्वर्यप्रतियोगिन उपादानात् रूढ्युन्मेषायोगेन नेशान इत्यस्याभिधानश्रुतत्वं युज्यते । यौगिकार्थप्रतियोगिनः कस्यचित्पदान्तरेणानुपादान एव समुदायशक्त्युन्मेष इति व्युत्पत्तेः । अन्यथा व्युत्पत्तिविरोधापत्तेः । किञ्च यौगिकार्थसम्बन्धिनः कस्यचित्पदान्तरेणोपादानेऽपि यदि समुदायशक्त्युन्मेषः, तदा 'तमीश्वराणां परमं महेश्वरमि'त्यादौ ग्रामस्येश्वर इत्यादाविव ईश्वरशब्दे तदुन्मेषादनन्वयप्रसङ्गः ।

न चैवं 'शब्दादेव प्रमितः' इत्यधिकरणे 'ईशानो भूतभव्यस्ये'ति विषयवाक्ये भूतभव्यस्येत्यैश्वर्यप्रतियोगिन उपादानाद्रूढ्युन्मेषासम्भवेनाभिधानश्रुतित्वायोगात् । तस्य 'उतामृतत्वस्येशान' इतिवद्भूतभव्येशानत्वरूपलिङ्गोपस्थापकतया निर्णायकत्वप्रास्या 'शब्दादेवे'ति सूत्रमसङ्गतं स्यादिति वाच्यम् । तत्र 'मध्ये वामनमासीनमि'त्यादिवाक्यगतवामनाभिधानश्रुतेरेव सौत्रशब्देन विवक्षणेन तत्सङ्गतेरित्यन्यत्र विस्तारः ।

किञ्च उपक्रमप्राबल्यवादिनस्तव ईशान इत्यस्याभिधानश्रुतित्वेऽपि 'सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्' इत्युपक्रमावगतेन्द्रासाधारणाभिधानश्रुत्यपेक्षया चरमश्रुतत्वेन कथं ततः पुरुषसूक्तस्य शिवपरत्वनिर्णयः ? अन्यथा ईशानाभिधानश्रुत्यपेक्षाया चरमश्रुतया 'धाता पुरस्ताद्यमुदाजहार । शक्रः प्रविद्वानि'ति धातृशक्राभिधानश्रुत्या तथाविधाया 'ह्रीश्च ते लक्ष्मीश्च पत्न्यावि'ति ह्रीलक्ष्म्यभिधानश्रुत्यापि पुरुषसूक्तस्य धात्रादिपरत्वापत्तिः । एवञ्च 'सहस्राक्ष' इत्युपक्रमस्य 'शक्र' इत्युपसंहारैकरूप्यमप्यनुकूलितं भवति । तथाच [1]ईशानस्य कथमपि शिवपरत्वमुपपद्यते ।

ननु माभूदुक्तसूक्तस्य पुरुषशब्दशिवपरत्वम् । तथापि त्वदभिमतस्य नारायणपरत्वस्यासिद्धिरेव । न हि परपक्षखण्डनमात्रेण स्वेष्टसिद्धिरिति चेन्न । पुरुषशब्दस्यास्य नारायणतदितरपुरुषमात्रवाचित्वेन साधारणत्वेऽपि प्रकृते सहस्रशीर्षत्वादिना नारायणधर्मत्वप्रतिपन्नेन अवरुध्यतया तस्य नारायणमात्रपरत्वस्यावश्यकतया सञ्जातविरोध्युपक्रमावगतपुरुषशब्दाविरोधाय तदनन्तरश्रुतसहस्राक्षेशानादिशब्दानां तदविरुद्धार्थपरत्वस्यैव न्याय्यत्वात् । न हि पृथुबुध्नोदराकारं द्रव्यमित्युक्ते द्रव्यशब्दः घटतदितरसाधारणोऽपि घटेतरद्रव्यप्रत्यायनस्येष्टे । न च पुरुषशब्दस्य सहस्रशीर्षशब्दसमभिव्याहारवत् सहस्राक्षशब्दसमभिव्याहारस्यापि सत्त्वात् । इन्द्रशब्दसमभिव्याहृतपुरुषशब्दवत् इन्द्ररूपविशेषपरत्वं किं न स्यात् ? समभिव्याहाराविशेषादिति वाच्यम् । सहस्राक्षपदोपस्थितेः प्रागेव सहस्रशीर्षत्वावरुद्धतया पुरुषस्य प्रथमोपस्थितेरेव विशेषत्वादनुपसञ्जातविरोधिन्यास्तस्याः प्रबलत्वेन तदविरोधेनैव उत्तरपदसमभिव्याहारस्य नेयत्वात् । न च शिवपरताया स्फुटप्रतिभासे श्वेताश्वतरे 'सहस्रशीर्षापुरुष' इति पाठात् सहस्रशीर्षत्वादेर्नारायणमात्रधर्मत्वाध्यवसायः । तथाच निर्णीतार्थकेषु पुरुषसूक्तानुसारेण श्वेताश्वतरस्य कथं नारायणपरत्वनिर्णयः । प्रत्युतैतदनुरोधेन तस्यैव शिवपरत्वनिर्णयो युक्त इति वाच्यम् । नारायणपरायां महोपनिषदि तैत्तिरीयोपनिषदि च 'सहस्रशीर्षं देवं, विश्वाक्षं[2] विश्वशंभुवम्' इति चाम्नेन सहस्रशीर्षत्वस्य नारायणधर्मनिर्णयोपपत्तेः । तथापि श्वेताश्वतरानुसारेण रुद्रधर्मत्वसम्भवात् साधारणधर्मावरुद्धस्य पुरुषशब्दस्य किमयं पुरुषसूक्ताम्नातः, पुरुषो नारायणः, किं वा रुद्र इति सांशयिकत्वेन न विशेषपरत्वनिर्णय इति चेन्न । रुद्रस्य तत्पुरुष-अघोर-सद्योजात-वामदेव-ईशानाख्य-पञ्चमुखवत्त्वेनैव 'तत्पुरुषाय विद्महे, अघोरेभ्योऽथ घोरेभ्यः, सद्योजातं प्रपद्यामि, वामदेवाय नमो ज्येष्ठाय नमः, ईशानः सर्वविद्यानाम्' इत्यादिश्रुतिषु प्रसिद्धत्वेन तस्य सहस्रशीर्षत्वासिद्धेः । सन्दिग्धार्थस्य श्वेताश्वतरस्य निर्णीतार्थकोपनिषद्वयानुसारेण निर्णयौचित्यात् । श्वेताश्वतरस्य कृत्स्नस्यापि उपक्रमोपसंहारानुगुण्येन

१. ता.पा. ईशानाभिधानश्रुत्या पुरुषसूक्तस्य न कथमपि ।

२. ता.पा. सहस्रशीर्षं देवं सहस्राक्षम् । सहस्रशीर्षं देवं विश्वाक्षम् ।

प्रसिद्धशिववाचकानेकशब्दत्वेऽपि तदन्यपरतैव युक्ता इत्युक्तत्वाच्च । न चैवमपि श्वेताश्वतरस्योपनिषद्वयानुसारेणैव नारायणपरत्वनिर्णयः । न पुरुषसूक्तानुसारेणेति वाच्यम् । तथापि मदिष्टसिद्धेरवैकल्यात् । न च उदाहृतोपनिषद्वयस्यापि श्वेताश्वतरानुसारेण रुद्रपरत्वमेवास्त्विति वाच्यम् । निरस्तत्वात् । 'विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम्'[१] इति न्यायेन श्वेताश्वतरस्यैवैकस्यानेकोपनिषत्प्रतिपन्नसहस्रशिरस्कनारायणपरत्वकल्पनात् । न च मुखशब्दार्थाच्छिरःशब्दार्थस्य भिन्नत्वेन रुद्रस्य पञ्चमुखत्वसहस्रशिरस्त्वाविरोधीति वाच्यम् । तयोरन्योन्याविभावेन रुद्रस्य पञ्चमुखत्वे पञ्चशिरस्त्वस्यैव न्याय्यत्वात् । पुरुषसूक्तस्यापि उक्तानेकोपनिषदनुसारेण सहस्रशिरस्कनारायणपरताया एव न्याय्यत्वाच्च । न च अहिराजस्य शेषस्यापि सहस्रशिरस्त्वप्रसिद्ध्या पुरुसूक्तं तत्परमेव किं न स्यादिति वाच्यम् । पादराहित्यस्याहिमात्रसामान्यलक्षणतयाऽहिविशेषस्य शेषस्यापि तद्राहित्यावश्यम्भावेन 'सहस्राक्षः सहस्रपादि'ति पुरुषसूक्तप्रतिपन्नपात्वानुपपत्तेः । अहिराजस्य सहस्रफणमण्डितत्वप्रसिद्धावपि सहस्रशीर्षत्वप्रसिद्धेरप्रसिद्धेश्च । न हि सहस्रमुखत्वेन ससहस्रशीर्षत्वमपि दुर्वारमिति वाच्यम्[२] । 'चमसवदविशेषादि'ति सूत्रे 'ऊर्ध्वबुध्न अवाग्बिलश्चमस' इति चमसलक्षणमभिधाय तत्सदृशावयवविशेषस्यैव शिरस्त्वाभिधानात् । न ह्यहिराजस्य तादृशं मुखं तदविनाभूतं शिरो वा सम्भवति । तन्मुखस्यास्मदादिमुखवैजात्यात् । अत एव 'गूढपादुरगो भुजगः' इति च सर्पाणां लोके प्रसिद्धिरुपपद्यते । अत एव 'धाता पुरस्ताद्यमुदाजहार' इति धात्रादिश्रुतिसद्भावात् पुरुषसूक्तं चतुर्मुखादिपरमिति निरस्तम् । उपसंहारगतधातृशब्दस्योपक्रमावगतनारायणरूपसहस्रशिरस्केषु पुरुषपरत्वौचित्यात् तस्य चतुर्मुखत्वप्रसिद्धिविरोधापत्तेः । किञ्चास्य पुरुषस्य नारायणादन्यत्वे 'पुरुषो ह वै नारायणोऽकामयत' इति पुरुषसूक्तप्रतिपन्नं मुमुक्षुज्ञेयं पुरुषमनूद्य तस्य नारायणत्वविधानानुपपत्तिः ॥ चतुर्मुखशेषयोः 'उतामृतत्वस्येशान' इति तत्रैवोक्तामृतत्वेशानत्वायोगाच्च । अपि च पुरुषसूक्तप्रतिपाद्यः पुरुषो नारायण एव वाच्यः । 'नेतरः, सोऽपां, अन्तरतः कूर्मं भूत॰ सर्पन्तं, तमब्रवीत् । मम वै त्वं मा॰ सा । समभूत् । नेत्यब्रवीत् । पूर्वमेवाहमिहासमिति । तत्पुरुष्यस्य पुरुषत्वम् । स सहस्रशीर्षा पुरुषः । सहस्राक्षः सहस्रपात् । भूत्वोदतिष्ठत्' इत्यारुणकेतुकश्रुत्या पुरुषसूक्तस्य समानाकारवाक्यगतपुरुषशब्दस्य प्रजापत्यपेक्षया कूर्मरूपधरनारायणस्य पूर्वकालीनत्वप्रवृत्तिनिमित्तमित्यावेदनात् तदनन्तरं तस्यैव सहस्रशीर्षत्वादिना आविर्भावावेदनाच्च । इतिहासपुराणादिषु नारायणस्यैव आदिकूर्मरूपत्वप्रसिद्धेः । 'पञ्चदशान्याज्यानि भवन्ति' इत्यादौ आज्यशब्देन प्रसिद्ध्या अन्यग्रहणे प्राप्ते— 'यदाजि-

---

१. विप्रतिषिद्धधर्माणां समवाये भूयसां स्यात् सधर्मत्वम् । — न्याय.मी.सूत्रम् १२. २-७-२५.

२. चमसवदविशेषात् । ब्र.सू. १-४-९.

मीयुरन्तदाज्यानामाज्यत्वम्' इति श्रौतनिर्वचनानुसारेण तदन्यस्तोत्राख्यकर्मग्रहणवदत्रापि पुरुषशब्देन यत्किञ्चित्पुरुषग्रहणे प्राप्ते उदाहृतश्रौतवचनानुसारेण तदन्यनारायणग्रहणस्यैवोचितत्वात् । वैदिकशब्दार्थसन्देहे अन्तरङ्गतया वैदिकस्यैव निर्णायकस्यापेक्षणात् । सति सम्भवे त्यागायोगात् । ततश्च पुरुषसूक्तमपि कार्त्स्न्येन नारायणपरमिति सिद्धम् । एवं च एतदनुरोधेनापि श्वेताश्वतरस्य नारायणपरत्वमविकलम् । तथाच सति श्वेताश्वतरोपनिषदि पुरुषसूक्तमन्त्रप्रत्यभिज्ञाने न तस्य पुरुषनैकार्थ्यमपि सिद्ध्यति ।

न चैवं श्वेताश्वतरे 'याते रुद्रशिवाननूरघोरापापकाशिनी । यामिषुं गिरिशन्त हस्ते । मानस्तोके तनये मान आयुषि मानो गोषु' इति श्रीरुद्राम्नातानेकमन्त्रप्रत्यभिज्ञानेनापि तस्य श्रीरुद्रैकार्थ्यप्रसङ्गः । किञ्च श्वेताश्वतरस्य पुरुषसूक्तेनोक्तरीत्या नारायणपरत्वेनैकार्थ्यैकमविरोधः । पुरुषसूक्तप्रतिपाद्यस्य सहस्राक्षत्वसहस्रपात्वप्रतीतेः श्वेताश्वतरप्रतिपाद्यस्य च 'अपाणिपादो जवनो गृहीता अचक्षुः पश्यति स श्रृणोत्यकर्णः' इत्यादिना अपाणिपादत्वादिप्रतीतेरिति वाच्यम् । श्वेताश्वतरेऽपि 'सहस्रशीर्षा पुरुषः सहस्राक्ष' इत्यादि पुरुषसूक्ताम्नातवाक्यसमानाकारवाक्यसत्त्वेन 'अपाणिपाद' इत्यादिवाक्यस्य च सत्त्वेन प्राप्ताविरोधपरिहारवदुक्तविरोधस्य त्वयाऽपि परिहार्यत्वात् । अन्यथा श्वेताश्वतर एव 'सर्वतः पाणिपादं, तत्सर्वतोऽक्षिशिरोमुखं, सर्वतः श्रुतिमत्' इत्यादिना तत्प्रतिपाद्यस्य सर्वतः पाणिपादत्वाप्रतिपादनानुपपत्तिः । यदुक्तं पुरुषसूक्ताम्नातमन्त्रप्रत्यभिज्ञानेन श्वेताश्वतरस्य नारायणपरत्वे श्रीरुद्राम्नातानेकमन्त्रप्रत्यभिज्ञानेन तस्य शिवपरत्वमेव किं न स्यादिति । तन्न । 'सर्वे वेदा यत्पदमामनन्ति । वेदैश्च सर्वैरहमेव वेद्यः' इत्यादि श्रुतिस्मृतिप्रतिपन्नस्य सर्ववेदानां मुख्यतः विष्णुपरत्वस्य त्यागायोगात् । सर्ववेदान्तर्गतरुद्रशब्दस्यापि विष्णुपरत्वं वक्ष्यते । अत एव 'व्यक्ताव्यक्तलिङ्गस्थो य एष भगवान् प्रभुः । पुरा नारायणो देवः स्वयम्भूः प्रपितामहः । सहस्रशीर्षः पुरुषो ध्रुवोऽव्यक्तः सनातनः । सहस्राख्यः सहस्राक्षः सहस्रचरणो विभुः । सहस्रबाहुः सहस्रदेहो नाम सहस्रवान् । सहस्रमुकुटो देवो विश्वरूपो महद्युतिः । अनेकवर्णो देवादिरव्यक्ताद्वै परे स्थितः । असृजत् सलिलं पूर्वं स च नारायणः प्रभुः । ततस्तु भगवांस्तोये ब्रह्माणमसृजत् स्वयम् । ब्रह्मा चतुर्मुखो लोकान् सर्वांस्तानसृजन् प्रभुः । तथा पुराऽथ प्रलये नष्टे स्थावरजङ्गमे । ब्रह्मादिषु प्रलीनेषु नष्टे लोकचराचरे । आभूतसम्प्लवे चैव प्रलीने प्रकृतौ महान् । एकस्तिष्ठति विश्वात्मा स तु नारायणः प्रभुः । ब्रह्मा तु सर्वदेवानां लोकस्य च पितामहः । ततो नारायणो देवः सर्वस्य प्रपितामहः' इत्यादीनि पुरुषसूक्तसंवादीनि महाभारतवचनानि सङ्गच्छन्ते ।

अपि च पुरुषसूक्तस्य मुमुक्षुज्ञेयानिर्धारितपुरुषविशेषपरत्वे स्थिते स पुरुषः किं विष्णुः ? किं वा तदन्यः ? इति विशये तन्निवृत्त्यर्थं सति सम्भवे त्यागायोगेन वेदे वैदिकस्यैव अर्थस्य ग्राह्यतया

कठवल्ल्यां विष्णुत्वेन मुमुक्षुज्ञेयत्वेन च प्रतिपादित एव पुरुषः प्रत्यभिज्ञानात् पुरुषसूक्तप्रतिपाद्यः इति निश्चीयते । तत्र हि 'सर्वे वेदा यत्पदमामनन्ति, पापांसि सर्वाणि च यद्वदन्ति । यदिच्छन्तो ब्रह्मचर्यं चरन्ति । तत्ते पदं सङ्ग्रहेण ब्रवीमि' इत्युपक्रम्य 'यस्तु विज्ञानवान् भवति । समनस्कः सदा शुचिः । स तु तत्पदमाप्नोति । यस्माद्भूयो न जायते' इति । [१]प्राप्यवस्तुनः स्वरूपं सामान्यत उक्त्वा विशेष-जिज्ञासायां 'विज्ञानसारथिर्यस्तु मनः प्रग्रहवान्नरः । सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम्' इति विशेषतः प्राप्यवस्तुनः विष्णुस्वरूपत्वमभिधाय, उत्तरत्र 'इन्द्रियेभ्यः परा ह्यर्थाः अर्थेभ्यश्च परं मनः । मनसस्तु परा बुद्धिः बुद्धेरात्मा महान् परः । महतः परमव्यक्तं अव्यक्तात्पुरुषः परः । पुरुषान्नपरं किञ्चित् सा काष्ठा सा परा गतिः' इति प्रागुक्तप्राप्यविष्णुस्वरूपस्यैव इन्द्रियादिपराव्यक्तपरत्वेन मुमुक्षून् प्रति परमगतित्वेन चोक्त्वा तत मुक्तप्राप्यवस्तुर्नास्ति इत्यभिधानात् तत्र विष्णुरेव पुरुषशब्दार्थो निर्णय इति ।

न च तत्र 'तद्विष्णोः परमं पदमि'ति वाक्ये विष्णोरिति पञ्चम्यन्तं शङ्कनीयम् । तथासति प्राप्य-जिज्ञासायाः अनिवृत्तिप्रसङ्गात् । षष्ठ्यन्तत्वे च तन्निवृत्तेः । 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः', 'उरुगायस्य विष्णोः परमं पदं अवभाति भूरे' इत्यादिश्रुत्या अनुगतार्थत्वसिद्धेश्च । एवञ्च 'पुरु संज्ञे शरीरेऽस्मिन् शयनात्पुरुषो हरिः । शकारस्य षकारोऽयं व्यत्ययेन प्रयुज्यते । भगवानिति शब्दोऽयं तथा पुरुष इत्यपि । निरुपाधी च वर्तेते वासुदेवे सनातने' इत्यादि पुराणवचनमनुकूलितं भवति । किञ्च पुरुषसूक्तस्य नारायणेतरपरत्वे 'यज्ञेन यज्ञमयजन्त देवा' इति मन्त्रे 'यज्ञो वै विष्णुः' इति श्रुतिप्रतिपन्न-विष्णुशब्दपर्यायनारायणद्वितीयान्तयज्ञशब्दानुपपत्तिः । 'तस्मिन्काले महाराजा राम एवाभिधीयते । यथा हि पौरुषे सूक्ते विष्णुरेवाभिधीयते' इत्यादि स्कान्दवचनानुपपत्तिः । एतेन पुरुषशब्दो विष्ण्वादिशब्दवान्न नारायणे वाचकः । तथात्वे अभिधान-कोश-स्मृत्यदर्शनाल्लोकवेदयोः तस्य नारायणप्रयोगप्राचुर्या-दर्शनाच्च । किन्तु सामान्यतः पुरुषमात्रवाचकः क्वचित् क्वचित् तस्य नारायणोपस्थापकत्वं प्रकरणा-दिवशादुपपन्नमिति । न तस्य शक्तिकल्पकमर्थवादप्रचुरपौराणिकवचनानां च अभिधान-कोश-स्मृत्य-विगीताभियुक्तबहुप्रयोगादिवत् शक्तिग्रहैकप्रयोजकत्वेन अप्रवृत्ततया प्रशंसापरत्वेनापि उपपन्नतया च न तेभ्यः शक्त्यवधारणं युज्यते । न हि 'स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः । प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वैभवादपि । स एव वासुदेवोऽयं साक्षात् पुरुष उच्यते । स्त्रीप्रायमितरत्सर्वं जगद्ब्रह्मपुरस्सरम्' इति नरसिंहपुराणादिवचनेभ्यः प्रशंसाव्यतिरेकेण पुरुषशब्दस्य नारायणे शक्तिः प्रतीयते । अतः कथं पुरुषसूक्तोपक्रमावगतपुरुषश्रुत्या तस्य नारायणपरत्वनिर्णयः इति निरस्तम् । [२]भूसत्तायां, वा गति-

१. प्राप्य वस्तुनो भगवतः स्वरूपम् ।

२. भू सत्तायां, वा गति गन्धनयोः । (धातुपाठः) १०५०.

गन्धनयोः । तेन[1] प्रोक्तम् । तस्यापत्यम् । शोभार्थे विप्रयुज्यन्ते । ''[2]लक्ष्मीः श्रीकान्ति सम्पदः । लक्ष्मणः श्रीपतिः प्रोक्तो रामभ्रातरि लक्ष्मणे । कुलालो भार्गवश्चैव कुम्भकारो निगद्यते' इत्यादिवैयाकरणस्मृति-हलायुधादिकोशवदर्थनिर्देशपूर्वकपौराणिकतद्व्यवहारस्यापि विशेषहेत्वभावेन शक्तिग्राहकप्रमाणतया अङ्गीकार्यत्वात् । न हि 'शोभार्थे विप्रयुज्यन्ते, लक्ष्मणः श्रीपतिः प्रोक्तः, कुलालो भार्गवश्चैव कुम्भकारो निगद्यत' इत्यादिकोशवचनानां 'स एव वासुदेवोऽयं पुरुषः प्रोच्यते बुधैः, प्रकृतिस्पर्शराहित्यात् स्वातन्त्र्याद्वैभवादपि' इत्यादिपुराणवचनभागात् शक्तिग्राहकत्वे विशेषं पश्यामः । येन एवंविधपुराण-वचनैः शब्दशक्तिर्न परिच्छिद्येत । अन्यथा 'यन्न दुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च सुखं स्वर्गपदास्पदमि'त्यादेः साक्षादर्थवादतः स्वर्गशब्दादेः सुखविशेषादौ शक्तिग्रहासम्भवेन 'स्वर्गकामो यजेते'त्यादिवाक्यमबोधकं स्यात् । न हि व्याकरण-स्मृति-कोशादीनां अपि अनादि-पुराणादिवृद्धप्रयोगादन्यन्मूलमस्ति । न चैवं विष्णुनामसहस्रमध्ये शिवनाम्नां शिवनामसहस्रमध्ये विष्णु-नाम्नां च विष्णुशिवयोः पौराणिकैः प्रयुक्तत्वेन हरिवंशे कैलासयात्रायां 'नामानि तव गोविन्द यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा' इति कृष्णं प्रति शिवेनोक्तमिति पौराणिक-वचनेन तेषामुभयत्रापि शक्त्यापत्त्या विशेषनिर्णायकत्वाभावप्रसङ्गादिति वाच्यम् । नामसहस्रान्तर्गतानां विष्णुशिवोभयशक्तत्वेन विशेषानिर्णायकत्वेऽपि तदप्रविष्टतत्तन्नामविशेषोक्त्या विशेषनिर्णयसम्भवात् । कृष्णं प्रति 'नामानि तव गोविन्द' इत्यादिशिववचनस्य च 'अहमेवैकः प्रथममासमि'ति अथर्वशिरस्थ-शिववचनस्तु स्वान्तर्यामिनारायणाभिप्रायत्वसम्भवेन तत्तन्नाम्नां शिवशक्तत्वानिर्णायकत्वाच्च । किञ्च 'यानि नामानि गौणानि विख्यातानि महात्मनः । ऋषिभिः परिगीतानि तानि वक्ष्यामि भूपते' इति नाम-सहस्रान्तर्गतानां केषाञ्चिद्गौणत्वोक्ते गौणागौणविभागस्य लोकत एवावधारणसम्भवात् । गौणानां नाम-सहस्रद्वयस्थानं कथञ्चित् तदुभयनिष्ठत्वेन विशेषानिर्णायकत्वेऽपि अगौणानां तत्तन्नाम्नामसाधारणतया तत्तद्विशेषनिर्णायकत्वोपपत्तेश्च । न हि सहस्रनामगतानि नामानि सर्वाण्यपि गौणानि योगरूढानामपि बहूनां सत्त्वात् । तथाच उदाहृतपुराणवचनानुसारेणापि केवलपुरुषशब्दस्य नारायण एव विशेषतः शक्तिसिद्धिः ।

एतेन 'स्तुवन्नामसहस्रेणे'त्यादिना सर्वात्मकत्वेन स्तुत्यर्थं नामसहस्रप्रवृत्तिरिति निरस्तम् । तथासति तत्पर्यायेण 'सर्वः शर्वः शिवः स्थाणु' इति श्रुतिवैयर्थ्यात् । एकेनापिशब्देन तत्त[3]दात्मक-त्वसिद्धेः ।[4] 'रुजं द्रावयते यस्माद्रुद्रस्तस्माज्जनार्दनः । ईशानादेव चेशानो महादेवो महत्वतः । पिबन्ति

१. तेन प्रोक्तम् । तस्यापत्यम् । शोभार्थे विप्रयुज्यन्ते । ४-३-१०१ (पा.सू) (पा. सू ४-१-९२)

२. लक्ष्मीः श्रीकान्तिसम्पदः । लक्ष्मणः श्रीमति प्रोक्ते रामभ्रातरि लक्ष्मणे । – कोशः ।

३. ता.पु.पा. – कृत्स्नात्मकत्वसिद्धेः । ४. ता.पु.पा. – किञ्च ।

ये नरा नाकं मुक्ताः संसारसागरात् । तदा धारयतो विष्णुः पिनाकीति च विश्रुतः । शिवः सुखात्मकत्वेन शर्वं संरोधनाद्धरिः । कृत्यात्मकमिदं देहं यतो वास्ते प्रवर्तयन् । कृत्तिवासास्ततो देवो विरिंचश्च विरेचनात् । बृंहणाद्ब्रह्मनामासावैश्वर्यादिन्द्र उच्यते । एवं नानाविधैः शब्दैः एक एव त्रिविक्रमः । वेदेषु च पुराणेषु गीयते पुरुषोत्तम' इत्यादि ब्रह्मवचनानुसारेण न तु नारायणादीनां नाम्नां अन्यत्र सम्भवः । 'अन्यनाम्नां गतिर्विष्णुः एक एव प्रकीर्तितः' इति वामनवचनानुसारेण, 'ऋते नारायणादीनि नामानि पुरुषोत्तमः । प्रादादन्यत्र भगवान् राजेवर्ते स्वकं पुरमि'ति स्कान्दवचनानुसारेण 'चतुर्मुखः शतानन्दो ब्रह्मणः पद्मभूरिति । उग्रो भस्मधरो नग्नः कपालीति शिवस्य च । विशेषनामानि ददौ स्वकीयान्यपि केशवः' इति ब्रह्मादिवचनसहस्रानुसारेण च 'यानि मम नामानि तानि तवैव नामानि' इत्येव तस्य भारतवचनस्य योजनीयत्वात् । एतेन 'पुरुषो वा रुद्रः, तस्मै रुद्राय नमो अस्तु' इति रुद्रशब्दोऽपि व्याख्यातः । अत एव तेन वाक्येन मुमुक्षुज्ञेयपुरुषस्य रुद्रत्वविधानात् पुरुषसूक्तस्थपुरुषो न नारायणो भवितुमर्हति । किन्तु रुद्र एवेति निरस्तम् । उक्तरीत्या रुद्रनारायणशब्दयोः ऐकार्थ्येन अविरोधात् । एवं च सहस्रशीर्षत्वादीनां नारायणधर्मत्वेन उदाहृतश्रुतिप्रतिपन्नानां पुरुषशब्दार्थे नारायण एव अन्वयस्य असुकरत्वात् । 'सहस्रशीर्षा पुरुषो, नारायण एवे'त्युपक्रमानुसारेण पुरुषसूक्तस्य नारायणपरत्वमविकलम् । तथाच नारायणपरपुरुषसूक्तानुरोधेनापि श्वेताश्वतरोपनिषदपि नारायणपरैव ।

किञ्च पुरुषसूक्तस्य नारायणेतरपरत्वे 'ह्रीश्च ते लक्ष्मीश्च पत्न्या'विति तत्रत्यलक्ष्मीपतित्वरूपलिङ्गानुपपत्तिः । एतेन 'उतामृतत्वस्येशान' इति ईशानाभिधानश्रुत्यनुगुण्यात् प्रथमानिर्दिष्टादीशशब्दार्थभूतगौरीपतित्वलिङ्गानुगुण्यात्, लक्ष्मीशब्दस्यापि तत्परतया पुरुषसूक्तस्य शिवपरत्वमेव युक्तम् । एवञ्च स्मृत्यर्णवादिषु 'ह्रीश्च त' इति मन्त्रस्य गृहयज्ञसोमाधिदेवतायाः गौर्याः पूजायां विनियोग उक्त उपद्यते । अत एवानन्तरमपि 'अहो रात्रे पार्श्वे' इति शिवस्यैव प्रसिद्धार्धनारीश्वरात्मकरूपोपदेशश्च सङ्गच्छत इति निरस्तम् ॥ ईशानशब्दस्य अम्, तत्वस्येति पदान्तरेण स्वार्थप्रतियोगिन उपादानात् । समुदायशक्त्युन्मेषासम्भवेनाभिधानश्रुतित्वासम्भवस्य उक्तत्वात् । वाजसनेयके 'श्रीश्च ते लक्ष्मीश्च पत्न्यावि'ति पाठात् । ह्रीशब्दस्यापि श्रीपरत्वौचित्याच्च । अन्यथा वाजसनेयकगत-श्रीशब्द-लक्ष्मीशब्दयोरत्रत्य-लक्ष्मीशब्दस्य च त्रयाणां पुरुषसूक्तस्यैकार्थनिर्णयोपपत्तये ह्रीशब्देनैकेन बाधप्रसङ्गः । न चैकानुरोधेन बहुबाधो युज्यते । ह्रीशब्दस्य गौरीवाचित्वे अभिधानकोशस्मृत्यादेरभावाच्च । लज्जावाचित्वेन ह्रीशब्दरूपह्रल्लोकार्थभूत-गौरीपरत्वेन च सन्दिग्धस्य च लक्ष्मीशब्दवत् पत्नीशब्दसमभिव्याहारेण विशेषनिष्ठत्वसम्भवेऽपि शिवस्य नारायणवदनेकपत्नीत्वप्रसिद्ध्या तदुभयपत्नीकत्वस्य नारायणपरत्वमादावेवोपपद्यत्वाच्च । अन्यथा पत्नीद्वित्त्वप्रतिपादकद्विवचनानुपपत्तेः । अत एव तदनन्तरं 'अहो

रात्रे पार्श्वे' इति शिवस्यैव प्रसिद्धार्धनारीश्वरात्मकरूपोपदेश उपपद्यत इति निरस्तम् । तथासति ह्रीलक्ष्मीशब्दार्थयोरपि तदुभयपार्श्वद्वयात्मकत्वापत्त्या सर्वभागनारीत्वप्राप्त्या अर्धनारीश्वरत्वानुपपत्तेः ।

यत्तु 'ह्रीश्च त' इति मन्त्रस्य गौरीपूजायां विनियोगेन गौरीपरत्वमिति तन्न । विनियोगमात्रस्य उक्तरीत्या सहस्रशीर्षत्वादिनारायणधर्माविरुद्धपुरुषशब्दरूपनारायणाभिधानश्रुतिप्रतिपन्न-पुरुषसूक्त-नारायणपरत्वबाधकत्वानुपपत्तेः । 'अग्निर्मूर्धा दिवः ककुदि'त्यादि मन्त्राणामभिधानश्रुतिबलादाग्नेया-दीनामेव सतां ग्रहयज्ञे तु तद्ग्रहाराधने तत्तदैवत्यमन्त्रविनियोगावसरे भौमादिपूजायां विनियोगस्य बहुशः तत्प्रीणनजपादौ विनियोगस्य च *सम्प्रतिपत्तेः । अन्यथा तेषामपि भौमादिदेवतापरत्वापत्तेः । तस्मात् पुरुषसूक्तस्य देवतान्तरपरत्वासम्भवात् परिशेषान्नारायणपरत्वमेव युक्तम् । एवं (च ?) छन्दोगब्राह्मणे– 'इदं विष्णुः प्रक्षरस्य विष्णुः प्रकाव्यमु(दा)नेव ब्रुवाण' इति वाराहमन्त्यं पुरुषव्रते चैषा वैष्णवीनां संहितैतां प्रयुञ्जन् विष्णुं प्रीणातीति, वैष्णव्यां संहितायां निवेशनम् । आथर्वणे अष्टादशशान्तिप्रकरणे 'वैष्णव्यां पुरुषसूक्तमि'ति वैष्णव्यां शान्तौ विनियोजनम् । शौनक-बौधायनादिषु स्मृतिषु बहुधा नारायणसमाराधने विनियोजनम् । शौनक-बौधायनादिषु स्मृतिषु बहुधा नारायणसमाराधने विनि-योजनम् । विष्णुपुराणादिषु पुरुषसूक्तार्थ-प्रक्रियया नारायणस्तुतिकरणं पुरुषेण नारायणेन यजमान उपतिष्ठते अथ नारायणाभ्यामुपस्थानमित्यादि कल्पसूत्रेषु नारायणसमाख्यया व्यवहरणं चानुकूलितं भवति । एतेन पुरुषसूक्तस्य शिवपरत्वमभ्युपगच्छता उदाहृतानि लिङ्गपुराणस्थोपबृंहणानि प्रत्युक्तानि । तथाच नारायणपुरुषसूक्तानुरोधेनापि श्वेताश्वतरोपनिषदपि नारायणपरैवेति युक्तमुत्तरम् । एतेन 'याते रुद्र शिवातनूः, यामिषुं गिरिशं (च) हस्ते, मानस्तोके तनये मान आयुषि' इति रुद्रपर-श्रीरुद्राम्नातानेक-मन्त्रप्रत्यभिज्ञानस्य श्वेताश्वतरे दर्शनात् तस्य शिवपरत्वमेव युक्तमिति निरस्तम् । तत्र 'नान्यः पन्थाः सहस्रशीर्षा पुरुष' इति नारायणपर-पुरुषसूक्तानेक-मन्त्र-प्रत्यभिज्ञानस्यापि दर्शनेन तस्य शिवपरत्व-मेवेति विशेषपक्षपातस्य निर्मूलत्वात् । उक्तरीत्या विनिगमकसत्त्वेन तस्य नारायणपरताया एव न्याय्यत्वाच्च । एतेनैव श्वेताश्वतरस्य पुरुषसूक्तानुरोधेन नारायणपरत्वे श्वेताश्वतरेण स्वप्रतिपाद्यस्य 'अपाणिपादो जवनो गृहीता पश्यत्यचक्षुः स शृणोत्यकर्ण' इत्यादिना अपाणिपादत्वादि प्रतिपादनात् । पुरुषसूक्तेन च स्वप्रतिपाद्यस्य सहस्राक्षत्व-सहस्रपात्वादि-प्रतिपादनादेकस्य तद्वत्त्व-तदभाववत्वयो-र्विरोधात् द्वयोः प्रतिपाद्यभेद आवश्यक इति निरस्तम् । पुरुषसूक्तस्य शिवपरत्वेऽप्येतद्दोषसाम्याच्च । श्वेताश्वतरेणैव 'सहस्रशीर्षा पुरुष' इत्यादिना स्वप्रतिपाद्यस्य प्रथमतः सहस्राक्षत्व-सहस्रपात्वादिकं प्रतिपाद्योत्तरत्र 'अपाणिपाद' इत्यादिना तस्य तद्राहित्यप्रतिपादनेन व्याहतभाषित्वे प्राप्ते तत्परिहाराय

* संशोधितशुद्धपुस्तकं मुद्रणालये नष्टम् । अतः इतःपरं तालपुस्तकमनुसृत्य मुद्रितम् ।

तद्गतस्यैव 'नित्यो नित्यानां चेतनश्चेतनानाम्' इत्यस्यापेक्षणीयत्वेन तदर्थपर्यालोचनायां स्वरूपतो देहतश्च नित्यत्वरूपातिशयवानेतत्प्रतिपाद्य इत्यर्थलाभेन पादाद्यभावप्रतिपादकवचनस्यानित्यतदभाव-परतायाः स्वयमेवाङ्गीकृततया विरोधाभावेन द्वयोरेकविषयत्वोपपत्तेश्च । एतेन श्वेताश्वतरतोपनिषदीव कैवल्योपनिषद्यपि 'उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम्' इति प्रस्तुत्य 'ज्ञात्वा तं मृत्युमत्येति नान्यः पन्था विमुक्तय' इति शिवासाधारणानेकपदोपादानेन तद्ध्यानस्यैव मुक्त्युपायत्व-मभिधाय तदितरज्ञानस्य तन्निषेधात् । पुरुषसूक्तेऽपि ईशानाभिधानश्रुत्या 'तमेवं विद्वानमृत इह भवति' इत्यादिना तज्ज्ञानस्यैव तदुपायत्वप्रदर्शनात् तदितरज्ञानस्य तन्निषेधाच्च एतत्त्रितयानुरोधेन नारायण-ज्ञानस्य तथात्वप्रतिपादिका तदितरज्ञानस्य तथात्वनिषेधिका महोपनिषदपि शिवपराङ्गीकार्येति निर-स्तम् । पुरुषसूक्तस्थेशानादिपदस्य शिवाभिधानश्रुतित्वनिरासात् । तस्मान्नैकप्रमाणैर्नारायणपरत्वस्य व्यवस्थापनाच्च ।

उदाहृत-कैवल्यश्रुतेरपि 'विविक्तदेशे च सुखासनस्थाः शुचिः समग्रीवशिरः शरीरः । अत्या-श्रमस्थः सकलेन्द्रियाणि निरुध्यमध्यास्व(घ्य?) गुरुं प्रणम्ये'ति मुमुक्षुचितचिन्तनाद्युपायभूत-देशाव-स्थानादिकं निरूप्य 'हृत्पुण्डरीके विरजं विशुद्धं विचिन्त्य मध्ये विशदं विशोकम् । अचिन्त्यमव्यक्त-मनन्तरूपं शिवं प्रशान्तममृतं ब्रह्मयोनिमि'ति, मध्ये गुरुप्रणामानन्तरं विचिन्त्यरूपमननात् प्राक् 'यत्पुण्डरीकं पुरमध्यसंस्थं तत्रापि दहरं गहनं विशोकम् । तस्मिन् यदन्तरस्तदुपासितव्यमि'ति तैत्तिरीय-महोपनिषत्प्रतिपाद्यं विरजं = रजःसम्बन्धरहितं, विशुद्धं = तमोविदूरं पारिशेष्यात् सत्त्वगुणप्रधानम्, विशदं = यथावदुपासकान् प्रति स्पष्टं, विशोकं = रजस्तमोगुणापाद्यशोकरहितं, अचिन्त्यं = साकल्येन चिन्तयितुमशक्यं, अव्यक्तं = 'यमैवेष वृणुते तेन लभ्य' इत्यादेः स्वप्रसादरहितं प्रत्यव्यक्तं, अनन्तं = देशतः कालतो गुणतश्चापरिच्छिन्नं, अव्ययं = देहतो व्ययरहितं, शिवं = मरणाद्यमङ्गलरहितत्वेन परममङ्गलं, प्रशान्तं = वैषम्यनैर्घृण्येन सापेक्षत्वात् पुण्येन पुण्यं लोकं नयती'त्यादेश्च तत्तत्कर्मानुसारेण तत्तद्विषयकोपप्रसादकारिणं, अमृतं = मुमुक्षुप्राप्यस्वरूपं, ब्रह्मयोनिं = सकलजगन्निदानचतुर्मुखकारणं – उक्तविशेषणानां अन्यत्रासम्भवात् नारायणमित्यर्थाल्लभ्यं विचिन्त्य यथा– 'यस्य देवे परा भक्तिः यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मन' इति श्वेताश्वतरमन्त्रात् 'कथयति भगवा-निहान्त्यकाले भवभयकातरतारकं प्रबोधकमि'ति रामोपनिषद्वचनाच्च इष्टदेवतोपदेष्टुस्तद्वद्ध्येयत्वेन त्रिलोचनस्योमासहायस्य 'नारायणाद्रुद्रो जायते नेशान' इति श्रुत्या सर्गाद्यसमये अविद्यमानत्वेन नारायणोत्पन्नत्वेन चादिमध्यान्तविहीनत्वासम्भवात् । हीनशब्दस्य भावप्रधानत्वे तथादिमध्यान्तहीनं = आदिमध्यावसानेषु विगतं हैन्यमन्युनानतिरिक्तं यस्मिन् कर्मणि तद्यथा स्यादिति ध्यात्वेति क्रिया-

विशेषणम् । न्यूनाधिकराहित्येनैकप्रकारं – चतुर्मुखकारणनारायणादन्यं, विभुं = अंशतश्चिदानन्दं, अरूपं = विरुद्धरूपं, अत एवाद्भुतमुमासहायं परमेश्वरं प्रभुं प्रशान्तं नीलकण्ठं त्रिलोचनं ध्यात्वा, मुनिर्मननशीलः = विचारशीलः, तमसः परस्तात् = प्रकृतिसम्बन्धरहितं समस्तसाक्षिं = सर्वज्ञं, भूतयोनिं = 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ती'त्यादेः समस्तभूतकारणं चिन्तितं नारायणं गच्छति जानाति साक्षात्करोतीत्यर्थ इति मननशीलस्य नारायणसाक्षात्कारसम्पत्तिमुक्त्वा – यस्य वस्तुनो विशिष्य नारायणशब्देनानभिधानात् तस्य नारायणत्वं कथमित्यपेक्षिते तत्सिद्धये तस्य ब्रह्मादि-देवतात्मकत्वं साक्षाद्विष्णवभिन्नत्वं भूतभव्यसमस्तप्रपञ्चात्मकत्वमनादित्वञ्च 'स ब्रह्म स शिवः सेन्द्र' इत्यादिना 'सनातनमि'त्यन्तेन निरूप्य तत्साक्षात्कारानन्तरं कः पुरुषार्थो भवतीत्यपेक्षायां 'ज्ञात्वा तं मृत्यमत्येति नान्यः पन्था विमुक्तय' इति प्रथमतश्चिन्त्यत्वेनोक्तम् । तच्छब्देन परामृश्य तज्ज्ञान-तदितराज्ञानयोर्मोक्षोपायतन्निषेधावेदकत्वेनोत्कर्षपरतया योजयितुं शक्यत्वेन शिवज्ञानस्यैव मुक्त्यु-पायत्वे तदितरज्ञानस्य तन्निषेधे च तात्पर्याकल्पनात् ॥ अन्यथा 'हृत्पुण्डरीके विरज' इत्यारभ्य 'ध्यात्वे'त्येतत्पर्यन्तमुक्तधर्माणामेकत्रिलोचनविषयत्वे विचिन्त्य ध्यात्वेत्यनयोरन्यतरस्य मध्यशब्दस्य तथाशब्दस्य च वैयर्थ्यापत्तेः । 'आदिमध्यान्तविहीनमि'ति विशेषणानुपपत्तेश्च । 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यादाविव अर्थक्रमस्य बलवत्त्वात् । त्रिलोचनध्यानस्य नारायणविचिन्ताङ्गतया प्राधान्यासम्भवेन न पाठक्रमो विवक्षितः किन्त्वर्थ एवेति ॥ एवञ्च उदाहृतबहूपनिषदामुक्तरीत्या अस्मदुक्तार्थ एवञ्च स्यात् तदनुग्रहाय श्वेताश्वतरोपनिषदपि तत्प्रतिपाद्य नारायणपरैव स्वीकर्तव्येति सद्ब्रह्माऽऽत्मादिसामान्यशब्दानां 'छागपशुन्यायेन' नारायण एव पर्यवसानमिति सुष्ठूक्तम् ॥

नन्वथर्वशिखायां– 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते सर्वाणि चेन्द्रियाणि सह भूतैरि'ति देवप्रमुखज्ञापनार्थं नामग्रहणपूर्वकं ब्रह्मविष्ण्वादीनां भूतेन्द्रियतुल्यतया कार्यत्वमुक्त्वा कारणं तु 'ध्येयः सर्वैश्वर्यसम्पन्नः सर्वेश्वरः शम्भुराकाशमध्यग' इति वाक्येन कारणत्वोक्तिपूर्वकं तेषां न कारणं कारणा-नामिति मुख्यकारणत्वाभावोक्तिपूर्वकञ्च शिवस्य ध्येयत्वाभिधानेन साक्षादेव सर्वकारणत्वं प्रतीयते । एवञ्च नारायणाच्छिवस्येव शिवाद्विष्णुशब्दितस्य नारायणस्यापि श्रुत्या कार्यत्वावगमतौल्यात् । तस्य च युगपदसम्भवेऽपि देवदत्तयज्ञदत्तयोरिव कालभेदेन सम्भवात् कारणवाक्यगतसब्रह्मादिशब्दानां 'छाग-पशु'न्यायेन कथं नारायण एव पर्यवसानम् ? । न हि कार्यकोटिप्रविष्टो नारायणः सकलजगत्कारणभावं भजत इत्यभ्युपगमार्हम् । तथासत्यविशेषेण शिवस्यापि तदभ्युपगमप्रसङ्गात् । न च विष्णुशब्दितस्य नारायणस्य शब्दतो न शिवजन्यत्वं प्रतीयत इति वाच्यम् । तथापि 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त'

इति श्रुतिप्रतिपन्नकार्यत्वानपायात् । 'अपरिमिताधिकरण'न्यायेन 'ध्यायीतेशानप्रध्यायितव्यमि'ति सन्निहितवाक्यप्रतिपन्नेशानशब्दितशिवस्यैव विष्णुं प्रति कारणत्वौचित्याच्चेति च उच्यते ॥

इत्यथर्वशिखायाम्– 'ध्यायीतेशानं प्रध्यायितव्यमि'ति ध्यानविध्यवगमात् विध्यपेक्षित-प्राशस्त्यसमर्पकतया कश्चिदर्थवादो मृग्यत इति 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रा' इत्यादेरर्थवादत्वं ताव-दावश्यकम् । 'विरोधे गुणवादः स्यादि'ति न्यायेन रुद्रशब्दितस्य शिवस्येशानशब्दितात् स्वात्मन एव प्रसूतेर्विरुद्धत्वेन तदंशे अस्य गुणवादत्ववत् 'नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते नारायणादिन्द्रो जायते,' 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इति च सर्गाद्यसमये नारायणाद्ब्रह्मोत्पत्त्यनन्तर-मुत्पन्नत्वेन प्रतिपन्नस्य शिवस्य तदैव नारायणं प्रति ब्रह्मेन्द्रौ प्रति च समस्तकारणत्वविरोधात् । तदंशेऽपि गुणवादत्वमावश्यकमेव । मन्त्रस्य सतोऽप्यस्य 'वसन्ताय कपिञ्जलानालभत' इत्यादेरिव अर्थवादरूपत्वं च नानुपपन्नम् ॥ एवञ्च सोमः पवते जनिता मतीनां जनिता दिवो जनिता पृथिव्या जनिताऽग्नेर्जनिता सूर्यस्य जनितेन्द्रस्य जनितोत विष्णोरि'त्यादिवत् 'अनुष्टुभो वा इमानि भूतानि जायन्ते अनुष्टुभाजातानि जीवन्ति अनुष्टुभं प्रयन्त्यभिसंविशन्ती' त्यादिवच्च असम्भवदर्थकत्वेऽपि अस्य अभ्युदयार्थमसमवेतगुणादिप्रकाशनद्वारा मन्त्रत्वेनाप्युपयोगोपपत्तेश्च । असमवेतस्यापि समवेतविशे-षणस्याभिधानं मन्त्रश्रुतविशेषणविशिष्टरूपप्रकाशनमभ्युदयकारीति नियमादृष्टार्थमिति अयमर्थश्च अवचनात् तेषामितरार्थं प्रयुज्यत इति नावमिकाधिकरणे स्थित इति न काचिदनुपपत्तिः । तथाच तस्य प्राशस्त्यपरत्वेनैव प्रवृत्ततया ततः कथं ब्रह्मविष्णवादीनां शिवादुत्पत्तिसिद्धिः ॥

किञ्च 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इत्यतो विष्णुब्रह्मणोर्न कण्ठतः शिवजन्यत्वं प्रतीयते । तदुपस्थापकशब्दाभावात् । किन्तु सन्निध्याकाङ्क्षावशात्प्रतीतस्य जनकत्वं कल्प्यम् । न च अत्र तत्कल्पनमुपपद्यते । 'एको ह वै नारायण आसीन्न ब्रह्मा नेशानः । तत्र ब्रह्मा चतुर्मुखो जायत त्र्यक्षः शूलपाणिः पुरुषो जायत । नारायणाद्ब्रह्मा जायते नारायणाद्रुद्रो जायते' इति हि वाक्यम् । ततः सर्गा-द्यसमये शिवब्रह्मविष्णून्प्रति 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इत्यतः सन्निध्याकाङ्क्षारूपप्रकरणादि-कल्प्यस्य जनकत्वोपस्थितेः प्रागेव तस्य विष्णवपरपर्याय-नारायणजन्यत्वावगमात् कथं ततः तयोः शिवजन्यत्वसिद्धिः ॥ सन्निधिप्रकरणाभ्यां वाक्यस्य प्रबलत्वेनोदाहृतवाक्याच्छिवस्य नारायणजन्यताया एव सिद्धेः ॥ न च सर्गाद्यसमये नारायणकार्यत्वेन वाक्यप्रतिपन्नस्य शिवस्य तदैव नारायणकारणत्वे सन्निध्यादिकं प्रमाणं युज्यते । सन्निधिप्रकरणाभ्यां वाक्यस्य बलीयस्त्वं श्रुतिलिङ्गवाक्यप्रकरण-स्थानसमाख्यानां 'समवाये परदौर्बल्यमर्थविप्रकर्षादि'ति तार्त्तीयाधिकरणे स्थितम् ॥

केचित्तु अथर्वशिखावाक्यमिदं न स्वयं कस्यचित्कारणत्वविधायकं 'ध्यायीतेशानमि'ति विधिप्रत्ययसमभिव्याहारेणास्य ध्यानविधिपरत्वावगमात् । उभयविधिपरत्वे वाक्यभेदापत्तेः । तथाच श्रुत्यन्तरेषु सुबालोपनिषदादिषु च नारायणस्यैव कृत्स्नजगत्कारणत्वप्रसिद्धेः । 'कारणं तु ध्येय' इति कारणपदस्य बाधकं विना औत्सर्गिकतात्पर्यविषयतया क्लृप्ततत्परत्वत्यागायोगेन स्थिते तत्परत्वे तत्समभिव्याहृतेशानशम्भ्वादिशब्दोऽपि तत्पर एव स्वीकार्यः । न चैवं ईशानपदसमभिव्याहृतविधौ लक्षणापत्तिः । बाधकसत्त्वे 'सोमेन यजेते'त्यादाविव विधित्वेऽपि लक्षणाश्रयणादीशानशम्भ्वादिपद-वाच्यस्य शिवस्योक्तरीत्या कृत्स्नजगत्कारणत्वानुपपत्तेः । तत्परकारणपदसमभिव्याहृतेशानादि-पदानामपि नारायणपरत्वावश्यम्भावात् । न चैवं विधिवाक्यगतेशानादिशब्दस्य नारायणपरत्वेऽपि वाक्यशेषगत'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इत्यत्र विष्णुशब्दितस्य तस्येव तज्जन्यत्वप्रसङ्गः । सन्निध्याकाङ्क्षाबलादिति वाच्यम् । तस्य शिवपरत्वेऽपि एतद्दोषसाम्यात् । रुद्रशब्दस्यापि शिव-वाचित्वात् । न च तस्य शिवपरत्वपक्षे वाक्यशेषावगतरुद्रस्य ब्रह्मविष्णुवद्गुणभूतमूर्तित्रयान्तर्गतत्वेन विध्यवगतेशानादन्यतया न तज्जन्यत्वानुपपत्तिरिति वाच्यम् । विष्णुशब्दितस्याप्युक्तरीत्या ब्रह्मरुद्र-वद्गुणत्वासम्भवस्योक्तत्वात् । विष्णुशब्दार्थस्य रुद्रशब्दार्थवदन्यत्र सम्भवात् । विधिगतेशानशब्दस्य नारायणपरत्वेऽपि वाक्यशेषगतविष्णुशब्दस्य भक्तसौलभ्यार्थतदवतारविशेषपरत्वसम्भवेन तस्य तज्जन्यत्वोपपत्तेश्च । अतः श्रुतिषु नारायणातिरिक्तस्य क्वापि कृत्स्नजगत्कारणत्वप्रतिपादनाभावात् नारायणस्य च सुबालोपनिषदादिषु प्रलयनिरूपणप्रकरणेष्वेव बहुधाभ्यासेन अनन्यसाधारणनारायण-शब्देन कृत्स्नजगत्कारणत्वप्रतिपादनाच्च सर्वकारणवाक्यानां 'छागपशु'न्यायेन तत्रैव नारायणे पर्यव-सानमित्याहुः ॥

तथा नारायणस्य कृत्स्नजगत्कारणत्वे मनुः 'आसीदिदं तमोभूतमप्रज्ञातमलक्षणम् । अप्रतर्क्य-मविज्ञेयं प्रसुप्तमिव सर्वतः ॥ ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम् । महाभूतादिवृत्तौजाः प्रादु-रासीत्तमोनुदः ॥ योऽसावतीन्द्रियग्राह्यः सूक्ष्मोऽव्यक्तः सनातनः । सर्वभूतमयोऽचिन्त्यः स एव स्वय-मुद्बभौ ॥ सोऽभिध्यायशरीरात् स्वात् सिसृक्षुर्विविधाः प्रजाः । अप एव ससर्जादौ तासु वीर्यमवा-सृजत् । तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् । तस्मिन् जज्ञे स्वयं ब्रह्मा सर्वलोकपितामहः' इति जगत्कारणब्रह्मनिदानमविशेषेणोक्त्वा तस्य प्रसिद्धशिवाद्यन्यत्वज्ञापनाय 'विष्णुर्नारायण' इत्याद्यभि-धानसिद्धरूढिकस्य योगेनापि भवति नारायणे प्रवृत्तिरिति वक्तुं नारायणनामावयवार्थमाह– 'आपो नारा इति प्रोक्ता आपो वै नरसूनवः । ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः' इति ॥

तथा योगयाज्ञवल्क्येऽपि– 'विष्णोरायतनं ह्यापः सन्त्ययं प्रति उच्यते । तस्यैव सूनवस्त्वेतास्तस्मात् तासु च संस्मरेदि'ति नामावयवार्थमाह ॥

तथा भारतेऽप्युक्तम्– 'नराज्जातानि तत्त्वानि नाराणीति ततो विदुः । तान्येव चायनं तस्य तेन नारायणः स्मृत' इति ॥

नारदीये षष्ठाध्याये नारायणस्य सकलजगज्जन्मकारणत्वे ब्रह्मवचनम्– 'अस्माकं जगतां नाथो जनिता पुरुषोत्तम' इति ॥

नारायणस्यैव पुरुषोत्तमत्वम्– 'द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' इति गीतावचनप्रसिद्धम् ॥

तथा गीतायां भगवतः श्रीकृष्णस्य वचनम्– 'अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तत' इति ॥

तथा विष्णुपुराणे पाराशरवचनम्– 'यथावत् कथितो देवैर्ब्रह्मा प्राह ततः परम् । परावरेशं शरणं व्रजध्वमसुरार्दनम् । प्रधानपुंसोरुभयोः कारणं कार्यभूतयोः । प्रणतार्तिहरं विष्णुं स वः श्रेयो विधास्यति ॥ एवमुक्त्वा सुरान् सर्वान् ब्रह्मा लोकपितामहः । क्षीरोदस्योत्तरं तीरं तैरेव सहितो ययौ ॥ स गत्वा त्रिदशैः सर्वैः समुपेत्य पितामहः । तुष्टाव वाग्भिः स्पष्टाभिः परावरपतिं हरिम् ॥ यं नायं भगवान् ब्रह्मा जानाति परमं पदम् । तं नताः स्म जगद्धाम तत्सर्वगतमच्युतम् ॥ एष ब्रह्मा तथैवायं सह रुद्रैस्त्रिलोचनः । सर्वादित्यैः समं पूषा पावकोऽयं सहाग्निभिः ॥ अश्विनौ वसवश्चेमे सर्वैरेते मरुद्गणाः । साध्या विश्वे तथा देवा देवेन्द्रश्चायमीश्वरः । प्रणामप्रवणानाथ दैत्यसैन्यैः पराजिताः । शरणं त्वामनुप्राप्ताः सर्वे वै देवतागणाः । प्रणम्य प्रणताः सर्वे सङ्क्षोभस्तिमिरेक्षणाः । तुष्टुवुः पुण्डरीकाक्षं पितामहपुरोगमाः' इत्येवमादीनि परस्सहस्रवचनानि नारायणस्य कृत्स्नजगत्कारणत्वाद्यनन्यसाधारणधर्मविदकानि तत्र तत्र प्रचरदवस्थानि यद्यप्यत्र लिखितुं सुलभानि तथापि ग्रन्थभूयस्त्वभयान्नास्माभिर्लिखितानि । स्वयमेव बुद्धिमद्भिरनुसन्धेयानि ॥

यद्यपि पुराणेषु लैङ्गादिषु सृष्टिप्रकरणेष्वेव शिवस्य जगत्कारणत्वं बहुधा प्रपञ्चितम्, तथापि 'विरोधाधिकरण'न्यायेन सोपबृंहण-नारायणकृत्स्न-जगत्कारणत्वप्रतिपादनपरप्रत्यक्षानेकश्रुतिविरोधेन लैङ्गादिपुराणवचनानि अन्यथा नेतव्यानि । न यथाश्रुतपराण्यायितव्यानीति न तद्विरोधशङ्कावकाशः ॥

एतेन 'सङ्कीर्णाः सात्त्विकाश्चैव राजसास्तामसास्तथे'ति मात्स्यवचनेन तत्तद्गुणसमवेतोऽनेकहेतुत्वेन तत्तत्कल्पानां सङ्कीर्णसात्त्विकराजसतामसव्यपदेशविषयत्वमुक्त्वा, तत्रैव– 'यस्मिन्कल्पे तु

यत्प्रोक्तं पुराणं ब्रह्मणा पुरा । तस्य तस्य तु माहात्म्यं तत्स्वरूपेण वर्ण्यते' इति तत्तत्पुराणानामपि प्रकृतिगुणसमतोद्रेकहेतुतत्तत्कल्पेषु तथाविधगुणवद्ब्रह्मप्रोक्तत्वेन कल्पवत्तत्तद्व्यपदेशभाक्तमुक्त्वा तत्रैव अग्रे– अग्नेः शिवस्य माहात्म्यं तामसेषु प्रकीर्यते । राजसेषु च माहात्म्यमधिकं ब्रह्मणो विदुः । सङ्कीर्णेषु सरस्वत्याः पितृणाञ्च निगद्यते । सात्त्विकेष्वथ कल्पेषु माहात्म्यमधिकं हरेः ॥ तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमि'ति ब्रह्मविष्णुशिवादीनां परस्परोत्कर्षं प्रतिपादयतां तत्तत्पुराणानां तत्तत्कल्पभेदप्रवृत्त-तत्तद्देवतोत्कर्षविषयतया विरोधाभावमभिप्रेत्य प्रामाण्यव्यवस्थापनात् तुल्यन्यायेन ब्रह्मविष्ण्वादीनां जगत्कारणत्वरूपोत्कर्षप्रतिपादकोदाहृतानेकश्रुतीनामपि तत्तत्कल्पभेदप्रवृत्त-जगत्कारणत्वादिरूपपरस्परतत्तद्देवतोत्कर्षविषयत्वेन विरोधपरिहारसम्भवात् । तत्तत्परिहारमुखेन मुख्यार्थत्यागेनैव प्रामाण्योदाहरणसम्भवेन तासामेकविषयत्वसिद्धये तत्तत्कारणवाक्यगत-तत्तद्देवतासाधारण-तत्तच्छक्तब्रह्मनारायणेशानादिशब्दानां ब्रह्मविष्णुशिवाद्यन्यतमेषु जगत्कारणत्वे (जगत्कारणत्वेन ?) स्वाभिमते तत्तद्देवतामात्रेऽन्यथोपपन्नविरोधपरिहाराय नाप्रामाणिकलक्षणाङ्गीकारो युक्तः । न हि ममेव तव व्यवस्थया तत्तद्देवतानामुत्कर्षाभ्युपगमं विनाऽपि तत्तत्कारणवाक्यानां तद्गतनारायणेशानादि-पदलक्षणां विना स्वाभिमतैकदेवतामात्रविषयत्वं सूपपादमिति निरस्तम् ॥

उक्तरीत्या कृत्स्नजगत्कारणस्य नारायणातिरिक्ते सर्वथाऽनुपपन्नत्वेन तस्य तत्कल्पप्रवृत्त-तद्देवतोत्कर्षरूपस्यैवायोगात् । किञ्च एवं सति अनेकस्वतन्त्रचेतनरूपजगत्कारणाङ्गीकारापत्तिः । न च इष्टापत्तिः । गौरवात् । एकस्यैव तथात्वे लाघवात् । 'सदेव सोम्य', 'इदमेकमेवाद्वितीयम्', 'आत्मा वारेदमेकमेवाग्र आसीत्', 'द्यावा भूमी जनयन् देव एकः' इत्यादौ जगत्सर्जनादिविषयस्वसमानजातीय-द्वितीयराहित्यरूपजगत्कर्तैकपरैकशब्दानुपपत्तेश्च । तथाविधानेकजगत्कर्त्रङ्गीकारे तत्कारणत्वरूप-परब्रह्मलक्षणादिव्याप्त्यापत्तेः । 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति तत्समाभ्यधिकराहित्यावेदक-श्रुतिविरोधापत्तेश्च । अन्यथा तत्तत्कारणवाक्यानां तत्तदनेककल्पभेदप्रवृत्ताकाशादिजडचेतनात्मक-स्वतन्त्रानन्तजगत्कारणपरतया विरोधपरिहारस्य सुकरत्वेन मुख्यार्थत्यागेनैव तेषां प्रामाण्योपपादन-सम्भवेन परशिवरूपतथाविधैकजगत्कारणविषयत्वसिद्ध्यर्थं समन्वयाध्यायोक्तन्यायैः 'तत्तु समन्वयात्' इति प्रतिज्ञातस्य सकलकारणवाक्यानां समन्वयस्यैव वक्तव्यत्वेन समन्वयाध्यायानारम्भप्रसङ्गः । तदनारम्भे च तेषां विरुद्धार्थत्वप्रसक्तेरेवाभावेन तत्परिहाराय द्वितीयाध्यायानारम्भप्रसङ्गश्च । किञ्च नारायणेशादीनां तत्तत्कल्पभेदेन जगत्कारणत्वादिरूपोत्कर्षव्यवस्थाकविकारे 'धाता यथा पूर्वमकल्प-यत्' इति श्रुत्या पूर्वप्रवृत्तानेककल्पभेदेष्वेकस्यैवान्यूनातिरेकेण जगत्सर्जकत्वप्रतिपादनानुपपत्तिः । भागवतविष्णुपुराणयोः 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते । स्थित्या-

दये हरिविरञ्चहरेति संज्ञाः श्रेयांसि तत्र खलु सत्त्वतनौ नृणांस्यः', 'सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णु-शिवात्मिकाम् । स संज्ञां याति भगवानेक एव जनार्दनः' इत्यादि सृष्टिकर्तृत्वादिप्रवृत्तिनिमित्तान्यादाय ब्रह्मविष्ण्वादिशब्दानां 'महान् प्रभुर्वै पुरुषः सत्त्वस्यैषः प्रवर्तक' इति महापुरुषशब्दस्य शुद्धसत्त्व-गुणप्रवर्तकत्वेन विष्णुविषयत्वावेदनवत् 'पुरुषो ह वै नारायण' इति श्रुत्या केवलपुरुषशब्दस्यापि विष्णुविषयत्वावेदनात् । पर इति विशेषणबलेनापि नारायणातिरिक्तस्य परमपुरुषत्वाभावेन 'परः पुरुष एकः, एक एव जनार्दनः' (इति ?) प्रतिपरपुरुषजनार्दनशब्दाभ्यां प्रतिपादितैकविष्णुसंज्ञात्वोत्त्यनुरोधेन ब्रह्मशिववाचकशब्दानां लक्षणां विनैव शक्त्या विष्णुविषयत्वसम्भवेन तत्समभिव्याहृतकारणवाक्यानां बलवद्बाधकं विना एकविष्णुविषयत्वत्यागानुपपत्तिश्च । उपधेयसङ्करेऽपि सृष्टिकर्तृत्वाद्युपाधीनां असाङ्कर्येण ब्रह्मविष्ण्वादिपदप्रवृत्तिनिमित्तत्वोपपत्तेः । न ह्यनयोर्भागवतविष्णुपुराणवचनयोरुक्तप्रवृत्ति-निमित्तत्वप्रदर्शनमुखेन ब्रह्मविष्णुशिववाचिपदानां शक्तिग्राहकत्वं स्फुटप्रतिभासं बाधकं विना त्यागा-र्हम् । तस्मात् तत्तत्कारणत्वप्रतिपादनपरवाक्यानामविरुद्धार्थत्वस्य त्वदुक्तव्यवस्थां विनैव सूपपादत्वेन तदनुरोधेन तेषां कल्पभेदप्रवृत्ततत्तज्जगत्कारणत्वादिविषयतया न विरोधपरिहारः ॥ अत एव पुराणा-नामपि कल्पभेदप्रवृत्ततत्तद्देवतोत्कर्षविषयतया विरोधाभावसम्भवात् तादृशोत्कर्षविषयतया तेषां प्रामाण्यमुपपादयितुमुदाहृतमात्स्यवचनसुसन्दर्भप्रवृत्तिरिति निरस्तम् ॥

ब्रह्मरुद्रयोर्विष्णुवत् स्वातन्त्र्येण कृत्स्नजगत्कारणत्वे मानाभावात् । तदधीनजगत्कारणत्वेन च विरोधशङ्क्या एवानुदयात् । किञ्च पुराणानां स्वातन्त्र्येण ब्रह्मरुद्रजगत्कारणत्वप्रतिपादनपरत्वे 'सृजामि तन्नियुक्तोऽहं हरो हरति तद्वशः । विश्वं पुरुषरूपेण परिपाति त्रिशक्तिधृक्' इति भागवतद्वितीयस्कन्धस्थ-ब्रह्मवचने नान्याधीनतया सर्जकत्वसंहर्तृत्वप्रतिपादनानुपपत्तिः । किञ्च ब्रह्मरुद्रयोर्विष्णुवत्स्वातन्त्र्या-भ्युपगमे महाभारते– 'ब्रह्मा स्थाणुर्मनुर्दक्षो भृगुर्धर्मस्तपोधन' इत्यारभ्य 'एकविंशतिरुत्पन्नास्ते प्रजा-पतयः स्मृताः । तस्य देवस्य मर्यादां पूजयन्ति सनातनीमि'ति तयोर्दक्षमन्वादिवन्नारायणकृतमर्यादा-नुवर्तित्वोक्तिविरोधः ॥ तत्रैव 'एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ मम । मया दर्शितपन्थानौ सृष्टि-संहारकारकौ ॥ एष लोकगुरुर्ब्रह्मा जगदादिकरः प्रभुः । एष माता पिता चैव युष्माकं प्रपितामहः ॥ अस्यैव जानुजो रुद्रो ललाटात्तु समुत्थितः । मयानुशिष्टो भविता सर्वभूतवरप्रदः' इति वचनसन्दर्भप्रतिपन्न-नारायणप्रसादकोपजत्वतत्प्रदर्शितपथत्वोक्तिपूर्वकसर्जकत्वसंहर्तृत्वादिविरोधश्च ॥ तस्मात् पुराणा-नामपि सतां प्रत्यक्षश्रुतिविरुद्धार्थत्वे प्रामाण्यसम्भवं भङ्क्त्वन्तरेणैव प्रतिपादयितुमेवोदाहृतमात्स्यवचन-सन्दर्भप्रवृत्तिरित्येव वाच्यम् । न तु तेषां प्रत्यक्षश्रुतिविरुद्धार्थत्वेऽपि व्यवस्थया प्रामाण्यमुपपादयितु-मित्येव तत्त्वम् ॥ तथाच मनुः– 'या वेदबाह्याः स्मृतयो याश्च काश्च कुदृष्टयः । सर्वास्ता निष्फलाः प्रेत्य

तमोनिष्ठा हि ताः स्मृताः' इति । न हि वेदबाह्यत्वं वेदविरुद्धार्थत्वादन्यदस्ति । एतेनैव 'त्रयस्ते कारणात्मानो जाताः साक्षान्महेश्वरात् । चराचरस्य विश्वस्य सर्गस्थित्यन्तहेतवः ॥ पित्रा नियमिताः पूर्वं त्रयोऽपि त्रिषु कर्मसु । ब्रह्मा सर्गे हरिस्त्राणे रुद्रः संहरणे पुनः ॥ तथाप्यन्योन्यमात्सर्यादन्योन्यातिशयार्थिनः । तपसा तोषयित्वा तं पितरं परमेश्वरम् ॥ ब्रह्मनारायणौ पूर्वं रुद्रः कल्पान्तरेऽसृजत् । कल्पान्तरे पुनर्ब्रह्मा रुद्रविष्णुजगन्मयः ॥ विष्णुश्च भगवान् रुद्रं ब्रह्माणमसृजत् पुनः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ॥ प्रभावः कथ्यते तेषां परस्परसमुद्भवः । तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः ॥ पुराणानि प्रणीतानि विद्वांस्तत्र न मुह्यती'त्यादीनि साक्षादेव तत्तत्कल्पमादाय तेषां जगत्कर्तृत्वाद्युत्कर्षव्यवस्थाप्रतिपादनपराणि शिवपुराणवचनानि निरस्तानि ॥ एतत्पुराणवचनसन्दर्भार्थस्य विष्णोः ब्रह्मरुद्रोत्पन्नत्वस्य प्रचुरदवस्थश्रुतिसन्दर्भेषु क्वापि प्रतिपादनादर्शनेन तस्य निष्प्रमाणकत्वात् । न हि विष्णोर्ब्रह्मरुद्रोत्पन्नत्वप्रतिपादिकां काम् ? कामपि श्रुतिं पश्यामः । 'सर्वमिदं ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्त' इत्यथर्वशिखावाक्यस्य ब्रह्मविष्णवादीनां शिवजन्यत्वप्रतिपादनपरत्वासम्भवस्योक्तत्वात् ।

न च स्मृतिपुराणादीनां नित्यनिर्दोषश्रुतिवत् स्वातन्त्र्येण प्रमाणभावोऽस्ति । येन तेषां स्वतन्त्रप्रमाणमूलत्वमनादृत्याविगानेन तदुक्तोऽर्थः सर्वोऽप्यादर्तव्यः । ततश्च स्मृतिपुराणादीनां परस्परविरोधे यत्र नित्यनिर्दोषश्रुत्यादिस्वतन्त्रप्रमाणमूलत्वं दृश्यते तदर्थ एवादर्तव्यः । नान्यः । एवञ्च कथं तद्रहितानामुदाहृतशिवकृत्स्नजगत्कारणत्वप्रतिपादकानां शैवादिपुराणानां प्रत्यक्षश्रुतिविरुद्धार्थानां तेषां तत्तत्कल्पप्रवृत्तिशिवाद्युत्कर्षविषयतया व्यवस्थाप्रनिपादनशिवपुराणवचनसन्दर्भस्य च स्वार्थे प्रामाण्यसिद्धिः । एतेनैव नित्यनिर्दोषश्रुतिष्वेव 'हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत्' इत्यादौ हिरण्यगर्भस्यैकस्यैव तथा 'देवा ह वै स्वर्गं लोकमगमन् ते देवा रुद्रमपृच्छन् को भवानिति । सोऽब्रवीदहमेकः प्रथममास वर्तामि च भविष्यामि चे'त्यादौ रुद्रस्यैकस्य तथैव 'नैवेह किञ्चनाग्र आसीत्', 'अमूलमनाधारा इमाः प्रजाः प्रजायन्ते', 'दिव्यो देव एको नारायणः', 'एको ह वै नारायण आसीन्न ब्रह्मा नेशान' इत्यादौ नारायणस्यैवेकस्य जगत्कारणत्वप्रतिपादनदर्शनात् । तत्रत्यैकशब्दस्य एकत्वसङ्ख्यापरत्वाङ्गीकारे तल्लाभस्यैकवचनेनैव सम्पादनात् वैयर्थ्यापत्तेः । एकशब्दोऽयं बह्वर्थ इति महाभाष्यवचनात् 'एके मुख्यान्यकेवला' इत्यभिधानाच्च । तस्यासहायार्थपरत्वे मुख्यार्थपरत्वे वा स्वीकार्ये हिरण्यगर्भादितत्तद्देवता जगत्कारणप्रतिपादनपरोदाहृतश्रुतिवाक्यानां युगपत्तुल्यवत्तन्मुख्यकारणत्वप्रतिपादनपरत्वासम्भवात् असहायत्वप्रतिपादनपरत्वासम्भवाच्च ॥ प्रसक्ततद्विरोधपरिहाराय षोडशीग्रहणाग्रहणवत् व्यवस्थितविकल्पार्थत्वस्यावश्यकत्वात् । स्थिते हिरण्यगर्भादीनां

तत्तत्कल्पभेदेन जगत्कारणत्वाद्युत्कर्षतया तथाविधव्यवस्थार्थकश्रुतिमूलत्वसम्भवेन तत्तद्देवोत्कर्ष-प्रतिपादकानां शैवादिपुराणानां तद्व्यवस्थितार्थप्रतिपादनायोदाहृतशैवादिपुराणवचनसन्दर्भस्य तथा-विधोदाहृतमात्स्यवचनसन्दर्भस्य च निष्प्रमाणकत्वाभावात् कथं न तदुक्तार्थ आदर्तव्य इति निरस्तम् ॥

गोपुरप्राकारादिमहाकार्येष्विव भूधरादिरूपजगल्लक्षणमहाकार्येष्वपि युगपदेव समुच्चयेन मुख्या-नेककर्तृकत्वरूपसम्भवेनोदाहृतश्रुतिगतैकशब्दस्य मुख्यार्थपरत्वे विरोधशङ्काया एवानुदयेन तच्छ्रुति-वाक्यानां ग्रहणाग्रहणवाक्यवद्व्यवस्थितविकल्पार्थत्वायोगेन तादृशार्थपरशिवपुराणादिमूलत्वासम्भवात् । किञ्च 'न ब्रह्मा नेशान' इति श्रुतावविशेषेणैव सर्गाद्यसमये ब्रह्मरुद्रयोरसत्त्वेन प्रतिपन्नयोस्तदैव समुच्चयेन कृत्स्नजगत्पतिनारायणतुल्यतया कथं मुख्यकर्तृत्वसम्भवः ? ॥

ननूदाहृतश्रुतिवाक्येषु एकशब्दस्य मुख्यार्थपरत्वे नियामकाभावात् । स्वसमानजातीयद्वितीय-राहित्यरूपैकत्वपरत्वे लाघवादपौरुषेयश्रुतितात्पर्यस्य न्यायमात्रनियन्त्रितत्वात् । कपिञ्जलाधिकरणे[1] तथैव व्यवस्थापनात् । तस्य तादृशैकत्वपरत्वमेव न्याय्यम् । एवञ्च उदाहृतकारणवाक्यानां कथं न परस्परविरोधः । कथं च तथासति हिरण्यगर्भादीनां त्रयाणामपि युगपत्समुच्चयेन कृत्स्नजगत्प्रति-स्वतन्त्रकारणत्वसम्भव इति चेन्न । नारायणवत् तयोः सर्गाद्यसमये सत्त्वाभावेन तत्तुल्यतया स्वतन्त्र-कारणासम्भवस्योक्तत्वात्[2] । अपिच उदाहृतकारणवाक्यानां स्वातन्त्र्येण हिरण्यगर्भाद्यनेकजगत्कारण प्रतिपादनपरत्वे 'सर्वे देवा यत्रैकं[3] भवन्ति', 'वेदैरनेकैरहमेव वेद्यः', 'सर्वे वेदा यत्पदमामनन्ति', 'वेदैश्च सर्वैरहमेव वेद्यः', 'वेदे रामायणे चैव पुराणे भारते तथा । आदावन्ते च मध्ये च विष्णुः सर्वत्र गीयते' इत्यादि सर्ववैदिकविष्णुनिष्ठत्वप्रतिपादकश्रुतिस्मृत्याद्यनेकविरोधः । न चैवमुदाहृतकारणवाक्यस्य(स्थ) हिरण्यगर्भादिपदानां मुख्यकारणभूतैकनारायणपरत्वाङ्गीकारे लक्षणाप्रसङ्गो दोष इति वाच्यम् । 'यो देवानां नामधा एक एव', 'ब्रह्मैव वाचः परमं व्योम', 'सत्त्वं रजस्तम इति प्रकृतेर्गुणास्तैर्युक्तः परः पुरुष एक इहास्य धत्ते', 'स्थित्यादये हरिविरिंचहरेति संज्ञाः', 'सृष्टिस्थित्यन्तकारिणीं ब्रह्मविष्णुशिवा-त्मिकाम्', 'स संज्ञां याति कां', 'भगवानेक एव जनार्दनः' इत्यादिश्रुतिस्मृतिभिः तेषां मुख्यतो विष्णु-वाचकत्वावेदनात्[4] । किञ्च 'सर्वे वेदाः यत्रैक(की)भवन्ती'त्याद्युदाहृतश्रुत्यादिभिः सर्ववेदानामेक-विषयत्वेऽवधारिते तन्निर्वाहाय कारणवाक्यगतहिरण्यगर्भादिपदानां स्वतन्त्रजगत्कारणभूतैकनारा-यणपरत्वस्य लक्षणां विनाऽनुपपत्तेः । तेषां लक्षणया[5] तत्परत्वस्य सप्रमाणत्वेनादोषत्वात् । सर्ववेदैक-निष्ठान्यथानुपपत्तेरेव लक्षणाबीजत्वात् ।

---

१. कपिञ्जलाधिकरणम् । मी.अ.
२. स्वतन्त्रकारणत्वस्यासम्भवस्योक्तत्वात् ।
३. सर्वे वेदा यत्र एकीभवन्ति ।
४. विष्णुवाचकतावेदनात् ।
५. लक्षणतया ।

ननु मैत्रायणीयोपनिषदि 'अथ यो ह खलु वास्य राजसोंऽशः सोऽसौ ब्रह्मचारिणः यो यं ब्रह्मा अथ यो ह खलु वा सात्त्विकोंऽशः सोऽसौ ब्रह्मचारिणः अथ यो यं विष्णुरथ यो ह खलु वास्य तामसोंऽशः सोऽसौ ब्रह्मचारिणो यो यं रुद्र' इति विष्णोरपि ब्रह्मरुद्रवत् परमात्मांशत्वाभिधानेन शिवप्राधान्यायोगात् । तयोरिव तस्यापि जगत्प्रति न स्वतन्त्रकारणत्वं सम्भवतीति चेन्न । निरस्तत्वात् । किञ्च 'अस्मिन्ग्रामे मम तृतीयांशोऽस्ति', 'तत्तदेवावगच्छ त्वं मम तेजोंऽशसम्भवम्', 'ममैवांशो जीवलोके जीवभूतः सनातनः' इत्यादाविव अंशशब्दस्य तत्तद्भिन्नांशेऽपि प्रयोगात् । 'एते स्वांशकलाः पुंसः' इत्यादावभिन्नांशेऽपि तस्य प्रयोगात् । ब्रह्मरुद्रयोश्च सर्गाद्यसमये नारायणवदसत्त्वेन तज्जन्यत्वेन च तदभिन्नांशत्वायोगात् । जगत्प्रति स्वतन्त्रकारणत्वासम्भवेऽपि विष्णुशब्दिततदंशस्य तत्रैव मैत्रायणीयोपनिषदि षष्ठे प्रपाठके– 'विश्वसृगग्रे नामैषा तनुर्भगवतो विष्णोर्यदिदमन्नं प्राणो वान्नस्य रसः प्राणस्य मनो विज्ञानं मनस आनन्दं विज्ञानस्येवंविदन्नवान् प्राणवान् प्रमनस्स्वान् विज्ञानवानानन्ददश्च भवती'ति वाक्येन विश्वसृजश्चतुर्मुखस्य साक्षात्प्रयताधिष्ठेयत्वेन नियाम्यतया विष्णुतनुत्वमुक्त्वा तत्रैव प्रणवविद्यायां 'यच्छन्दस्तदोमिति यदस्याग्रं तच्छान्तमभयमानन्दतृप्तं सुस्थिरमचलममृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वाधारधामे'ति विष्णोरेव परमाभिन्नांशत्वोपपादकशब्दत्वाभयत्वानन्दतृप्तत्वसुस्थिरत्वाचलत्वामृतत्वाच्युतत्वध्रुवत्वसर्वाधारधामत्वरूपांशिपरमात्मासाधारणधर्मवत्त्वोपन्यासेन तदभिन्नांशत्वसिद्धेः । न तस्य कृत्स्नजगत्प्रति स्वतन्त्रकारणत्वहानिः । न हि सर्वात्मनांश्यभिन्नस्य विष्णोस्तद्भिन्नांश(त्व)ब्रह्मरुद्रसाधारणांशशब्दप्रतिपाद्यत्वमात्रेण अप्रामाण्यमभ्युपगमार्हम् । अन्यथोदाहृतमैत्रायणीयोपनिषद्वाक्यस्य प्रणवविद्यास्तवस्य विष्णोरंशिभूतपरमात्मासाधारणांशशब्दत्वादिधर्मवत्त्वप्रतिपादनमुखेन तदत्यन्ताभिन्नांशत्वप्रतिपादनपरत्वाभावे तत्रैव सप्तमे प्रपाठके 'तच्छान्तमभयमानन्दतृप्तसुस्थिरमचलममृतं ध्रुवं विष्णुसंज्ञितं सर्वाधारं धामे'ति विष्णुसंज्ञितेंशे तदभ्यासाभावप्रसङ्गात् । मैत्रायणीयोपनिषदश्च परवस्तुप्रस्तावेषु तत्र तत्र 'अमृतमच्युतं ध्रुवं विष्णुसंज्ञितं सर्वाधारं धामे' इति विष्णुसंज्ञितेंऽशे पुनः पुनर्वचनान्न विष्णवन्यपरत्वशङ्कावकाशः । किञ्च विष्णोरिव रुद्रस्याप्यभिन्नांशत्वेन जगत्प्रति स्वतन्त्रकारणत्वे– 'अहमेव स्वयमिदं वदामि जुष्टं देवेभिरुत मानुषेभिः । यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् । अहं रुद्राय धनुरातनोमि ब्रह्मद्विषे शरवे हन्त वा उ । अहं जनाय समदं कृणोम्यहं द्यावा पृथिवी आविवेश । अहं सुवे पितरमस्य मूर्धन्' इति श्रुतौ ब्रह्मरुद्रादिपदव्या अम्भ्रण्यधीनत्वोक्तिः अम्भ्रणीजन्यब्रह्मजन्यत्वोक्तिश्च न स्यात् । न चैवमम्भृण्याः ब्रह्मरुद्रादिपदवीमात्रदातृत्वे नारायणवत्स्वातन्त्र्यापत्तिः । तस्या अपि 'मम योनिरप्स्वान्तस्समुद्र' इति तद्वाक्यशेषे समुद्रान्तःस्थत्वलिङ्गावगमितनारायणकारणकत्वप्रतीत्या तदनापत्तेः । 'अस्य देवस्य

मीळ्हुषे (षो ?) वया विष्णोरेषस्य प्रभृते हविर्भिः । विदेहि रुद्रो रुद्रियं महित्वं द्या (या ?) शिष्टं वर्तिवश्विता विरावत् । तव श्रिये मरुतो मर्जयन्त रुद्र यत्ते जनिम चारुचित्रम्', 'पदं यद्विष्णोरुपमं निधीयते न पासि गुह्य नामगोनाम्' इति रुद्रस्य विष्णवाराधनलब्धमहिमत्वं तन्नामोपासकत्वावेदनात् । विष्णोरिव तस्यानन्याधीनत्वाभ्युपगमे तद्विरोधश्च । 'यत्पादपङ्कजरजस्स्नपनं महान्तो वाञ्छन्त्युमापति- रिवात्मतमोपहन्त्यै' इति श्रीभागवतेऽपि उमापतेरात्मतमोपहत्यर्थं विष्णुपत्नीपादपङ्कजरजस्स्नपनाभि- षेकत्वे दृष्टान्ततया उपादानाच्च (उपपादनाच्च ?) तद्विरोधः । किञ्च विष्णोर्ब्रह्मरुद्रतुल्यत्वे 'परो मात्रया तन्वा वृधान न ते महित्वमन्वश्नुवन्ति । न ते विष्णो जायमानो न जातो देवमहिम्नः परमं तमाप' इति विष्ण्वितरदेवतानां तन्महिमराहित्याभिधानं तस्येतरालभ्यमहिमत्वाभिधानञ्च न स्यात् । न च 'विष्णुमुखा वेदे वाइछन्दोभिरिमान् लोकाननजय्यमभ्यजयन्नि'ति विष्णुजयस्य तदितरदेवजयवच्छन्दो- धीनत्वावगमात् । तद्वदेव तस्यापि न स्वातन्त्र्यमिति वाच्यम् । 'न तस्य कार्यं कारणं च विद्यत' इति श्रुत्या तस्य करणनैरपेक्ष्यभिधानेन 'विरोधे गुणवादः [१]स्यादि'ति न्यायेन तस्य गुणवादमात्रत्वात् । 'अग्निर्वै देवानामवमो विष्णुः परम' इत्याद्युदाहृतानेकतत्परस्वातन्त्र्यावेदकश्रुतिविरोधेन 'विष्णुमुखा' इत्यत्र 'अतद्गुणसंज्ञानबहुव्रीहि'[२]विज्ञानात् । अन्यथा 'विणोर्नु कं वीर्याणि प्रवोचं यः पार्थिवानि विममे रजांसि । योस्कताय (भा ?) उत्तरं सदस्थं विचक्रमाणस्ने(स्त्व ?)धोरगायः । तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः । दिवीव चक्षुराततमि'ति श्रुतिप्रनिपन्नविष्णवपारशक्तित्वस्य तथाविधत्वेन सार्व- कालिकज्ञानिप्रत्यक्षविषयत्वस्य चानुपपत्तिः ॥

यद्वा 'विष्णुमुखा वै देवा' इत्यस्य देवा छन्दोभिर्विष्णुमुखे येषां ते तथोक्ताः सन्तः विष्णुपरछन्दो- जातमुच्चारयन्तः सन्तः 'इमाँल्लोकाननपजय्यमभ्यजयन्' इत्यर्थपरत्वसम्भवेन तद्गुणसंविज्ञानबहुव्रीह्या- श्रयणेऽपि नोक्तदोषावकाशः । एवञ्च 'परास्य शक्तिर्विविधैव श्रूयते । स्वाभाविकी ज्ञानबलक्रिया च ॥ विचित्रशक्तिः पुरुषः पुराणो न चान्येषां शक्तयस्तादृशाः स्युः' इत्याद्यनन्यसाधारणतच्छक्त्यावेदक- श्रुतयोऽप्यनुकूलिता भवन्तीति न विष्णोः ब्रह्मरुद्रवत् परमात्मभिन्नांशकत्वे नास्वातन्त्र्याभ्युपगमो युक्तः । तस्मात् नारायणवत् ब्रह्मरुद्रयोरन्येषां च अस्वातन्त्र्येण कृत्स्नजगत्कारणत्वाद्युत्कर्षस्य श्रुतिषु क्वाप्यप्रतिपादनात् । क्वचित्क्वचित् तयोः श्रुतजगत्कारणत्वस्य तदन्तर्यामिनारायणविषयत्वेन वा तदधीनतत्कारणत्वविषयत्वेन वा उपपत्त्या न कारणवाक्यानां न परस्परविरोध इति स्थिते कल्पभेद- प्रवृत्ततत्तद्देवतोत्कर्षविषयतया लैङ्गादिपुराणानां व्यवस्थया प्रामाण्यस्वीकारः सर्वथा न युक्तः । न हि तेषां स्वतन्त्रप्रमाणमूलकत्वाभावे तथा व्यवस्थितार्थत्वेन प्रामाण्याङ्गीकारो युज्यते । श्रौतार्थान्यथाऽनुप-

१. विरोधे गुणवादः स्यात् । मी.न्या. । २. अतद्गुणसंज्ञानबहुव्रीहिः – पाणिनीसूत्रम् ? ।

पत्तेर्निरस्तत्वात् । तथाच ब्रह्मरुद्रयोरिव विष्णोरपि परशिवजन्यत्वेन तदधीनं जगत्कारणमिति वैदिकं मन्योक्तिः स्वगृहगोष्ठीमात्रत्वादनुपादेया ॥

केचित्तु लैङ्गादिपुराणवचनानां राजसतामसकल्पेषु चतुर्मुखप्रोक्तत्वात् सात्त्विककल्पेष्वेव तत्प्रोक्तवैष्णवादिपुराणवत् प्रामाण्यासम्भवेन तेषामप्रामाण्यमेवमूचिरे । तथाहि– तत्तत्कल्परूप-सामग्रीबलापादिततत्तद्गुणोद्रेकयुक्तब्रह्मप्रोक्तत्वेन तत्तद्गुणदेशभाक्तवसमर्थनार्था । न तु तत्तत्कल्प-प्रवृत्ततत्तद्देवतोत्कर्षविषयत्वेन विरुद्धार्थतया पुराणानां व्यवस्थया प्रामाण्यप्रतिपादनार्था वा उक्तरीत्या स्वातन्त्र्येण जगज्जन्मादिकारणत्वादिरूपोत्कर्षस्य नारायणातिरिक्ते क्वापि कदाप्यसम्भवात् । साधा-रणोत्कर्षस्य च विरोधाभावेन कल्पभेदमादाय व्यवस्थाप्यत्वात् । ब्रह्मणोऽपि । 'न तदस्ति पृथिव्यां वा दिवि देवेषु वा पुनः । स त्वं प्रकृतिजैः युक्तं यदेभिः स्यात्त्रिभिर्गुणैः' इति भगवद्वचनप्रतिपन्नप्रकृतिगुण-संस्पर्शावश्यकत्वेन तदुद्रेकसमये– 'सत्त्वात् सञ्जायते ज्ञानं रजसो लोभ एव च । प्रमादमोहौ तमसो भवतोऽज्ञानमेव च । अधर्मं धर्ममिति या मन्यते तमसा वृता । सर्वार्थान्विपरीतांश्च बुद्धिः सा पार्थ तामसी'ति भगवद्वचनप्रतिपन्नतत्तत्कार्यभूतसम्यज्ज्ञानलोभप्रमादाज्ञानादिमत्त्वस्य दुर्निवारतया तदा तदा तत्प्रोक्तपुराणानां तन्मूलत्वेन प्रामाण्याप्रामाण्ययोः दुर्वारत्वेन भङ्ग्यन्तरेण तेषां लैङ्गादिपुराणानां अप्रामाण्यज्ञापनायैव मात्स्यवचनसन्दर्भप्रवृत्तिरिति ॥

यत्त्वत्र कैश्चिद्वैदिकंमन्यैरुक्तम् । नोदाहृतमात्स्यवचनसन्दर्भो लैङ्गादिपुराणानां तामसकल्पेषु ब्रह्मप्रोक्तत्वमादाय तेषामप्रामाण्यं प्रतिपादयितुं प्रवृत्तः । किन्तु तत्तद्वाक्यशेषे । 'तेष्वेव योगसंसिद्धा गमिष्यन्ति परां गतिमि'ति श्रवणात् । 'ध्यानं तपस्तथा ज्ञानं लब्ध्वा तेष्वेव योगिनः । आराध्य मां च गिरिशं यान्ति तत्परमं पदम्' इति सात्त्विककल्पान् प्रस्तुत्य प्रवृत्तात् कौर्मवचनाच्च तपश्चर्यादीनां उत्कृष्टापकृष्टकालविशेषप्रदर्शनपरम् ॥ अन्यथा तत्र अग्नेः शिवस्य माहात्म्यमि'त्यनेन तत्तद्देवतो-त्कर्षस्य कल्पभेदप्रवृत्तत्वोपवर्णनेन तद्विषयतया तत्तत्पुराणानां व्यवस्थितार्थत्वेनाविरोधप्रतिपादना-नुपपत्तिः । न हि तत्सन्दर्भस्य तत्तत्पुराणानामविरुद्धार्थत्वेन प्रामाण्यप्रतिपादनपरत्वाभावे 'अग्नेः शिवस्य माहात्म्यमि'त्यादिना तत्तत्पुराणार्थानामविरुद्धार्थत्वप्रतिपादकवचनप्रवृत्तौ कारणं पश्यामः । न चैवं कल्पानां तामसत्वादि विभागो व्यर्थः स्यात् । तत्तद्देवतोत्कर्षाणां कल्पभेदप्रवृत्तत्वोपवर्णनमात्रेण तत्तत्पुराणानामविरोधसिद्धेरिति वाच्यम् । ऋतुभेदेषु हिमादिप्राचुर्यवत् कल्पभेदेषु सात्त्विकादिगुणप्राचुर्यं भवतीति ख्यापनाय कल्पानां तामसत्वादिविभागस्य प्रवृत्तत्वेनावैयर्थ्यात् । न च तथापि 'यस्मिन्कल्प' इत्यादि श्लोको व्यर्थः । तं विनैव शैवादिपुराणानां तामसादिकल्पभेदविषयत्वलाभेन अविरोधसिद्धेरिति वाच्यम् । 'अग्नेः शिवस्य माहात्म्यमि'त्यादिना तामसादिकल्पेषु अग्नेः शिवादीनां अधिकं माहात्म्यं

प्रकीर्त्यत इत्येतावदेव प्रतिपाद्यते। न ततः पुराणानां कल्पभेदविषयत्वं लभ्यत इति तेषां वर्तमानैक-कल्पविषयत्वशङ्कया विरोधप्रतिभासतादवस्थ्ये तत्परिहाराय 'यस्मिन्कल्प' इति श्लोकेन तेषां पुराणानां कल्पभेदविषयत्वस्यापि वक्तव्यत्वेन तदछेद्यात्। न चैवमपि तत्तत्पुराणानां तत्तत्कल्पेषु ब्रह्मप्रोक्तत्ववादो व्यर्थः। स्वरूपेणानूद्य तेषां कल्पभेदविषयत्वोक्तिमात्रेणोक्तप्रयोजननिर्वाहादिति वाच्यम्। 'यस्मिन्कल्पे तु यत्प्रोक्तमि'त्यत्र श्लोके प्रोक्तशब्दस्य 'तेन प्रोक्तमि'ति पाणिनिसूत्रस्थप्रोक्तशब्दस्येव व्याख्यानापर-पर्यायप्रवचनमात्रमर्थः। न तु प्रणीतृत्वम्॥

मात्स्य एव 'शतकोटिप्रविस्तरमि'त्यादिना 'तदर्थोऽत्र चतुर्लक्ष्यासङ्क्षेपेण निवेशित' इत्यन्तेन 'प्रपञ्चसर्गाद्यकृतयुगे वेदप्रवर्तनसमये अविभक्तब्राह्मपाद्मादिभेदोऽयं पुराणस्कन्धः शतकोटिप्रविस्तरो युगपदेव ब्रह्मणा प्रणीतः। स एव पुनस्त्रेतायां ब्रह्मादिभिरष्टादशधा विभज्य ग्रन्थकोट्या सङ्क्षिप्तः। स एव पुनर्द्वापरान्ते वेदव्यासेन चतुर्लक्ष्यासङ्क्षिप्त' इति प्रतिपादनात्। 'ब्राह्ममेव कृते चाद्ये पुराणं श्रुतिसम्मि-तम्। अष्टादशविधं तच्च कृतं कोटिप्रभेदतः' इत्यादिना धर्मसंहितायामपि तथा प्रतिपादनाच्च। कल्पविशेषेषु ब्रह्मणा विशेषाणामतिशयेन प्रचारणं कृतमिति ज्ञापनार्थमेव तत्तत्कल्पेषु तेषां ब्रह्म-प्रोक्तत्ववाद इति तदवैयर्थ्यात्। तत्तत्कल्पभेदीयदेवतामहिमवर्णनपरतत्तत्पुराणानां तत्तत्कल्पभेदेषु प्रचारणं युक्तमित्यौचित्यात्। तत्तत्कल्पभेदेषु तत्तद्देवताविशेषोत्कर्षमुपोद्बलयतस्तस्य श्लोकस्योप-योगसत्त्वेनावश्यापेक्षणीयत्वात्। तस्मात्सर्वसन्दर्भसामञ्जस्यात्। उदाहृतमात्स्यवचनं पुराणेषु केषा-ञ्चित्पुराणानामप्रामाण्यवर्णनपरं केषाञ्चित्प्रामाण्यवर्णनपरमिति न सर्वथा युक्तमिति॥

तदयुक्तम्। देवतान्तराणां जगज्जन्मादिकारणत्वादिरूपोत्कर्षस्य तत्तत्कल्पभेदेषु प्रवृत्तत्व एव उदाहृतमात्स्यवचनसन्दर्भस्य पुराणानां तद्विषयत्वप्रतिपादनमुखेन प्रामाण्योपपादकत्वासम्भवात्। प्रोक्तशब्दस्य प्रवचनार्थत्वे रजस्तमोगुणोद्रेकहेतुतत्कल्पकृततत्तत्पुराणव्याख्यानस्यापि प्रवृत्तब्रह्म-सम्बन्धिरजस्तमोगुणोद्रेकप्रयुक्तभ्रमप्रमादाज्ञानमूलताया दुर्निवारत्वेन व्याख्येयत्वेन तदा तदा सन्निहितेषु पुराणेषु केषाञ्चिद्वाक्यानां पाठभ्रमेण तत्स्थाने तद्गुणोद्रेकवता व्याख्यात्रा ब्रह्मणा पठितपाठान्तरस्य वेदविरुद्धार्थकानेकवाक्यसन्दर्भस्य पूर्वपाठत्यागे नाव्यभिचारसम्भवात्। तदभिप्रायेणैव कतिपय-पुराणानां राजसतामसादिकल्पविषयत्वादिप्रदर्शनमुखेन तेषामप्रामाण्यसम्भवेनानुपादेयत्वप्रतिपादनमेव मात्स्यवचनसन्दर्भस्याङ्गीकर्तव्यत्वाच्च। न हि महापण्डितोऽपि विहितकनकफलाहारस्तत्समये प्रणि-धानपूर्वकं नित्यनिर्दोषत्वेन प्रमाणतममपि यथावद्व्याख्यातुं क्षमते न वा क्वचित्पूर्वपाठं परित्यज्य तत्स्थाने पाठान्तरं कल्पयति। तस्मात् 'यतो वा इमानि भूतानि जायन्ते', 'जन्माद्यस्य यतः' इति

१. तेन प्रोक्तम्। – पाणिनिसूत्रम्।

श्रुतिसूत्राभ्यां प्रतिपादितस्य जगज्जन्मादिकारणत्वादिरूपस्य परब्रह्मलक्षलक्षणस्योक्तरीत्या देवतान्तरेष्वसम्भवान्नारायणस्यैव तल्लक्षणवत्त्वे उदाहृतानेकश्रुतिस्मृतिपुराणादीनामाञ्जस्यदर्शनात् । सूत्रकृता भगवता वेदव्यासेनापि महाभारते स्वाभिमतमुमुक्षुज्ञेयपरब्रह्मणो न देवतान्तररूपत्वं किन्तु नारायणरूपत्वमेवेति स्थापनार्थम् । 'यतस्सर्वाणि भूतानि भवन्त्यादियुगागमे । यस्मिंश्च प्रलयं यान्ति पुनरेव युगक्षये । असृजत्सलिलं पूर्वं स तु नारायणः प्रभुः । ततस्तु भगवांस्तोये ब्रह्माणमसृजत्स्वयम्' इति अनेकप्रदेशेषु नारायणस्यैव कृत्स्नजगत्कारणत्वप्रतिपादनाच्च । श्रुतिस्मृतिपुराणाद्युक्तकृत्स्नजगत्कारणमपि (कृत्स्नजगत्कारणत्वाद्यपि ?) लक्षणानुरोधेनोदाहृतानेकश्रुतिस्मृतिपुराणादिरूपप्रमाणानुरोधेन च परतत्त्वशब्दितं परं ब्रह्म नारायणरूपमेव । न तु तदन्यब्रह्मशिवादिदेवतारूपमिति स्थिरपुरुषार्थप्रेप्सुभिर्नारायणरूपमेव परं ब्रह्मोपास्यं प्रपत्तव्यं च श्रुतिवाक्येषु क्वचित्क्वचित्क्षुद्रोपद्रवस्योभयसमाधेयत्वादुपेक्षित इति सर्वमनवद्यमिति सिद्धान्तसङ्क्षेपः ॥

सुरेन्द्रमुनिशिष्येण विजयीन्द्राख्यभिक्षुणा ।
नृसिंहप्रीतयेऽकारि परतत्त्वप्रकाशिका ॥

यैर्मीमांसकमुद्रया श्रुतिशिरस्तात्पर्यभूमिः परं
तत्त्वं श्रीहरिरेव नान्यदिति तन्निश्चेतुमुद्यम्यते ।
तत्तत्त्वे दृढभक्तिसम्पदमपि प्रापुश्च तैरन्वहं
सेव्योऽयं विजयीन्द्रसंयमिवचो गुम्भःसुधास्वादिमा ॥

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीमदानन्दतीर्थभगवत्पादाचार्येभ्यो नमः ॥

॥ श्रीमद्विजयीन्द्रतीर्थगुरुभ्यो नमः ॥

॥ श्रीराघवेन्द्रतीर्थगुरुभ्यो नमः ॥

इति श्रीमत्परमहंसकुलललाम-
श्रीमदानन्दतीर्थभगवत्पादाचार्य-मुख्यशुभसम्प्रदायप्रवर्तक-महापीठाधीश्वर-
श्रीमद्द्वैतसिद्धान्तप्रतिष्ठापनाचार्यवर्य-
श्रीमदप्पय्यदीक्षितेन्द्राद्यनेकदुर्वादिमत्तमातङ्गपञ्चानन-
श्रीमद्विद्यामठ-व्याख्यानसिंहासनाधीश्वर-
नास्तिककुलतिमिरनिराकरण-सहस्रकिरणास्तिकदर्शनसंरक्षणधुरीण-
महाविद्यापीठकुलपति-श्रीमत्सुरेन्द्रतीर्थश्रीपादशिष्य-
सर्वतन्त्रस्वतन्त्र-
*श्रीमद्विजयीन्द्रतीर्थश्रीपादविरचिता*
*परतत्त्वप्रकाशिका सम्पूर्णा ॥*

॥ श्रीकृष्णार्पणमस्तु ॥



॥ श्रीः ॥

॥ श्रीमन्मूलरामो विजयते ॥

श्रीमद्विजयीन्द्रभिक्षुविरचितं

# मध्वतन्त्रमुखभूषणम्

॥ श्रीः ॥

श्रीमद्विजयीन्द्रभिक्षुविरचितं

# मध्वतन्त्रमुखभूषणम्

॥ श्रीगुरुभ्यो नमः ॥ हरिः ॐ ॥

कल्याणगुणपूर्णाय वल्लभाय श्रियः सदा ।
श्रीमध्वदेशिकेष्टाय श्रीनृसिंहाय ते नमः ॥ १ ॥

तं पाणिपल्लवं बाहुशाखं सद्[1]द्विजसेवितम् ।
विद्याहासलतापुष्पं मध्वकल्पतरुं[2] भजे ॥ २ ॥

यस्य वाक्कामधेनुर्नः कामितार्थान् प्रयच्छति ।
सेवे तं जययोगीन्द्रं कामबाणच्छिदं सदा ॥ ३ ॥

यो व्यासमुनिदावाग्निः सच्छास्त्रमरुता सह ।
ददाह कुमतारण्यं प्रकाशाय तमाश्रये ॥ ४ ॥

मूकोऽपि वावदूकेन्द्रो जायते यदनुग्रहात् ।
श्रीसुरेन्द्रगुरोस्तस्य पादौ नत्वा गिरं भजे ॥ ५ ॥

श्रीसुरेन्द्रगुरोः पादपद्मे रागस्य पीडनात् ।
रक्ते नखदलोपेते सेवे शिष्यालिसेविते ॥ ६ ॥

सर्वतन्त्रस्वतन्त्रेण विजयीन्द्राख्याभिक्षुणा ।
मध्वाध्वकण्टकोद्धारः क्रियते विदुषां मुदे ॥ ७ ॥

मध्वतन्त्रमुखभूषणं दृढं न्यायरत्नघटनातिभास्वरम् ।
धार्यमेव सुदृशा [3]मुदावहं तन्यतेऽद्य विजयीन्द्रयोगिना ॥ ८ ॥

---

१. सत्पाणिपल्लवं बहुआरवं । २. द्रुमं ३. मुदाऽनिशं

यद्यप्यानन्दतीर्थीयं भाष्यमेवोपपत्तिमत् ।
न तु भाष्यान्तराणीति दर्शितं मम देशिकैः[1] ॥ ९ ॥

तथाऽप्याधुनिकोक्तानां दूषणानामलग्नताम् ।
प्रदर्श्य गुरुपादोक्तिमहिमाऽत्र [2]प्रदर्श्यते ॥ १० ॥

तत्र समस्तचेतनाचेतनविलक्षणे सत्याखिल[3]विश्वोत्पत्त्यादिकारणानन्तकल्याणगुणशालिनि विष्णुरूपे परे ब्रह्मणि यद्ब्रह्मसूत्रयोजनं तदेव प्रामाणिकैरङ्गीकार्यं न तु प्रत्यगभिन्ननिर्विशेषब्रह्मादि-[4]विषयतया सङ्करादिकृतं ब्रह्मसूत्रयोजनम् । तथाभूते ब्रह्मणि मानाभावात् । वेदान्तानामुपक्रमादिना सगुणब्रह्मपरत्वावसायात् । प्रमाणमात्रस्य विशिष्टार्थप्रत्यायकत्वस्वाभाव्यात् । न च लक्षणया वेदान्तानां चिन्मात्रे तात्पर्यम् । तेषां मुख्यार्थत्वे बाधकाभावात् । न च तात्पर्यानुपपत्त्या लक्षणाकल्पना । चिन्मात्रे तात्पर्यमित्यस्यैवासिद्धेः । वेदान्तप्रवृत्तेः पूर्वं चिन्मात्रस्यानुपस्थितत्वात् । वेदान्तैरेव तदुपस्थितावात्माश्रयादिदोषप्रसङ्गात् । चिन्मात्रस्य मानान्तरागोचरत्वात् । न च योगप्रभावेण चिन्मात्रोपस्थितौ तत्र वेदान्तानां तात्पर्यकल्पनम् । व्यधिकरणत्वाच्छब्दस्य परार्थत्वात् । किञ्च परमते निर्विशेषविषयाणामेव श्रुतिसूत्राणां [5]सगुणविषयतया योजनमप्यङ्गीकृतं निर्विशेष[6]विषयतया पराभिमतं [7]योजनं तु नास्माभिरङ्गीकृतम् । प्रत्यक्षादिविरोधात् । तथा च श्रुति[8]सूत्राभ्यां सगुणविषयतया सगुणयोजनमेव सर्वोपादेयं स्यान्न तु पराभिमतं योजनम् । असम्प्रतिपत्तेः । यथाऽऽहुः "तं ध्यायन्त्वनसूयवः शुभगुणं निर्दोषमाराध्यमित्यद्धा विश्वविशेषशून्यकथकैरप्यादितस्स्वीकृततः ॥ यद्यर्थस्थितिरेकदेशशरणा सम्प्रत्यवायो भवत्यध्यक्षादिविरुद्धनिर्गुणकथानिर्वाहगर्वावह" इति ॥

अत्र केचिदाहुः । यद्यप्युक्तरीत्याऽ[9]न्यदीयानि सगुण[10]योजनान्युपादेयानि । तथाऽप्यानन्दतीर्थीयं [11]योजनमनुपादेयम् । अन्यदीयेषु हि योजनेषु सगुणनिर्गुणभेदादिविषयतया कतिपयेष्वेव सूत्रेषु प्रकारभेदः । अन्येषु सूत्रेषु क्वचित्क्वचित्पूर्वपक्षसिद्धान्तवचनभङ्गिभेदेऽपि फलतो न विवादः । आनन्दतीर्थीये तु योजने प्रायः सर्वत्रैव प्रकारभेदः सोऽप्यन्येषामसम्प्रतिपन्नः । तेषु च [12]स्वमात्रकथितेषु चतुरकमठकौण्ठरव्यकौण्डिन्यमौद्गल्य पौष्यायणसौकरायण परारशार्यायणमाध्यन्दिनायन कौषारवकौषायण बृहदुद्दालकायन कौशिकसौपर्णवत्सगौपवनभाल्लुवेयाग्निवेश्यचतुर्वेदशिखेन्द्रद्युम्न[13]शाखा-

---

१. दैशिकै २. प्रकाश्यते-पा । ३. जगज्जन्मादिकारणेऽ ४. ब्रह्मादिपरतया अथवा ब्रह्मविषयतया
५. सगुणब्रह्म ६. निर्विशेषब्रह्मविषयतया ७. ब्रह्मसूत्रयोजनं ८. श्रुतिसूत्राणां
९. रामानुजीयानि १०. सगुणब्रह्मविषयतया ब्रह्मसूत्रयोजनानि ११. ब्रह्मसूत्रयोजनं
१२. स्वमात्रपरिकल्पितेष्वर्थेषु - पाठान्तरः. १३. शिखा.

परमश्रुत्यादिवचनानीति[1] । तदनुसारीण्यध्यात्मनारायणसंहिताबृहत्संहितामहासंहितानारायणतन्त्र-ब्रह्मतन्त्रपुरुषोत्तमतन्त्रमायावैभवब्रह्मवैवर्तब्रह्मतर्कभविष्यत्पर्वा[2]दीनि इति च इति अत्यन्ताप्रसिद्धानामेव वचनानां साक्षितयोपन्यासः । तदुपन्यासप्रसक्तस्वानाप्तत्वशङ्कापरिहाराय हनुमद्भीमसेनक्रमेण स्वयं वायोस्तृतीयावतार इत्युद्घोषः । तत्र साक्षितया "प्रथमो हनुमान्नाम द्वितीयो भीम एव च । पूर्णप्रज्ञस्तृतीयस्तु भगवत्कार्यसाधकः" इति स्मृतिवचनमस्तीति स्वयमेव तदुदाहरणम् । 'बळित्था तद्वपुषेऽधायि दर्शतं' इत्यादि ऋग्वेदगतमन्त्रस्य स्वकल्पितवाय्ववतारत्रयपरतया प्रदर्शनमित्यादि प्रामाणिकमर्यादोलङ्घनं भूयसा दृश्यते । तथाऽपि 'युक्तियुक्तं वचो ग्राह्यं न तु पुरुषगौरवं' इतिन्यायेन तन्मतं श्रद्दधीमहि । यदि तत्रोपपन्नं किञ्चिदाकलयेम । न त्वेवम् । प्रायेण हि तन्मते स्वमात्रहृदयारूढानि वचनान्येवोपजीव्यानि न तु न्यायाः । ये तु न्यायाः प्रदर्शितास्तेऽप्यत्यन्तशिथिला एव क्वचिदाश्रिताः पूर्वमीमांसकमर्यादाऽप्यसामञ्जस्येनैव नीता प्रायेणासाधुभिरेव शब्दैर्व्यवहारः श्लोकरचनायामन्वया-सम्भवो वृत्तान्यथाभावश्चाधिकः ॥ सर्वमेतत् तदीयभाष्यानुव्याख्यानभारततात्पर्यसङ्ग्रहादिदर्शिनां स्पष्टम् । (स्पष्टमेव) । तस्मादेवम्भूतं मतमनुपादेयमिति (अनुपादेयमेवेति) (चेत्) ।

अत्रोच्यते । न तावदप्रसिद्धश्रुत्युदाहरणं दोषः । श्रौतस्मार्तकर्मविधायकानां तत्तन्मन्त्राणां च खिलानामेव श्रुतीनां प्रायेणापस्तम्बादिभिः स्वस्वसूत्रेषूदाहरणात् ॥ ऋषित्वादेव खिलश्रुत्युदाहरणं तेषामुपपद्यत इति चेत् । का तत्र श्रद्धा ? न हि ऋषित्वं नाम जातिरस्ति । त्रिकालदर्शित्वस्यैव तत्त्वात् । कल्पाध्यायी ऋषिरिति तन्निर्वचनाच्च । त्रिकालदर्शित्वं कल्पाध्ययनं चार्वाचीनेषु न सम्भवतीति चेत् । अयमपि कश्चन ते व्यामोहः । कालत्रयवृत्तान्तदर्शिनां साङ्गसकलवेदाध्यायिनां च भट्टपादप्रभृतीनां बहुलमुपलम्भात् । कथमन्यथा भवत्कूटस्थानां सङ्करादीनां सर्वज्ञत्वादिकमङ्गीकुरुषे । ग्रन्थप्रणयनादिमहाकार्यदर्शनात् तेषां सर्वज्ञत्वमङ्गीकुर्म इति चेत् । किं प्रकृतेऽपि [3]दण्डवारितम् । नन्वस्मदीयग्रन्थप्रवृत्ताविव त्वदीयप्रवृत्तेर्न (त्वदीयग्रन्थ) तत्त्वज्ञानमूलत्वं किन्तु मोहादिमूलत्वमिति चेत् । कथमेतदवधारितं देवानां प्रियेण त्वया । प्रत्युत 'मायावादमसच्छास्त्रं प्रच्छन्नं बौद्धमुच्यते । मयैव कथितं देवि कलौ ब्राह्मणरूपिणे'ति पाद्मवचनेन त्वन्मतस्यैव प्रच्छन्नबौद्धत्वमुच्यते । चतुर्भिः सहितः शिष्यैः सङ्करोऽवतरिष्यति । सहस्रे द्विशतोत्तर इति त्वदुदाहृतवचनं च विप्रलिप्सामूलत्वेऽप्युपपन्नमिति न तद्बलेन त्वन्मतस्य प्रेक्षावदुपादेयत्वम् । किञ्चास्मद्ग्रन्थप्रवृत्तेः शिष्यानुग्रहैकप्रयोजनत्वं, त्वन्मतस्य च मोहशास्त्रत्वं पुराणेषु स्पष्टमेवोच्यते । (स्पष्टमेवावेद्यते) । तथा कूर्मपुराणे श्रीमुष्णमाहात्म्ये पञ्चमेऽध्याये निमिवामदेवसंवादे श्रुतः ।

१. चतुरकमठमाठरकौण्ठरव्यकौण्डिन्यमाण्डव्यमार्कण्डेयमौद्गल्यसौत्रायणसौकरायण - इति पा.)

२. भविष्यत्पर्ववचनानि – इति पा.) ३. न दण्डवारितम् - इति पा.)

श्रीसूत उवाच—

पुरा भागीरथीतीरे निमिशापृष्टवान्मुनिम्।
नष्टा भागवता धर्माः सच्छास्त्राणि कलौ युगे ॥ १ ॥

इति श्रुतं मया पूर्वं तीर्थयात्राप्रसङ्गतः।
कथं नष्टा भविष्यन्ति पुनः स्थास्यन्ति वै कथम् ॥ २ ॥

वद विद्वन् महाबाहो कश्चोद्धारं करिष्यति।

श्रीवामदेव उवाच—

चतुस्सहस्रे द्विशते गते सौगन्धिके वने ॥ ३ ॥

निहता भीमसेनेन द्वापरान्ते नृपोत्तम।
[1]सौगन्धिकार्थे निहता ये च क्रोधवशाः खलाः ॥ ४ ॥

रुद्रेण निहता ये च त्रैपुराश्च कलौ युगे।
चतुस्सहस्रेऽष्टशते गते मणिमदादयः ॥ ५ ॥

जनिष्यन्ति ब्रह्मयोनौ दैत्याः सद्धर्मदूषकाः।
मिथ्यावादमसच्छास्त्रं करिष्यन्ति कलौ युगे।
[2]ग्लापयिष्यन्ति सच्छास्त्रं सच्छास्त्रपरिपन्थिनः ॥ ६ ॥

एवं धर्मेषु नष्टेषु शास्त्रेषु च कलौ युगे।
देवैर्विज्ञापितो विष्णुर्वायुमाज्ञापयिष्यति ॥ ७ ॥

[3]उद्धरस्व महाबाहो मम धर्मान् सनातनान्।
इत्याज्ञप्तो भगवता कलौ वायुर्भविष्यति ॥ ८ ॥

[4]मध्वनामा यतिरसौ सच्छास्त्राणि करिष्यति।
गीतायाश्चोपनिषदां भाष्याणि च करिष्यति ॥ ९ ॥

---

१. सौगन्धिकार्थे निहतास्ते दैत्यप्रवरा खलाः । २. दूषयिष्यन्ति सद्धर्मान्
३. उद्धर त्वं ४. मध्वनाम्ना ।

निरसिष्यति पाषण्डान् दुःशास्त्राणि महामतिः ।
स्थापयिष्यति सद्धर्मान् सच्छास्त्रं व्याकरिष्यति ॥ १० ॥

श्रोष्यन्ति मुनयः सर्वे शुकाद्या देवरूपिणः ॥ ११ ॥ इति ॥

तथा [1]अलकापुरीमाहात्म्ये—

कलौ तु पापभूयिष्ठे मिथ्याज्ञानपरायणाः ।
दूषयिष्यन्ति सद्धर्मान् सच्छास्त्राणि कलौ पुनः ॥ १२ ॥

उद्धरिष्यति सच्छास्त्रं कश्चित्कालान्तरे यतिः ।
राजद्वारं समाश्रित्य पाषण्डान्निरसिष्यति ॥ १३ ॥

व्याकरिष्यति सच्छास्त्रं देवब्राह्मणतर्पक ॥ इत्यादि ।

तथा स्कान्दपुराणे श्रीमुष्णमाहात्म्ये (विष्णुमाहात्म्ये) नवमेऽध्याये—

कलौ पाषण्डभूयिष्ठे धर्मलेशविवर्जिते ॥ १ ॥

वैवस्वतेऽन्तरे प्राप्ते त्वष्टाविंशे कलौ युगे ।
त्रैपुरा भारते युद्धे निहता राक्षसा भुवि ॥ २ ॥

यदा प्रवर्तयिष्यन्ति मार्गं पाषण्डगोचरम् ।
तदा सम्प्रार्थितो देवैर्भगवान् हरिरीश्वरः ॥ ३ ॥

तत्कर्मदक्षं[2] विनतं मातरिश्वानमादिशत् ।
वायुस्तु यतिरूपेण जनिष्यति कलौ युगे ॥ ४ ॥

स दशप्रमतिर्भूत्वा कलौ धर्मान् वदिष्यति ।
[3]कृत्वा सच्छास्त्रसन्दर्भं स्थापयिष्यति सत्पथम् ॥ ५ ॥

एवमेव महादेवि नारायणपरायणाः ।
काले काले भविष्यन्ति तत्र तत्र महाव्रताः ॥ ६ ॥

---

१. तत्रैव कौर्मे । कनकपुरी इति – पा० । २. तत्कर्मकरणे दक्षं ।)
३. हत्वाऽसच्छास्त्रसन्दर्भं – इति पा.)

ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी।
कावेरी च महापुण्या तथा दुग्धापगा नदी ॥ ७ ॥

[1]एतन्मध्यप्रदेशेषु धर्मः पादेन तिष्ठति।
म्लेच्छाक्रान्तं भवेदन्यद्भूतलं तु कलौ युगे ॥ ८ ॥

कलौ पाषण्डभूयिष्ठं पुण्यक्षेत्रं भविष्यति।
न च विष्णुकथा क्वापि नापि वैष्णवपद्धतिः ॥ ९ ॥

आक्रान्तेषु च देशेषु म्लेच्छरूपैश्च राक्षसैः।
द्राविडेषु च देशेषु धर्मः [2]स्थास्यति पादतः ॥ १० ॥

पश्चद्राविडगो धर्मो मोक्षहेतुर्भविष्यति।
यदा यदा हि धर्मस्य ग्लानिर्भवति पार्वति ॥ ११ ॥

अवतीर्य तदा विष्णुर्धर्मगोप्ता स्वयं हरिः।
सम्प्रदायेषु नष्टेषु सर्वधर्मे लयं गते ॥ १२ ॥

विष्णोरनुज्ञया भक्ताः कलौ धर्मप्रवर्तकाः।
एवं भागवता धर्मा भविष्यन्ति युगे युगे ॥ १३ ॥ इत्यादि।

तथा ब्रह्मपुराणे क्षेत्रकाण्डे वेङ्कटगिरिमाहात्म्ये तृतीयेऽध्याये शङ्खलिखितसंवादे—

त्वं चापि गच्छ शैलेन्द्रं पूर्वं स्वर्णमुखीतटे।
यत्र ब्रह्मशिला नाम [3]सरिन्मध्ये च वर्तते ॥ १ ॥

अगस्त्यतपसा पश्चाद्दयासान्निध्यमत्र वै।
पादा ईशानविष्ण्वादिदेवानां तत्र सन्ति हि ॥ २ ॥

यतिरूपो मातरिश्वाऽ[4]ष्टाविंशतितमे कलौ।
[5]अवतीर्य वसत्यत्र [6]मध्वनामा वरं विभुम् ॥ ३ ॥

---

१. एतासां मध्यदेशेषु। २. धर्मः पादेन तिष्ठति। ३. सरिन्मध्येऽवतिष्ठते – इति पा०)।
४. त्वष्टाविंशतिमे – इति पा०। ५. यजत्ययं। ६. मध्वनाम्ना परं विभुम् – इति पा०)

[1]अवाप तपसा पुण्यः प्रीत्या चागस्त्ययोगिनः ।
तत्स्थापितालये पुण्ये चातुर्मास्यं करिष्यति ॥ ४ ॥
शुकः श्रोष्यति सच्छास्त्रं पद्मतीर्थादिहागतः[2] इति ॥

तस्मादापस्तम्बाद्युदाहृतश्रुतिवदस्मदाचार्योदाहृतश्रुतयोऽपि प्रेक्षावदुपादेयाः श्रुतित्वेन सर्वज्ञ-दृष्टत्वात् । तथा च स्मृतिः । 'विशल्लक्षणतो अनूनस्तपस्वी बहुवेदवित् । वेद इत्येव यं पश्येत्स वेदो ज्ञानदर्शनादि'ति ब्रह्माण्डे । अन्यैरदृष्टाः श्रुतयस्त्वदीयैः कथं दृष्टा इत्येतदप्यापातरमणीयम् । न हि येन यन्न दृश्यते तदन्येनापि न द्रष्टव्यमित्यस्ति । अन्यैरदृष्टानां खिलवाक्यानामापस्तम्बादिभिरेव दृष्टत्वात्। किञ्चास्मदाचार्योदाहृतश्रुतयः सर्वज्ञैरन्यैर्दृष्टाः सन्तु नाम । न च तासामन्यदृष्टत्वे क्वचिदुदाहरणमपि स्यादिति युक्तम् । तत्र तेषामौदासीन्यसम्भवात् । नन्वेवं केनचित्स्वमनीषया वैदिकविरुद्ध[3]धर्मान्तरं परिकल्प्य तत्र प्रमाणत्वेन वेद वाक्यकल्पनमपि कर्तुं शक्यमिति धर्मव्यवस्थितिरव्यवस्थितैव स्यादिति चेन्न । [4]अस्मदाचार्योदाहृतानां प्रत्यक्षश्रुतिसमानशीलत्वेनाविरोधितया धर्मव्यवस्थासम्भवात् । उदाहृतपुराणवचनानुसारेण धर्मस्थापकतया प्रतिपन्नत्वेन परमाप्तस्यास्मदाचार्यस्य श्रुतिवाक्यपरिकल्पनायोगाच्च । अनाप्तानां तत्परिकल्पनस्य धर्मव्यवस्थाभञ्जकत्वाच्च । तस्मात्कल्पसूत्रेष्विव भाष्येष्वपि खिलश्रुत्युदाहरणं न दोषाय ।

किञ्च पूर्वमीमांसायां तत्र तत्रोर्जं पशूनाम्नोत्यूर्जोवरुध्या इत्यादिखिलश्रुतय एवोदाहृता[5] इति नास्माकमेव खिलश्रुत्युदाहरणं दोषः । किञ्च सङ्करभाष्ये । अत एव चोपमा सूर्यकादिवदिति सूत्रे यथा ह्ययं ज्योतिरात्मा विवस्वानित्यादिखिलश्रुतिरेवोदाहृता[6] । सङ्करभाष्ये सम्भृत्यधिकरणेऽपि 'ब्रह्म-ज्येष्ठावीर्यासम्भृतानि ब्रह्माग्रे ज्येष्ठंदिवमाततान' इति रामायणीयखिलश्रुतिरेवोदाहृतेत्यपि द्रष्टव्यम् ॥ एवं रामानुजभाष्येऽपि । 'ॐ ज्योतिश्चरणाभिधानादि'त्यधिकरणे 'इन्द्रः शचीपतिर्बलेन पीडितो दुश्चवनो वृषा समुत्ससार ही'ति खिलैव चतुष्पाद्गायत्र्युदाहृता । तथा श्रीकण्ठभाष्येऽपि । यश्चण्डालः शिव इति वाचं वदेत्तेन[7] सह संवसेत् । तेन सह संवसेत् तेन सह भुञ्जीतेत्यादिखिलश्रुतिरेवोदाहृता । ननु भाष्यान्तरे क्वचिदेव खिलश्रुत्युदाहरणं त्वद्भाष्ये तु सर्वत्रेति चेत् । को विशेषः । एकस्य खिल-श्रुत्युदाहरणस्यादोषत्वे बहुनामपि तदुदाहरणानामदोषत्वात् । किञ्च पठ्यमानश्रुतिव्यतिरेकेण खिलश्रुतय एव न सन्तीति किं त्वदभिप्रायः । किंवाऽस्मदाचार्योदाहृतास्ता न भवन्तीति । नाद्यः ।

---

१. तत्रैव तपसा पुण्ये । २. योगतः – इति पा० । ३. मार्गान्तरं – इति पा० ।
४. उदाहृतश्रुतीनां – इति पा० । ५. त्वयैवोदाहृताः इति पा. ।
६. इदमुपलक्षणम् । ७. अनेन – इति पा० ।

कल्पसूत्रकारैर्भाष्यान्तरकारैश्च[1] तथाविधश्रुतीनामुदाहृतत्वात् । कल्पसूत्रव्याख्यातृभिः खिलाखिलश्रुतिविभागस्य तत्र तत्र दर्शितत्वात् । एकैकवेदस्यानेकशाखात्मकत्वश्रवणात् । कतिपयानामेव शाखानामिदानीमधीयमानत्वाच्च । न द्वितीयः । अन्योदाहृतखिलश्रुतिष्वपि तथा वक्तुं शक्यत्वेन खिलश्रुतित्वनिर्णयाभावप्रसङ्गात् । तासामभियुक्तोदाहृतत्वेन तथात्वनिर्णयश्चेत् । अस्मदीयोदाहृतानामपि तथात्वनिर्णयोपपत्तेः । न हि त्वदभिमत एवाभियुक्तो नास्मदीय इति वक्तुं शक्यम् । यथोक्तेराग्रहमूलत्वात्[2] । वैपरीत्यस्यापि सुवचत्वात् च । पुराणवचनानुसारेणास्मदीयाचार्यस्यैवाभियुक्ततमत्वाच्चेति यत्किञ्चिदेतत् एतेन पञ्चरात्रसंहितोदाहरणमपि व्याख्यातम् । संहितानुक्रमणिकायामस्मदाचार्योदाहृतसंहितानामनुक्रान्तत्वेन तथात्वोक्तेरज्ञानमूलत्वात्[3] । एतेनानन्दतीर्थीये तु योजने प्रायः सर्वत्रैव प्रकारभेदः सोऽप्यन्येषामसम्प्रतिपन्नः । स्वमात्रकल्पितश्चेति निरस्तम् । प्रकारभेदेनैव दर्शनान्तरत्वस्य निर्वाह्यत्वात् । अन्यस्यासम्प्रतिपत्तेः । स्वमात्रकल्पितत्वस्य च सर्वमतसाधारण्यात्स्वस्वाभिमतप्रमेयमात्रे सर्वसम्प्रतिपत्ते[4]र्वक्तुमशक्यत्वाच्च । एतेनाप्रसिद्धश्रुत्युदाहरण प्रसक्तस्वानाप्तत्वशङ्कापरिहाराय स्वयं वायोस्तृतीयावतार इत्युद्घोषः कृतः तत्र च श्रुतिस्मृत्युदाहरणमित्यादि प्रामाणिकमर्यादलङ्घनं भूयसा दृश्यत इति निरस्तम् । अस्मदाचार्यस्य परमाप्तत्वस्योपपादितत्वात् । शिष्यानुजिघृक्षया स्वमाहात्म्यवर्णनोपपत्तेश्च अन्यथा "को ह्यन्यः पुण्डरीकाक्षान्महाभारतकृद्भवेदि"त्यतो[5] महाभारतकर्तुर्व्यासस्य नारायणांशत्वं न सिद्ध्येत् । मध्वाचार्याणां वाय्ववताररूपत्वं च श्रीवेङ्कटगिरिमाहात्म्यादिष्वनेकत्र स्पष्टमेवोक्तमिति तदवलोकिनां नैवंविधशङ्कापिशाचादिकावग्रहः[6] । अतः पुराणवचनानुसारेण ऋग्वेदमन्त्रस्य तत्परत्वं युक्तम् । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेदि"ति स्मृतेः । अनादिभूतस्य वेदस्येदानींतनार्थपरत्वं च कथमिति शङ्का च वेदार्थानभिज्ञकृतैवेति नास्माभिः प्रतिसमाधेया । एतेन प्रायेण हि तन्मते स्वमात्रहृदयारूढानि वचनान्येवोपजीव्यानि न तु न्यायाः । ये तु न्यायाः प्रदर्शितास्तेऽप्यत्यन्तशिथिला एव क्वचिदाश्रिताः पूर्वमीमांसकमर्यादाऽप्यसामञ्जस्येनैव नीतेति निरस्तम् । पुराणस्य वेदोपबृंहणतया तदनुसारेणापि वेदार्थस्य निर्णेयत्वात् । अत एव ब्रह्ममीमांसायां तत्र तत्र 'ॐ स्मृतेश्च' 'ॐ अपि स्मर्यते' इत्यादिना पुराणवचनान्येवोदाह्रियन्ते । अस्मदाचार्योदाहृतवचनानि स्वमात्रहृदयस्यारूढानीति वदन् कूपमण्डूकायते । अस्मदाचार्यप्रदर्शितन्यायानामेवातिदार्ढ्यं न परप्रदर्शितानाम् । मीमांसकमर्यादासामञ्जस्यं[7]

१. भाष्यकारैश्च – इति पा० ।
२. आग्रहमात्रमूलत्वात् – इति पा० ।
३. अज्ञानमात्रमूलत्वात् – इति पा० ।
४. अन्य सम्प्रतिपत्तेः – इति पा० ।
५. इत्यादौ – इति पा० ।
६. पिशाचिकावकाशः – इति पा० ।
७. पूर्वमीमांसकमर्यादा – इति पा० ।

चास्मन्मत एव । तच्च तात्पर्यचन्द्रिकावलोकिनां स्पष्टम् । अत्रापि स्पष्टीकरिष्यते । एतेनासाधुभिरेव शब्दैर्व्यवहारः श्लोकरचनायामन्वयासम्भवो वृत्तान्यथाभावश्चादिक इति निरस्तम् । व्याकरणान्तरपरिगृहीतत्वेन तेषामपि साधुत्वोपपत्तेः । श्रुतिस्मृतिपुराणाभ्यासपाटवेनाचार्यैस्तथा व्यवहृततया तथाव्यवहारस्य श्रुतिस्मृतिपुराणादिगतच्छान्दसशब्दानुकरणत्वेनादोषत्वात् । लोकदृष्ट्या तथाव्यवहारस्याचार्यैरकृतत्वात् । "त्रियम्बकं संयमिनं ददर्शेत्यादिषु कालिदासादेरपि तथाव्यवहारदर्शनाच्च । अत एव वृत्तान्यथाभावोऽपि व्याख्यातः" । न वैकेनाक्षरेण छन्दांसि वियन्ति न द्वाभ्यामित्यादिश्रुत्या तस्यादोषत्वप्रतिपादनात् । अन्वयासम्भवोक्तिश्चाज्ञानमूलैव । सूत्रेष्विव भाष्ये[1]ऽप्यध्याहारानुषङ्गादिना विवक्षितान्वयस्य वक्तव्यत्वादिति यत्किञ्चिदेतत् । तस्मादानन्दतीर्थीयमतमेव प्रेक्षावदुपेयमिति स्थितम् ॥

नन्विदमनुपपन्नम् । त्वन्मते सर्वत्र तत्तत्पूर्वपक्षसिद्धान्तानामनुपपन्नत्वात् । तत्र प्रथमाधिकरणपूर्वपक्षस्तावदनुपपन्नः । तथा हि । ब्रह्ममीमांसाशास्त्रं नारम्भणीयम् । निर्विषयत्वात् । न तावदस्य निर्विशेषं ब्रह्म विषयः । तत्र मानाभावात् । वेदान्तानां निर्विशेषजीवस्वरूपमात्रपरत्वात् (विषयत्वात् इति पा.) न च जीव एव ब्रह्मेति स एव तस्य विषयः । तस्य स्वप्रकाशत्वेन अहमिति सर्वानुभवसिद्धत्वात् । निर्विशेषे च तत्र निरूपणीयानां धर्माणामभावादिति निर्विशेषजीवस्य ब्रह्मणः श्रुत्यन्तरनिरूप्यत्वमङ्गीकृत्य शास्त्रनिरूप्यत्वासम्भवपूर्वपक्षं गुरूणां प्रणतिपरम्पराविषये[2] तच्छिष्योदितस्वप्रणामानर्हत्ववादमनुकरोतीति चेन्न । अनुक्तोपलम्भात् । न ह्यस्माभिर्वेदान्तानां निर्विशेषजीवस्वरूपपरत्वेऽप्यनधिगतार्थत्वेन प्रामाण्यमङ्गीकृत्यब्रह्ममीमांसाशास्त्रस्याधिगतार्थत्वेनानारम्भपूर्वपक्षः क्रियते । किन्तु श्रुतिस्मृतीनां तदुपकरणीभूतब्रह्ममीमांसायाश्च निश्चितार्थतया प्रेक्षावदनुपादेयत्वरूपमनारम्भणीयत्वमिति सन्दिग्धविपर्यस्तान्यतरं प्रत्येव शास्त्रस्य प्रवर्तनीयत्वात् । तदुक्तं मायावादखण्डनटीकायाम् । परब्रह्म प्रतिपादयितुं सकलश्रुतिस्मृतीनां तदुपकारिणीभूतब्रह्ममीमांसायाश्च प्रवृत्तिरिति तत्त्वमिति । उक्तं च चन्द्रिकायाम् । यथार्थवादाधिकरण इत्यारभ्य तथेहापि स्वतःसिद्धप्रत्यगात्मानुवादका वेदान्ता न विचार्या इति । एतेन प्रमाणशिखामणयो हि वेदान्ता नितान्तमनधिगतार्थमन्विच्छन्ति । पौरुषेयाणि तु शास्त्राण्युपायान्तरेणावगन्तुं शक्येष्वर्थेषु श्रोतृबुद्धिसौकर्यार्थं प्रवर्तमानानि स्वोक्तमर्थमपि, अविस्मरणार्थमाम्रेडयन्ति न तथाऽनधिगतार्थव्यसनितामनुभवन्ति । तथा च ब्रह्ममीमांसाया निश्चितार्थत्वेऽपि प्रेक्षावदुपादेयत्वमेवेति न पूर्वपक्षावकाश इति निरस्तम् । वेदानां[3] प्रमाणशिखामणित्वेऽप्यनधिगतार्थकत्वनियमाभावस्य वक्ष्यमाणत्वात् । विचारशास्त्रस्य सन्दिग्धविषयावश्यकत्वस्य नैय्यत्याच्च । अहमहमिति सर्वदैव प्रकाशमाने निर्विशेषजीवस्वरूपे कस्याप्यविस्मरणाप्रसक्त्या त्वदुक्तरीत्या मीमांसाशास्त्रस्यारम्भणीयत्वोपपादनायोगाच्च ।

---

१. भाष्येष्वपि – इति पा० । २. 'महापुरुषे' इति अधिकः पाठः । ३. वेदान्तानां इति पा० ।

एतेनैव यदि वेदा अपि स्वप्रकाशजीवस्वरूपमात्रे कर्तृत्वभोक्तृत्वादिरहिततया कर्मशेषतां प्रतिपद्यमाने स्वातन्त्र्येण पर्यवस्यन्ति तदा शास्त्रस्य तत्र पर्यवसाने काऽनुपपत्तिरिति निरस्तम् । कर्तृत्वभोक्तृत्वाद्युपहिततया कर्मशेषतां प्रतिपद्यमानस्याहंधीसिद्धस्य जीवस्यैव पूर्वपक्षिणा श्रुतिमीमां-सारूप[1]शास्त्रविषयत्वमापाद्य तदनारम्भणीयत्वस्यैवोक्तत्वात् । स्वप्रकाशजीवस्वरूपमात्रे कर्तृत्व-भोक्तृत्वादिरहिततया कर्मशेषतामप्रतिपद्यमाने पूर्वपक्षिणा [2]वेदानां पर्यवसानानभ्युपगमात् । शास्त्र-प्रत्यक्षविषयात्मद्वैविध्यस्य पूर्वपक्ष्यनभिमतत्वात् ।

ननु पूर्वपक्षे जीवस्य निर्विशेषत्वाभ्युपगमेन तस्याहन्धीसिद्धत्वोक्त्यनुपपत्तिः । कर्तृत्वादिविशे-षवत्तयैव तस्य भासमानत्वात् । ततश्च कर्मशेषतामप्रतिपद्यमानं प्रत्यक्षाद्यसिद्धं वेदान्तप्रतिपाद्यं निर्विशेषजीवस्वरूपं पूर्वपक्षिणाऽङ्गीकार्यमिति चेन्न । पूर्वपक्षे जीवनिर्विशेषत्वोक्तेः । तत्र प्रत्यक्षादिना प्रतीयमाना विशेषाः कल्पिता न मुमुक्षुज्ञेया इत्येवम्परत्वात् । तदुक्तं चन्द्रिकायाम् । अन्यस्य च सत्यस्य चाभावादिति । प्रत्यक्षसिद्धकर्तृत्वभोक्तृत्वसुखदुःखाद्यतिरिक्तविशेषाभावाभिप्रायत्वोपपत्तेश्च । न चैवं पूर्वपक्षे श्रुतीनां प्रत्यक्षसिद्धार्थानुवादित्वं स्यादिति वाच्यम् । इष्टापादनात् । तदुक्तं चन्द्रिकायाम् । शुद्धचैतन्यमात्रबोधने श्रुतेरनुवादकत्वं च वायुर्वैक्षेपिष्ठादिवाक्यवद्विद्वद्वाक्यवच्च न्यायप्राप्तत्वात्सत्यमिति ।

नन्वेवं पूर्वपक्षिणामप्रमाणभूतवेदान्तवाक्यगतिर्नोपपादनीयेति चेत् । इष्टत्वात् । अत एव चन्द्रिकायां [3]यद्वा अप्रमाणभूतवेदान्तवाक्यगतिर्न[4] पूर्वपक्षिणा वाच्या । तदाच्छादनेन तत्प्रवृत्तेरिति कश्चन पक्षमुपन्यस्य यद्वा स्वर्गकामाधिकरणपूर्वपक्षे विश्वजिदधिकरणपूर्वपक्षे च फलालाभेन नियो-ज्याभावेन च स्वर्गकामो यजेत विश्वजिता यजेतेत्यादिवाक्यमिवोक्तरीत्या विषयाद्यभावेनोपपत्ति-विरोधात् तद्विजिज्ञासस्वेत्यादिकमप्रमाणमिति पक्षान्तरमुपन्यस्तं, तस्मात्पूर्वपक्षे वेदाप्रामाण्याभ्युप-गमेऽपि न काप्यनुपपत्तिः ।

एतेन ब्रह्मतर्केऽधिकृत एव ब्रह्ममीमांसायामधिक्रियत इति त्वन्मतम् । 'प्रमाणन्यायमीमांसा क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धैर्मीमांसामेयशोधनमिति वदता त्वया ब्रह्मतर्कस्य ब्रह्म-मीमांसा प्रत्यङ्गत्वाभ्युपगमात् । तत्र च वेदप्रामाण्यं सिद्धमेवे'ति कथमप्रामाण्याभ्युपगमेन पूर्वः पक्षः । न हि सिद्धप्रमाणभावानां वेदवाक्यानामनधिगतार्थपर्यवसानविरोधी क्वचिदपि वाक्यस्वारस्यानुरोधो अस्ति । त्रेधा तण्डुलान्विभजेत् सृष्टीः उपदधाति कपालेषु स्रपयतीत्यादिषु तत्तत्स्वारस्योपस्थिता-

---

१. श्रुतितन्मीमांसा – इति पा० । २. वेदान्तानां – इति पा० । ३. यद्वाप्रमाणभूत - इति पा० ।
४. वेदवाक्यगतिः – इति पा०)

नप्यन्यतः प्राप्तिमतोऽर्थान् परित्यज्य लक्षणया प्रत्यक्षविध्यन्तरद्वारा कल्प्यविध्यन्तरद्वारा वाऽनधिगतार्थे पर्यवसानस्याङ्गीकृतत्वात् । विश्वजित्स्वर्गकामाधिकरणपूर्वपक्षयोरपि नानधिगतार्थत्वरूपप्रामाण्यत्यागः किन्तु फलालाभादनुष्ठानालाभमात्रम् । उक्तं हि तन्त्ररत्ने स्वर्गकामाधिकरणपूर्वपक्षे । नन्वेवमप्रामाण्यं[1] स्यात् । न गम्यमाने प्रवर्तनामात्रे[1] प्रमाणमेव । न हि पुरुषप्रवृत्त्यधीनं वेदप्रामाण्यं तर्हि हि तथा स्यात् । अतः प्रमाणभूतवचनविहितस्यानुष्ठानम् । अनुष्ठानायत्तं च वेदप्रामाण्यमितीतरेतराश्रयापात[2] इति तस्मात्पूर्वपक्षिणा वेदान्तानां ब्रह्मतर्कसिद्धप्रामाण्याविघाताय निर्विशेषजीवविषयत्वेऽपि नानधिगतार्थत्वमद्वैतिवत्समर्थनीयम् । तद्विलक्षणसगुणविषयत्वं वाऽङ्गीकरणीयमिति । उभयथाऽपि शास्त्रस्य न [3]निर्विषयत्वशङ्कावकाश इति निरस्तम् । वेदप्रामाण्यस्य सिद्धत्वेऽपि तदाच्छादनेन पूर्वपक्षप्रवृत्तिसम्भवात् । तदुक्तं चन्द्रिकायाम् । प्रमाणभूतवेदान्तवाक्यगतिर्न पूर्वपक्षिणा वाच्या । तदाच्छादनेन पूर्वपक्षप्रवृत्तेरिति । न चैवं पूर्वपक्षोऽत्यन्तं मृदुरिति युक्तम् । पूर्वोत्तरतन्त्रयोस्तत्र तत्र कृत्वा चिन्तयाऽधिकरणप्रवृत्तेः सर्वसम्प्रतिपन्नत्वात् । न ह्याच्छादना[4]तिरेकेण कृत्वा चिन्ता नामास्ति ।

ननु चन्द्रिकायां कथं तर्हि श्रोतव्य इति विचारविधानम् । न च तदाच्छादनेन पूर्वपक्षः । विचारविधायकवाक्यार्थ[5]निर्णायकन्यायव्युत्पादकस्याधिकरणस्य तदाच्छादनयोगादिति । आच्छादनेन पूर्वपक्षप्रवृत्तौ दूषणमभिधाय मन्तव्य इत्यादेः प्रकारान्तरेण विचारविधायकाक्षेपकरणेन तन्यायेन ब्रह्मतर्कवदसिद्धवेदप्रामाण्याच्छादनेन पूर्वपक्षप्रवृत्तिरिति वक्तुमनुचितमिति चेन्न[6] । तत्रोक्तबाधकस्यात्राभावेनाच्छादनेन पूर्वपक्षप्रवृत्त्यङ्गीकारेण विरोधाभावात् । यद्वा स्वारसिक एवाप्रामाण्यपूर्वपक्षः । 'प्रमाणन्यायसच्छिक्षा[7] क्रियते तर्कशास्त्रतः । मानन्यायैस्तु तत्सिद्धचैर्मीमांसामेयशोधनमि'त्यनुव्याख्यानोक्तिश्च मतान्तरमभिप्रेत्य । न चैवं प्रथमाधिकरणे वेदप्रामाण्योपपादकन्यायोऽपि निबद्धव्यः स्यादिति शङ्क्यम् । विषयप्रयोजनसद्भावोपपत्तिसूचकातः शब्देनैव तथाविधन्यायस्यापि सूचनात् । अत एव चन्द्रिकायाम् 'अतो यथार्थबन्धस्ये'त्यनुव्याख्यानतात्पर्य[8]वर्णनावसरे । स्वप्रकाशप्रत्यगर्थाभिन्नत्वान्न विषयत्वमिति प्रमेये आरोपिताकारशङ्कानिरासयुक्तिस्तदतिरिक्ता[9] शब्दस्य न प्रामाण्यम् । प्रामाण्येऽपि सिद्धार्थे न प्रामाण्यमित्यादिका प्रमाणे आरोपिताकारशङ्कानिरासकयुक्तिरपि[10] अतः शब्देनैव सूचिता । अपेक्षिताशेषसूचकत्वादतः शब्दस्येत्युक्तयेत्यादिना मीमांसाङ्गभूतब्रह्मतर्काख्य-

१. प्रवृत्तिमात्रे – इति पा० । २. इतरेतराश्रयत्वप्रसङ्गः – इति पा० । ३. निर्विषयत्वावकाश इति पा.।
४. व्यतिरेकेण इति – पा० । ५. विचारविधिवाक्यार्थ – इति पा० । ६. वक्तुमनुचितमिति इति पा० ।
७. प्रमाणन्यायमीमांसा – इति पा.) ८. अनुव्याख्यानाद्यपद्यतात्पर्य – इति पा० ।
९. तदतिरिक्त – इति पा० । १०. निरासकृद्युक्तिरपि – इति पा० ।

तर्कशास्त्रे सूत्रकृत्कृते प्रकृतजिज्ञासाकर्तव्यत्वोपयोगी युक्तिकलापोऽतः शब्दार्थः ॥ तर्कशास्त्रस्य मीमांसाङ्गत्वं च तन्निर्णीतस्वरूपसङ्ख्याबलाबलादिभिः[१] प्रमाणैरिह मेयशोधनादिति मतान्तर[२]मुक्त-मित्यन्तेनैतत्स्पष्टमेवोक्तम् ॥

यद्वा ब्रह्मतर्के वेदप्रामाण्यस्य वेदप्रामाण्यं व्युत्पादितमित्यत्र न प्रमाणमस्ति सिद्धत्वेऽपि तत्र साधकन्यायोपमर्दनात्पूर्वपक्षप्रवृत्ति-रित्यस्तु । न हि पूर्वपक्षप्रवर्तको यावान्न्यायस्तावानपि ब्रह्मतर्केऽप्युपपादनीय इत्यत्र प्रमाणमस्ति । प्रत्युत "शब्दजातस्य सर्वस्य यत्प्रमाणश्च निर्णय" इति निर्णयमात्रस्य ब्रह्ममीमांसाधीनत्वमेवोक्तम् ॥ अङ्गत्वं च यत्किञ्चित्तन्न्यायोपपादनेऽप्युपपन्नम् ।

यद्वा ब्रह्मतर्कस्य इदानीं खिलत्वेन सर्वाधिकारिसाधारण्येनाधिकारिविशेषाभिप्रायेण वा सर्वज्ञेन महर्षिणा ब्रह्ममीमांसायामेव प्रथमं वेदप्रामाण्यमाक्षिप्य समाधीयत इत्यस्तु ।

किञ्च पूर्वमीमांसाद्यधिकरणपूर्वपक्षेऽप्ययं दोषः स्यात् । तत्र ह्यध्ययनस्य स्वर्गार्थत्वात् सर्वस्यापि वेदस्य विषनिर्हरणादिमन्त्राणामिवान्यार्थं नीयमानत्वेनार्थविवक्षाग्राहकं प्रमाणं नास्तीत्यविवक्षितार्थत्वं पूर्वपक्षितम् । तच्च त्वदुक्तरीत्या विरुद्धम् । तथा हि । अध्ययनेऽधिकृत एव धर्ममीमांसायामधिक्रियत इति वक्तव्यम् । अध्ययनं च साङ्गस्वाध्यायविषयम् । ब्राह्मणेन निष्कारणं षडङ्गवेदोऽध्येयो ज्ञेयश्चेति स्मरणात् । वेदाङ्गत्वं च व्याकरणादीनाम् । रक्षोहागमलघ्वसन्देहाः प्रयोजनमिति महाभाष्योक्तरीत्या दृष्टार्थत्वेनैव निर्वाह्ये दृष्टे सम्भवत्यदृष्टकल्पनायोगात् । एवञ्च वेदानां विवक्षितार्थत्वस्याङ्गाध्ययन-प्रवृत्तिकाल एव निश्चितार्थत्वादविवक्षितार्थत्वेन पूर्वपक्षोत्थानं त्वदुक्तरीत्या न सम्भवतीति । न च व्याकरणादीनां दृष्टार्थत्वनिश्चयस्य विचाराधीनत्वात्तदभावदशायां तत्र पूर्वपक्षप्रवृत्तिरित्यस्त्वित्युक्तम् । ब्रह्मतर्केऽप्येवं वक्तुं शक्यतया वैषम्याभावात् । वैपरीत्यस्यापि सुवचत्वात् ।

किञ्चैवं वाचस्पतिपूर्वपक्षोऽप्यनुपपन्नः[३] स्यात् । पूर्वमीमांसासिद्धस्यैव वेदप्रामाण्यस्य तत्राक्षिप्त-त्वात् । इत्थं हि भामत्यां प्रथमाधिकरणपूर्वपक्षः प्रवर्तितः । यद्यपि स्वाध्यायाध्ययनविधिना स्वाध्याय-पदवाच्यस्य वेदराशेः फलवदर्थावबोधपरतामापादयता कर्मविधिनिषेधानामिव वेदान्तानां स्वाध्याय-पदवाच्यानां फलवदर्थावबोधकत्वमापादितम् । यद्यपि च विशिष्टस्तु वाक्यार्थ इति न्यायेन मन्त्राणा-मिव वेदान्तानामर्थपरत्वमौत्सर्गिकम् । यद्यपि च वेदान्तेभ्यश्चैतन्यानन्दघनः कर्तृत्वभोक्तृत्वादिरहितो निष्प्रपञ्च एकः प्रत्यगात्माऽवगम्यते । तथाऽपि कर्तृत्वभोक्तृत्वदुःखशोकमयमात्मानमवगाहमानेनाहं-

१. बलाबलादिति – इति पा० । २. मेयशोधनादिनिमित्तान्तर – इति पा० ।
३. इति भागः क्वचिद्ग्रन्थे दृश्यते इति – पा०।

प्रत्ययेन सन्देहबाधविरहिणा विरुद्ध्यमाना वेदान्ताः स्वार्थात्प्रच्युता वा जपमात्रोपयोगिनो वेत्यविवक्षितस्वार्थाः । तथा च तदर्थविचारात्मिका चतुर्लक्षणी मीमांसा नारब्धव्या । न च सार्वजनीनाहमनुभवसिद्ध आत्मा सन्दिग्धो वा सप्रयोजनो वा येन जिज्ञास्यः सन्विचारं प्रयुञ्जीतेति पूर्वः पक्ष इति ॥ छ ॥ न च त्वन्मते ब्रह्मतर्कस्येवास्मन्मते कर्ममीमांसाया ब्रह्ममीमांसां प्रत्यङ्गत्वाभावाद्वैषम्यमिति वाच्यम् । पूर्वमीमांसासिद्धन्यायोपजीवनेनैव शारीरकप्रवृत्तेरभ्युपगमेन वैषम्याभावात् । अत एव शाङ्करभाष्ये स्वतन्त्रस्य कर्तुरस्मरणादिति स्थिते वेदस्य नित्यत्वे देवादिव्यक्तिप्रभवाभ्युपगमेन तस्य विरोधमाशङ्क्यातः प्रभवादिति परिहृत्येदानीं तदेव नित्यत्वं स्थितं दृढयति इति अत एव च नित्यत्वमिति सूत्रमवतारितम् ।

ननु भाष्ये पूर्वमीमांसासिद्धमेव वेदनित्यत्वं दृढीक्रियत इति नोक्तम् । तत्र तथोक्तेः पूर्वसूत्रोक्तार्थानुवादित्वेनाप्युपपत्तेरिति चेन्न । पूर्वसूत्रेषु वेदनित्यत्वं प्रति स्वतन्त्रकर्तृस्मरणादेः हेतुत्वेनानुक्तत्वात् । कर्मशब्दविरोधयोस्तत्र समाहितत्वाच्च । किञ्च भामत्यामस्मदुक्तप्रकारेणैव तद्भाष्यं स्पष्टमेव अवतारितम् ॥

'ननु प्राच्यामेव मीमांसायां वेदस्य नित्यत्वं सिद्धं तत्किं पुनः साध्यत' इत्यत आह **स्वतन्त्रस्य कर्तुरस्मरणादेव हि स्थिते वेदस्य नित्यत्वमितीति** । तथैकात्मनः शरीरे भावादिति सूत्रव्याख्यानावसरे ''ननु शास्त्रप्रमुख एव प्रथमे पादे शास्त्रफलोपभोगयोग्यस्य देहव्यतिरिक्तस्यात्मनोऽस्तित्वमुक्तं सत्यमुक्तं भाष्यकृता न तु तत्रात्मास्तित्वे सूत्रमस्ति । इह तु स्वयमेव सूत्रकृता तदस्तित्वमाक्षेपपुरःसरं प्रतिष्ठापितम् ।'[१] इदमेवाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम् । अत एव भगवता महर्षिणा प्रथमे तन्त्रे देहातिरिक्तात्मास्तित्वाभिधानप्रसक्तौ शारीरके वक्ष्याम इत्युद्धारः कृत इत्युक्तम् । एवञ्च पूर्वमीमांसायां वेदप्रामाणस्य तद्विवक्षितार्थत्वस्य च सिद्धत्वेऽपि यथा त्वन्मते जिज्ञासाधिकरणपूर्वपक्षप्रवृत्तिस्तथाऽस्मन्मते ब्रह्मतर्के वेदप्रामाण्यादेः सिद्धत्वेऽपि तदाक्षेपेणाद्याधिकरणपूर्वपक्षप्रवृत्तिरुपपद्यते । अत एव पूर्वोत्तरमीमांसयोरेकशास्त्रत्वमते प्रमाणलक्षणे सकलवेदप्रामाण्यस्य सिद्धत्वेऽपि यथाधिकरणचतुष्टयेन प्रकारान्तरेण वेदप्रामाण्यमाक्षिप्य समाहितमित्युक्तम् । यथाऽऽहुः । द्वाभ्यामादौ प्रतीतिप्रजननमुदितं सिद्धरूपे परस्मिन्द्वाभ्यां वैफल्यशङ्का तदनु परिहृता शास्त्रतज्जन्यबुद्ध्योः । आक्षिप्य स्थापनीयाः कतिचिदिह नयाः पूर्वकाण्डप्रणीता इति ।

**नन्वेवं** पूर्वतन्त्रे स्वर्गकामाधिकरणपूर्वपक्षे नन्वेवमप्रमाणं स्यान्न[२] गम्यमाने प्रवर्तनामात्रे प्रमाणमेवेति शङ्कासमाधाने न कर्तव्ये स्याताम् । तत्रापि सिद्धमेव वेदप्रामाण्यमाक्षिप्य समाधीयत

१. प्रतिष्ठाप्यते – इति पा० । २. न वक्तव्ये इति पा० ।

इति वक्तुं शक्यत्वात् । न च तथोक्तं किन्तु तत्र नानधिगतार्थत्वरूपप्रामाण्यत्यागः किन्तु फलाभावादनुष्ठानाभावमात्रमित्युक्तम् । अतो ज्ञायते सिद्धस्यानपेक्षा इति । नैवं तत्र तथोक्तेः प्रकारान्तरेणाक्षेपसम्भवे सिद्धाक्षेपकरणायोगादित्येवम्परत्वात् । तत्र सिद्धमेवाक्षिप्य समाधीयत इत्युक्तावपि दोषाभावाच्च । चन्द्रिकायां फलालाभेन नियोज्याभावेन च स्वर्गकामो यजेत विश्वजिता यजेतेत्यादिवाक्यमिवोक्तरीत्या विषयाद्यभावेनोपपत्तिविरोधात् तद्विजिज्ञासस्वेत्यादिकमप्रमाणमिति विचारविधायकवाक्यप्रामाण्याक्षेपेण पूर्वपक्षप्रवृत्तौ विश्वजित्स्वर्गकामादि वाक्यं दृष्टान्तत्वेनोपात्तम् । न च अननुष्ठानलक्षणाप्रामाण्याभिप्रायेण तद्दृष्टान्तोक्तिः । विचारस्य तत्र स्वरूपेणैवाक्षेपात् । दृष्टान्तदार्ष्टान्तिकयोरैकरूप्यसम्भवे तद्वैरूप्याङ्गीकारायोगाच्च । न च दृष्टान्ते फलाभावेन नियोज्याभावेन चेत्युक्ततया दार्ष्टान्तिके च विषयाद्यभावेनेत्युक्ततया वैरूप्यमङ्गीकर्तव्यमिति वाच्यम् । तथात्वे दृष्टान्तोक्तेः शब्दानुगममात्रत्वेन प्रतीतिविशेषकरत्वाभावप्रसङ्गात् । तथाऽपि सिद्धस्याक्षेपो नेत्यस्यासिद्धेश्च । अननुष्ठानलक्षणाप्रामाण्यनिराकरणस्यापि प्रमाणलक्षणसिद्धत्वादिति सिद्धस्य वेदप्रामाण्यस्याक्षेपे न कश्चिद्दोषः ।

नन्वनधिगतार्थत्वलक्षणं वेदप्रामाण्यं तदैवाक्षेप्यं स्यात् । यदि सिद्धप्रमाणभावानां देववाक्यानामनधिगतार्थत्वपर्यवसानविरोधी क्वचिदपि वाक्यस्वारस्यानुरोधी स्यात् । 'त्रेधा तण्डुलान्विभजेदि'त्यादिषु तत्तत्स्वारस्योपस्थितानप्यन्यकृतप्राप्तिमतोऽर्थान्परित्यज्य लक्षणया प्रत्यक्षविध्यन्तरद्वारा कल्प्यविध्यन्तरद्वारा वाऽनधिगत एवार्थे आक्षेपपर्यवसानस्याङ्गीकृतत्वादिति चेन्न । 'अयमात्मा ब्रह्म एकमेवाद्वितीयमि'त्यादिवाक्यस्वारस्यानुरोधस्यैव सिद्धप्रमाणभावानां वेदवाक्यानामनधिगतार्थपर्यवसानविरोधिनः सत्त्वात् । 'त्रेधा तण्डुलान्विभजेदि'त्यादिषु स्वरसोपस्थितान्यप्राप्तार्थं परित्यज्य लक्षणादिनाऽनधिगतार्थपर्यवसानाङ्गीकारेऽपि प्रकृते तदाच्छादनेन पूर्वपक्षे प्रवृत्त्युपपत्तेः । न हि सर्वन्यायसामञ्जस्येन पूर्वपक्षप्रवृत्तिः । सिद्धान्तानुत्थानप्रसङ्गात् । किन्तु किञ्चिन्न्यायसामञ्जस्येनेति न किञ्चिदनुपपन्नम् ।

यद्वाऽस्मन्मते ब्रह्मतर्कसिद्धं वेदप्रामाण्यं नानधिगतार्थत्वरूपम् । अनधिगतार्थगन्तु प्रमाणमिति लक्षणस्यास्मदीयैर्दूषितत्वात् । द्वितीयादिबुद्धिप्रामाण्याङ्गीकाराच्च । अत एवोक्तम् । 'बहुप्रमाणसंवादश्च दार्ढ्यहेतुरि'ति किन्तु याथार्थ्यमात्रम् । तच्चाधिगतविषयत्वेऽप्युपपन्नम् । न च शब्दस्यानधिगतार्थत्वमावश्यकम् । सन्दिग्धविपर्यस्तान्यतरं प्रत्येव तस्य सार्थकत्वादिति युक्तम् । तस्य पुरुषप्रयोजनपर्यवसायित्वरूपप्रामाण्यप्रयोजकतया सर्वप्रमाणसाधारणप्रमापकत्वरूपप्रामाण्यं प्रत्यप्रयोजकत्वात् । तादृशप्रामाण्यस्य पारिभाषिकत्वाच्च । न चैवमर्थेऽनुपलब्धे न तत् प्रामाण्यमिति सूत्रविरोधः । तथा

सौत्रोक्तेः प्रकृतधर्मविषयत्वेनाप्युपपन्नतयाऽसार्वत्रिकत्वात् । न चैवमपि 'निर्दोषः शब्द आगम' इति त्वदुक्तिविरोधः । तत्र ज्ञातज्ञापकत्वस्यापि शब्ददोषत्वेन परिगणनादिति वाच्यम् । तत्र तत्परिगणनस्य पुरुषप्रयोजनपर्यवसायित्वरूपप्रामाण्याभिप्रायत्वादिति न कश्चिद्दोषः ।

एतेन तस्माद्वेदान्तानां ब्रह्मतर्कसिद्धप्रामाण्याविघाताय निर्विशेषजीवविषयत्वेऽपि वाऽनधिगतविषयत्वमद्वैतिवत्समर्थनीयं तद्विलक्षणसगुणविषयत्वं चाङ्गीकरणीयमित्युभयथाऽपि न निर्विषयत्वशङ्कावकाश इत्युपसंहारोऽपि निरस्तः । उक्तरीत्या वेदप्रामाण्याक्षेपोपपत्तेः । अद्वैतिमते वेदान्तानामनधिगतविषयत्वस्य शक्रेणापि समर्थयितुमशक्यत्वाच्च । अत एवाभेदावलम्बनेन पूर्वपक्षप्रवृत्तौ भेदावलम्बनेनैव सिद्धान्तो भगवत्पादैरुक्तः । तस्माद्वेदान्तानामहंधीसिद्धं निर्विशेषजीवस्वरूपप्रतिपादनपरत्वमापाद्य पूर्वपक्षप्रवृत्तौ न काऽप्यनुपपत्तिः ।

ननु तथाऽपि त्वन्मते वेदान्तानां निर्विशेषजीवस्वरूपप्रतिपादकत्वमापाद्य पूर्वपक्षप्रवृत्तिर्नोपपद्यते । तथा हि । इत्थं हि तव मतं सुखादिकं साक्षिवेद्यम् । साक्षी च सर्वप्रमाणाधिको नित्यत्वेनाप्रामाण्यहेतुदोषजन्यत्वाभावात् । इदं च साक्षिणो बलवत्त्वं तत्प्रमाणमीमांसारूपे ब्रह्मतर्क एव सिद्धम् । अस्ति[1] अतोऽत्र साक्ष्यनुभवविरुद्धवेदान्तानां सुखदुःखादिबन्धरहितनिर्विशेषजीवस्वरूपमात्रपरत्वमपेक्ष्य[2] पूर्वपक्षप्रवर्तनं न युज्यते ।

किञ्च त्वदभिमतोपक्रमादिबलाबलानुसारी सर्ववेदान्तानामर्थश्च त्वन्मते न्यायानुसन्धानरूपविचारात्प्रागेवावगन्तव्यः । तदेव च श्रवणम् । तच्च यावदज्ञाननिवृत्त्येकस्मादेव गुरोः तदुत्तमम् । गुरुलाभे बहुभ्यो गुरुभ्यो वा सम्यगावर्तनीयम् । तथा च सकलवेदवाक्यानां जीवभिन्नसगुणब्रह्मपरत्वमेव बोधयतां स्वाप्तानां गुरूणां सकाशाद्बहुधाऽवर्तितश्रवणलब्धसकलवाक्यार्थावधारणो मनने प्रवर्तमानः शिष्यः सर्ववेदवाक्यानां निर्विशेषजीवचैतन्यमात्रमेवार्थ इति कथमाशङ्केत । शिष्यस्य प्रागवगतार्थेन प्रतिबद्धुमशक्यतयोदेतुं योग्या शङ्कैव हि वादकथारूपे शास्त्रे पूर्वपक्षो नामेति । मैवम् । सर्ववेदानां साक्ष्यनुभवसिद्धसुखदुःखाद्यतिरिक्तविशेषशून्यजीवपरत्वापादनेनैव पूर्वपक्षप्रवृत्त्यभ्युपगमात् । आकरेष्वेवमेव निर्विशेषशब्दार्थस्याभ्युपगन्तव्यत्वाच्च । न चैवमद्वैतरीत्येति चन्द्रिकोक्तिविरोधः । वेदान्तानामहन्धीसिद्धप्रत्यगात्ममात्रपरत्वाश्रयणेनापि तद्रीत्यङ्गीकारोपपत्तेः । सर्वांशेनापि तद्रीत्यनभ्युपगमाच्च ।

किञ्च श्रवणस्य बहुधा[3] प्रवृत्तत्वेऽपि श्रवणकाले न्यायानुसन्धानाभावेन निर्विचिकित्सज्ञानानुदयेऽज्ञानमात्रविरोधिज्ञानोदये च संशयस्यावर्जनीयतया तद्विधूननार्थं मननरूपविचारे प्रवृत्तिरुपपद्यते[4] ।

---

१. ब्रह्मतर्क एवास्ति – इति पा० ।
२. मवेक्ष्य – इति पा० ।
३. आदृत प्रभृत – पा०
४. प्रवर्तितुमुपपद्यते – इति पा० ।

न्यायं विना शतवारमुपदिष्टेऽपि संशयदर्शनात् । श्रवणात्पूर्वं धर्मिज्ञानाभावेन संशयानुदये संशय-धर्मिज्ञानरूपस्य श्रवणस्याज्ञानमात्रविरोधित्वावश्यम्भावाच्च । न च साङ्गाध्ययनकाल एवापातधर्मिज्ञानं निवृत्तमिति न त्वदभिमतं श्रवणमङ्गीकार्यमिति वाच्यम् । साङ्गाध्ययनेनापि तत्तद्वेदैः पदवर्णस्वरादिना ब्रह्मापातप्रतीत्यनुदयेन तदर्थमस्मदभिमतस्य श्रवणस्यावश्यकत्वात् । तदुक्तं न्यायामृते । "न हि कर्मकाण्डादिना ब्रह्मकाण्डेऽप्यवान्तरकारणादिवाक्येन पदवर्णस्वरादिनाऽऽपाततोऽपि ब्रह्मधीरस्तीति । श्रवणेऽपि न्यायप्रवेशो मननवैय्यर्थ्यं स्यादित्यन्यत्र विस्तरः ।" तस्मादस्मन्मते पूर्वपक्षप्रवृत्तौ न काऽप्य-नुपपत्तिः ।

ननु तथाऽपि त्वन्मते पूर्वपक्षोऽनुपपन्नः । तथा हि सर्ववेदान्तवाक्यानां निर्विशेषजीवस्वरूपपरत्वं प्रबलन्यायैः प्रतिष्ठापयच्छास्त्रं पूर्वपक्षिणाङ्गीक्रियते न वा । न चेत्प्रत्यक्षादिविरुद्धं सविशेषत्वादि-विषयानेकावान्तरवाक्यकृतान्तःकलहप्रतिरुद्धं च तेषां तत्परत्वं न सिध्येदिति तत्सिद्धिसापेक्षानारम्भ-पूर्वपक्षोत्थानं न स्यात् । अङ्गीक्रियते चेत् तदारम्भमपेक्ष्य विषयाभावेन तदनारम्भः समर्थित इति व्याघातः स्यादिति चेत् । अत्र केचिदाहुः—

'अयमात्मा ब्रह्म', 'केवलो निर्गुणश्चे'त्यादिवाक्यजन्यप्रतीतिमात्रावलम्बनेनायं पूर्वपक्षो न तु तत्परत्वप्रतिपादन(क)परन्यायोपेतवाक्यजन्यज्ञानावलम्बनेनेति । तन्न । 'ज्ञाज्ञौ द्वावजावीशानीशौ यः सर्वज्ञः सर्वविदि'त्यादिभेदसविशेषवाक्यानामपि सत्त्वेन प्रबलन्यायाभावे संशयस्यैव तदवस्थितत्वात् । पूर्वपक्षस्यापि निर्णयरूपत्वात्संशयोत्तरनिर्णयस्य च न्यायसाध्यत्वात् । एतावांस्तु विशेषः । भ्रमरूपो निर्णयः पूर्वपक्षः प्रमारूपो निर्णयस्सिद्धान्त इति ।

केचित्तु वेदान्तानामखण्डचिन्मात्रपरत्वादिति न पूर्वपक्ष्यभिमतो हेतुः । येनासिद्धिशङ्कायां न्यायैः प्रतिष्ठापयच्छास्त्रमिष्यते किन्तु वेदान्तैरात्मैकत्वप्रतीतेस्तस्य च[1] प्रत्यक्षसिद्धत्वात्प्रतीतिमात्रं च परस्यापि सम्मतमिति न शास्त्रापेक्षाप्रयुक्तव्याघातावकाशप्रसङ्गः । एतदेवाभिप्रेत्य चन्द्रिकायां 'कर्मकाण्डस्य कर्मपरत्वादि'त्युक्त्वा 'वेदान्तैश्चोपक्रमादिभिरद्वैतरीत्याऽखण्डप्रत्यगात्ममात्रप्रत्ययनादि' त्युक्तम् । न च तत्रोपक्रमादिभिरित्युक्त्या वेदान्तानां तत्परत्वं हेतुतयोक्तमित्यवसीयत इति वाच्यम् । उपक्रमादिभिरित्युक्तेर्वेदान्तेषु बहुशस्तत्प्रतीतेरित्येवमर्थपरत्वात् ।

यद्वा वेदान्तानामखण्डप्रत्यगात्ममात्रप्रत्यायकत्वस्याद्वैतिभिरङ्गीकारादिति हेतुः । अत्र च नासिद्धिशङ्केति न व्याघातप्रसङ्गः । अत एव चन्द्रिकायां 'उपक्रमोपसंहारादिभिरद्वैतिरीत्ये'त्युक्तमित्याहुः तन्न ।

१. आत्मनः – पा० ।

वेदान्तैरात्मैकत्वप्रतीतिवद्भिन्नात्मत्वप्रतीतेरपि सत्त्वेन तथाविधप्रतीतिमात्रस्य पूर्वपक्षहेतुत्वात् । अधिकरणाङ्गभूतस्वारसिकशिष्यसंशयस्य तादृशप्रतीत्यतिरिक्तप्रबलन्यायेनैव निरसनीयत्वाच्च । अत एव वेदान्तानामखण्डप्रत्यगात्मप्रत्यायकत्वस्याद्वैतिभिरङ्गीकारादिति हेतुरिति पक्षोऽपि निरस्तः । उक्तहेतुनाऽधिकरणाङ्गभूतस्वारसिकशिष्यसंशयस्यानिरासात् । व्यधिकरणत्वात्तादृशहेतोरप्युपक्रमोपसंहारादिजन्याखण्डप्रत्यगात्मपरत्वविषयशिष्यावधारणे गर्भत्वे च सुस्थो व्याघातः ।

केचित्तु पूर्वपक्षे वेदान्तानामखण्डजीवस्वरूपमात्रपरत्वसिद्धौ नोपक्रमादिन्यायोपजीवनं, येन व्याघातः स्यात् । किन्तु लाघवेन वेदान्तानामखण्डजीवस्वरूपमात्रपरत्वं, तदतिरिक्तपरत्वे गौरवादिति न्यायमात्रोपजीवनम् । न चैवमुपक्रमादिभिरिति चन्द्रिकोक्तिविरोधः । तत्रातद्गुणसंविज्ञानादिबहुव्रीहिणोक्तलाघवादिन्यायस्यैव पूर्वपक्षहेतुत्वेन विवक्षितत्वात् । किञ्चिन्न्यायमपेक्ष्य विचाराक्षेपेऽपि वर्तिष्यमाणसकलन्यायापेक्षाभावेन व्याहतिदोषप्रसराच्च । न हि कश्चन न्यायमप्रदर्श्य पूर्वपक्षप्रवृत्तिः सम्भवति । न्यायाभावे निर्णयरूप पूर्वपक्षस्यानुदयात् । अन्यथा पूर्वमीमांसाधिकरणपूर्वपक्षोऽपि व्याहतः स्यात् । तत्रापि धर्मविचारशास्त्रं नारम्भणीयम् । वेदस्यार्थविवक्षाग्राहकप्रमाणाभावादिति पूर्वपक्षेऽर्थज्ञानपर्यन्तोऽध्ययनविधिरेव तत्र प्रमाणमिति शङ्किते तस्य दृष्टफलरूपार्थज्ञानार्थत्वे वैयर्थ्यप्रसङ्गेन स्वपिक्षितस्वर्गार्थत्वे अध्ययनविध्युपात्तस्वाध्यायस्याविवक्षितार्थत्वे च पूर्वपक्षिणोपपादनीयस्य विश्वजिन्न्यायस्य विषनिर्हरणादिमन्त्रवदन्यार्थं नीयमानत्वरूपन्यायस्य चोपजीव्यत्वात् । अत एव ब्रह्मविचारशास्त्रं नारम्भणीयम् तद्विषयस्याहं धीसिद्धत्वादिति वाचस्पतिपूर्वपक्षे प्रत्यगात्मन इदानीमहमिति प्रकाशमानं रूपमध्यासपरिनिष्पन्नम् । तदिह न विचार्यं किन्तु संसारदशायामनाविर्भूतं निर्विशेषं तस्य तात्त्विकं रूपमस्तीति श्रुतिप्रसिद्धम् । तद्विचारार्थं शास्त्रारम्भ इति शङ्कावारणायेदं शास्त्रं नारम्भणीयम् । तद्विषयत्वाभिमतप्रत्यग्ब्रह्मैक्यस्यासिद्धत्वादिति विवरणकारपूर्वपक्षे च प्रत्यग्ब्रह्मैक्यं नासिद्धं तत्साधकश्रुतिसद्भावादिति शङ्कावारणाय चैकयैव प्रत्यक्षादिविरोधयुक्त्या श्रुतीनामन्यपरत्वापादनान्न व्याहतिरिति त्वयेष्यते । तथा च किञ्चिन्न्यायापेक्षायामपि सकलन्यायानपेक्षणान्न व्याहतिदोषप्रसङ्ग इत्याहुः ॥ छ ॥

यद्वा ब्रह्मविचारशास्त्रं नारम्भणीयम् । निर्विषयत्वात् । न तावद्विषयत्वेनाभिमतं ब्रह्म जीवाद्भिन्नम् । मानाभावात् । कर्मकाण्डवद्ब्रह्मकाण्डस्यापि कार्यपरत्वाज्जीवस्य च निश्चितत्वादिति पूर्वपक्षे न व्याहतिदोषप्रसरः ।

ननु चन्द्रिकायामिमं पक्षं केचित्तु वेदमात्रस्य कार्यपरत्वान्न जीवादन्यद्ब्रह्मास्ति जीवस्तु असन्दिग्ध इति पूर्वपक्ष इत्याहुरित्यादिनाऽनूद्य तत्र प्राभाकरीत्या पूर्वपक्षकरणे न्यायविवरणे आत्मनः स्वप्रकाश-

त्वोक्तयोगाज्जीवस्य देहादिभिन्नत्वेन विचार्यत्वसम्भवेन शास्त्रानारम्भासिद्धेश्चेत्यादिनाऽस्य दूषितत्वान्नैवं व्याहतिदोषपरिहार इति चेन्न । प्रौढिवादेन तत्र तथा तद्दूषणप्रवृत्त्युपपत्तेः । आत्मनः स्वप्रकाशत्वेऽपि सकलवेदस्य कार्यपरत्वमात्रे प्राभाकारीत्याऽऽश्रयणेन न्यायविवरणोक्तात्मस्वप्रकाशत्वोक्तिविरोधाभावात् । जीवे देहादिभिन्नस्यापि प्रत्यक्षसिद्धत्वेन ताद्रूप्येणापि तस्य विचार्यत्वानापत्तेश्च । न च तस्य नित्यत्वादिना विचार्यत्वं कर्मसिद्ध्यन्यथानुपपत्त्यैव तत्सिद्ध्या तदर्थमपि वेदान्तवाक्यविशेषविचारानावश्यकत्वात् । तद्विचारावश्यकत्वेऽपि सिद्धान्त्यभिमततावद्विचारारम्भासिद्धेश्च । न ह्यत्र किञ्चिद्वाक्यविचार आक्षिप्यते । किन्तु सिद्धान्त्यभिमतः सर्वोऽपि वेदविचार इति न कश्चिद्दोषः । न चैकस्मिन्नधिकरणेऽनेकपूर्वपक्षाश्रयणं दोषः । पूर्वतन्त्रेऽप्येकस्मिन्नधिकरणेऽनेकपूर्वपक्षाश्रयणात् । चन्द्रिकायां प्रथमाधिकरण एव सुधायां त्वनुव्याख्याने सिद्धे व्युत्पत्त्यादेरतःशब्दार्थत्वेनोक्तत्वात्तद्व्यावर्त्यपूर्वपक्षे कार्ये व्युत्पत्तिरुक्ता । इह तु टीकायां न्यायविवरणोक्तब्रह्मशब्दव्यावर्त्यपूर्वपक्ष उच्यत इति नेह सा वक्तव्येति टीकासुधयोः पूर्वपक्षभेदावलम्बनेन प्रवृत्तिरित्युक्तत्वाच्च । न चोक्तपूर्वपक्षव्यावर्तकन्यायाभावः । अतःशब्दादेरेव तत्सूचकत्वादिति ।

यद्वा ब्रह्मविचारशास्त्रं नारम्भणीयम् । सिद्धपरवेदान्तानामव्युत्पन्नत्वेनोषरप्रायत्वात्कार्यपरेष्वेव व्युत्पत्तिग्रहादित्यनुव्यानोक्तरीत्या पूर्वपक्षप्रवृत्तौ न व्याहतिदोषप्रसङ्गः । अत्र पक्षे वाक्यार्थविचारस्यैवाभावात् । नन्वत्र पक्षे व्याहतिर्दुर्वारा । तथाहि । ब्रह्मप्रतीत्यभावे ब्रह्मविचारशास्त्रं नारम्भणीयमित्युक्त्यनुपपत्तिः । तत्सत्त्वे च वेदान्तानामूषरप्रायत्वोक्तिविरोधः । अन्यस्य ब्रह्मप्रत्यायकस्याभावादिति चेन्न । प्रतिवाद्यभिमतब्रह्मसिद्धिमादाय ब्रह्मविचारशास्त्रं नारम्भणीयमित्युक्त्युपपत्तेर्न व्याहतिदोष इति ।

वस्तुतस्तु सर्ववेदान्तानां निर्विशेषाखण्डजीवस्वरूपपरत्वव्युत्पादकमद्वैतिमतानुसारिशास्त्रमाक्षेप्याद्ब्रह्ममीमांसारूपशास्त्रादन्यदेवेति न व्याहतिदोषप्रसङ्गः । अत एव चन्द्रिकायामद्वैतरीत्येत्युक्तम् । न हि वर्तिष्यमाणं ब्रह्ममीमांसाशास्त्रं वेदान्तानामखण्डजीवस्वरूपपरत्वमुपपादयितुं प्रवृत्तम् । तत्र तस्यासामर्थ्यात्किन्त्वानन्दमयादिशब्दा ब्रह्मपरा वा ब्रह्मणोऽर्थान्तरपरा वेन्यादिरूपेणैव प्रवृत्तम् । तत्र सिद्धान्त्यभिमतब्रह्माङ्गीकारेणैव तत्तद्वाक्यानां जीवादिपरत्वेन पूर्वपक्षकरणात् । अत्र सिद्धान्त्यभिमतब्रह्माक्षेपेणैव पूर्वपक्षप्रवृत्तेश्च । ननु शास्त्रान्तरस्यापि ब्रह्ममीमांसाशास्त्रवत्स्वप्रकाशाखण्डजीवस्वरूपमात्रविषयत्वे ब्रह्ममीमांसाशास्त्रमेव तदस्तु । किमसिद्धशास्त्रान्तरपरिकल्पनया । तथाच व्याहतिदोषतादवस्थ्यम् । किञ्च शास्त्रान्तरमपि नारभ्येत । वर्तिष्यमाणशास्त्रवत्तस्यापि स्वप्रकाशजीवविषयत्वात् । सिद्धविषयत्वेऽपि तस्यारभ्यत्वे किमनेनापराद्धमिति चेन्न । श्रुतितन्मीमांसारूप-

शास्त्रयोः स्वप्रकाशाखण्डजीवस्वरूपपरत्वप्रतिपादकशास्त्रान्तरस्य स्वप्रकाशजीवविषयकत्वनिर्धारण-फलकत्वानभ्युपगमात् । तयोः स्वप्रकाशाखण्डजीवस्वरूपस्यैव तन्निर्धारणीयत्वाभ्युपगमाच्च । न च तस्येव ब्रह्ममीमांसाशास्त्रस्यापि तदेव विषयो न तु स्वप्रकाशजीव इति युक्तम् । सिद्धान्तिना तथाऽनभ्युपगमात् । वेदान्तानामनुवादकत्वापरिहाराच्च । तस्मादाक्षेप्याक्षेपकशास्त्रयोर्भिन्नविषयत्वेन न व्याहतिदोषप्रसरः ।[1]

यद्वा स्वप्रकाशस्य विषयत्वासम्भवयुक्त्याऽनारम्भपूर्वपक्षो न क्रियते । किन्तु वेदान्तानां स्वप्रकाशचिन्मात्रपरत्वव्यवस्थापकं तावच्छास्त्रमस्ति । इदमपि तथाभूतं चेत्तेन गतार्थम् । सगुणब्रह्म-परत्वव्यवस्थापकं चेत्तेन बाधितार्थमित्युभयथाऽपि तदपहृतविषयत्वादनारभ्यमिदं शास्त्रमित्यतो न व्याघातः ।

नन्वेवं पूर्वपक्षे जीवस्य स्वप्रकाशत्वेनासन्दिग्धत्वं न वक्तव्यं स्यात् । अनुपयोगाद्विरुद्धत्वाच्चेति चेन्न । जीवनिर्विशेषत्वोक्तेः पूर्वोक्तपक्षान्तराभिप्रायत्वेनात्र पक्षे जीवासन्दिग्धत्वस्यावक्तव्यतया विरोधाभावात् । एतेन कणभुगादिशास्त्रेणाप्यपहृतविषयतयाऽनारम्भे शङ्कितुं शक्ये निर्विशेषशास्त्र एव तव पक्षपात इति निरस्तम् । एतच्छङ्कया अशोकवनिकान्यायत्वादित्यास्तां तावत् ॥ छ ॥

ननु स्वप्रकाशस्यापि जीवस्य शास्त्रविषयत्वे न काऽप्यनुपपत्तिः । स्वप्रकाशस्यापि तस्य न जानामीत्यविद्यावृतत्वानुभवात् । त्वयाऽपि सत्यस्यानादेर्जीवाश्रितस्य तं प्रति तदानन्दादिकं ब्रह्म-तत्स्वरूपतद्गुणादिकं चावृतो मायाऽविद्याप्रकृत्यादिशब्दवाच्यस्य द्रव्यरूपस्य ज्ञानविरोधिनो भाव-रूपाज्ञानस्या 'नादिमायया सुप्तो,' 'भूयश्चान्ते विश्वमायानिवृत्तिरि'त्यादिश्रुतिप्रतिपन्नस्यापीष्य-माणत्वात् । तस्यानादित्वेन स्वोपादानगतोत्तरावस्थारूपनिवृत्त्यसम्भवेऽपि प्रमाणसत्त्वनिवर्तकोप-निपातबलात्स्वरूपप्रध्वंसरूपनिवृत्त्यभ्युपगमाच्च । 'पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगादि'त्यधिकरणे त्वयाऽस्यार्थस्य प्रतिपादनाच्च तदनिर्वाच्यत्वादिकं परं नेष्यते । न च सिद्धान्ते जीवतदानन्दयोरभेदेऽपि गुणगुणिभावनिर्वाहकस्य भेदप्रतिनिधेर्विशेषस्याङ्गीकारेण[2] स्वप्रकाशजीवस्वरूपानावरणेऽपि तत्स्वरूप-भूतानन्दस्य युक्तमावरणम् । अखण्डजीवपक्षे जीवतदानन्दयोर्विशेषाभावेन स्वप्रकाशमानस्याप्रकाश-मानत्वं न युक्तं विरोधादिति वाच्यम् । अखण्डजीवपक्षेऽविद्यामहिम्ना तदुपपत्तेः । सा ह्यघटितघटना-पटीयसी ब्रह्मणः शक्तिः । प्रत्युत सविशेषाभेदपक्ष एव विरोधो दुष्परिहरः । विशेषस्य जीवस्वरूप-त्वाभ्युपगमेन तत्परिहारायोगात् । किञ्च जीवस्य ब्रह्मणः सकाशान्मुख्यो भेदः सन्नपि ब्रह्मदर्शनं यदा

---

१. प्रसङ्गः – इति पा० । २. उपगमेन इति पा० । ३. ब्रह्मणः सकाशात् – इति पा० ।

निरोद्धुं न शक्नोति तदा जीवस्य स्वानन्दा[1]द्विशेषो भेदप्रतिनिधिस्तद्दर्शनं निरोद्धुं न शक्नोतीति किमु वक्तव्यम् । युक्तं चातीतानागतपदार्थानां तत्तत्कालानामव्याकृताकाशस्य तदंशानां व्यवहितानां प्राच्यादिदिशां मनसः परमाणूनां च साक्षिविषयत्वमातिष्ठमानस्य तव ब्रह्मणोऽपि तद्विषयत्वम् । विशेषहेत्वभावात् । अन्यथा तेषामपि त्वन्मते साक्षिविषयत्वाभावापातात् । एवञ्च ब्रह्मणस्तद्गुणानां च प्रकाशमानत्वेऽपि त्वयाऽस्य शास्त्रस्य निर्विषयतापरिहारायाप्रकाशमानत्वमविद्यामहिम्नोपपादनीयम् । उपपादितं च तथैव न्यायसुधायाम् । यद्यपि जीवचैतन्यं ब्रह्म स्वधर्मप्रकाशात्मकं तथाऽपि परमेश्वराचिन्त्याद्भुतशक्त्युपबृंहितानाद्यविद्यावशान्न तथा संसारे प्रकाशत इति । न च प्रकाशमानस्याप्रकाशमानत्वमसिद्धम् । त्वदुक्तोऽर्थः क इति न जाने । दूरे जलमिवावभासमानं किमिति न जानामीति शब्दतः प्रत्यक्षतश्चावगतमप्यर्थं साकल्येनानूद्य तत्रैव प्रश्नस्याज्ञानानुभवस्य च प्रसिद्धत्वात् । तस्मान्निर्विशेषाखण्डजीवस्वरूपस्यापि त्वद्रीत्याऽनधिगतत्वेन विचार्यत्वं युक्तमिति न पूर्वपक्षोत्थानम् । एवमपि यदि तस्य शास्त्रविषयत्वं नानुमनुषे तदा सगुणविषयतयैव शास्त्रारम्भः स्यात् । न च सर्ववेदान्तानामद्वैतदर्शितन्यायैरखण्डजीवपरत्वात्सगुणे ब्रह्मणि मानाभावः । अद्वैतिभिरेव महातात्पर्येण निर्विशेषतया प्रवृत्तवेदान्तानां मध्ये केषाञ्चिद्वाक्यानां ब्रह्मोपासनाविधिपरत्वस्य ब्रह्मणस्तदुपासनाविषयगुणत्वप्रतिपादकत्वस्य चाङ्गीकृतत्वात् । अद्वैतिरीत्यैव पूर्वपक्षप्रवृत्तिरिति त्वयैवोक्तत्वाच्चेति । नैतद्युक्तम् । पूर्वपक्षदशायामस्मत्प्रतिबन्द्या शास्त्रारम्भोपपादनस्य त्वया कर्तुमनुचितत्वात् । यदि मया त्वन्मते शास्त्रानारम्भणीयतोपपाद्यते तदैव परं त्वया मां प्रतिबन्द्यैतदारम्भसमर्थनं कर्तुमुचितम् । अस्मन्मते पूर्वपक्षिणा कियदंशेन त्वद्रीतिमवलम्ब्य शास्त्रानारम्भणीयत्वोपपादनात् । न हि पूर्वपक्षिणं प्रत्यस्मत्प्रतिबन्द्या किञ्चित्प्रयोजनम् । तस्मादस्मत्पूर्वपक्षिणं प्रति का चात्रानुपपत्तिरित्यादिकमकाण्डताण्डवायितम् । ननु परेण स्वकीयाधिकरणपूर्वपक्षदर्शनव्याजेनाद्वैतवाद एव शास्त्रारम्भणदूषणस्य प्रदर्शितत्वात्प्रतिबन्द्या तत्समाधानं मया कृतमिति का वाऽत्रानुपपत्तिरित्यादिकं नाकाण्डताण्डवमिति चेदस्तु तावदेवम् । तथाऽपि न प्रतिबन्द्यवकाशः । तथा हि । न तावत्त्वन्मत इवास्मन्मते जीवानन्दावरणानुपपत्तिः । जीवतदानन्दयोर्भेदेऽपि गणगुणिभावनिर्वाहकस्य भेदप्रतिनिधेर्विशेषस्य सत्त्वेन जीवस्वरूपानावरणेऽपि तदानन्दावरणोपपत्तेः । न हि विशेषस्य जीवस्वरूपत्वेन तेन कथं तदप्रकाशोपपादनमिति युक्तम् । भेदकार्यनिर्वाहकत्वेनागच्छतस्तस्य जीवस्वरूपत्वकल्पनस्यानवस्थितिभिया पश्चाद्भावित्वेन कथन्ताऽनवकाशात् । धर्मिग्राहकमानेन तस्य तादृप्येणैव सिद्धयभ्युपगमात् । न च त्वदभिमतविशेषस्य निर्विशेषाखण्डब्रह्मवादाविरोधितया तत्पक्षेऽप्यावरणं युक्तमिति वाच्यम् । तथाऽभ्युपगमे विवादपर्यवसानात् । परेणाविद्याया एवावरकत्वाभ्युपगमाच्च । न चाविद्याऽपि

तदावरणं त्वया ज्ञानाज्ञानयोर्विरोधाभ्युपगमादविद्यायाः स्वप्रकाशब्रह्मावरणे च न कदाऽपि तन्निवृत्तिः स्यात् । यथाऽऽहुः । 'ज्ञानरूपं परं ब्रह्म तन्निवर्त्यमृषात्मकम् । अज्ञानं चेत्तिरस्कुर्यात् कः प्रभुस्तन्निवर्तने' ॥ इति ॥ न च वृत्तिरेव तन्निवर्तिका[1] स्वरूपज्ञानं तु तत्साधकमिति युक्तम् । वृत्तेर्जडत्वेन तन्निवर्तकत्वायोगात् । न चाज्ञानसाधकमेव स्वरूपचैतन्यं वृत्त्युपहितं सदज्ञानं निवर्तयतीति युक्तम् । एवंविधकल्पनायां प्रमाणाभावात् । ब्रह्मणः सर्वप्रत्ययवेद्यत्वाभ्युपगमेन घटादिविषयकवृत्त्युपहितचैतन्येन ब्रह्मावरकाज्ञाननिवृत्त्यापाताच्च । न च तस्य विशिष्टविषयतया तेन निर्विशेषब्रह्मावरकाज्ञानानिवृत्तिरिति वाच्यम् । विशिष्टविषयकज्ञानेन विशेष्याज्ञाननिवृत्तेरवश्यम्भावात् । अन्यथा दण्डीपुरुष इति ज्ञानेन देवदत्ताज्ञाननिवृत्तिप्रसङ्गात् । न च शास्त्रबलाद्वेदान्तश्रवणादिजन्यवृत्त्युपहितात्मज्ञानमेवाज्ञाननिवर्तकमिति वाच्यम् । घटाज्ञानानिवृत्तिप्रसङ्गात् । घटादिविषयकज्ञानस्य श्रवणाद्यजन्यत्वात् । न च शास्त्रबलेन ब्रह्मज्ञाननिवृत्तौ तथा नियमः । दृष्टानुसारेण कल्पयतस्तव मते शास्त्रस्याननुसारणीयत्वात् । किञ्चास्मन्मते जीवस्य स्वानन्देश्वरतद्गुणाद्यावरकमज्ञानं युक्तम् । न तु त्वन्मते । 'तुरीयं तत्सर्वदृक् सदा, 'यः सर्वज्ञः सर्वविदि'त्यादिश्रुत्या ब्रह्मणः सदा सर्वविषयकापरोक्षवत्त्वावेदनेन तस्य स्वं प्रति स्वरूपाद्यावरकाज्ञानायोगात् । तदुक्तं भगवत्पादैः । पुङ्गतमेव हि तम इति । 'अज्ञताखिलसंवेत्तुर्घटते न कुतश्चने'ति । तस्मान्निर्विशेषाभेदपक्षे प्रकाशमानस्याप्रकाशमानत्वमयुक्तम् । न चैवं त्वदुक्तोऽर्थः क इति न जानामि दूरे जलमिवावभासमानं किमिति न जानामीत्यवगतेऽप्यर्थे प्रश्नाज्ञानयोरनुभवेन विरोधाभाव इति वाच्यम् ।

तत्र सामान्यतो ज्ञातत्वेऽपि प्रश्नाज्ञानयोर्विशेषविषयत्वेनैकविषयत्वासम्प्रतिपत्तेः । न च विशेषस्याज्ञातत्वेन प्रश्नविषयस्य अज्ञातत्वेन प्रश्नविषयस्याज्ञानावच्छेदकतयाऽनुवादस्य चायोगः । अन्वयव्यतिरेकाभ्यां विशेषप्रश्ने सामान्यज्ञानमेव तन्त्रम् । विशेषाज्ञानानुभवे च सामान्यमेवावच्छेदकमित्यङ्गीकारात् । न चैवं सामान्यविशेषभावस्य व्याप्यव्यापकभावातिरिक्तस्याभावेनाज्ञातधूमस्यापि ज्ञातवह्निकस्य धूमप्रश्नप्रसङ्गः । धूमाज्ञानस्य वह्निं न जानामीति वह्न्यवच्छेदनानुभवप्रसङ्गश्चेति वाच्यम् । सामान्यविशेषभावस्य व्याप्यव्यापकभावातिरिक्तत्वात् । धूमवह्न्योस्तथा व्यवहाराभावात् । तयोर्व्याप्यव्यापकभावापन्नधर्मावच्छिन्नत्वाच्च । न चैवं पृथिवीत्वप्रकारकज्ञानानन्तरमज्ञातघटस्य पुंसो घटाज्ञानानुभवप्रसङ्गः । घटत्वस्य पृथिवीत्वव्याप्यत्वादिति वाच्यम् । इष्टत्वात् । न च घटस्याप्यवच्छेदकत्वेनोल्लेखप्रसङ्गः । यत्र यत्प्रकारकज्ञानं कारणं तद्धर्मावच्छिन्नस्यैव तत्रावच्छेदकत्वेन भानाङ्गीकारात् । एतेन व्याप्त्यादिप्रश्नस्य ज्ञातविषयत्वमावश्यकम् । अन्यथा पृच्छकस्य वह्न्याद्यनुमानविलोपप्रसङ्गाद् व्याप्तिज्ञानस्यानुमित्यकरणत्वप्रसङ्गाच्चेति निरस्तम् ।

१. तन्निवर्तः - इति पा० ।

व्याप्तिस्वरूपस्य ज्ञातत्वेऽपि प्रश्नस्य शब्दविवेषवाच्यरूपत्वविषयत्वात् । तस्यापि ज्ञातत्वे प्रश्नासिद्धेश्च । एतेनास्मिञ्ज्योतिर्मण्डले कश्चन्द्र इत्यादिप्रश्नो व्याख्यातः । एवं दूरे जलमिवावभासमानं किमिति न जानामीत्यत्रापि न ज्ञातस्याज्ञानविषयत्वम् । जलस्य प्रकाशमानत्वेऽपि प्रामाण्यसंशयसामग्र्यसमवहितार्थनिश्चयस्यैव प्रतिबन्धकत्वेन तद्वत्त्वसंशयपर्यवसन्नप्रामाण्य-संशयोत्पत्तौ बाधकाभावात् । न च तद्वत्त्वनिश्चयदशायां ग्राह्यनिश्चयविरहघटितप्रामाण्यसंशय-सामग्र्यसिद्धेति वाच्यम् । तदतिरिक्ततत्सामग्र्या एवोत्तेजकत्वस्वीकारात् । ज्ञानगतप्रामाण्यव्याप्यदर्शन-विरहघटिततत्सामग्र्या एवोत्तेजकत्वस्वीकाराच्च । एतेन जीवस्य ब्रह्मणः सकाशान्मुख्यो भेदः सन्नपि ब्रह्मदर्शनं यदा निरोद्धुं न शक्नोति तदा जीवस्य स्वानन्दाद्विशेषो भेदप्रतिनिधिस्तद्दर्शनं निरोद्धुं न शक्नोतीति किमु वक्तव्यम् । तस्मादविद्याशक्तिमहिम्नैव तदप्रकाश उपपादनीय इति निरस्तम् ।

विशेषस्यापि तदप्रकाशोपपादकत्वोपपादकत्वोपपादनाद्भेदस्यापि तदप्रकाशोपपादकत्वोपपत्तेश्च । न च भेदेऽपि ब्रह्मणोऽतीतादिवत्साक्षिप्रकाशविषयतया प्रकाशमानस्यैवाप्रकाशमानत्वं वाच्यमिति युक्तम् । अव्यक्तस्वभावस्य ब्रह्मणः साक्ष्यविषयत्वात् । न चैवं मोक्षेऽप्यप्रकाशापातः । प्रसादेन तद्व्यक्तिसम्भवात् । न चैवं साक्षिणो ब्रह्मणश्च सदातनत्वाद्विषयविषयिभावस्यापि तदुभयस्वरूपत्वा-द्ब्रह्मणः कथं साक्ष्यविषयत्वमिति वाच्यम् । साक्षिब्रह्मणोर्विषयविषयिभावस्य शक्त्यात्मना स्थितत्वेऽपि व्यक्त्यात्मना अभावेनेदानीं ब्रह्माप्रकाशोपपत्तेः । न चैवं शक्तिव्यक्त्योर्भेदप्रसङ्गः । अन्यथा व्यक्तेः प्रतिबध्यत्वायोगात् । त्वया शक्तिव्यक्त्योरभेदाभ्युपगमाच्चेति वाच्यम् । अभेदेऽपि तयोर्विशेषबलेन प्रतिबध्यत्वोपपत्तेः । व्यक्तेरागन्तुकत्वेन भेदावश्यम्भावाच्चेत्यन्यत्र विस्तरः ।

किञ्चास्मन्मतेऽज्ञानस्यावरकत्वं युक्तं सत्यत्वोपगमात् । न तु त्वन्मते मिथ्यात्वोपगमात् । न च कल्पितस्यावरकत्वं क्वचिद्दृष्टचरम् । न चावरके प्रविशता तदालोकं कल्पितस्यापि तमसः तदप्रकाशोपपादकत्वं दृष्टमिति वाच्यम् । प्रबलतेजोऽन्तरेण नायनरश्मीनामभिभूतत्वेन तत्र तदप्रका-शोपपत्तौ कल्पितेन तमसा तदुपपादनायोगादित्यास्तां तावत् । तस्माद्वेदान्तानां निर्विशेषाखण्डजीव-विषयत्वापादनेन पूर्वपक्षप्रवृत्तौ न कश्चिद्दोषः । एवं सिद्धान्तेऽपीति स्थितम् ।

ननु इदमनुपपन्नम् । सर्वेषां वेदान्तानां सजातीयविजातीयस्वगतभेदरहितनिर्विशेषजीवचैतन्यरूपे ब्रह्मणि तात्पर्यमाश्रित्य कृतस्य पूर्वपक्षस्य निरासाय सर्ववेदान्तप्रतिभटत्वेन विचारविधिवाक्यगतस्य ब्रह्मशब्दस्य त्वया स्थापितत्वात् । न चायं गुणपूर्तिनिमित्तस्सन्नपि सर्वानपि वेदान्तानुपक्रमादि-दृढन्यायनिर्णीताद्वैततात्पर्यात्प्रच्यावयितुं शक्तः । प्रत्युत स्वयमेव तद्गुणभूतत्वात्तदनुगुणमेवाद्वैतवाद्य-

भिमतत्रिविधपरिच्छेदराहित्यरूपमर्थमवलम्बेत । दर्शितश्चायं न्यायस्त्वयाऽपि न स्थानतोऽपि इत्याधिकरणे । तत्र हि कार्यकारणवद्धौ तावित्यादिश्रुतिवाक्याद्विश्वतैजसप्राज्ञादिरूपस्य भगवतो बद्धत्वादिदोषोऽस्तीत्याशङ्क्योक्तमनुव्याख्याने "सर्वत्राशेषदोषोज्झः पूर्णकल्याणचिद्गुणः । तद्विरुद्धं तु यत्तत्र मानं नैव क्वचिद्भवेत् ॥ महातात्पर्यरोधेन कथं तन्मानमत्र तु" इति ॥ तथा न्यायसुधायां चोक्तम् । सकलश्रुतिस्मृतीतिहासपुराणानां परमेश्वरस्याशेषदोषविधुरत्वे समस्तगुणपरिपूर्णत्वे च यन्महातात्पर्यं तद्विरोधेन तद्वाक्यमत्र भगवतो दोषित्वे कथं मानं भवेत् । दृष्टं हि निर्णीतमहावाक्यार्थविरुद्धस्य तदवान्तरवाक्यस्य तत्राप्रामाण्यं यथा स्वर्गप्रयोजनाग्निहोत्रपरमहावाक्यार्थविरुद्धस्य यद्यमुष्मिंल्लोकेऽस्ति वा न वेत्यादेस्तदवान्तरवाक्यस्य । महावाक्यं हि प्रधानं अनन्यार्थत्वात् । अवान्तरवाक्यं त्वप्रधानं तदर्थप्रतिपत्तिहेतुत्वादिति । तस्मादिहाद्वैतिदर्शितोपक्रमादिन्यायेभ्यः प्रबलतरैर्न्यायैः सर्ववेदान्तानां सगुणे ब्रह्मणि महातात्पर्यं प्रसाध्यते चेदेवं कृतपूर्वपक्षनिरासो लभ्यते । न तु शब्दशक्तिप्रदर्शनमात्रेणेति ।

अत्रोच्यते । गुणपूर्तिनिमित्तकब्रह्मशब्दस्यापि पूर्वपक्षनिरासकत्वं युक्तम् । अद्वैतिदर्शितोपक्रमादिन्यायजातमवलम्ब्य पूर्वपक्षप्रवृत्तेरनभ्युपगमेन व्याहतिदोषोद्धारसमये लाघवाख्यकिञ्चिन्न्यायमवलम्ब्य पूर्वपक्षप्रवृत्तेः प्रदर्शितत्वेन च तत्र तस्य प्रतिभटत्वोपपत्तेः । वेदान्तानामद्वैतपरत्वव्यवस्थापकलाघवाख्यशुष्ककतिपयन्यायापेक्षया तेषां भेदपरत्वव्यवस्थापकगुणपूर्तिनिमित्तकब्रह्मशब्दस्य श्रौतत्वेन सकलवेदविचारविधायकविध्युद्देशगतत्वे न च प्रबलत्वात् । अत एव शास्त्रयोन्यधिकरणेक्षत्यधिकरणयोः कारणवाक्यानां तर्कमात्रेणानुमानसाङ्ख्यस्मृतिप्राप्तपरमाणुप्रधानकारणानुवादित्वमिति पूर्वपक्षप्रतिभटत्वेन श्रौतमेवौपनिषदत्वेक्षणादिन्यायजातं त्वयाऽपि सिद्धान्तन्यायतयोपेयते । तत्रापि त्वया कारणवाक्यानामनुमानसाङ्ख्यस्मृतिप्राप्तकारणानुवादित्वस्य तादृशानेकन्यायैः समर्थयितव्यत्वेनौपनिषदः पुरुषः, तदैक्षतेत्यादिशब्दानां कारणवाक्यं प्रत्युपसर्जनतया च सिद्धान्तानुपपादकत्वस्य वक्तुं सुकरत्वात् । समर्थितं च त्वयाऽपि कारणवाक्यानामनेकन्यायैरनुमानसाङ्ख्यस्मृतिप्राप्तकारणानुवादित्वं यानि वेदवाक्यानि सर्वज्ञस्य सर्वशक्तेर्ब्रह्मणो जगत्कारणत्वं प्रतिपादयन्तीत्यवोचाम तानि प्रधानकारणत्वपक्षेऽपि योजयितुं शक्यन्त इति त्वया भाषितत्वात् । तस्मात्त्वन्मते यथा शास्त्रयोन्यधिकरणेक्षत्यधिकरणसिद्धान्तोत्थानं तथाऽस्मन्मतेऽप्याद्याधिकरणसिद्धान्तोत्थानमिति युक्तम् । तद्बद्धत्वादिवचनानां तु भगवतोऽशेषदोषदूरत्वप्रतिपादकानेकश्रुतिस्मृतीतिहासपुराणाद्यपेक्षया गुणत्वेन दुर्बलतया तत्प्रतिभटत्वं नास्तीति वैषम्यम् ।

किञ्च जीवातिरिक्ते ब्रह्मणि प्रमाणं नास्तीति प्रत्यवतिष्ठमानं पूर्वपक्षिणं प्रति तत्प्रमाणतयोपन्यस्तं ब्रह्मपदं तस्याज्ञातस्य ज्ञापकमुत्पत्तिवाक्यस्थानीयमिति तत्प्रतिपादितं पुणपूर्णत्वमुत्पत्तिशिष्टं, तेन

जीवातिरिक्ते ब्रह्मणि सिद्धे सर्वैरपि वेदान्तैस्तत्र वर्तितव्यमिति तत्प्रतिपादितानि निर्गुणत्वजीवाभिन्नत्वादीन्युत्पत्तिशिष्टानीत्युत्पत्तिशिष्टप्राबल्यमर्यादयाऽपि ब्रह्मपदस्य सर्ववेदान्तेभ्यः प्राबल्यम् ।

ननु भवेदेवं यदि तद्ब्रह्मेत्यत्रत्यब्रह्मपदं ब्रह्मरूपधर्मिणो ज्ञातस्य ज्ञापकं स्यात् । न चैवम् । तस्य यतो वेति यदुपबन्धबलेन जगत्कारणतया सह प्राप्तस्य धर्मिणोऽनुवादकत्वावगमात् । ततश्च सदेवेत्यादिकमेव तत्प्रापकं वक्तव्यम् । तत्र च सजातीयविजातीयस्वगतभेदनिषेधः स्वरसतः प्रतीयत इति स एवोत्पत्तिशिष्टो न तु गुणपूर्णत्वमिति विपरीतमेव बलाबलमिति चेन्न । यदाग्नेयादिवाक्यवद्यतो वेत्यादेर्विशिष्टविधित्वोपगमात् । न च प्रापकवाक्यान्तराभावात्तत्र विशिष्टविधित्वमत्र तु सदेवेत्यादिकं वाक्यान्तरं प्रापकमस्तीति वैषम्यमस्तीति वाच्यम् । वैपरीत्यस्यापि सुवचत्वात् । तयोर्भिन्नशाखास्थत्वेनानुवादित्वोपपत्तेश्च ।

किञ्च सजातीयविजातीयस्वगतभेदनिषेध एवोत्पत्तिशिष्टो न तु गुणपूर्णत्वमित्ययुक्तम् । सदेवेत्यादिवाक्यस्य स्वव्याघातेन सजातीयविजातीयस्वगतभेदनिषेधकत्वायोगात् । आपातप्रतीतार्थपरत्वे मीमांसावैय्यर्थ्यात् । शब्दमात्रस्य स्वरसतः सविशेषप्रतीतिजनकत्वेन लक्षणाकल्पनोत्तरभावित्वदभिमतनिर्विशेषप्रतीतेः स्वारसिकत्वासिद्धेश्च । सत्त्वं स्वातन्त्र्यमुद्दिष्टम् । अत्तृत्वाच्च तदादानादात्मेति परमो हरिरित्यादिस्मृतिपर्यालोचनया स्वातन्त्र्यादिगुणस्यैव 'सदेव सोम्येदम्' 'आत्मा वेदमेक एवे'त्यादिभिः प्रतीतेश्च ।

ननु तथाऽपि नात्रोत्पत्तिशिष्टन्यायावतारः । उत्पत्तिशिष्टमपि हि न भूरिबाधाय प्रभवति । अग्नीषोमीयं पशुमालभेतेति देवतासम्बन्धेनोत्पत्तिवाक्यावगतस्य पशोर्हविष्ट्वस्य पशुं विशास्ति हृदयस्यावद्यतीत्यादिहृदयादिहविष्ट्वावगमकानेकवाक्यविरोधेन त्यक्तत्वात् । ब्रह्मशब्दे बृहन्तो ह्यस्मिन्गुण इति श्रुत्यन्तरसाहाय्यवत्पशोर्हविष्ट्वेऽपि जुष्टं देवानामिदमस्तु हव्यमिति तदुपाकरणमन्त्रसाहाय्यस्यापि सत्त्वात् । तथाच बद्धावदानवाक्यादिविरोधाद्यथा पशोर्हविष्ट्वं त्यक्तं तथा गुणपूर्णत्वमप्यनेकाद्वैतवाक्यविरोधात्यक्तव्यमेवेति । मैवम् । उत्पत्तिवाक्यावगतपशोर्हविष्ट्वे हृदयादिवाक्यानामानर्थक्यवद्ब्रह्मणो गुणपूर्तिमत्त्वे निर्विशेषाभेदवाक्यानामानर्थक्याभावेन वैषम्यात् । आनर्थक्यप्रतिहतानां विपरीतं बलाबलमित्यङ्गीकारात् । निर्विशेषवाक्यानामभेदवाक्यानां च हेयगुणविषयतया तदधीनत्वाद् अर्थतया च सार्थकत्वाच्च ।

किञ्च ब्रह्मपदस्य श्रुतिरूपतया निर्गुणत्वादिप्रतिपादकवाक्येभ्यः प्राबल्यम् । न च विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्स्वधर्मत्वमिति न्यायेन प्रथमोपस्थितिप्रयुक्तप्राबल्याद्बहुत्वप्रयुक्त-

प्राबल्यस्यैवाधिक्यमिति वाच्यम् । बहुत्वप्रयुक्तप्राबल्याच्छ्रुतित्वप्रयुक्तप्राबल्यस्य स्वभावप्रयुक्ततया-ऽधिकत्वात् । अन्यथा लिङ्गबहुत्वस्य प्रत्यक्षबाधकत्वापत्तेः । भूयसां न्यायस्य गतेरुक्तत्वाच्च ।

किञ्च सौत्रब्रह्मशब्दसूचितात्पगुणविषयकसाक्षिणाऽपि सिद्धान्ते भेदसाधनान्न कश्चिद्दोषः । तदुक्तं चन्द्रिकायाम् । "निर्दोषश्रुतिसाक्षिभ्यां प्रमिते ब्रह्मजीवयोः । गुणपूर्त्यल्पगुणते मिथ्येति च न युज्यत" इति । न च गुणगतं बृहत्त्वं गुणिनि ब्रह्मशब्दप्रवृत्तौ कथं निमित्तम् । अन्यथा रूपत्वादिकं निमित्तीकृत्य घटादावपि रूपादिशब्दप्रवृत्तिप्रसङ्गादिति वाच्यम् । पूर्णगुणत्वस्यैव ब्रह्मणि ब्रह्मशब्दप्रवृत्तिनिमित्त-त्वोपगमात् । बृहन्तो ह्यस्मिन्गुणा इति श्रुत्या तस्यैव प्रवृत्तिनिमित्तत्वावेदनात् ।

ननु न ब्रह्मशब्दो गुणपूर्तिनिमित्तकः प्रमाणाभावात् । अथ कस्मादुच्यते बृहन्तो ह्यस्मिन्गुणा इति वाक्यस्य श्रुतितया त्वयैव कल्पितत्वात् । वस्तुतस्तादृशवाक्यस्य श्रुतित्वे तस्य व्यावहारिकगुण-विशिष्टसगुणब्रह्मणि कथञ्चित्स्तुतिपरतया नेतव्यत्वात् । अद्वैतिभिरेव 'स्याच्चैकस्य ब्रह्मशब्दवत्' इति सूत्रे ब्रह्मशब्दस्य निर्गुण इव सगुणेऽपि वृत्तेरङ्गीकृतत्वात् । ब्रह्मशब्दस्य परब्रह्मणि अद्वैत्यभिमत-त्रिविधपरिच्छेदराहित्यनिमित्तकत्वाभ्युपगमाच्चेति चेन्न । श्रुतिवाक्यकल्पनोक्तेरज्ञानमात्रमूलत्वात् सगुणनिर्गुणब्रह्मद्वैविध्यस्याद्याप्यसिद्धेश्च ।

अथ कस्मादुच्यते परं ब्रह्मेति यस्मादुच्चार्यमाण एव बृहति बृंहयति तस्मादुच्यते परं ब्रह्मेति श्रुत्यन्तरानुसारेण तस्या अपि परब्रह्मविषयत्वावश्यम्भावाच्च । त्रिविधपरिच्छेदराहित्यनिमित्तकत्वा-भ्युपगमे अखण्डार्थवादानारम्भापत्तेः । गुणकृतपरिच्छेदस्यैव देशकालपरिच्छेदवत्त्रिविधपरिच्छेदान्तर्ग-ततया देशकालगुणपरिच्छेदस्यैव तन्निमित्तत्वावश्यम्भावाच्च । गुणपरिच्छेदभिन्नस्य त्वदभिमत-वस्त्वपरिच्छेदशब्दार्थस्य नृभृङ्गायितत्वाच्च । यद्यप्येतत्सर्वं पूर्वपक्षप्रवृत्तिदशायामसिद्धं तथाऽपि सिद्धान्तएवोपपादनीयमिति न किञ्चिदनुपपन्नम् । तस्माज्जीवब्रह्माभेदे ब्रह्मण इव जीवस्यापि गुणपूर्णत्वानुभवः स्यादिति विरोधाद्ब्रह्मशब्देन तयोर्भेदसिद्धिर्दुर्वारेति स्थितम् ।

ननु जीवब्रह्माभेदपक्षे नास्त्येव विरोधः । त्वन्मते जीवस्वरूपानन्दप्रकाशवत्तद्विरुद्धानन्दप्रकाशवच्च गुणपूर्त्यप्रकाशस्य तद्विरुद्धगुणान्तरप्रकाशस्य चोपपत्तेरिति चेन्न । जीवब्रह्माभेदे गुणपूर्तेः कदाचिदीषदभिव्यक्तिः स्यादित्यापादनात् । जीवस्वरूपानन्दस्य सुषुप्त्यादौ ईषदभिव्यक्त्यभ्युपगमाच्च । अर्वाचीनानामभावेऽपि ज्ञानिनां परमेश्वरगुणपूर्त्यभिव्यक्तिरस्तीति चेन्न । प्रमाणाभावात् । यो वेदाहं ब्रह्मास्मीत्यादिश्रुतिरेव तत्र प्रमाणमिति चेन्न । तच्छ्रुतेः स इदं सर्वं भवतीत्यनिष्टफलप्रदर्शनमुखेन तथाविधोपासनानिन्दापरतया त्वदभिमतार्थपरत्वासिद्धेः । अत एव गीतायाम् । स्वस्मिन्नीश्वरत्वानु-

सन्धानमासुरप्रकृतीनामेवोक्तम् । ईश्वरोऽहमहं भोगीत्यादेर्दर्शनात् । न चैवं जगदाहुरनीश्वरमिति पूर्ववाक्यविरोधः । तस्य स्वातिरिक्तेश्वरप्रतिक्षेपपरत्वात् । न च गुणपूर्तेः सत्त्वमात्रेणानुभवापादनमयुक्तम् । अनुभवस्य विषयसत्त्वमात्रानधीनत्वात् । सामग्रीमात्राधीनत्वाच्च । जीवस्येदानीं गुणपूर्त्यनुभवसामग्र्यसिद्धेश्चेति वाच्यम् । सामग्र्या अप्यापादनात् । न चेदानीमनुभवसामग्र्यापादने हेत्वभावः । सामग्र्याः कादाचित्कत्वादिति वाच्यम् । अन्योन्याश्रयात् । जीवे गुणपूर्तिसिद्धौ कालान्तरे तदनुभवसामग्रीसिद्धिस्तत्सिद्धौ च जीवस्य गुणपूर्तिसिद्धिरिति किञ्च सविशेषाभेदपक्षे युक्तं विद्यमानस्याप्यावरणं न तु निर्विशेषाभेदपक्ष इति पूर्वमेव उक्तम् ।

नन्वल्पगुणत्वबहुगुणत्वरूपविरुद्धधर्मसमावेशेन जीवेश्वरभेदसिद्धिरिति न त्वया वक्तुं युक्तम् । त्वन्मते भगवत एकत्वानेकत्वशरीरित्वावयवत्वावयवित्वादिविरुद्धधर्मसमवेशाभ्युपगमादेकत्वाभ्युपगमाच्चेति चेन्न । धर्मिग्राहकमानेन मानान्तरविरोधाभावेन विनिगमकाभावेन च ब्रह्मण्येकत्वानेकत्वादीनां सिद्धावप्यल्पगुणत्वग्राहिसाक्षिप्रत्यक्षविरोधेन जीवे गुणपूर्णत्वरूपब्रह्मत्वासिद्ध्या ताभ्यां तयोर्भेदसाधनोपपत्तेः । किञ्च ब्रह्मण्येकत्वानेकत्वादिकं विशेषबलाद्युक्तम् । न च विशेषबलादेव गुणपूर्त्यल्पगुणत्वादिकमप्युपपादनीयमिति युक्तम् । त्वया तथाऽनभ्युपगमात् । किञ्च ब्रह्मणि भेदाभावस्य प्रमिततया तदनेकत्वाद्युपपादकविशेषकल्पनं युक्तम् । न च नान्योऽतोऽस्ति द्रष्टेत्यादिना जीवब्रह्मभेदनिषेधस्यापि प्रमिततया न वैषम्यमिति वाच्यम् । भेदग्राहिसाक्षिप्रत्यक्षविरोधेन तच्छ्रुतेर्भेदनिषेधपरत्वाभावात् । न च ब्रह्मणि स्वगतभेदनिषेधे मानान्तरविरोधोऽस्ति येन ब्रह्मणि स्वगतभेदनिषेधश्रुतेरन्यपरत्वं स्यादिति युक्तम् । तस्माद्युक्तं विशेषबलाद्ब्रह्मण्येकत्वानेकत्वादिकम् । न तु जीवे गुणपूर्त्यल्पगुणते । इति स्थितम् ॥ छ ॥

ननु त्वन्मते विशेषाङ्गीकारो व्यर्थः । तत्र तत्र विरुद्धार्थघटकतयेश्वरशक्तेरेवाभ्युपगमेन तयैव सर्वव्यवहारोपपत्तेरिति चेन्न । धर्मिग्राहकमानेन तत्तत्कार्यनिर्वाहकतया सिद्धस्य विशेषस्येश्वरशक्त्या प्रतिक्षेपायोगात् । अन्यथा कालादृष्टेश्वरेच्छादीनां सर्वेषामपि कारणत्वाङ्गीकारायोगात् । तत्राप्येकेनान्यप्रतिक्षेपस्य सुवचत्वात् । त्वन्मतेऽप्यविद्ययैव सर्वनिर्वाहोपपत्तौ कारणमात्रोच्छेदप्रसङ्गात् । एवञ्च यत्र भेदाभावो भेदकार्यं प्रमितं तत्र सर्वत्र तन्निर्वाहकतया विशेषाभ्युपगमो युक्तः । नन्वयं विशेषो नार्थसाधकत्वेन त्वयाऽङ्गीकार्यः । किन्तु यत्र भेदाभावेऽपि तदधीनो भेदव्यवहारस्तत्र तन्मात्रनिर्वाहको विशेष इत्येवाङ्गीकार्यम् । अत एव न्यायसुधायां विशेषस्य भेदकार्यव्यवहारमात्रनिर्वाहकत्वेनासत्त्वं प्रत्यनिर्वाहकत्वात् । सकलभेदकार्यकारित्वे विशेषो भेद एव स्यात् । न तत्प्रतिनिधिरित्युक्तम् । यदि व्यवहारस्येव भेदाधीनार्थस्यापि निर्वाहकोऽयमित्यङ्गीक्रियते तदा घटस्य नीलवर्ण इत्यादिव्यवहार-

मूलप्रतीतिगोचरसम्बन्धस्तद्विरोधिन्यभेदे सत्यप्यङ्गीक्रियेत । सत्सु तन्तुषु पटाद्यसत्वनिर्वाहाय भेदश्च नाङ्गीक्रियेत । तत्र तत्र विशेषबलादेवाभेदेऽपि सम्बन्धसत्त्वासत्त्वयोश्चोपपत्तेः । न चेष्टापत्तिः । अस्मन्मते 'गुणाद्याश्च तद्वन्तो हि विशेषतः । अनन्यत्वान्नानवस्था' । 'भेदो नाशो भवेत्तथा' इत्यनुव्याख्यान-विरोधात् । तत्र गुणानां गुणिनि सम्बन्धानभ्युपगमस्य तन्त्वादिषु विद्यमानेषु पटादिनाशे भेदाभ्युपगमस्य च स्फुटत्वात् । एवञ्च विशेषस्य ब्रह्मण्येकत्वानेकत्वादिविरुद्धधर्मनिर्वाहकत्वं त्वन्मते न युक्तमिति चेन्न । विशेषस्य क्वचिद्भेदकार्यव्यवहारमात्रनिर्वाहकत्वाभ्युपगमेऽपि तस्य भगवत्येकत्वानेकत्वादि-विरुद्धधर्मनिर्वाहकत्वाभ्युपगमे दोषाभावात् । न च वैरूप्याश्रयणं दोषः । धर्मिग्राहकमानेन विशेषस्य तादृरूप्येणैव सिद्धेः । न चैवमपि विनिगमकाभावो वैपरीत्यापत्तिश्चेति वाच्यम् । घटस्य रूपमित्यादेर्घटस्य स्वरूपमित्यादिवदुपपत्त्या तावन्मात्रेण सम्बन्धासिद्धेः । अनन्यथासिद्धप्रतीतेरेवार्थसाधकत्वात् । नाशस्थले भेदस्यानुभूयमानत्वेन तस्यैवासत्त्वघटकतया विशेषेण तद्घटनापादनायोगाच्च । न हि सोमाभावे पूतिकं गृहीतमिति तत्सत्त्वेऽपि तद्ग्रहणं स्यादित्यापादनं युक्तम् । प्रमितमुख्यभेदेनैव तन्निर्वाहोपपत्तौ कल्प्येन तत्प्रतिनिधिना विशेषेण तन्निर्वाहोक्त्ययोगात् । न च श्रुत्यादि प्रतिपन्नेश्वरानेकत्वादिकमप्यन्यथोपपादयितुं शक्यम् । विनिगमकाभावात् ।

किञ्च गुणानां गुणिभिः संयोगो नापाद्यः । संयोगस्य द्रव्यमात्रवृत्तित्वाद्भेदव्याप्तत्वाच्च । नापि समवायोऽनभ्युपगमात् । स्वरूपसम्बन्धस्य चास्मदभिमतविशेषानतिरेकात् । अस्तु वाऽऽश्रया-श्रयिभाव एव धर्मधर्मिभावात्मा गुणादीनां विशेषातिरिक्तस्तत्प्रयोज्यसम्बन्धः । न चैवं भेदसम्बन्ध-कार्यकरो हि विशेष इति न्यायसुधाविरोधः । तत्र विशेषस्य भेदकार्यकारित्ववत्सम्बन्धकार्यकारित्व-स्यैवोक्तेरिति वाच्यम् । विशेषस्य सम्बन्धकारित्वेऽपि तत्र तथोक्त्युपपत्तेः । न चाद्विष्ठस्याश्रयाश्रयि-भावस्य कथं सम्बन्धत्वमिति वाच्यम् । मन्मते सयोगस्याप्यद्विष्ठत्वात् । ननु त्वन्मते ययोरभेदस्तयो-र्धर्मधर्मित्वव्यवहारे सत्यपि नाश्रयाश्रयिभावोऽङ्गीकर्तुं शक्यः । अन्यथाऽयं पट एतत्तन्तुसम्बद्ध एतदाश्रितत्वादेतदाश्रिततृणादिवदिति समवायसाधकानुमाने तन्तुपटयोराश्रयाश्रयिभावासिद्धेरिति न्यायसुधोक्तमसिद्धिरूपदूषणमेव स्यादिति चेन्न । पराभिमतस्य भेदगर्भस्यैवाश्रयाश्रयिभावस्य तत्रासिद्धेरित्युक्ततया विरोधाभावात् । तथाविधाश्रयाश्रयिभावस्यैव हेतुशरीरप्रविष्टत्वाच्चेति ।

किञ्चेश्वरस्यैकत्वानेकत्वादिविरुद्धधर्मसमावेशो न तदैश्वर्यविरोधीति तदीयशक्त्या तदुपपादनं युक्तम् । ब्रह्मल्पगुणत्वरूपविरुद्धधर्मसमावेशस्तु तद्विरोधीति न तया तदुपपादनं युक्तम् । कथमीश्वरोऽपि विविधदुःखादिकलुषितजीवभावं स्वस्यानुमन्येत ईश्वरत्वविरोधात् ।

ननु दुःखादिकलुषितत्वं न तावद्दुःखादिगुणकत्वम् । त्वन्मते दुःखादेरन्तःकरणोपादेयतया तस्यैव दुःखादिगुणकत्वेन जीवस्य तथात्वानापत्तेः । अन्यथा रूपादिगुणकत्वस्याप्यापातात् । अहं दुःखीत्यादिप्रतीतिवदहं गौर इत्यादिप्रतीतेरपि सत्त्वात् । नापि दुःखादिस्वामित्वम् । ईश्वरस्यैव त्वन्मते दुःखादिस्वामित्वात् । ज्योतिराद्यधिष्ठानं तु तदामननादित्यधिकरणे परमेश्वर एव करणानां स्वामीति त्वयोक्तत्वात् । स्वामिनः फलश्रुतेरात्रेय इत्याधिकरणे मनुष्याणां स्वस्वेन्द्रियजन्यज्ञानकर्मस्वामित्व-मुररीकृत्यैव सिद्धान्तप्रदर्शनाच्च । तस्माज्जीवे दुःखित्वादिधीनामध्यासरूपमेवास्थेयम् । एवञ्च स्वास्वान्तःकरणगतदुःखादिस्वामित्वाध्यासमात्रदुष्टाज्जीवभावाद्वास्तविकसकलजीवान्तःकरणगत-निखिलदुःखादिस्वामित्वानुभवनिरन्तराकुलितत्वन्मतसिद्धपरमेश्वरभाव एव पापीयानिति कथं त्वदीयः परमेश्वरो जीवभावं नानुमन्येतेति ॥ छ ॥

अत्रोच्यते । दुःखादिभोक्तृत्वमेव दुःखादिकलुषितत्वं न चान्तःकरणस्य भोक्तृत्वम् । तस्योपकर-णत्वात् । न च दुःखादिभोक्तृत्वमपि दुःखाद्याश्रयत्वम् । तच्चान्तःकरणस्यैवेति युक्तमन्तःकरणं दुःखीत्यप्रतीतेरहं दुःखीत्येव प्रतीतेश्च । न चान्तःकरणतादात्म्याध्यासेन जीवे तथा प्रतीतिरिति युक्तम् । चिन्मात्रोऽहं सदाशिव इति चिन्मात्रेऽप्यहंशब्दप्रयोगदर्शनेन भोक्तृत्वस्य केवलजीवधर्मत्वो-पपत्तेः । न चैवमात्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिण इति श्रुतिविरोधः । तत्र देहेन्द्रियादीना-मिवान्तःकरणस्य भोगसहकारित्वमात्रलाभेन तस्य भोक्तृकोटिनिवेशालाभात् । अन्यथा देहेन्द्रिया-दीनामपि तत्कोटिनिवेशप्रसङ्गात् । तस्मात्स्वादृष्टोपार्जितदुःखादिसाक्षात्कारित्वमेव दुःखादि भोक्तृत्व-मिति न किञ्चिदनुपपन्नम् ।

यद्वा दुःखादिगुणकत्वमेव दुःखादिकलुषितत्वम् । तच्च जीवस्यैव नान्तःकरणस्यान्तःकरणो-पादेयदुःखादेरप्यात्मधर्मत्वोपपत्तेः । अन्योपादेयदण्डादेर्देवदत्तधर्मत्वसम्प्रतिपत्तेश्च । गुणगुणिभावस्या-स्मन्मते धर्मधर्मिभावरूपत्वात् । यद्वा अन्याधीनदुःखादिस्वामित्वमेव दुःखादिकलुषितत्वं जीवस्या-पीश्वराधीनस्वामित्वोपगमात् । अत एवेन्द्रियप्रेरकाणां देवानां भगवद्दत्तं तत्तदवान्तरस्वामित्व-मस्तीत्युक्तम् । न चैवमयजमानानामपि ऋत्विजां सत्रयागफलमिवास्वामिनामपि कर्तॄणां कर्मज्ञान-फलमुपपद्यत इति तत्त्वदुक्तिविरोधः । तत्रायजमानत्वास्वामित्वोक्तेः स्वतन्त्रयजमानत्वस्वामित्व-निराकरणपरत्वात् । न हि सत्रर्त्विजां सर्वथा यजमानभावानाभिज्ञोऽस्मदाचार्यः । ये यजमानास्ते ऋत्विज इति यजमानानामेव ऋत्विक्कार्ये विधानात् ।

ननु स्वमते ते यजमाना एव न भवन्तीत्यभिमानेन वा तथैव मीमांसकमयदित्यभिमानेन वा त्वद्ग्रन्थे सत्रर्त्विजामयजमानोक्तिरस्तु । दृश्यते हि त्वद्भाष्यानुव्याख्यानन्यायसुधातत्त्वप्रकाशिकादौ

मीमांसकमर्यादोल्लङ्घनेन व्यवहारस्तन्मतमित्यन्यथाऽनुवादश्चेति चेन्न । जीवतः कवेरभिप्रायो वर्णनीय इति न्यायेन साम्प्रदायिकार्थस्यैव ग्राह्यत्वात् । साम्प्रदायिभिश्चावान्तरयजमानत्वाविरोधेनैवायजमान-शब्दार्थस्य प्रदर्शितत्वात् । भाष्यादौ मीमांसकमर्यादोल्लङ्घनमित्युक्तेरज्ञानमात्रमूलत्वात् ।

तत्र न तावद्द्वादशाहः क्रत्वात्मकश्च भवतीति भाष्यं मीमांसकमर्यादाविरुद्धम् । तत्र क्रतुशब्दस्य तद्विशेषाहीनपरत्वात् । न हि शास्त्रकाराणां सर्वत्र तत्तदसाधारणशब्दैर्व्यवहारोऽस्ति । अवाचकशब्दैः सामान्यशब्दैश्च तत्तद्व्यवहारदर्शनात् । द्वादशाहस्य प्रशस्तकर्मत्वज्ञापनायाहीनपदं विहाय क्रतुशब्देन व्यवहार इत्युपपत्तेश्च ।

नापि प्रधानेतिकर्तव्यतारूपयोः श्रवणगुरुप्रदानयोर्गुरुप्रदानं प्रबलमित्युपपादनार्थं प्रवृत्तेन ''प्रदानवदेव तदुक्तमि''त्यधिकरणेन चेतिकर्तव्यतात्वेन दौर्बल्यं यागीयहिंसायामितिकर्तव्यताया एव प्राबल्यदर्शनादिति तत्त्वप्रकाशिकायामपि मीमांसकमर्यादोल्लङ्घनम् । तत्रोभयत्र प्राबल्योक्तेरङ्गवैकल्येऽपि प्रधानभूतनित्याद्यनुष्ठाने फलसिद्धिदर्शनेन गुरुप्रदानस्य पशुनियोजनादेश्च वैकल्येऽपि श्रवणफलं पशुयागफलं च स्यादित्याशङ्कानिराकरणाय प्रधानवदेवाङ्गमप्यवश्यानुष्ठेयम् इत्येवम्परत्वात् ।

एवं ''भूम्नः क्रतुवज्जयायस्त्वं दर्शयती''ति सूत्रे 'भूमैव देवः परमो ह्युपास्यो नैवाभूमा फलमेषां विधत्ते । तस्माद्भूमा गुणतो वै विशिष्टो यथा क्रतुः कर्ममध्ये विशिष्ट' इति भाष्योदाहृतश्रुत्यर्थकथनार्थं प्रवृत्ते यथा दीक्षणीया प्रायणीयोदयनीयसवनत्रयावभृथात्मकस्य क्रतोः सर्वयागेष्वनुवर्तन एव साफल्यमन्यथा वैफल्यमिति ज्यायस्त्वमेवं भूमगुणस्य सर्वेष्वानन्दादिषु सहभावेनोपासन एव फलमस्तीति तस्य ज्यायस्त्वमिति तत्त्वप्रकाशिकावाक्येऽपि न मीमांसकमर्यादोल्लङ्घनम् । तत्र ज्योतिष्टोमेतिकर्तव्यताभूतदीक्षणीयाद्यङ्गकलापस्यैव विशिष्टक्रतुशब्देन विवक्षितत्वात् । सर्वयाग-शब्दस्यापि ज्योतिष्टोमविकृतिभूतविश्वजिदादिसर्वयागपरत्वात्तत्तद्विकृतियागसाद्गुण्यापादकत्वेन तस्य ज्यायस्त्वमिति युक्त्युपपत्तेश्च । तावताऽपि विकृतीनां प्राधान्यप्रयुक्तज्यायस्त्वानपायात् । न च क्रतोरिति न वक्तव्यम् । ऐष्टिकादीतिकर्तव्यताकलापस्यापि तत्तद्विकृतिष्वतिदेशादिति युक्तम् । तेन लक्षणया तस्यापि ग्रहणसम्भवात् ।

यद्वा दीक्षणीयाद्यङ्गसहितस्य ज्योतिष्टोमस्यैव तत्र क्रतुशब्देनोपादानं सर्वयागशब्दोऽपि तत्तद्विकृतियागपरः । दीक्षणीयाद्यङ्गसहितस्य ज्योतिष्टोमस्य तत्तद्विकृतयागानुवर्तनोक्तिश्च विशेषण-मात्रसम्बन्धिनी ज्यायस्त्वं च प्रकृतिभूतविशेष्यज्योतिष्टोमसम्बन्धीति न किञ्चिदनुपपन्नम् ॥ छ ॥

यत्तु जिज्ञासासूत्रे प्रणवस्याद्यन्तयोरूह इत्यनुपपन्नं, 'देवस्य त्वे'त्यादिमन्त्रेषु सूर्यादिशब्दोहेऽग्नि-शब्दादेरिव कस्यचित्स्थानिनः शब्दस्याभावात् । तादृशस्थल एव मीमांसकानामूहव्यवहारादिति ।

तन्न । अत्रत्योहशब्दस्य नामिकोहपरत्वाभावादध्याहारमात्रपरत्वाच्च । तदुक्तं चन्द्रिकायाम् । 'नात्रोहशब्दो मन्त्रसामसंस्कारोह इत्यादाविव कर्मव्युत्पत्त्या विकारपरः किन्त्वध्याहारपरः । अध्याहारस्तु क्वचिदूह इति प्रसिद्धेर्भावव्युत्पत्त्याऽध्याहारवाचकः । अत एव टुप्टीकायां नवमे ऊहो नाम तर्कना, सा चैकरूपा, मन्त्रसामसंस्कारेषु क्रियमाणेत्यादिना तर्क एव मुख्य ऊहस्तद्विषयत्वान्मन्त्रा-देरन्यथात्वमप्यूह इत्युक्तमिति । यदपि 'ज्योतिषां स्तोमो ज्योतिष्टोम' इति न्यायसुधायां ज्योतिष्टोमनामनिर्वचनं 'त्रिवृत्पञ्चदशः सप्तदश एकविंश एतानि वा तानि ज्योतींषि य एतस्य स्तोमा' इति श्रौतनिर्वचनविरुद्धमिति । तदपि न । तत्र व्यतिरेके षष्ठीत्युपपत्तेर्वृत्तिपदार्थप्रदर्शनपरतयाऽन्य-पदार्थप्रदर्शनस्यादोषत्वात् । न हि समासे प्रदर्शनीये सर्वेऽपि पदार्थाः प्रदर्शनीया इति नियमोऽस्ति । तस्मान्न क्वापि मीमांसकमर्यादोल्लङ्घनम् ।

ननु सर्वत्र सामञ्जस्येन मीमांसकमर्यादानुरोधे सति क्वचित्कोऽन्यथाभावोऽर्थान्तरपरत्वमाशङ्क्य समाधातव्यो न तु सार्वत्रिकोऽन्यथाभावस्त्वद्भाष्यटीकयोश्च यद्यन्मीमांसकमर्यादाप्रदर्शनं तत्सर्व-मन्यथाभूतमिति न तस्यार्थान्तरपरत्वमाश्रित्याविरोधोपपादनं युक्तमिति चेन्न । चन्द्रिकायां सर्वत्र मीमांसकमर्यादयैव भाष्यकाराभिप्रेतसूत्रार्थस्य प्रदर्शितत्वेन ऊदाहृतविरोधस्थलस्यापि क्वाचित्कत्वो-पपत्तेः ।

ननु तथाऽपि तन्मतमित्यन्यथाऽनुवादो न कथमपि परिहर्तुं शक्यः । न्यायसुधायाम् । 'अङ्गीकृतत्वादपि तैः पदानां तु पृथक् पृथक् । क्रियापदेनान्वयस्य वाक्यभेदो हि दूषणम्' इति श्लोकव्याख्यानसमये सत्यज्ञानादिवाक्येषु ब्रह्मानुवादेन सत्यत्वाद्यनेकविधाने वाक्यभेदमाशङ्क्य 'मीमांसकैरप्यरुणयैकाहायन्या पिङ्गाक्ष्या गवा सोमं क्रीणाती'त्यादावरुणादिपदानां क्रियापदेन पृथक् पृथगन्वयस्याङ्गीकृतत्वात्तेषामपि हि वाक्यभेददूषणं प्रसज्येत तत्रैतावदेव वक्तव्यम् । महावाक्यभेद एव दूषणं न त्ववान्तरवाक्यभेद इति तदस्माकमपि समानमित्यादिना मीमांसकमतमन्यथाऽनूदितम् । न हि प्रसिद्धमीमांसकमते तत्रावान्तरवाक्यभेदोऽस्ति । क्रयभावनाया विधेयत्वेन 'अप्राप्ते तु विधीयेरन् बहवोऽप्येकयत्नतः' इत्युक्तरीत्याऽरुण्यादिविशिष्टक्रयभावनारूपाभिधेयैक्येन पदैकवाक्यताया एव स्वीकृतत्वादिति चेन्न । विशिष्टविधिपक्षे भामत्युक्तप्रकारेण वाक्यभेदलक्षणदोषस्य दुर्वारतया मीमांसकैरपि पृथगन्वयस्याङ्गीकृतत्वादित्युक्तेस्तैरपि तथाऽङ्गीकर्तव्यत्वादित्येवम्परत्वात् ।

इत्थं हि भामत्यां देवताधिकरणे विशिष्टविधिप्रतिबन्द्या देवताविग्रहादिसिद्धिरुपपादिता । तथा सत्यनधिगतं विग्रहादिप्रतिपादयद्वाक्यं भिद्येतेति चेत् । अथ भिन्नमेवैतद्वाक्यम् । तथा सति

तात्पर्यभेदोऽपीति चेन्न । द्वारतोऽपि तदवगतौ तात्पर्यान्तरकल्पनायोगात् । न च यत्र यस्य न तात्पर्यं तस्य तत्राप्रामाण्यम्। तथा सति विशिष्टपरं वाक्यं विशेषणेष्वप्रमाणमिति विशिष्टपरमपि न स्यात् । विशेषणाविषयत्वात् । विशिष्टविषयत्वेन तु तदाक्षेपे परस्पराश्रयत्वम् । आक्षेपाद्विशेषणप्रतिपत्तौ सत्यां विशिष्टविषयत्वं विशिष्टविषयत्वाच्च तदाक्षेप इति । तस्माद्विशिष्टप्रत्ययपरेभ्योऽपि पदेभ्यो विशेषणानि प्रतीयमानानि यथा तस्यैव वाक्यस्य विषयत्वेनानिच्छताऽभ्युपेयानि । तथाऽन्यपरेभ्योऽप्यर्थ-वादवाक्येभ्यो देवताविग्रहादयः प्रतीयमाना असति प्रमाणान्तरविरोधे न युक्तास्त्यक्तुमिति ।

एतावांस्तु विशेषः । भामत्यां विशिष्टविधिस्थले तात्पर्यभेदाभावेऽपि वाक्यभेदोऽङ्गीकारितः । सुधायां तु तात्पर्यभेदमङ्गीकृत्यैव तद्भेदोऽङ्गीकारित इति । वस्तुतस्तु न्यायसुधोक्तमार्ग एव न्याय्यः । तात्पर्याभावेऽपि तदर्थसिद्धचभ्युपगमे क्वापि तात्पर्यं न स्यादित्यन्यत्र विस्तरः । तस्माज्जीवस्या-वान्तरस्वामित्वाङ्गीकारे न कश्चिद्दोषः ।

किञ्चास्मन्मते दुःखादिस्वामित्वं जीवस्येषितव्यम् । अन्यथाऽहं दुःखीत्यादिप्रत्ययानामध्यासा-त्मकत्वं स्यान्न च तद्युक्तम् । प्रत्यक्षविरोधादिनाऽस्मदीयैरेवंविधमिथ्यात्वस्य दूषितत्वात्सुख-दुःखादिग्राहकसाक्षिणो निर्दोषत्वादिना याथार्थ्यनियमस्य प्रतिपादितत्वाच्च । जीवस्य तत्स्वामित्वमी-श्वरदत्तमपकृष्टमित्येव विशेषः । अत एव साङ्ख्याधिकरणानुव्याख्याने 'द्वैविध्येऽपि तु कामादेः कुतः स्वामित्वमात्मनः । साक्षादनुभवारूढं शक्यतेऽपोदितुं क्वचिद्'इति कामादिस्वामित्वस्याप्रत्याख्येयत्व-मुक्त्वा तदनन्तरश्लोके तस्यापकृष्टत्वमप्युक्तम् । न्यायसुधायां चात्यन्तावश्यत्वरहितगवादिस्वामित्व-दृष्टान्तेन तस्यापकर्षः समर्थितः ।

ननु त्वन्मतेऽपि दुःखित्वाद्यनुभवस्याध्यासरूपत्वमावश्यकम् । उक्तं ह्यानन्दमयाधिकरणे भाष्ये 'प्रमादात्मकत्वाद्बन्धस्य विमुक्तत्वं च युज्यते । मुक्तिर्हित्वाऽन्यथारूपं स्वरूपेण व्यवस्थितिः' इति हि भागवत इति । तत्त्वप्रकाशिकायां च विमुक्तश्च विमुच्यत इति संसारिणो विमुक्तत्वश्रवणात्तदन्यथा-ऽनुपपत्त्या तस्य ब्रह्मत्वसिद्धेस्तद्विरोधो भेदव्यपदेशस्येति शङ्कानिरासार्थत्वेनोदाहृतं भाष्यग्रन्थमवतार्य तस्यार्थो वर्णितः । जीवस्य परब्रह्मत्वाभावेऽपि विमुक्तत्वोक्तिर्युज्यते । बन्धस्याज्ञानमूलत्वेनास्वाभावि-कत्वादिति । यत्त्वनुव्याख्याने बन्धस्य अध्यासात्मकत्वनिरसनम् । तस्याभिप्रायस्तु तद्व्याख्यानान्त-रन्यायसुधायाम् 'अत्र तत्त्वविदो वदन्ति सर्वोऽपि हि बन्धो बुद्धीन्द्रियशरीरविषयतद्धर्मलक्षणो-ऽस्माभिरप्यात्मन्यारोपित एवेत्यङ्गीक्रियते । यथोक्तं भाष्यकृता प्रमादात्मकत्वाद्बन्धस्येति । अतः किन्निबन्धनो मिथ्यात्वनिरसननिर्बन्ध' इत्याशङ्कां कृत्वा सत्यं तथाऽप्यस्त्यत्र दर्शनभेद इति तत्परिहारमारभ्य बुद्धीन्द्रियशरीरविषयाः स्वरूपसत्तयैव [illegible] [illegible]नादात्मीयतयाऽ-

ध्यस्यन्ते । तांश्चात्मनो विविक्तानपि विस्पष्टं तथानुपलभमानस्तद्धर्मान्दुःखादीन्सत्यानेवात्मीयत्वे-नाध्यस्य तत्कृते नीचोच्चत्वलक्षणो विकृती सत्ये एव प्रतिपद्यत इत्यादिवाक्यैः स्वमतस्थितिप्रतिपादनेन मायावादिनस्तु दुःखादिकं स्वरूपेणापि मिथ्येति मन्यन्ते । अतस्तन्निराकरणनिर्बन्धोयुक्त इत्यद्वैतिमते निराकार्यांशनिष्कर्षेण च स्पष्टीकृतः ।

यत्तु साक्षिणो याथार्थ्यनियमात्साक्षिरूपस्यदुःखित्वानुभवस्याध्यासत्वं न सम्भवतीति तद-युक्तम् । ईश्वरपरतन्त्रस्य जीवस्य स्वातन्त्र्यग्रहणे प्रमाणाप्रमाणज्ञानयोरप्रमाण्यप्रामाण्यग्रहे च तस्य याथार्थ्यपरित्यागात् । यदि तु 'मानसे दर्शनं दोषाः स्युर्न वै साक्षिदर्शने' इति 'यत्किञ्चिद्व्यभिचारि स्याद्दर्शनं मानसं हि तद्' इति चानुव्याख्यानदर्शनात् स्वातन्त्र्यादिग्रहणं मनोवृत्तिरूपं न तु साक्ष्यनुभवरूपमितीष्यते तदा दुःखित्वाद्यनुभवोऽपि त्वत्सिद्धान्तसिद्धाध्यासत्वनिर्वाहाय मनोवृत्तिरूप एव त्वयेष्टव्यः स्यात् । यदि चैवं सति दुःखाद्यंशोऽपि मनोवृत्ति विषयनैव स्यात् । दुःखित्वा-द्यनुभवव्यतिरेकेण दुःखादिमात्रविषयानुभवाभावात् । ततश्च दुःखादेः साक्षिविषयत्वं स्वाभिमतं न सिध्येदित्यनुशयस्तदा दुःखित्वाद्यनुभवरूपसाक्षिण्यात्मीयत्वांशेऽध्यासरूपत्वमकामेनापि त्वयेष्टव्यम् । त्वयाऽपि हि सर्वेषां साक्ष्यनुभवस्य याथार्थ्यनियमो नेष्यते । असुरसाक्षिणो याथार्थ्याभावस्य मनुष्यसाक्षिणो मिश्रत्वस्य चाङ्गीकृतत्वात् । एवं त्वत्सिद्धान्ते तेषां सुनिश्चितेऽध्यासरूपत्वे यदन्यत्र प्रपञ्चमिथ्यात्वनिराकरणप्रस्तावे 'सत्यत्वं गगनादेश्च साक्षिप्रत्यक्षसाधितम् । साक्षिसिद्धस्य न क्वापि बाध्यत्वं तददोषत' इत्यादि साक्षिणो याथार्थ्यनियमकथनम् । यच्च साङ्ख्यमतदूषणप्रस्तावे कामादिस्वामित्वकथनं तत्र त्वया नाभिनिविष्टव्यं किन्तु परमतदूषणलोभेन तद्दुराग्रहकृतमौढ्येन वा स्वसिद्धान्तविरुद्धभाषिणः स्वकीया इत्येव शोचनीयम् । याननुसृत्याद्यतना अपि त्वदीयाः परमत-सिद्धाविद्यादूषणादिप्रस्तावेष्वनादिभावस्य निवर्त्यत्वमयुक्तमित्यादि स्वसिद्धान्तविरुद्धमेव जल्पन्ति । त्वन्मतेऽपि ह्यनादिभावरूपमज्ञानं ज्ञाननिवर्त्यं च । एवञ्च परमेश्वरस्याध्यस्तदुःखित्वादिरूपजीवभावो युक्त इति । अत्रोच्यते । अस्मन्मते दुःखादीनामात्मीयत्वेन नाध्यासत्वम् । अन्तःकरण-परिणामभूतानामपि दुःखादीनामात्मधर्मत्वस्योपपादितत्वात् । किन्तु स्वातन्त्र्यगर्भात्मसम्बन्धित्वेनैव । एवञ्च प्रमादात्मकत्वाद्बन्धस्याज्ञानमूलकत्वेन अस्वाभाविकत्वात्सर्वोऽपि हि बन्धो बुद्धीन्द्रियशरीर-विषयतद्धर्मलक्षणोऽस्माभिरप्यात्मन्यारोपित एवेत्यङ्गीक्रियते । बुद्धीन्द्रियशरीरविषयाः स्वरूपसन्त एवेश्वरपरवशा अप्यविद्यावशादात्मीयत्वेनाध्यस्यन्त इत्यादिभाष्यतत्त्वप्रकाशिकान्यायसुधोक्तयोऽपि बन्धस्य स्वातन्त्र्यगर्भात्मीयत्वेनाध्यासत्वोपपादनपरा द्रष्टव्याः । न त्वात्मीयत्वमात्रेण । सुखादि-स्वरूपस्येव तदात्मीयत्वस्यापि कदाऽपि बाधादर्शनात् । बाधादर्शनादेव हि दुःखादिकं स्वरूपेण

नाध्यस्यत इत्युक्तम् । तदात्मीयत्वेऽपि समानम् । साक्षिणो याथार्थ्यं चौत्सर्गिकं न तु नियतम् । साक्षिणो नित्यत्वेऽपि दोषप्रयोज्यत्वसम्भवेनाप्रामाण्यपरतस्त्वोपपत्तेः ।

यद्वा स्वातन्त्र्यांशे मानसमेव तज्ज्ञानम् । तच्च दोषजन्यमिति न किञ्चिदनुपपन्नम् । एतेनानादिभावस्य निवर्त्यत्वं न युक्तमित्यादिकं स्वसिद्धान्तविरुद्धम् । त्वन्मतेऽपि ह्यनादिभावरूपमज्ञानं ज्ञाननिवर्त्यं चेत्यङ्गीकृतमिति निरस्तम् । त्वया दर्शनानुसारेणाज्ञानस्य ज्ञाननिवर्त्यत्वाभ्युपगमेन तत एवानादिभावस्य निवर्त्यत्वं न युक्तिमिति मयाऽऽपादयितुं शक्यत्वात् । अत एव ह्यनुमानाप्रामाण्यवादिभिरेवेश्वरस्यानुमानिकत्वं निराक्रियते । न ह्यस्माभिर्दर्शनानुसारेणानाद्यज्ञानस्य ज्ञाननिवर्त्यत्वमुपेयते किन्तु शास्त्रबलादेव येनानादिभावस्य निवर्त्यत्वं न युक्तमित्येतत्स्वसिद्धान्तविरुद्धं स्यादित्यास्तां तावत् ।

किञ्च त्वदीयानामेवात्यन्तविरुद्धभाषित्वम् । तथाहि । आत्मैकत्वविद्याप्रतिपत्तय इति भाष्यकारेण प्रत्यग्ब्रह्मैक्यं शास्त्रविषय इत्युक्तम् । भामत्यां च ब्रह्मण एव शास्त्रविषयत्वमुक्तमिति विरोधः । एवं भाष्यकारेणैव समन्वयाधिकरणे वेदान्तेषु विधिरेव नास्तीत्युक्तम् । ''सहकार्यन्तरविधि''रिति सूत्रे तु तत्र विधिरङ्गीकृतः । एवमन्यत्रापि विरोधो द्रष्टव्यः । तस्मादीश्वरस्य जीवाभेदे दुःखित्वमवर्जनीयमिति तयोर्भेद एव युक्त इति स्थितम् । अस्तु वा दुःखादिस्वामित्वमेव दुःखित्वं तच्चेश्वरस्यैव तावन्मात्रं च न हेयं किन्तु तत्प्रयुक्तं नीचत्वम् । नरकेऽपि वसन्नीशो नासौ दुःखभुगुच्यते । 'नीचोच्चतैव दुःखादेर्भोग इत्यनुमीयते । नासौ नीचोच्चतां याति पश्यत्येव सदा प्रभुः' इति भाष्योदाहृतवचनानुसाराद्दुःखादीन्सत्यानेवात्मीयत्वेन पश्यन् । तत्कृते नीचोच्चलक्षणे विकृती सत्ये एव प्रतिपद्यत इति न्यायसुधानुसाराच्च ।

ननु दुःखित्वप्रयुक्तनीचत्वमेव हेयमित्ययुक्तं नीचत्वस्यैव दुर्वचत्वात् । न चाक्रन्दादिकमेव तदिति सुवचम् । तस्यापि देहेन्द्रियविकाररूपतया जीवानाश्रितत्वादीश्वरस्यैव तत्स्वामित्वाच्च । किञ्चाक्रन्दादिकं न सार्वत्रिकम् । लोके मानिनो धीरोदात्तस्य तापसादेश्च महति दुःखेऽपि रोदनाक्रन्दादेरदर्शनात् । अन्यस्य देहेन्द्रियविकारस्यादर्शनाच्च तदपायार्थमितरप्रार्थनादैन्यादेरदर्शनाच्च । न च धीरादीनामपि दुःखानुभवादिप्रयुक्तविकारनिरोधप्रयत्नतदपनयोपायचिन्तारूपं दुःखाधिकार्यमस्त्येव । तदेव च नैच्यम् । यद्यद्दुःखादिकार्यं तत्सर्वं नैच्यमित्यङ्गीकारादिति वाच्यम् । तथासति परमेश्वरेऽपि नानाविधजगद्व्यापारस्य दुःखादिप्रयुक्तस्य कल्पयितुं शक्यत्वेन नैच्याभावाद्धिप्रसङ्गात् । न चेश्वरेदुःखित्वादेः श्रुतिविरुद्धत्वात्तद्व्यापाराणां तत्प्रयुक्तत्वं नापादयितुं शक्यमिति चेन्न । त्वन्मते दुःखित्वादेर्दुःखादिस्वामित्वरूपत्वेन तस्य चेश्वरेऽङ्गीकृततया जगद्व्यापारस्य तत्प्रयुक्तत्वापादने विरोधाभावात् । तथाऽपि तत्र दुःखित्वप्रयुक्तं

कार्यं न भवतीति चेन्न । तत्र सुखित्वप्रयुक्तकार्याभ्युपगमे तद्वदेव दुःखित्वसत्त्वे तत्प्रयुक्तकार्यस्यापि दुर्वारत्वात् । अङ्गीकृता खलु त्वयाऽपि सुखोद्रेकप्रयुक्तैवेश्वरस्य जगत्सृष्ट्यादौ प्रवृत्तिरिति । मैवम् । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'त्यादिश्रुत्या जगद्व्यापारस्य सुखोद्रेकप्रयुक्तत्व-सिद्धावपि दुःखोद्रेकप्रयुक्तत्वे प्रमाणाभावेन तथाऽऽपादनायोगात् । न च नीचोच्चताया एव दुर्वचत्वम् । 'न कर्मणा वर्धते नो कनीयानि'त्यादिश्रुतिप्रतिपन्नवृद्धिह्रासयोरेव तथात्वात् । नन्वेवं सुखित्वमपि नोपादेयं स्यात् । तत्रापि तत्प्रयुक्तं नर्तनादिकमेवोपादेयमिति सुवचत्वात् । न चेष्टापत्तिः । निरुपाधीच्छाविषयस्य तस्यैव पुरुषार्थतायाः सकललोकसिद्धत्वात् । लोकमर्यादालङ्घनस्योन्मत्तवदु-पेक्षणीयत्वादिति चेन्न । सुखित्वादेरुपादेयत्वे बाधकाभावाद्दुःखित्वादेरपि हेयत्वस्य प्रतिपादितत्वा-च्चेत्यास्तां तावत् । तस्मादीश्वरस्य जीवभावोऽत्यन्तहेय इति गुणपूर्तिवाचिना ब्रह्मशब्देन जीवेश्वर-भेदसाधनमुपपन्नमेवेति ॥ छ ॥

नन्वेवमुत्तरत्र जीवेश्वरभेदसाधनं न स्यात् । प्रथमाधिकरण एव तत्सिद्धेः । न हि न्यायनिबन्धनरूपे मीमांसाशास्त्रे पौनःपुन्येन तदर्थप्रतिपादनं सङ्गच्छत इति चेन्न । ब्रह्मशब्देनैवात्र भेदस्य प्रतिपादनात्सकलद्वैताद्वैतश्रुतिप्राबल्यचिन्तया सर्वप्रकारेणाप्युत्तरत्र जीवेश्वरभेदप्रतिपादनाच्च । अस्मन्मते हि प्राधान्येन जीवब्रह्मभेदसाधनं पृथगुपदेशादित्यधिकरणे कृतम् । अप्राधान्येन तत्साधनमपि किञ्चित्किञ्चिद्भेदवाक्यमवलम्ब्य तत्र तत्रास्ति । अत एवानन्दमयाधिकरणे जिज्ञासासूत्रेण "भेदव्यपदेशाच्चे"ति सूत्रस्य पौनरुक्त्यमाशङ्क्य 'न जीवभेदसूत्राणां शङ्क्यात्र पुनरुक्तता । वाक्यान्तरद्योतकत्वात्पृथगित्यत्र पूर्णता ॥' इत्यनुव्याख्यानश्लोकं व्याचक्षाणेन न्यायसुधाकृतोक्तम् । अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविवक्षायां चोदितायां तद्गतभेदवाक्यद्योतनेन हि सूत्रेषु भेदसमर्थनं क्रियते । अतस्तात्पर्यभेदान्न पुनरुक्तता शङ्क्या । तथाहि- जिज्ञासावाक्येष्वभेदशङ्कायां तद्गतब्रह्मशब्देनैव भेदसमर्थनं जिज्ञास्यस्य जीवत्वे शङ्किते तत्पूर्ववाक्योक्तलक्षणेन भेदसाधनम् । एवमेव भेदव्यपदेशाच्चान्य इत्यादावपि पुनरुक्ततादोषः परिहरणीय इति ॥ छ ॥

अत्र वदन्ति । अन्नमयादिशब्दा विकारार्थमयट्प्रत्ययानुरोधाज्जीववाचिनः । तेषु ब्रह्मादिशब्द-प्रयोगस्तु ब्रह्माभेदविवक्षयेति शङ्किते तत्प्रकरणगतेन 'स यश्चायं पुरुष' इति भेदव्यपदेशेन प्रत्यवस्थान-मित्यादि सङ्गच्छते । इह तु जिज्ञासावाक्येष्वेव जिज्ञास्यं ब्रह्म निर्विशेषजीवचैतन्यरूपमिति शङ्काहेतोर-भावात् । सर्ववेदान्तानामखण्डजीवपरत्वेन सगुणे ब्रह्मणि मानं नास्तीत्येव त्वया पूर्वपक्षप्रदर्शनात्सर्व-वेदान्तावलम्बनेन पूर्वपक्षे जिज्ञासावाक्यगतेनैकेन ब्रह्मशब्देन प्रत्यवस्थानायोगच्च । इहैव सकलद्वैताद्वैत श्रुतिप्राबल्यदौर्बल्यचिन्तया सर्वप्रकारेणापि भेदसाधनं कर्तव्यमिति पृथगुपदेशादित्यधिकरणमन्यत्र

तत्साधनं च निष्फलमिति। तन्न। जिज्ञास्यं ब्रह्म निर्विशेषजीवचैतन्यरूपमिति शङ्काहेतोरेकमेवाद्वितीयमयमात्मा ब्रह्मेत्यादिवाक्यस्य साक्षाज्जिज्ञासावाक्येष्वभावेऽपि तदुपात्तवेदान्तगतत्वेन तत्राप्यभेदशङ्कोपपत्तेः। जिज्ञासावाक्यगतस्यैव ब्रह्मशब्दस्य चेह बृहकत्वादिक्रमयोगेनाभेदशङ्काहेतुत्वोपपत्तेश्च। तस्यैव गुणपूर्तिनिमित्तकस्य भेदसाधकत्वोपपत्तेश्च। सर्ववेदान्तवाक्यावलम्बनेन कृतस्य पूर्वपक्षस्य यथा जिज्ञासावाक्यगतो ब्रह्मशब्दः। प्रतिभटस्तथोक्तमधस्तात्। तस्माज्जिज्ञासाधिकरणेऽपि ब्रह्मशब्देन जीवेश्वरभेदसाधनं युक्तम्।

ननु प्राधान्येन जीवेश्वरभेदसाधनं कथमिति चेदित्थम्। प्रत्यक्षं तावज्जीवस्येश्वराद्भेदग्राहकं प्रमाणम्। यद्यप्यनवगतेश्वरस्य स्वात्मनि तद्भेदो न प्रत्यक्षस्तथाऽपि शास्त्रावगतसार्वज्ञ्यसर्वशक्तित्वादिकमीश्वरस्य स्वात्मानं च तद्विरुद्धाल्पज्ञत्वाल्पशक्तित्वादिधर्मवत्तया साक्षिणाऽनुभवतश्च स प्रत्यक्ष एव। यो हि यमर्थमधिगम्य तद्विरुद्धधर्माणं यमर्थं पश्यति स तस्मात्तस्य भेदं प्रत्यक्षयतीति सर्वानुभवसिद्धत्वात्। तथाच शास्त्रीयलक्षणज्ञानसाचिव्येन रजतत्वसाक्षात्कार इव शास्त्रीयेश्वरज्ञानसाचिव्येन स्वात्मनि तद्भेदसाक्षात्कारो नानुपपन्नः। एवं प्रत्यक्षावगतेन विरुद्धगुणवत्त्वेन दहनतुहिनवज्जीवेश्वरयोर्भेदोऽनुमातुं शक्यत इत्यनुमानमपि तत्र प्रमाणम्। तथा 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपूर्णः। यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेद्' इति पूर्णत्वापूर्णत्वादिविरुद्धधर्मोपपत्तिमुखेन प्रवृत्ता कौशिकश्रुतिरपि तत्र प्रमाणम्। न च श्रुतिर्व्यावहारिकभेदपरा। "एतमन्नमयमात्मानमुपसङ्क्रम्य, निरञ्जनः परमं साम्यमुपैति. प्रज्ञानेत्रो लोक" इत्यादिश्रुतिभिर्मुक्तावपि प्राप्यप्राप्तत्वसादृश्यप्रतियोगित्वानुयोगित्वनेतृनेतव्यत्वादिविरुद्धगुणवर्णनेन पारमार्थिकभेदसिद्धेः।

न चाभेदश्रुतिविरोधादुदाहृतश्रुतीनामन्यथानयनं शङ्क्यम्। सोपपत्तिककौशिकश्रुतिविरोधेनोपजीव्यविरोधेन च दुर्बलानामभेदश्रुतीनामेव गौणाभेदपरत्वौचित्यात्। तत्त्वमसीत्याद्यभेदश्रुत्या यदि जीवमनूद्य तस्येश्वरैक्यं बोध्यते तदाऽल्पज्ञत्वादिधर्मितया जीवग्राहकं साक्षिप्रत्यक्षमुपजीव्यम्। यदि त्वीश्वरमनूद्य तस्य जीवैक्यं बोध्यते तदा सर्वज्ञत्वादिधर्मकेश्वरग्राहकं यः सर्वज्ञ इत्यादिशास्त्रमुपजीव्यमिति उभयथाऽपि विरुद्धगुणमुखेन भेदपर्यवसायिनोपजीव्यप्रमाणेन विरोधस्यावश्यम्भावात्तत्त्वमसिवाक्यं न यथाश्रुतार्थपरम्।

नन्वेतावता सर्वं भेदप्रमाणं विरुद्धगुणवत्त्वोपजीवकमुपन्यस्तमिति विरुद्धगुणाक्रान्तिरेकैव भेदसाधको न्यायः पर्यवसितः। सोऽनुपपन्नः। जीवे स्वरूपभूतानां मुक्तिभोग्याधिकानन्दादीनामावरणस्याल्पानन्दाद्यनुभवस्य च त्वयाङ्गीकृततया तन्न्यायेन ब्रह्मगुणानां निरतिशयसर्वज्ञत्वसर्व-

कार्यं न भवतीति चेन्न । तत्र सुखित्वप्रयुक्तकार्याभ्युपगमे तद्वदेव दुःखित्वसत्त्वे तत्प्रयुक्तकार्यस्यापि दुर्वारत्वात् । अङ्गीकृता खलु त्वयाऽपि सुखोद्रेकप्रयुक्तैवेश्वरस्य जगत्सृष्ट्यादौ प्रवृत्तिरिति । मैवम् । 'को ह्येवान्यात्कः प्राण्याद्यदेष आकाश आनन्दो न स्यादि'त्यादिश्रुत्या जगद्व्यापारस्य सुखोद्रेकप्रयुक्तत्व-सिद्धावपि दुःखोद्रेकप्रयुक्तत्वे प्रमाणाभावेन तथाऽऽपादनायोगात् । न च नीचोच्चताया एव दुर्वचत्वम् । 'न कर्मणा वर्धते नो कनीयानि'त्यादिश्रुतिप्रतिपन्नवृद्धिह्रासयोरेव तथात्वात् । नन्वेवं सुखित्वमपि नोपादेयं स्यात् । तत्रापि तत्प्रयुक्तं नर्तनादिकमेवोपादेयमिति सुवचत्वात् । न चेष्टापत्तिः । निरुपाधीच्छाविषयस्य तस्यैव पुरुषार्थतायाः सकललोकसिद्धत्वात् । लोकमर्यादालङ्घनस्योन्मत्तवदु-पेक्षणीयत्वादिति चेन्न । सुखित्वादेरुपादेयत्वे बाधकाभावाद्दुःखित्वादेरपि हेयत्वस्य प्रतिपादितत्वा-च्चेत्यास्तां तावत् । तस्मादीश्वरस्य जीवभावोऽत्यन्तहेय इति गुणपूर्तिवाचिना ब्रह्मशब्देन जीवेश्वर-भेदसाधनमुपपन्नमेवेति ॥ छ ॥

नन्वेवमुत्तरत्र जीवेश्वरभेदसाधनं न स्यात् । प्रथमाधिकरण एव तत्सिद्धेः । न हि न्यायनिबन्धनरूपे मीमांसाशास्त्रे पौनःपुन्येन तदर्थप्रतिपादनं सङ्गच्छत इति चेन्न । ब्रह्मशब्देनैवात्र भेदस्य प्रतिपादनात्सकलद्वैताद्वैतश्रुतिप्राबल्यचिन्तया सर्वप्रकारेणाप्युत्तरत्र जीवेश्वरभेदप्रतिपादनाच्च । अस्मन्मते हि प्राधान्येन जीवब्रह्मभेदसाधनं पृथगुपदेशादित्यधिकरणे कृतम् । अप्राधान्येन तत्साधनमपि किञ्चित्किञ्चिद्भेदवाक्यमवलम्ब्य तत्र तत्रास्ति । अत एवानन्दमयाधिकरणे जिज्ञासासूत्रेण ''भेदव्यपदेशाच्चे''ति सूत्रस्य पौनरुक्त्यमाशङ्क्य 'न जीवभेदसूत्राणां शङ्क्यात्र पुनरुक्तता । वाक्यान्तरद्योतकत्वात्पृथगित्यत्र पूर्णता ॥' इत्यनुव्याख्यानश्लोकं व्याचक्षाणेन न्यायसुधाकृतोक्तम् । अत्र शास्त्रे तत्र तत्र प्रकरणे ह्यैक्यविवक्षायां चोदितायां तद्गतभेदवाक्यद्योतनेन हि सूत्रेषु भेदसमर्थनं क्रियते । अतस्तात्पर्यभेदान्न पुनरुक्तता शङ्क्या । तथाहि- जिज्ञासावाक्येष्वभेदशङ्कायां तद्गतब्रह्मशब्देनैव भेदसमर्थनं जिज्ञास्यस्य जीवत्वे शङ्किते तत्पूर्ववाक्योक्तलक्षणेन भेदसाधनम् । एवमेव भेदव्यपदेशाच्चान्य इत्यादावपि पुनरुक्ततादोषः परिहरणीय इति ॥ छ ॥

अत्र वदन्ति । अन्नमयादिशब्दा विकारार्थमयट्प्रत्ययानुरोधाज्जीववाचिनः । तेषु ब्रह्मादिशब्द-प्रयोगस्तु ब्रह्माभेदविवक्षयेति शङ्किते तत्प्रकरणगतेन 'स यश्चायं पुरुष' इति भेदव्यपदेशेन प्रत्यवस्थान-मित्यादि सङ्गच्छते । इह तु जिज्ञासावाक्येष्वेव जिज्ञास्यं ब्रह्म निर्विशेषजीवचैतन्यरूपमिति शङ्काहेतोर-भावात् । सर्ववेदान्तानामखण्डजीवपरत्वेन सगुणे ब्रह्मणि मानं नास्तीत्येव त्वया पूर्वपक्षप्रदर्शनात्सर्व-वेदान्तावलम्बनेन पूर्वपक्षे जिज्ञासावाक्यगतेनैकेन ब्रह्मशब्देन प्रत्यवस्थानायोगच्च । इहैव सकलद्वैताद्वैत श्रुतिप्राबल्यदौर्बल्यचिन्तया सर्वप्रकारेणापि भेदसाधनं कर्तव्यमिति पृथगुपदेशादित्यधिकरणमन्यत्र

तत्साधनं च निष्फलमिति । तन्न । जिज्ञास्यं ब्रह्म निर्विशेषजीवचैतन्यरूपमिति शङ्काहेतोरेकमेवाद्वितीयमयमात्मा ब्रह्मेत्यादिवाक्यस्य साक्षाज्जिज्ञासावाक्येष्वभावेऽपि तदुपात्तवेदान्तगतत्वेन तत्राप्यभेदशङ्कोपपत्तेः । जिज्ञासावाक्यगतस्यैव ब्रह्मशब्दस्य चेह बृहकत्वादिकृत्स्नयोगेनाभेदशङ्काहेतुत्वोपपत्तेश्च । तस्यैव गुणपूर्तिनिमित्तकस्य भेदसाधकत्वोपपत्तेश्च । सर्ववेदान्तवाक्यावलम्बनेन कृतस्य पूर्वपक्षस्य यथा जिज्ञासावाक्यगतो ब्रह्मशब्दः । प्रतिभटस्तथोक्तमधस्तात् । तस्माज्जिज्ञासाधिकरणेऽपि ब्रह्मशब्देन जीवेश्वरभेदसाधनं युक्तम् ।

ननु प्राधान्येन जीवेश्वरभेदसाधनं कथमिति चेदित्थम् । प्रत्यक्षं तावज्जीवस्येश्वराद्भेदग्राहकं प्रमाणम् । यद्यप्यनवगतेश्वरस्य स्वात्मनि तद्भेदो न प्रत्यक्षस्तथाऽपि शास्त्रावगतसार्वज्ञ्यसर्वशक्तित्वादिकमीश्वरस्य स्वात्मानं च तद्विरुद्धाल्पज्ञत्वाल्पशक्तित्वादिधर्मवत्तया साक्षिणाऽनुभवतश्च स प्रत्यक्ष एव । यो हि यमर्थमधिगम्य तद्विरुद्धधर्माणं यमर्थं पश्यति स तस्मात्तस्य भेदं प्रत्यक्षयतीति सर्वानुभवसिद्धत्वात् । तथाच शास्त्रीयलक्षणज्ञानसाचिव्येन रजतत्वसाक्षात्कार इव शास्त्रीयेश्वरज्ञानसाचिव्येन स्वात्मनि तद्भेदसाक्षात्कारो नानुपपन्नः । एवं प्रत्यक्षावगतेन विरुद्धगुणवत्त्वेन दहनतुहिनवज्जीवेश्वरयोर्भेदोऽनुमातुं शक्यत इत्यनुमानमपि तत्र प्रमाणम् । तथा 'भिन्नोऽचिन्त्यः परमो जीवसङ्घात्पूर्णः परो जीवसङ्घो ह्यपुर्णः । यतस्त्वसौ नित्यमुक्तो ह्ययं च बन्धान्मोक्षं तत एवाभिवाञ्छेद्' इति पूर्णत्वापूर्णत्वादिविरुद्धधर्मोपपत्तिमुखेन प्रवृत्ता कौशिकश्रुतिरपि तत्र प्रमाणम् । न च श्रुतिर्व्यावहारिकभेदपरा । "एतमन्नमयमात्मानमुपसङ्क्रम्य, निरञ्जनः परमं साम्यमुपैति, प्रज्ञानेत्रो लोक" इत्यादिश्रुतिभिर्मुक्तावपि प्राप्यप्राप्तत्वसादृश्यप्रतियोगित्वानुयोगित्वनेतृनेतव्यत्वादिविरुद्धगुणवर्णनेन पारमार्थिकभेदसिद्धेः ।

न चाभेदश्रुतिविरोधादुदाहृतश्रुतीनामन्यथानयनं शङ्क्यम् । सोपपत्तिककौशिकश्रुतिविरोधेनोपजीव्यविरोधेन च दुर्बलानामभेदश्रुतीनामेव गौणाभेदपरत्वौचित्यात् । तत्त्वमसीत्याद्यभेदश्रुत्या यदि जीवमनूद्य तस्येश्वरैक्यं बोध्यते तदाऽल्पज्ञत्वादिधर्मितया जीवग्राहकं साक्षिप्रत्यक्षमुपजीव्यम् । यदि त्वीश्वरमनूद्य तस्य जीवैक्यं बोध्यते तदा सर्वज्ञत्वादिधर्मकेश्वरग्राहकं यः सर्वज्ञ इत्यादिशास्त्रमुपजीव्यमिति उभयथाऽपि विरुद्धगुणमुखेन भेदपर्यवसायिनोपजीव्यप्रमाणेन विरोधस्यावश्यम्भावात्तत्त्वमसिवाक्यं न यथाश्रुतार्थपरम् ।

नन्वेनावता सर्वं भेदप्रमाणं विरुद्धगुणवत्त्वोपजीवकमुपन्यस्तमिति विरुद्धगुणाक्रान्तिरेव भेदसाधको न्यायः पर्यवसितः । सोऽनुपपन्नः । जीवे स्वरूपभूतानां मुक्तिभोग्याधिकानन्दादीनामावरणस्याल्पानन्दाद्यनुभवस्य च त्वयाङ्गीकृततया तन्न्यायेन ब्रह्मगुणानां निरतिशयसर्वज्ञत्वसर्व-

शक्तिकत्वादीनां जीवे सतामेवावरणस्यासर्वज्ञत्वाल्पशक्तिकत्वाद्यनुभवस्य चोपपत्तेः । त्वन्मते ब्रह्मण्यैश्वर्यवशादणुत्वमहत्त्वाद्यविरोधवदधिकगुणस्यैव ब्रह्मणोऽल्पगुणजीवभावोपपत्तेश्च ।

एवञ्च रत्नशास्त्रावलोकनप्रभवस्य लक्षणज्ञानस्य किञ्चिद्रत्नलक्षणे तदन्यरत्नलक्षणत्वविषयतया भ्रमत्वे तन्मूलस्य रत्नविशेषप्रत्यक्षस्येव जीवब्रह्मणोर्विरुद्धगुणवत्त्वासिद्ध्या तज्ज्ञानस्य भ्रमत्वे तन्मूलभेदप्रत्यक्षस्य भ्रमत्वावश्यम्भावान्न प्रत्यक्षं भेदे प्रमाणम् । एवमनुमानमपि न तत्र प्रमाणम् । असिद्धेरप्रयोजकत्वाच्च । अपूर्णत्वबद्धत्वयोर्जीवेऽसिद्ध्या पूर्णत्वापूर्णत्वयोर्बद्धत्वमुक्तत्वयोश्च विरोधा-सिद्ध्या वा तदुभयवत्त्वोपपत्तिमुखे भेदप्रतिपादने श्रुतेस्तात्पर्यं न कल्पयितुं युक्तमिति श्रुतिरपि न तत्र प्रमाणम् । भिन्नोऽचिन्त्य इति श्रुतिरस्ति चेत्तस्या अभेदप्रतिपादन एव तात्पर्यं सुवचम् । परमो जीवसङ्घाद्भिन्नो न चिन्त्यः किन्त्वभिन्न एव चिन्त्य इति पूर्णः पर इत्याद्यपि भेदचिन्तननिषेधापेक्षित-निषेध्यप्रसक्तिपरतया सुयोज्यम् । जीवब्रह्मणोर्हि प्रत्यक्षागमाभ्यामपूर्णत्वपूर्णत्वे बद्धत्वनित्यमुक्तत्वे चावगम्ये । ते च लोकविरुद्धत्वेन प्रतीयेते । तन्मूलेन च भेदभ्रमेण भेदानुचिन्तनं प्रसक्तमिति ।

किञ्च त्वन्मतेऽपि विरुद्धगुणसमावेशो न भेदसाधकः । विरुद्धगुणशालिनामप्यर्जुनाखण्डलादीनां त्वया भेदराहित्यस्येष्यमाणत्वात् । त्वया "ह्येकात्मनः शरीरे भावा"दित्यधिकरणेऽर्जुनादीनाम-न्योन्यानभिमतखाण्डवदहनतत्प्रशमनादिकृतवतामाराध्याराधकत्वादिविषमगुणशालिनामपि निर्भेदत्वं व्यवस्थापितम् । तस्माद्विरुद्धगुणाक्रान्त्या त्वन्मते न भेदसिद्धिः । एवं तयोरन्योन्यश्च परमो राजन् भेदव्यपदेशाच्चान्य इत्याद्यन्यत्वव्यपदेशैरपि न तद्भेदः सिध्यति । अभिन्नेष्वप्यानन्दमयादिषु त्वयाऽन्योऽन्तर आत्मेत्याद्यन्यत्वव्यपदेशानामभ्युपगमात् । अनन्योऽप्यन्यशब्देनेति वचनबलेन भगवदैश्वर्यवशादन्यत्वव्यपदेश इति निर्वाहिण तन्न्यायेन जीवब्रह्मान्यत्वस्यापि निर्वाहसम्भवाच्चेति । अत्रोच्यते । सविशेषाभेदपक्षे विद्यमानानां मुक्तिकालभोग्याधिकानन्दादीनामावरणमुपपद्यते । निर्विशेषाभेदपक्षे च सार्वज्ञादेर्न कथञ्चिदप्यावरणम् । न चेदानीं ब्रह्मणः सार्वज्ञादिकं नेति सुवचम् । "तुरीयं तत्सर्वदृक् सदे"त्यादिश्रुतिविरोधात् ।

किञ्च ब्रह्मण्यणुत्वमहत्त्वादीनामिव जीवभावोऽपि तदैश्वर्यवशादुपपद्यत इत्ययुक्तम् । जीवभावस्य तदैश्वर्यविरोधित्वस्योपपादितत्वात् । एवं जीवब्रह्मणोर्विरुद्धगुणवत्त्वस्य प्रमिततया तन्मूलं भेदप्रत्यक्षं तत्र प्रमाणं भवत्येव । एवं विरुद्धगुणवत्त्वेन तद्भेदानुमानमपि सुकरम् । अत्र विरुद्धगुणवत्त्वज्ञानस्य भ्रमत्वे विरोधमात्रोच्छेदप्रसङ्गात् । अत एव न चाप्रयोजकता । सर्वसाङ्कर्यस्यैव विपक्षबाधकत्वात् न च शक्रपार्थादिषु व्यभिचारः । तत्र विरोधस्यैवाभावात् । तदैक्यस्य सर्वसम्प्रतिपन्नत्वात् । न हि जीवब्रह्मैक्यं

सम्प्रतिपन्नम् । एवं विरुद्धगुणवत्त्वोपपत्तिमुखेन प्रवृत्ता कौशिकश्रुतिरपि तत्र प्रमाणम् । न चेयं श्रुतिः कल्पिता । त्वदभिमतश्रुतिरपि कल्पितेति सुवचत्वात् । न च परमो जीवसङ्घाद्भिन्नत्वेन न चिन्त्यः किंत्वभिन्न एव चिन्त्य इति साप्यभेदपरेति युक्तम् । पूर्णः पर इत्यादिवाक्यशेषानुपपत्तेः । न च भेदचिन्तानिषेधापेक्षितनिषेध्यप्रसञ्जको वाक्यशेष इति न विरोध इति वाच्यम् । न कलञ्जं भक्षयेदित्यादाविव प्रसक्तिपरवाक्यान्तरस्यानपेक्षणात् । न चानाहुतिवाक्ये पृथक् प्रतियोगि-प्रसञ्जकवाक्यान्तरं दृष्टमिति वाच्यम् । तत्र प्रतीतैकवाक्यतानिर्वाहाय तथा कल्पनात् । अत्र त्वदभिमतार्थमादायैकवाक्यतायां प्रमाणाभावात् । "साकल्येनाचिन्त्यः परो जीवसङ्घाद्भिन्न" इति भेदस्यैव विधानोपपत्तेश्च । न च प्रमाणान्तरप्रतिपन्नतया तस्य विधानानुपपत्तिः सर्वजीव-प्रतियोगिकस्येश्वरानुयोगिकस्य च तस्य मानान्तराप्रतिपन्नतया श्रुत्या विधानोपपत्तेः । न चान्नमयादि-ष्वन्यत्वव्यपदेशवज्जीवब्रह्मान्यत्वव्यपदेशोऽपीति युक्तम् । कारणत्वादिलिङ्गेनान्नमयादीनां ब्रह्मत्वे निश्चिते ब्रह्मणश्चैकत्वेन तस्य च स्वाश्रयप्रतियोगिकान्योन्याभावासामानाधिकरण्यरूपतया तत्रान्य-त्वस्य तत्तन्नियम्यमात्रान्वयित्वावगमात् । न चात्राप्यन्यत्वमवच्छेदकीभूतान्तःकरणमात्रान्वयीति युक्तम् । जीवब्रह्मैक्यस्यानन्यथासिद्धप्रमाणाप्रतिपन्नतया तथाकल्पनायोगात् । अन्यथाऽन्योन्याश्रयात् । सिद्धे जीवब्रह्मैक्येऽन्यत्वस्यावच्छेदकमात्रान्वितत्वकल्पनं तत्कल्पने च तदैक्यसिद्धिरिति ।

किञ्च जीवब्रह्मणोरभेदे ब्रह्मभोगानां जीवेप्यनुसन्धानं स्यादेव । ननु त्वन्मते भेदाभावेऽप्यर्जुन-स्येन्द्रभोगाननुसन्धानवज्जीवस्य ब्रह्मभोगाननुसन्धानमुपपद्यते । इन्द्रार्जुनयोरभेदेऽप्यर्जुनादीनामिन्द्र-भोगाननुसन्धानं भूम्याद्यपकृष्टदेशावस्थानगर्भप्रदेशमानुषान्नोपभोगादिकं निमित्तीकृत्याचिन्त्याप्रतिहत-शक्तिकेनेश्वरेण क्रियत इति त्वयोक्तम् । एवं देहविशेषप्राप्त्यादिकं निमित्तीकृत्याचिन्त्याप्रतिहत-शक्तिकेनेश्वरेण जीवे परमेश्वरस्य जीवान्तर्गतस्य च भोगस्याननुसन्धानं क्रियत इति किमिति त्वया वक्तुमशक्यमिति चेन्नैवम् । सर्वदा सर्वविषयज्ञानेनाप्रतिहतशक्तिकेनानन्याधीनेन च ब्रह्मणैकतां सङ्गतस्य जीवस्य तद्गतभोगानुसन्धानावश्यम्भावात् । अन्यथेश्वरत्वव्याकोपात् । इन्द्रादेः भूम्याद्यपकृष्टदेशावस्थानादिनाऽननुसन्धानोपपत्तेश्च । न हीन्द्रादेर्देहान्तरोपाधिना तत्तद्भोगाननुसन्धाने बाधकमस्ति । अस्मदादेरेव बाल्यजन्मान्तरभोगाननुसन्धानस्य दर्शनात् ।

किञ्च परमेश्वरस्य जीवाभिन्नत्वे तस्यैश्वर्यमेव न भवेत् । यो जीवाभिन्नो नासावचिन्त्यतारूपैश्वर्य-वान्यथा देवदत्त इति व्याप्तिः । न च यो जीवाभिन्नो नासावैश्वर्यवान्यथा घट इतिवदप्रयोजकत्वेन व्याप्त्यसिद्धिरिति वाच्यम् । जीवत्वस्यानीश्वरात्मत्वरूपतया जीवस्यैवेश्वरत्वे हेतूच्छित्तिरेव विपक्ष-

बाधकत्वात् । अनीश्वरस्येश्वरत्वव्याघाताच्च । अल्पशक्तिकजीवभिन्नत्वस्य ततोऽप्यधिकशक्तिकता-रूपैश्वर्यवत्त्वेन वैश्वर्यसामान्याभाववत्त्वेन वोपपन्नतया त्वदुक्तव्याप्तेरेवाप्रयोजकत्वाच्च ।

किञ्चाभेदस्यानुसन्धानमात्रं व्यापकम् । न तु सर्वानुसन्धानम् । अर्जुनादीनां चाखण्डलादि-गताल्पविषयभोगाननुसन्धानेऽपि तद्गतोपासनाफलानुसन्धानमस्त्येव । एवञ्च जीवब्रह्मणोर्जीवानां चाभेदे देवदत्तस्य ब्रह्मजीवान्तर्गतयत्किञ्चिद्भोगानुसन्धानं दुर्वारम् । यत्तु यदि ह्यभेदे सत्यप्यनुसन्धाने एकस्मिन्नेवानुसन्धानमननुसन्धानं च विरुद्धं प्रसज्येतेत्यनुकूलतर्कमुपजीव्यानुसन्धानस्याभेदव्यापकत्वं गृह्यते तदा सर्वानुसन्धानमेव व्यापकम् । कस्यचिदननुसन्धाने तद्विरोधसमाधानालाभात् । यदि त्वभेदेऽपि कस्यचिदननुसन्धानं सम्भवति तदीयाचिन्त्यशक्तिबलेनानुसन्धानाननुसन्धानविरोध-विधूननादिति सर्वानुसन्धानस्य व्यापकत्वं नेष्यते तदाऽनुसन्धानमात्रस्यापि न व्यापकत्वम् । तद्बलेनैव क्वचिन्न कस्याप्यनुसन्धानमित्यपि वक्तुं शक्यत्वात् । सहचारदर्शनमात्रस्याप्रयोजकत्वादिति । तन्न । न ह्यनुसन्धानाननुसन्धानयोर्विरोधपविहारायानुसन्धानमभेदव्यापकमुच्यते । अवच्छेदकभेदेनापि विरोध-समाधानोपपत्तेः ।

किञ्चाभेदकार्यस्य कस्याप्यभावेऽभेदोक्तिः पारिभाषिकी स्यादिति कार्यानुसन्धानं व्यापक-मुच्यते । तत्र सर्वानुसन्धानस्य व्यापकत्वे पूर्वदेहावच्छिन्नाभेदो न स्यात्तदनुसन्धानाभावादित्य-नुसन्धानमात्रं व्यापकम् । एवञ्च जीवब्रह्मणोर्जीवानां चाभेदेऽनुसन्धानप्रसङ्गो दुर्वारः । किञ्च शब्दानां स्वार्थे वृत्तिरौत्सर्गिकी क्वचिद्बाधादपोद्यते । जीवब्रह्मणोरन्यत्वव्यपदेशश्च मुख्यार्थोऽङ्गीक्रियते बाधका-भावात् । तत्त्वमसीत्यादिवाक्यमात्रस्य लब्धात्मकतया बाधकत्वाभावदन्नमयादिष्वन्यत्वव्यपदेशस्य मुख्यार्थत्वे बाधकमस्ति । तत्र 'येऽन्नं, ब्रह्मोपासते, ये प्राणं ब्रह्मोपासते, आनन्दं ब्रह्मणो विद्वान्, विज्ञानं ब्रह्म चेद्वेद, अस्ति ब्रह्मेति चेद्वेदेति ब्रह्मशब्दाम्नानेन 'एतमन्नमयमात्मानमुपसङ्क्रामती'त्यादिना मुक्तप्राप्यत्वात्मशब्दश्रवणेन चान्नमयादीनां पञ्चानामपि ब्रह्मरूपत्वावधारणात् । ब्रह्मणश्चैकमेवाद्वितीय-मित्यादिश्रुत्या स्वाश्रयप्रतियोगिकान्योन्याभावासामानाधिकरण्यरूपैकत्वावधारणात् । तस्मादन्न-मयादिष्वन्यत्वव्यपदेशस्य मुख्यार्थपरित्यागो युक्त इति ।

एतेनाभेदश्रुतीनां भेदश्रुतिभ्यः प्राबल्यं तवापि सम्मतम् । अन्यथा 'अन्योऽन्तर आत्मे'त्यादिभेदश्रुत्यनुसारेण अन्नमयादीनां भेदो दुर्वारः स्यात् । न चाभेदश्रुतीनां ब्रह्मभेदश्रुतिभ्य एव प्राबल्यम् । न जीवब्रह्मभेदश्रुतिभ्य इत्यत्र विशेषहेतुरस्ति । एकमेवाद्वितीयमित्यादिशब्दस्वारस्यस्या-स्मदुक्तषड्विधतात्पर्यलिङ्गवत्त्वस्य लाघवस्य वा प्राबल्यहेतोरुभयत्राप्यविशेषादिति निरस्तम् । प्रत्यक्षादिविरोधेन जीवब्रह्माभेदविषय श्रुतीनामात्मलाभासम्भवस्योक्तत्वात् । मानान्तरविरोधे तात्पर्य-

लिङ्गस्याप्यकिञ्चित्करत्वात् । अन्यथा यजमानप्रस्तरत्वादेरपि सिद्धिप्रसङ्गाल्लाघवाजडप्रपञ्चचैतन्ययोरप्यैक्यापाताच्च । न चैवं ब्रह्मभेदविषयश्रुतीनामप्यात्मलाभो न स्यात् अन्योऽन्तर आत्मेत्यादिभेदश्रुतिविरोधादिति वाच्यम् । तत्र भेदश्रुतीनामेवात्मलाभात् । अन्नमयादीनां पञ्चानामपि कारणत्वब्रह्मत्वाद्यवगमात् । मानान्तराभावेन भेदश्रुतीनामेव षड्विधतात्पर्यलिङ्गवत्तया प्रबलत्वात् ।

किञ्च नाभेदश्रुतिबलाद्ब्रह्मभेदश्रुतीनां मुख्यार्थं परित्यजामः किन्तु सकलवेदमहातात्पर्यविरोधात् । तथाहि । सर्वेषामपि वेदानां मोक्ष एव प्रधानं प्रयोजनम् । 'तेषां दुःखप्रहाणाय श्रुतिरेषा प्रवर्तत' इत्यादिवचनात् । मोक्षस्य च तत्प्रयोजनत्वं साक्षान्न तत्साध्यतया तस्यानेकश्रुतिस्मृतिपुराणैर्भगवत्प्रसादेनैव साक्षात्साध्यत्वाधारणात् । किन्तु यज्ज्ञानेन मोक्षहेतुर्भगवत्प्रसादः सम्पद्यते यतत्प्रतिपादनद्वारा तत्प्रसादश्च तदीयनिर्दोषगुणोत्कर्षज्ञानाद्भावतीति लोकतो 'यो मामेवमसम्मूढ' इत्यादि भगवद्वचनैश्चावधारितम् । अतः सर्वेषामपि वेदानां भगवतो निर्दोषाशेषगुणपूर्णत्व एव तात्पर्यम् । तच्च ब्रह्मभेदश्रुतीनां स्वार्थपरत्वे विरुद्ध्यते । भिन्नानां गुणतारतम्यानुग्राह्यानुग्राहकाभावादिदर्शनेन ब्रह्मरूपेष्वपि तत्प्रसक्त्या निर्दोषाशेषगुणवत्त्वासिद्धिप्रसङ्गात् । जीवब्रह्मभेदश्रुतीनामेव स्वार्थपरत्वे तु तन्न विरुद्ध्यते । प्रत्युत तासां तत्परत्वाभाव एव तद्विरुद्ध्यते । जीवब्रह्माभेदे जीवदोषैर्ब्रह्मणोऽपि सदोषत्वापत्तेः । तस्माद्ब्रह्मभेदश्रुतीनामेव स्वार्थपरित्यागो न जीवभेदश्रुतीनामिति विशेषो युक्त एव ।

एतेन अन्नमयादीनां विश्वादीनां च ब्रह्मरूपाणां भेदश्रुत्यनुसारेण विरुद्धगुणवत्त्वानुसारेण च भेदे सत्यपि भगवदैश्वर्यबलादेव निर्दोषाशेषगुणपूर्णत्वमुपपद्यते । न हि भगवानशेषमपि स्वेच्छया कर्तुमकर्तुमन्यथाकर्तुं शक्त इति वदतस्तव लीलयाऽभिन्नो भवन्नप्यहं निर्दोषाशेषगुणपूर्णस्स्यामिति स्वसङ्कल्पेन भेदमास्थाय क्रीडितुं न शक्त इति सम्भवतीति निरस्तम् । भगवदैश्वर्यमपि लोकमर्यादानुरोधीत्यङ्गीकारात् । ब्रह्मभेदाभ्युपगमे ब्रह्मणः समाभ्यधिकद्वितीयराहित्यरूपाद्वितीयत्वविरोधेन तस्य तथा सङ्कल्पानुदयाच्च । भिन्नत्वे तत्साम्यापाताच्च न्यूनाधिकभावापाताच्च । न हीश्वरोऽपि स्वस्यैश्वर्यविरोधिभूतमर्थं सङ्कल्प्य करोति । तस्य प्रेक्षावत्त्वात् । तस्माद्ब्रह्माभेदश्रुतीनां जीवब्रह्मभेदश्रुतीनां च प्राबल्यम् । ब्रह्मभेदश्रुतीनां जीवब्रह्माभेदश्रुतीनां च दौर्बल्यमिति श्रुत्या जीवेश्वरभेदसिद्धिर्दुर्वरिति ।

किञ्च कर्ममीमांसायां व्युत्पादितैः शब्दान्तरादिभिर्जीवब्रह्मणोर्भेदः सिध्यति । अस्ति ह्येष एव जीवं प्रबोधयति । एतस्माज्जीव उत्तिष्ठतीति विरुद्धार्थधातुनिष्पन्नाख्यातरूपं शब्दान्तरम् । 'नित्यः परो नित्यो जीव' इत्यप्रत्यभिज्ञायमानः पुनः श्रुतिरूपोऽभ्यासो 'द्वासुपर्णेत्यादिसङ्ख्याऽनश्नन्नि'त्यादि'भेदको गुणो' 'यतो वाचो निवर्तन्त' इति प्रकरणान्तरं जीवेशाविति नामधेयभेदश्चेति । यत्तु प्रत्यक्षादिषु

भेदप्रमाणेषु पराहतेष्विदं शब्दान्तराद्युपन्यसनं प्रतिग्रहलब्धं हस्तिनमविक्रीय स्वगृहे स्थापयितुकामस्य मुग्धश्रोत्रियस्य हस्तिपकेन तद्ग्रासे पृष्टे स्वगृहे सम्पादितान्सर्वान्दर्भमुष्टीन्क्रमेण तदग्रे निहितवतस्तेषु कबलमात्रस्याप्यपर्याप्तेषु क्षणेन निगीर्णेष्वन्ततः स्वकरस्थितदर्भपवित्रदानमनुकरोतीति । तन्न । प्रत्यक्षादीनामपि भेदप्रमाणत्वस्योपपादितत्वेन शब्दान्तरादीनामपि तत्र प्रमाणत्वोपपत्तेः ।

ननु तथाऽपि शब्दान्तरादिना पारमार्थिकभेदो न सिद्ध्यति । कल्पितभेदविषयत्वेनापि तस्य चारितार्थ्यात् । कर्ममीमांसकैश्च शब्दान्तरादीनां मुख्यभेदप्रमाणतयाऽनुपन्यासात् । न हि तैः शब्दान्तरादिकं प्रदर्श्योपपाद्यमानः तदभावं प्रदर्श्यापोद्यमानश्च कर्मभेदः शास्त्रभेदो वाऽन्योन्याभावादि-रूपो मुख्यो भेदः । 'सप्तदशप्राजापत्यान्पशूनालभेत' इत्यत्र दधिमधुघृतपयोधानाः करम्भास्तण्डुला-स्तत्सृष्टं प्राजापत्यमित्यत्रैन्द्रं दध्यमावास्यायामैन्द्रं पयोऽमावास्यायामित्यत्र प्राजापत्यपशूनां प्राजापत्यदध्यादीनामैन्द्रदधिपयसोश्च प्रदानयौगपद्येन प्राजापत्याद्युद्देशेन तत्तद्द्रव्यविषयसङ्कल्परूपाणां यागानामैकैकत्वेऽपि सप्तदशप्राजापत्ययागाः सप्तदध्यादियागा द्वौ दधिपयोयागाविति भेदोपपादनात् । सोमेन यजेतेत्यत्रेन्द्रवाय्वाद्युद्देशेन तत्तत्पात्रस्थितसोमरससङ्कल्परूपाणां यागानां भिन्नत्वेऽप्यग्निहोत्रं जुहुयादित्यत्राहवनीयादिहविःप्रक्षेपरूपाणां होमानां भिन्नत्वेऽपि भेदनिरासात् । सप्तदशप्राजापत्या-नित्यादिवाक्यरूपस्य शास्त्रस्यैकत्वेऽपि भेदोपपादनात् । व्रीहिभिर्यजेत व्रीहीनवहन्तीत्यादिवाक्य रूपाणां शास्त्राणां भिन्नत्वेऽपि भेदनिरासाच्च । तस्मादनुष्ठानोपयोग्यपूर्वभेदाद्युपाधिकः काल्पनिको भेदः शब्दान्तराद्यवसेय इति कर्ममीमांसकमतम् । उक्तं हि, तन्त्ररत्ने । यावदेकापूर्वानुबन्धनमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म तदन्यत्तु भिद्यत इति भेदाभेदव्यवहारसिद्धिरिति । उक्तं हि वरदराजीये शब्दान्तराधिकरणे 'भिन्ना पूर्वानुबन्धनप्रतिपादनयोग्यताज्ञानं यत्तदेव शास्त्रभेदज्ञानमुच्यत' इति तत्रैव साङ्ख्याधिकरणेऽप्युक्तम् । न च सप्तदशप्राजापत्यानिति वाक्यस्यैकत्वान्न शास्त्रभेदो न वाक्यभेदः । शास्त्रभेदे तन्त्रनिरपेक्षभिन्नालौकिकार्थप्रतिपादकत्वमेव । तच्चेहाप्यस्तीति । तस्माच्छब्दान्तरादिना काल्पनिक एव जीवेश्वरभेदः सिद्ध्यतीति न किञ्चिदनुपपन्नमिति ॥ छ ॥

अत्रोच्यते । कर्मणां स्वत एव भेदो वाच्यः । न त्वपूर्वभेदोपाधिकः । अपूर्वभेदस्य कर्मभेद-प्रयुक्तत्वात् । कार्यभेदस्य सामग्रीभेदप्रयोज्यत्वात् । अन्यथाऽपूर्वभेदाभावप्रसङ्गात् । एवञ्च त्वदुक्ते-र्वैपरीत्यम् । किञ्च शब्दान्तराद्यवसेयो भेदो मुख्यो न त्वौपाधिकः । शब्दान्तरे कर्मभेद इत्यादिसूत्रैः कर्मभेदस्य शब्दान्तरादिमात्रप्रयोज्यत्ववर्णनादौपाधिकत्वावर्णनाच्च । मुख्यभेदसम्भवे काल्पनिकभेद-परतया सूत्रार्थवर्णनायोगाच्च । न च सप्तदशप्राजापत्यानित्यादिषु प्रक्षेपस्यैकत्वेनापूर्वभेदोपाधिक एव तद्भेदो वाच्य इति युक्तम् । तत्र स्वतो भेदाभावेऽपूर्वभेदाभावापातेन तत्तद्द्रव्यस्य पृथग्देवतोद्देशेन

त्यक्तव्यतया तेषामपि स्वत एव भेदोपपत्तेः । न चैवं तेषां पृथक् प्रक्षेपापत्तिः । अनुष्ठानसौकर्यायैकधा वपां जुहोतीत्यादिशास्त्रबलेन च युगपत्प्रक्षेपोपपत्तेः । तत्तद्द्रव्याश्रितप्रक्षेपाणां यौगपद्येऽप्यनेकत्वानपायात् । न ह्यनेकद्रव्याश्रिता क्रियैकेति शक्यते वक्तुम् । प्रत्यक्षादिविरोधात् । न च मिलितस्य द्रव्यान्तरत्वेनैकत्वात्तदाश्रिता क्रियाऽप्येकेति युक्तम् । राश्यादाविव तत्रारम्भविरोधेन द्रव्यान्तरोत्पत्त्यनभ्युपगमात् । अन्यथा दध्यादीनामुत्पत्तिवाक्यागतं हविष्ट्वं त्यक्तं स्यात् । न हि बाधकाभावे तत्त्याग उचितः । एतेन प्रक्षेपरूपाणां भिन्नत्वेऽपि तत्तद्द्रव्यविषयसङ्कल्परूपज्ञानस्य यागशब्दार्थस्य समूहालम्बनरूपतयैकत्वात्तदनेकत्वमौपाधिकमेव वाच्यमिति निरस्तम् । तत्कार्यापूर्वभेदसिद्ध्यर्थं ज्ञानरूपस्यापि यागस्य प्रत्येकं तत्तद्द्रव्यविषयतया भिन्नभिन्नत्वेन तावद्द्रव्यविषयैकसमूहालम्बनरूपत्वानभ्युपगमात् । अत एव शब्दान्तरादिस्थले सर्वत्र मुख्य एव कर्मभेद इति पक्षोऽपि कौमारिलैराश्रितः । ननु शब्दान्तरे कर्मभेद इत्यादिसूत्रस्वारस्यं स्वप्रौढ्या समर्थयितुं परं शब्दान्तरादिस्थले मुख्यः कर्मभेद इति कश्चित्पक्ष उपन्यस्तो न तु वास्तवाभिप्रायेण । अत एव कर्मापि गोत्वादिवदेकमेव नित्यमनेकानुगतं न त्वाश्रयभेदेन तद्भेदोऽस्ति । अयं चलत्ययमपि चलतीत्यादिप्रत्यभिज्ञया तदैक्यसिद्धेः । तद्भेदबुद्धेराश्रयभेदादुपपत्तेः सन्ततानुपलब्धेश्च शब्दवद्व्यञ्जकाभावेनोपपत्तेरित्याद्युपपादनपूर्वकं सर्वत्र कर्मैक्यमङ्गीकृत्य शब्दान्तराद्यवसेयो भेदोऽपूर्वभेदोपाधिक एवेति पक्ष एव मुख्यतया कौमारिलैराश्रितः । उक्तं हि तन्त्ररत्ने । क्रियाणामाश्रितत्वाद्द्रव्यान्तरे विभागः स्यादित्यधिकरणे । अथाऽपि नाम सर्वत्रैलोक्यवर्तिन्येकैव कर्मव्यक्तिरनुष्ठानमात्रं तु भिद्यते । यावदेकापूर्वानुबन्धनमेकेन शास्त्रेण विषयीकृतं तावदेकं कर्म तदन्यत्तु भिद्यत इति भेदाभेदसिद्धिरितीति । मैवम् । प्रमाणविरुद्धस्य सर्वत्र कर्मैक्योपपादनस्य स्वप्रौढिप्रदर्शनपरतया तत्पक्षस्य मुख्यत्वासिद्धेः । प्रत्यभिज्ञायाश्चायं दण्डी अयमपि दण्डी अयं घटो रूपी अयमपि घटो रूपी, अयं घटो नष्टोऽयमपि घटो नष्ट इत्यादिवदुपपत्तेः । सूत्रस्वारस्यावलम्बिनो मुख्यभेदोपपादनस्यैव मुख्यपक्षत्वोपपत्तेः । अथापि नामेति तन्त्ररत्नोक्त्या तत्पक्षस्यैव प्रौढवादत्वाविष्करणात् । एतेन सर्वलोकसिद्धभेदप्रत्यक्षतश्च बलवती प्रत्यभिज्ञा शब्दान्तरादितः कथं बलवती न स्यादिति निरस्तम् । प्रत्यभिज्ञाया जातिविषयतयाऽन्यथासिद्धत्वेन लोकसिद्धभेदप्रत्यक्षतः शब्दान्तरादितश्च दुर्बलत्वात् । भेदप्रत्यक्षशब्दान्तरयोरेव प्रबलत्वाच्च ।

ननु तथाऽपि शास्त्रभेदः शब्दान्तराद्यवसेय इति पक्षः कथमुपपाद्यः । सप्तदशप्राजापत्यानित्यादिशास्त्रस्यैकत्वादिति चेन्न । सूत्रस्वारस्यविरोधितत्पक्षाननुसरणस्यादोषत्वात् । नन्वेवमप्यग्निहोत्रादेः सोमयागादेश्च कथमभेदः । तत्र तत्तत्क्रियाणां भिन्नत्वादिति चेन्न तत्रैकत्वस्यैकापूर्वोपाधिनिबन्धनत्वोपपत्तेः । न ह्यभेदोऽप्यौपाधिको न भवतीत्युच्यते । कर्मभेदस्यैवास्माभिरौपाधिकत्वानिराकरणात् ।

इयांस्तु भेदः । त्रैलोक्यवर्तिनी कर्मव्यक्तिरेकेति मते शब्दान्तरादिसत्त्वे कर्मभेद औपाधिकः । अग्निहोत्रं जुहुयात्सोमेन यजेतेत्यादौ शब्दान्तराद्यभावेनाभेदो मुख्यः । भिन्नाभिन्नैव कर्मव्यक्तिरिति मते तु भेदो मुख्योऽभेदस्त्वमुख्य इति । अत एव त्वयाऽपि कर्मव्यक्तिरेकेति पक्षे सोमेन यजेताग्निहोत्रं जुहुयादित्यादौ शब्दान्तराद्यभावान्न यागहोमभेदः किन्त्वेकस्य यागस्य होमस्य च देवताभेदेनाधिकरणभेदेन चाभ्यासमात्रमिति मुख्यो भेदोप्युपादयितुं शक्यत इत्युक्तम् । अस्तु वा शब्दान्तरादवसेयः कर्मभेदः काल्पनिकः । तदैक्यस्य प्रबलप्रत्यभिज्ञासिद्धत्वात्तदवसेयो जीवेश्वरभेदस्तु मुख्यस्तदैक्यस्यानन्यथासिद्धप्रमाणाप्रतिपन्नत्वाद्भेदप्रत्यक्षबाधितत्वाच्चेति दिक् ॥ छ ॥

ननु तथाऽपि त्वन्मते शब्दान्तरादिना भेदसाधनमनुपपन्नम् । शब्दान्तरादिसत्त्वेऽपि त्वयाऽविद्याभेदस्यानभ्युपगमात् । तत्तद्विद्याव्यवस्थितगुणोपसंहारस्यैवाभ्युपगमाच्च । न हि त्वन्मतेऽविद्याभेदेन गुणानां प्रति प्रकरणव्यवस्था किन्तु मानुषाद्या हिरण्यगर्भान्ता मुक्त्यधिकारिणः फलतारतम्येन मुक्तिभाजः इत्यधिकारिभेद एवेति चेन्न । प्रमाणबलेन बाधकसत्त्वेन च तत्र तथात्वेऽपि प्रकृते तदभावेन शब्दान्तरादिभिर्भेदसिद्ध्युपपत्तेः । एतेन शब्दान्तरादिभिर्भेदसाधनमनुपपन्नम् । तथाहि । य एष जीवं प्रबोधयति एतस्माजीव उत्तिष्ठतीति विरुद्धधातुनिष्पन्नाख्यातरूपशब्दान्तरस्य भेदकत्वमुद्बोधकत्वावच्छिन्नस्योद्बोध्यत्वावच्छेदो विरुद्ध इति विरोधमूलमेव वाच्यम् । न च तद्युक्तम् । ब्रह्मणि त्वया विरुद्धधर्मसमावेशस्य बहुधाऽङ्गीकृतत्वात् । नित्यः परो नित्यो जीव इति नित्यत्वाभ्यासस्य परजीवयोरेकत्वे परनित्यत्वश्रुत्यैव जीवनित्यत्वसिद्धेः । तत्पुनः श्रुतिरनर्थिका स्यादिति पुनः श्रुत्यानर्थक्यमूलं वाच्यम् । तदपि न युक्तम् । कार्यकारणभेदवादिना शक्तिव्यक्त्यभेदवादिना च त्वया नित्यत्वानित्यत्वादिसाङ्कर्यस्याङ्गीकृततया तथैव परनित्यत्वेऽपि जीवानित्यत्वं स्यादिति शङ्कावारणेनापि तत्सार्थक्यात् । सङ्ख्याया गुणस्य च भेदकत्वं यस्मिन्पञ्चपञ्चजना अणोरणीयानित्यादौ त्वयैव प्रतिषिद्धम् । प्रकारणभेदो न भेदक इति तु स्पष्टमेव । भारतादिषु रामकृष्णादिचरितप्रतिपादकप्रकरणभेदेऽप्यभेदानपायात् । सृष्टिसंहारादिप्रतिपादकप्रकरणभेदेऽपि त्वया सृष्टिसंहारादिक्रियाणामभेदाभ्युपगमाच्च । एतेन जीवेशाविति नामधेयस्यापि भेदकत्वं प्रत्याख्यातम् । तस्मात्परस्परविरुद्धधर्मादिमतामवतारादीनामिव जीवानामप्यभेदश्रुत्यनुसारेण तदत्यन्ताभिन्नवासुदेवांशत्वं त्वया निवारयितुं न शक्यत इति निरस्तम् । तत्त्वमसीत्याद्यभेदश्रुतीनां त्वदुक्तार्थमादाय लब्धस्थितिकत्वाभावेन वैषम्यात् । तस्माज्जीवब्रह्मभेदावलम्बनेन शास्त्रारम्भसमर्थनं युक्तमिति सर्वं समञ्जसम् ॥ छ ॥ मध्वतन्त्रमुखभूषणे कृते सङ्ग्रहेण विजयीन्द्रयोगिना ॥ आदिमाधिकरणोपपादनं मोदमावहतु सर्वधीमताम् ॥ १ ॥

**स्वदर्शनोक्तदूषणं निराकरिष्णुरञ्जसा ।**
**जयीन्द्रयोगिरूपतोऽवतीर्ण एष पूर्णधीः ॥ २ ॥**

॥ समाप्तोऽयं ग्रन्थः ॥

## ॥ ॐ जन्माद्यस्य यतः ॐ ॥

पूर्वाधिकरणे ब्रह्मशब्देन जीवब्रह्मभेदमुपपाद्य शास्त्रारम्भ उपपादितः । अत्र प्रकारान्तरेण तदेव आक्षिप्य समाधीयते । यदुक्तं "तद्विजिज्ञासस्व, तद्ब्रह्मेति" विचारविधिवाक्ये ब्रह्मशब्देन जीवविलक्षणस्य ब्रह्मणो विचार्यस्य समर्पणात्सविष्यमितं शास्त्रमिति तन्न घटते । तत्र ब्रह्मपदस्य जीवपरत्वात् । तथाहि ब्रह्मशब्दस्तावत् जीवस्यापि वाचकः, बृह बृहिवृद्धाविति धातोरेव बृहजातिजीव-कमलासनशब्दराशिष्विति धातोः अर्थविशेषे मनिन्प्रत्यये सति ब्रह्मशब्दस्य निष्पत्तेः । तस्य च जीववाचकत्वं रूढ्यैव लक्षणमुखेन प्रवृत्तत्वात् । जीवे गुणपूर्त्यादियोगासम्भवात् । परब्रह्मवाचकत्वं तु योगेन ततश्च रूढेः योगतो बलवत्त्वेन इह ब्रह्मशब्दस्य जीवपरत्वमेव युक्तमिति पूर्वपक्षः ।

सिद्धान्तः । सत्यं रुढिर्बलीयसी । इह त्वस्य बाधकं जागर्ति । "यतो वा इमानि भूतानि जायन्ते" इत्यादौ श्रुतब्रह्मपदनिर्देशस्य जगज्जन्मादिकारणत्वलक्षणमुखेन प्रवृत्तत्वात् तद्धि विष्णवेकनिष्ठलक्षणमिति श्रुतिस्मृतिपुराणादिभ्योऽवगतम् । अतः तदनुसारेण योगतः गुणपरिपूर्णविष्णुपर एवायं ब्रह्मशब्द इति ।

ननु ब्रह्मशब्दस्य पूर्वोक्तजीवे रूढिरसिद्धा । शरीरबृहत्वादि क्लृप्तयोगेनैव तत्र प्रवृत्त्युपपत्तेः । जीवे रूढिप्रापकधात्वन्तरस्य चाप्रामाणिकत्वादिति चेत् । किमेवं वदतो ब्रह्मशब्दस्य जीवे रूढौ प्रमाणमेव नास्तीति अभिमतं किं वा क्लृप्तावयवशक्त्यैव तत्र प्रवृत्त्युपपत्तौ रुढिः नाङ्गीकार्येति । नाद्यः । बृहबृहिवृद्धादित्यादिना योगस्येव बृहजातीत्यादिना जीवेऽपि रूढिसिद्धेः । तदुक्तं चन्द्रिकायाम् 'जीव एवेदं ब्रह्म 'बृहजातिजीवे' इत्यभिधानात् । ब्रह्मशब्दस्य तत्र रूढेरिति' । न च बृहबृहिवृद्धावित्यादेरिव बृहजातिजीवेत्यादेः प्रसिद्धाभिधानेषु अभावान्न ततो ब्रह्मशब्दस्य जीवे रूढिसिद्धिरिति वाच्यम् । शक्तिग्राहकाभिधानानामनेकत्वेनार्वाचीनानां तदभावनिर्धारणासम्भवात् । अन्यथा बृह बृहिवृद्धा-वित्यादिधातूनामप्यप्रामाणिकत्वं स्यात् । अभियुक्तप्रदर्शितत्वे च तेषां प्रामाणिकत्वे च किमनेनापराद्धम् । तस्याप्यभियुक्ततमोदाहृतत्वात् । त्वदभिमत एवाभियुक्ततमः नास्मदभिमत इत्युक्तेस्तत्त्वविद्वेषमात्रमूलत्वात् । न च अप्रसिद्धश्रुतिस्मृत्यादिकमुदाहरतस्तव तथाविधाभिधान-कल्पनमिति चेत् न । खिलश्रुत्याद्युदाहरणस्यादोषत्वोपपादनात् । अन्यथा बृह बृहिवृद्धावित्यादि-धातुरप्याधुनिकेन प्राचीनेन वा तत्र प्रक्षिप्त इत्युक्तौ का प्रत्याशा । तस्मात् यत्किञ्चिदेतत् । न द्वितीयः देहबृहत्त्वादिमात्रस्य तदवयवार्थत्वाभावात् । श्रुतिस्मृत्यनुसारेण पूर्त्यादेरेव तदवयवार्थत्वाच्च । तदुक्तं चन्द्रिकायाम्- "यौगिकार्थस्य गुणपूर्तेर्जीवे असम्भवादिति' गुणपूर्तितोऽन्यस्य यौगिकार्थत्वे तु जिज्ञास्यस्यापि गुणपूर्त्यसिद्धि'रिति च । किञ्च असङ्कुचितबृहत्त्वमेव ब्रह्मशब्दावयवार्थः । न तु

शरीरबृंहकत्वमात्रम् । प्रकरणादि तत्सङ्कोचकाभावात् । तच्च जीवे न सम्भवतीति प्रयोगबलेन रूढिरेवाङ्गीकार्या ।

ननु ब्रह्मशब्दस्य जीवे गौणतया प्रवृत्तिरित्यस्तु । "ब्रह्मशब्दः परे विष्णौ नान्यत्र क्वचिदिष्यते । असम्पूर्णाः परे यस्मादुपचारेण वा भवेत्" । "यस्मिन् प्रयुज्यमाने तु गुणयोगस्सुपुष्कलः । तत्रैव मुख्यवृत्तोऽयम् अन्यत्र ह्युपचारतः" ॥ इत्यादि त्वद्भाष्योदाहृतस्मृत्यनुसारात् स्याच्चैकस्य ब्रह्मशब्द-वदिति (ब्र.सू. २-३-५) सूत्रे यथा परे ब्रह्मणि मुख्यब्रह्मशब्दस्य चतुर्मुखे अमुख्यत्वम् एव'मनुत्पत्ति-मच्छब्दस्य ब्रह्मणि मुख्यस्य आकाशे अमुख्यत्वमि'ति त्वया व्याख्यातम् । 'तथा परं जैमिनिः मुख्यत्वा'दिति सूत्रे (ब्र.सू. ४-३-१२) वायुः परमेव ब्रह्मज्ञानिनो गमयति । 'ब्रह्मशब्दस्य परब्रह्मण्येव मुख्यत्वादि'ति जैमिनिराचार्यो मन्यत इति व्याख्यानाच्च । ब्रह्मशब्दस्य जीवे रूढ्यङ्गीकारे च उदाहृत स्मृतिसूत्रविरोधः स्यात् इति चेत् । उच्यते । शब्दानां मुख्यार्थस्तावद्विविधः । असङ्कुचितावयवशक्ति-विषयः समुदायशक्तिविषयश्चेति । एवञ्च स्मृतिसूत्रेष्वसङ्कुचितावयवार्थमादायैव परब्रह्मण एव ब्रह्मशब्द-मुख्यत्वमन्यत्र उपचारः इत्युक्तौ न विरोधः । तत्र जीवादौ तत्समुदायशक्तेरप्रत्याख्यानात् । तस्मात् रूढेः प्रमाणसिद्धत्वात्तदवलम्बनेन पूर्वपक्षोपपादनं युक्तमेवेति । एतेन ब्रह्मशब्दः किं प्रसिद्धपरः, उत अर्थान्तरपर इति सन्दिह्य अन्ते तस्यार्थस्य तद्वाचितायाः तत्र तात्पर्यस्य च कल्प्यत्वात् गौरवम् । आद्ये लाघवम् । जीवस्याकल्प्यत्वात् । बृहजातिजीवेत्यभिधानाद्युक्तेरपि क्लृप्तत्वादबाधेन तात्पर्यस्य च सिद्धत्वादिति सुधोक्तपूर्वपक्षोऽप्यनुपपन्नः । तस्यापि अप्रामाणिकब्रह्मशब्दरूढ्युपजीवनेन प्रवृत्तत्वादिति निरस्तम् ।

किञ्च ब्रह्मशब्दस्य जीवे यौगिकत्वेऽपि न पूर्वपक्षानुपपत्तिः । अत एव चन्द्रिकायाम्-'अलौकिकविशेष्यपरत्वे गौरवात् । प्रसिद्धविशेषपरत्वे तु लाघवात् । तदनुसारेण जीवेषु सम्भवद्गुणपूर्तिरेव प्रवृत्तिनिमित्तम् । न तु सिद्धान्त्यभिप्रेतगुणपूर्तौ तात्पर्यमिति प्राप्ते कारणत्वेनैव बाधकेनालौकिक-विशेष्यपरत्वम् । ततश्च सङ्कोचकाभावात् सर्वगुणपूर्तिरेव निमित्तमिति सिद्धान्त इति प्रकारान्तरेण सुधातात्पर्यं वर्णितम् । तस्मादस्मन्मते जन्माधिकरणपूर्वपक्षे न काप्यनुपपत्तिः ।

ननु तथापि सिद्धान्तोऽनुपपन्नः । तथाहि— यदि जगत्कर्तृत्वानुवादस्य जीवे पर्यवसानायोगात् विचारविधिवाक्यगतस्य ब्रह्मशब्दस्य रूढ्यर्थोऽपि जीवः परित्यज्यते तदा अन्नप्राणमनोविज्ञानानन्देष्वपि ब्रह्मशब्दस्य वृत्तिस्त्वदभिमतापरित्यक्ता स्यात् । जगत्कारणत्वाननुवादपर्यवसानासम्भवस्य तेष्वपि तुल्यत्वात् । त्वया 'एतन्नानावताराणां निदानं बीजमव्ययम्' इत्यादि पुराणप्रसिद्धेन मूलरूपेणैव ब्रह्मणः

चतुर्मुखादि सकलभूतजातकर्तृत्वं नेतुं प्रतिशरीरं तत्तत्कोशमात्राधिष्ठातृतया अभिव्यक्तैः अन्नादिरूपैरित्यभ्युपगमात् । त्वन्मते सर्वेषां भगवद्रूपाणां सविशेषाभिन्नत्वेऽपि तत्तत्कृत्यानां व्यवस्थितत्वाच्च । न हि रावणवधादिकं शिशुपालवधादिकृष्णचरितमध्ये वर्ण्यत इति ।

अत्रोच्यते । तात्त्विकाभेददृष्ट्या (मूलरूपाभेददृष्ट्या) रूपान्तराविष्कृतोऽपि महिमा रूपान्तरे वर्णयितुं युक्तः । "अहं सर्वस्य प्रभवो मत्तः सर्वं प्रवर्तते" इति कृष्णवाक्यदर्शनात् । रावणवधादेः कृष्णरूपाविष्कृतचरित्रमात्रसङ्कहप्रस्तावेऽवर्णनेऽपि सर्वरूपाभिन्नपरब्रह्मस्वरूपतया कृष्णवर्णनप्रस्तावेषु कृष्णेऽपि वर्णनदर्शनाच्च । अतोऽन्नादिरूपेषु मूलरूपाभेददृष्ट्या जगत्कर्तृत्वानुवादो युक्तः । न ह्येवं जीवब्रह्मणोर्वास्तवाभेदोऽस्ति येन अभेददृष्ट्या तत्र कर्तृत्वानुवादो युक्त इत्युच्येत ।

ननु 'तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत्' (२-३-१४-२९) इति सूत्रे त्वया जीवस्यापि ज्ञानानन्दादिगुणशालितया ब्रह्मभेदोऽङ्गीक्रियत इति चेत् भ्रान्तोऽसि । नहि तत्र मुख्याभेदोऽङ्गीकृतः । किन्तु गौण एव । स च कारणत्वानुवादाविरोध्येव । वास्तवाभेदस्यैव तद्विरोधित्वात् । भेददृष्ट्या जीवेऽनुवाद्यत्वसमर्थने महावाक्यार्थो गौणः स्यात् । तथाहि ब्रह्मपदस्य जीवपरत्वे परब्रह्मजीवयोरभेदो महावाक्यार्थः स्यात् । स च जगत्कारणत्वजीवत्वावच्छिन्नयोः अभेदश्चेत् तदैव मुख्यो भवति । न च तादृशभेदः सम्भवति । ताभ्यां रूपाभ्यां तयोः भेदाङ्गीकारात् । यस्तु ज्ञानानन्दवत्त्वादिरूपेणाभेदः सम्भवतीत्युक्तः स तु गौणः, शब्दानुपात्तधर्मावच्छिन्नत्वात् । अत एव प्रबलश्रुतिभिः भेदसिद्धिः । तत्त्वमसिवाक्यं गौणाभेदपरम् इत्येव तद्गुणसारत्वादिति सूत्रे दर्शितम् । न चेह तथा गौणवाक्यार्थः स्वीकार्यः । ब्रह्मपदमात्रस्य योगेन परब्रह्मपरत्वे मुख्यवाक्यार्थलाभात् ।

एतेन 'साक्षादपि जीवे तदनुवाद्यं सम्भवति । यथा मनोरथध्याने संस्कारयोगीनर्थान् जीवोऽनुभवत्येवं स्वप्नेऽपि' इत्यादि वदता त्वया स्वप्नस्य विषयस्य मानोरथिकस्य यद्रूपं तस्य जीवसृष्टत्वोपगमात् । ततश्च ध्यानमनोरथयोः असम्भावितो विषयः कोऽपि नास्तीति तद्विषयसर्वस्रष्टरि जीवे साक्षादप्यनुवाद्यान्वयः सम्भवतीति' निरस्तम् । 'यतो वा इमानी'त्यादि निर्देशानुसारेण वक्तृश्रोतृसाधारणस्थूलप्रपञ्चसृष्टृत्वस्यैव अनुवाद्यत्वात् । जीवस्य च स्थूलप्रपञ्चस्रष्टुत्वाभावात् ।

ननु स्थूलप्रपञ्चस्रष्टृत्वमपि जीवस्य सम्भवति तस्य चिरन्तनहिरण्यगर्भादिजीवध्यानमनोरथ प्रभवत्वोक्तेः । न चेश्वरस्य स्रष्टृत्वश्रुतिविरोधः । तस्यापि प्रपञ्चान्तरस्रष्टृत्वेन घटादाविवध्यानजादिष्वपि स्रष्टृत्वेन च तदुपपत्तेः । न च वासनामयत्वे सर्वापरोक्ष्यसर्वार्थक्रियाकारित्वादिविरोधः । अतिसूक्ष्मवास-नोपादानत्वेऽपि स्वप्नध्यानमनोरथविषयाणां भूगोळमहार्णवादीनाम् अतिमहत्त्वं तेषां स्वप्नशरीरान्तराव-स्थानं मुहूर्तमात्रानुवर्तिषु स्वप्नध्यानमनोरथेष्वनेकशतवर्षातिवाहनमित्यादेरति-

दुर्घटस्य दर्शनेन तद्वदेव ध्यानमनोरथप्रभवे प्रपञ्चे सर्वापरोक्ष्यादेरप्यविरोधात् वासिष्ठरामायणे भार्गवनन्दनमनोराज्यादि विषयप्रपञ्चेषु सर्वापरोक्ष्यादेः निर्णीतत्वेन मनो(राज्यादि)रथादि सृष्टिमङ्गी- कुर्वतस्तव तदनुसरणौचित्याच्चेति । मैवम् ।

अनुवाद्यस्य गौणत्वप्रसङ्गात् । तथाहि । जगत्कारणत्वं अनुवाद्यपरावान्तरवाक्यार्थः । तच्च सङ्कुचितं वेदप्रसिद्धं च ग्राह्यम् । बलवत्सङ्कोचाभावात् । वेदप्रसिद्धिसत्त्वेन वेदेन अनुवदितुं युक्तत्वाच्च । नहि 'तत्तेजोऽसृजत' इत्यादिवत् जीवस्य तत् तत्कर्तृत्वं वेदप्रसिद्धम् । अत एव चन्द्रिकायाम् ''न च यत'' इत्यादेः कारणानुवादेन जिज्ञासाविधायकत्वात् । अनुवादे च यथा प्राप्तितात्पर्यात् मानान्तरेण अस्मदादेर्यादृशं कारणत्वं प्राप्तं तत्परमेवेदं वाक्यमिति युक्तम् । अस्यानुवादकत्वेऽपि 'शास्त्रस्था वा तन्निमित्तत्वादि'ति (जै.सू.अ. १. पा. ३. सू. ९) न्यायेन भाष्योक्तश्रुतिप्राप्तकारणपरत्वादिति शङ्का- समाधानाभ्यां उक्त एवार्थः स्पष्टीकृतः ।

न च जीवानां ध्यानमनोरथादिविषयास्रष्टृत्वमसङ्कुचितं जीवान्तरध्यानादिविषये जीवान्तरस्य स्रष्टृत्वाभावात् । न च ब्रह्मपदमात्रस्य रूढित्यागेन सङ्कुचितवेदप्रसिद्धमुख्यानुवाद्यग्रहणसम्भवे तत्त्यागो युक्तः । अत एव चन्द्रिकायामदृष्टद्वारा वा काल्पनिकत्वेन वा जीवकारणत्वे जातादिपदानां मुख्यार्थ- त्यागापत्तेः । अभिसंविशन्तीति पदोक्तमुक्तप्राप्यत्वस्य च सर्वथाऽनुपपत्तेः । यत इति येनेति यदिति तद्-ब्रह्मेति च प्रतीतकारणैक्यस्य च बाधकाभावात् । 'इमानि' इति सर्वनाम्नश्च सङ्कोचकाभावात् । इत्यादिनाऽनेकमुख्यार्थानुपपत्तिरेव कारणवाक्ये ब्रह्मशब्दस्य रूढिपरित्यागे हेतुरुक्ता । तस्मादेकस्य ब्रह्मपदस्य रूढिपरिपालनाय यतो वेत्याद्यनुवादस्य तत्पुरोवादानां सृष्ट्यादिवाक्यानां चोपमर्दकल्पनं युक्तमिति ।

ननु सत्यमेकानुरोधेन बहूनामुपमर्दो न युक्त इति । स तु न्यायस्त्वया तद्विजिज्ञासस्व तद्ब्रह्मेत्यत्र ब्रह्मशब्देत्युक्तः । त्वया हि पूर्वाधिकरणे ब्रह्मशब्दस्य जीवब्रह्मभेदसाधकत्वमङ्गीकृत्य तेनैकेन पूर्वपक्ष्य- भिमतसकलाद्वैतश्रुतीनां बाधो वर्णितः । तद्रीत्यैवात्रापि तेनैव ब्रह्मशब्देन जीवे रूढिन्यायतः प्राप्तेन जगत्कारणब्रह्माभेदबोधनपर्यन्तेन सृष्टिवाक्यादिसर्वद्वैतश्रुतीनामुपमर्द इति वक्तुं शक्यत्वात् । न ह्ययं ब्रह्मशब्दो यौगिकत्वे बलवान् न तु रूढत्व इति वक्तुं युक्तमिति चेन्न । अत्र ब्रह्मशब्दस्य परब्रह्मण्यपि रूढिमङ्गीकृत्य सिद्धान्तकरणात् । अत एव एतदेवास्वारस्यं मनसि निधाय चन्द्रिकायां 'किञ्च कवीना- मेतदेव परमं ब्रह्मेत्याहुः इति श्रुतौ विष्णौ विद्वद्रूढिरुक्तेत्यादिना रुढित्वाविशेषेऽपि विद्वद्रूढेरेवा- सम्भाविताज्ञानमूलाया बलीयस्त्वोपपत्तेः श्रुत्यन्तरेण ब्रह्मशब्दस्य ब्रह्मणि विद्वद्रूढिमङ्गीकृत्यानेक- दृष्टान्तैः तत्प्राबल्यं चोपपादितम् ।

एतेनाभेददृष्ट्या साक्षाद्वा जीवे कथञ्चिद्योजितमिदं प्रकारद्वयमपि ब्रह्मपदरूढित्यागेन स्वेष्टं लब्धव्यमिति लोभाद्यदि न रोचयेथाः तदा वृद्धिमिच्छतो मूलमपि नष्टमिति न्याय एवापतेत् । उक्त प्रकाराद्यनुवादब्रह्मपदस्वारस्यविषययोर्जीवपरयोः विरुद्धधर्मवत्तया ताभ्यामुपस्थितयोरपि यतो वेत्यादि महावाक्यप्रामाण्यादत्यन्ताभेदः प्राप्नोति । विरुद्धधर्मवत्तया ताभ्यामुपस्थितयोरपि यतो वेत्यादि महावाक्यप्रामाण्यादत्यन्ताभेदः प्राप्नोति । विरुद्धधर्मवत्त्वस्य तयोरभेदविरोधितायाः प्रथमाधिकरणभङ्गे प्रपञ्चितत्वात् । अविरोधे च मुख्यार्थत्यागायोगात् । यदि च तस्याभेदे विरोधित्वमेवेत्यभिमानस्तदा-त्यन्तमेव तव मूलहानिः । तथाहि विधेयानुवाद्यरूपतया जीवब्रह्मसमर्पकस्य भागद्वयस्य महावाक्यार्थ-भूताभेदपरिपन्थिधर्मद्वयोपस्थापकतया निराकृतः । स विरोधे सत्यविरोधाय कस्यचिद्भागस्यार्थबाधे कर्तव्ये विधेयभागस्य तात्पर्यवत्तया प्रबलत्वात्, न विधौ परश्शब्दार्थः इत्यनुवादमुख्यतासिद्धये विधावमुख्यार्थतापरिग्रहस्य न्यायविद्भिः निराकृतत्वाच्चानुवादभागस्यैवार्थबाधः प्राप्नुवन् जीवगतध्याना-दिविषये स्रष्टृतागोचरत्वलक्षणस्य सङ्कोचरूपबाधस्य त्वदसम्मततया गत्यन्तराभावात् । ब्रह्मण्येवानुवाद्ये जीपरिपन्थिजगत्कारणत्वोपमर्दात्यबाधः प्राप्नोति दृष्टश्च पूर्वतन्त्रे अनुवाद्यगतधर्मस्य विधेयविरोधे-नोपमर्दः । तत्र ह्युक्थ्याग्निष्टोमस्तुतशास्त्रं स्यात् । सति हि संस्थानान्यत्वमित्यधिकरणे अत्यग्निष्टोमे राजन्यस्य गृह्णीयादप्युक्थ इति । राजकर्तृकयोरुक्थ्याग्निष्टोमयोर्विधीयमानषोडशिग्रहस्तुत शास्त्ररहितः स्यात् । तद्वत्त्वे षोडशिसंस्थया तेनोक्थ्याग्निष्टोमसंस्थाभङ्गप्रसङ्गेनोक्थ्यस्याग्निष्टोमस्य च सतः षोडशिग्रहविध्ययोगादिति पूर्वपक्षं कृत्वा सिद्धान्तितम् । स्तुतशस्त्रवत्त्वेन निष्पन्ननिःषोडशिग्रहोऽत्र विहितः तथैव प्राप्नोति । न च संस्थाभङ्गो दोषः पूर्वसंस्थोपमर्देन संस्थान्तरविध्युपपत्तेः । 'उक्थ्यसंस्थो हि यः प्राप्तस्तयाऽग्निष्टोमसंस्थकः । राजन्यस्य तथासौ न किन्तु षोडशिसंस्थकः' । इत्येवंविधः । पर्यवसानादिति । एवं षोडशिग्रहविध्यर्थप्राप्तेनापि स्तोत्रशस्त्रेण यदा तद्विरोधिनोरनुवाद्ययोक्थ्याग्निष्टोम-योरुपमर्दस्तदा किमु वक्तव्यम् साक्षाद्विधीयमानेन तद्विरुद्धस्यानुवाद्यस्य जगत्कारणस्योपमर्द इति ।

ननु विरुद्धधर्मवतोरत्यन्ताभेदो न सम्भवति । तथाहि नोक्थ्याग्निष्टोमन्यायेन जगत्कारणत्व-बाधप्रसक्तिः तन्न्यायवैषम्यात् । राजन्ये प्राप्तयोरुक्थ्याग्निष्टोमसंस्थयोर्बाधेऽपि तदनुबन्धिविधीनां नात्यन्तबाधः, वर्णान्तरे चरितार्थत्वात् । ब्रह्मणि जगत्कारणत्वबाधे तु सृष्टिप्रलयादिवाक्यानां अत्यन्तबाधः स्यात् । विषयान्तराभावात् । तस्मादानर्थक्यप्रतिहतानां विपरीतं बलाबलमिति न्यायात् । विधेयपरस्यापि ब्रह्मशब्दस्य न रूढित्यागो लभ्यत इति चेत् । न च सृष्ट्यादिवाक्यानां विषयान्तरा-भावस्यादोषत्वात् । ब्रह्मणोऽद्वितीयत्वसिद्ध्यर्थं 'अध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रसिद्ध्यती'त्युक्तरीत्या ब्रह्मणि कर्तव्यप्रपञ्चापवादापेक्षितेन तदारोपणचारितार्थ्यात् । दृष्टं च पूर्वतन्त्रेऽपि प्रयोजनान्तर-

सिध्यर्थापवादापेक्षितारोपमात्रेण चारितार्थ्यमग्निचयनेऽग्निहोत्रे च यतिलयवापादिविधिषु तद्वदिहापि स्यादिति निरस्तम् । चन्द्रिकोक्तरीत्या ब्रह्मण एव ब्रह्मशब्दपरममुख्यतयाऽनुवाद्यविधेयभागयोर्विरोध-प्रसक्त्यभावेनास्मदिष्टसिद्धेः । न च सूत्रे कारणत्वस्यैव लोकप्रसिद्धिबाधकतयोक्तत्वेनार्थप्रसिद्धेस्त-द्बाधकताया अनुक्तत्वेन च सूत्राननुगुण्यमिति वाच्यम् । अत्र च पक्षे सौत्रकारणत्वोक्तेरार्यप्रसिद्ध्युप-पादकत्वात्, आर्यप्रसिद्धेरनार्यप्रसिद्धिबाधकताया आर्थिकत्वात् । न चैवं योगेनैवेति टीकाविरोधः । पूर्वपक्षे तदाच्छादनेन तथोक्त्युपपत्तेः । किञ्च ब्रह्माद्वितीयत्वप्रपञ्चनिषेधयोः । सकलप्रमाणविरुद्धत्वेन जर्तिलादिवाक्यवत् सृष्ट्यादिवाक्यस्य प्रयोजनान्तरसिद्ध्यर्थापवादापेक्षितारोपमात्रेण चारितार्थ्य-मित्युक्तम् । न हि जर्तिलादिवाक्यानां पयोविध्येकवाक्यत्ववत् सृष्ट्यादिवाक्यानां ब्रह्माद्वितीयत्वा-प्रतिपादकवाक्यैकवाक्यत्वमद्यापि सिद्धम् येन तन्न्यायेन चारितार्थ्यं स्यात् ।

एतेन वस्तुतस्त्वन्मते जीवब्रह्मणोर्विरुद्धधर्मवतोरप्यभेदबोधने लौकिकविरोधदृष्टिर्न परिपन्थिनी । त्वया परमेश्वरस्याचिन्त्याद्भुतशक्तिमहिम्नैव विरोधिसमाधानात् । एवमीश्वरस्य तर्कागोचरत्वेन निरवयवैकदेशकर्तव्यत्वयोर्विरोधमपहुवानः कथं तस्य जीवाभेदे कर्तागोचरत्वं विस्मरसि । येन तत्र लौकिकविरोधमूलान् षट्तर्कनिव पुनः पुनरुद्धाटयसि । ततो न ता उपादाय पुनः पुनर्वल्गनं युक्तमिति निरस्तम् । धर्मिग्राहिमानविरोधेनेश्वरे तथाविधतर्काणां शुष्कतर्कतया अनुपादेयत्वेऽपि प्रकृते जीवब्रह्मा-भेदश्रुत्योर्विरोधप्रत्यक्षसंवादस्य भेदश्रुतिप्राबल्योपपादकतया वाक्यार्थनिर्णायकतर्काणां श्रुत्यनुग्राहक-त्वेनोपादेयत्वात् । न च वैपरीत्यं विशेषहेतोरुक्तत्वादिति यत्किञ्चिदेतत् । तस्माज्जन्माधिकरणसिद्धान्ते न क्वाप्यनुपपत्तिः ॥

ब्रह्मलक्षणसूत्रोक्तन्यायमार्गोपपादनम् ।<br>विजयीन्द्रकृतां दृष्ट्वा मोदो भवतु धीमताम् ॥

## ।। ॐ शास्त्रयोनित्वात् ॐ ।।

अत्र जगत्कारणत्वं विष्णुलक्षणमित्युक्तमाक्षिप्य समाधीयते । यदुक्तं जन्मादिकारणत्वं तदेकनिष्ठं लक्षणमिति तदयुक्तम् । जगत् अनेककर्तृकम् महाकार्यत्वात् । शिवः जगत्कारणं सर्वज्ञत्वात् विरिञ्चोऽपि जगत्कारणं सर्वज्ञत्वादेव । न चासिद्धिः । शिवस्य सर्वज्ञनाम्ना विरिञ्चस्य ज्ञानप्रतिघरहितस्येत्यादि स्मृत्या च तत्सिद्धेरित्याद्यनुमानैरन्यत्रापि जगत्कारणत्वावधारणादिति पूर्वपक्षे । सिद्धान्तः । अनुमानैरन्यत्र जगत्कारणत्वं न सिध्यति । जगत्कारणत्वस्य धर्मादिवच्छास्त्रप्रमाणकत्वात् । शास्त्रस्य विष्ण्वेकनिष्ठजगत्कारणत्वप्रतिपादकत्वात् । अनुमानस्य सम्भावितोपाधिप्रत्यनुमानादि दोषशङ्काकलङ्कितस्यादृष्टार्थे निश्चायकत्वाभावादिति ।

ननु त्वन्मते एकश्रुतिवाक्यस्यैक एवार्थ इति नियमाभावात् जगत्कारणे वस्तुनि साक्षादनिर्णायकानामप्यनुमानानां तात्पर्यलिङ्गतया तेजसा सोम्यशुङ्गेन सन्मूलमन्विच्छेत्यादि श्रुतिदर्शितानुमानवन्निर्णयोपयोगित्वेन सदेवेत्यादिसृष्टिवाक्यानामनेकस्रष्टृपरत्वोपपत्त्या जगतोऽनेककर्तृत्वकसाधकानुमाननिराकरणमयुक्तमिति चेत् । न उक्तानुमानानामेकमेवाद्वितीयमित्यादिसृष्टिवाक्यविरोधितया तदर्थनिर्णायकत्वाभावात् अनन्यथासिद्धश्रुतिलिङ्गादिकं पुरस्कृत्योपक्रमादिना तत्तच्छ्रुतिवाक्यस्य तत्तदनेकार्थपरत्वाभ्युपगमेऽपि सदेवेत्यादि सृष्टिवाक्यानां अनेककर्तृपरत्वे तदभावेन तथापादनायोगाच्च । किञ्च केषुचिद्वाक्येष्वनेकार्थत्वाङ्गीकारमात्रेण सृष्टिवाक्येष्वपि तदापादने मतान्तरेष्वपि तदापाद्यते । शिष्टकर्तृकेषु सूत्रनिबन्धेषु अनेकत्र विनियुक्तेषु मन्त्रेषु चानेकार्थत्वस्य सर्वैरङ्गीकृतत्वात् ।

एतेन शब्दानां व्यवस्थितैकार्थपरत्वमौत्सर्गिकं तु वक्तृविवक्षया विनियोगेन क्वचित्तदपोद्यत इति सकलमीमांसकमर्यादा । तामतिलङ्घ्यस्वकल्पितार्थनिर्वाहाय स्वेच्छयैव च श्रुतिवाक्येष्वनेकार्थत्वं कल्पयतस्तदर्थं यावन्तो अर्था योगरूढ्यादिभिः सम्भवन्ति तावदर्थपरत्वमौत्सर्गिकं पौरुषेयवाक्येषु वक्तृविवक्षावशादेकार्थनियतत्वमभ्युपगच्छतस्तव वसन्तादिवाक्येष्विव सर्वेष्वपि ब्राह्मणवाक्येषु अन्यथा पदविभागैर्योगरूढ्यादिभिश्चानेकार्थप्रतीतिः सम्भवत्येवेत्यनिवार्यमनेकमनेकस्रष्टृपरत्वेनानन्यथासिद्धं प्रमाणमस्ति । प्रत्युत सृष्टिवाक्यगतमेकत्वादिकं समाभ्यधिकराहित्यादिकं च तद्बाधकमित्युक्तम् ।

यत्तु कत्रैक्यश्रुतिः ब्रह्मविष्णुरुद्राणां मध्ये एकैकस्य कर्तुस्तदैक्षत बहुस्यां प्रजायेयेत्यादिश्रुतिषु बहुभवनप्रमुखैरुपस्थापिता वाऽभेदप्रसक्तेर्निवारणेनार्थवती स्यात् । एवमेव हि त्वया निष्प्रपञ्च ब्रह्मप्रलापव्यसनिनां 'नेह नानास्ती'त्यादिश्रुतीनां विष्णोरन्नमयादीनि रूपाणि शिरःपुच्छाद्यवयवाः

ज्ञानानन्दादयो गुणाः सृष्टिसंहारादिक्रियाः सर्वगतत्वादयो भावरूपा अदृश्यत्वादयश्चाभावरूपा धर्म विष्णोः सकाशात् परस्परस्माच्च भिद्यन्ते' इति शङ्कावारणेनार्थवत्ता दर्शितेति ।

तन्न । एकमेवाद्वितीयम् । द्यावा भूमी जनयन्देव एक इत्यादि श्रुत्युक्तस्य कारणैकत्वस्य स्वाश्रयप्रतियोगिकान्योन्याभावासामानाधिकरण्यरूपतया तद्विरोधेनानेककर्तृसिद्धेरेव योगात् । तदयोगे च एकैकस्यैव कर्तृबहुभवनाधीनभेदप्रसक्तिनिवारणेनार्थवत्वमिति परोक्त्ययोगात् । एतेनानेकेश्वराणां मध्ये यदुपासने यस्य पुरुषस्य अनादियोग्यता स एव जगत्स्रष्टा तस्य स्फुरति नान्य इति तत्तदधिकारिबुद्धिविषयं तमेवार्थं तस्य तस्याधिकारिणः श्रवणकर्तृबुद्धिभेदेन भिन्नभिन्नकर्त्रैक्यश्रुतिरनुवदतीत्येवं वा तन्निर्वाहोऽस्तु । न च श्रुतिभिरेकार्थप्रतिपत्तावपि श्रोतृबुद्धिभेदेन भिन्नभिन्नार्थावबोधकत्वं नासम्प्रतिपन्नमिति वाच्यम् । 'आत्मेत्येवोपासीते'ति विधौ तव तत्सम्प्रतिपत्तेरित्यपि निरस्तम् ।

किञ्च युक्तमुपासनविधिवाक्यस्य पुरुषभेदेनानेकार्थप्रतिपादकत्वम् । न वस्तुपरवाक्यस्य उपासनावाक्यस्य तत्तत्पुरुषं प्रति तत्तद्योग्यगुणविशिष्टमेव ब्रह्मोपासनीयं नायोग्यगुणविशिष्टमिति बोधकत्वेन प्रामाण्यं हीयते । हीयते तु स देवेत्यादि वस्तुपरवाक्यस्य तत्तत्पुरुषं प्रति शिव एव जगत्कर्ता नान्य इति बोधकत्वे पुरुषभेदेनानुमानवत् वस्तुस्वरूपस्य भेदासम्भवात् ।

ननु पुराणेषु त्वया रामकृष्णाद्यवताराणां भेदश्रवणं लौकिकैः भ्रान्त्या गृहीतस्य भेदस्यानुवादकमित्यङ्गीकृतत्वेन तथैव कर्त्रैक्यश्रुतेरप्यनुवादकत्वमुपपद्यत इति चेन्न । अवतारे तत्तत्कालवर्तिनां लौकिकानां केषाञ्चिद्भेददृष्टिः सम्भवति । अन्येषां च बहुत्वादिलिङ्गकानुमानाभासेनेति तत्र तथानुवादस्य युक्तत्वेऽपि प्रकृते तथानुवादायोगात् । जगत्कर्त्रैक्यस्य श्रुतिं विना लोकतः प्रत्येतुमशक्यत्वात् ।

ननु त्वया तथापि पुरुषाणां योग्यतावन्माहात्म्यज्ञानपूर्वकस्नेहरूपा भक्तिरप्यनादिरित्यभ्युपगमेन शिवादिभक्त्यन्तर्गतस्य शिव एव जगत्कर्ता नान्य इत्यादिरूपेण तत्तन्माहात्म्यज्ञानस्याप्यनादित्वसम्भवात् । त्वया सर्वेषां मतानामनादित्वस्योक्तत्वेन तत्तन्मताभिमतमाहात्म्यपरम्परानादित्वसम्भवाच्च, तदनुवादो युक्त इति चेन्न । माहात्म्यज्ञानादेरनादित्वेऽप्यन्धपरम्पराव्यावृत्यर्थं मूलभूतश्रुतिरूपस्य प्रमाणस्यानुसरणीयत्वात् । तथाच श्रुतेरसदर्थबोधकत्वं स्यादिति यत्तु त्वन्मतेरसदर्थबोधकत्वं सम्भवतीत्येवाङ्गीकार्ये त्वया यस्याधिकारिणो यावद्दर्शनयोग्यता तं प्रति तावन्तमेव अतिशयं ब्रह्मानन्दैकदेशनिरतिशयतया भूमशब्दः प्रतिपादयतीत्यभ्युपगमात् । तथाच यदि क्वचिद्वतरस्तत्तद्वादिनः प्रति स्यादस्ति स्यान्नास्तीत्यादिविरुद्धप्रकारान्वदन् क्षपणक इव वञ्चकः स्यात् तदा तद्वदेव सृष्टिवाक्यानामपि शैववैष्णवादीन्प्रति विरुद्धनानाप्रकारबोधकत्वं सम्भवतीति चेन्न । सातिशयमेव ब्रह्मानन्दैकदेशं निरतिशयतया भूमब्रह्मशब्दौ प्रतिपादयत इत्यस्यैव सिद्धेः ।

नन्वेवं पूर्वोत्तरकल्पातीतक्षणानन्त्यदृष्टान्तेन तत्तद्योग्यतानुसारि पूर्णत्वोपपादनं त्वया कृतमिति तद्विरोधः स्यादिति चेन्न। तत्तदधिकारिणः प्रति तस्य पूर्णत्वोपगमात्। तत्तत्पूर्णत्वस्य तरतमभावेऽपि पूर्णत्वनिमित्तकभूमशब्दस्यासदर्थत्वानापत्तेः। न हि सर्वे तटाकाः सम्पूर्णा इति वाक्यस्य क्षुद्रतटाकान्तरविषयत्वेऽसदर्थविषयकत्वं शक्यते वक्तुम्, योग्यतानुसारिपूर्तेः सर्वत्र सत्वेन सदर्थत्वस्यैवौचित्यादिति यत्किञ्चिदेतत्। तस्मात्सृष्ट्यादिवाक्यानां परस्पराविरुद्धैकार्थपरत्वमेव वाच्यमिति नानेकस्रष्टृपरत्वं सिध्यति। किञ्च 'स देव सोम्येदमग्र आसीत् आत्मा वा इदमग्र आसीत्'। आत्मा वा इदमेक एवाग्र आसीत् इत्यादि सृष्ट्यादिवाक्यगतानां सद्ब्रह्मादिपदाना'मेको हवै नारायण आसीदि'त्यादिविशेषवचनबलेन विष्ण्वेकनिष्ठत्वान्नानेकस्रष्टृपरत्वं प्रसज्यते। किञ्चानुमानैरनेकस्रष्टृसिद्धौ तेषां परस्परमीर्ष्यादिना प्रपञ्चसृष्ट्यनिष्पत्तिप्रसङ्गः। न च त्वन्मते मुक्तानामिव नेर्ष्यादिकमिति युक्तम्। शास्त्रबलेन मुक्तसत्वाभ्युपगमेन तेषां परस्परमीर्ष्यादिप्रसक्तेः तेषां तद्रूपेणैव सिद्धेः। व्याप्तिबलेनानेकस्रष्ट्रभ्युपगमपक्षे ईर्ष्यादिकं तत्र दुर्वारम्।

ननु सद्ब्रह्मात्मशब्दानां विशेषवचनबलेन विष्ण्वेकपरत्वमित्ययुक्तम्। शिवविरिञ्चयोरपि विशिष्य जगत्कारणत्वावेदकश्रुतीनां सत्वात्। तथाहि "यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवलः। तदक्षरं तत्सवितुर्वरेण्यं प्रज्ञा च तस्मात्प्रसृता पुराणी"ति शिवस्य सर्गाद्यसमयवर्तित्वमावेद्यते। 'प्रजापतिर्वा इदमेक आसीन्नाहरासीन्न रात्रिरासीत्सोऽस्मिन्नन्धे तमसि प्रासर्पदि'ति हिरण्यगर्भस्य सर्गाद्यसमयसत्वमावेद्यते। एवञ्च सदेवेत्यादिनानेकस्रष्टृसिद्धिरविकलेति चेन्न, 'द्यावाभूमी जनयन्देव एकः न त्वत्समश्चाभ्यधिकश्च दृश्यत' इत्यादि श्रुत्यन्तरानुसारेण कारणवाक्यगतानां सद्ब्रह्मेत्यादि पदानां शिवप्राजापत्यादिशब्दानां च तथाभूताकाशप्राणादिशब्दानामिवैकविषयत्वावश्यम्भावात्। अन्यथा कारणगतस्य स्वाश्रयप्रतियोगिकान्योन्याभावासामानाधिकरण्यरूपैकत्वस्य समाभ्यधिकराहित्यस्य च बाधितत्वप्रसङ्गात् इत्युक्तम्। न हि बाधके सति सृष्टिवाक्यानां अनेकार्थपरत्वं सेद्धुमर्हति। न ह्येकत्वादिकमनेकसिद्धौ बाधकं न भवतीति शक्यं वक्तुम्। तस्मात् बाधकवशात् सृष्टिवाक्यगतपदानां प्रसिद्धार्थपरित्यागो न दोषायेति स्थितम्।

ननु (नन्वेवमपि) विष्णावेव कारणवाक्यगतानां सद्ब्रह्मात्मादिपदानां शिवप्रजापत्यादिशब्दानां च समन्वय इति कथं निर्णीयते। विशेषहेत्वभावात्। न च 'नारायणाद्ब्रह्मा जायते, नारायणाद्रुद्रोजायते' इत्यादिना रुद्रहिरण्यगर्भयोरुत्पत्तिश्रवणान्न तयोः कारणत्वमिति विष्णावेव सर्वशब्दसमन्वय इति वाच्यम्। 'ब्रह्मविष्णुरुद्रेन्द्रास्ते सम्प्रसूयन्ते' इत्यादौ ब्रह्मरुद्रादीनामिव विष्णोरप्युत्पत्तिश्रवणेन तस्यापि कारणत्वायोगात्। न च तत्र विष्णुशब्दस्य कारणीभूतविष्णवतिरिक्तपरत्वमेवेति युक्तम्। नारायणाद्ब्रह्मा

जायत इत्यादावपि ब्रह्मरुद्रशब्दयोः कारणीभूतब्रह्मशिवव्यतिरिक्तपरत्वेन वैषम्याभावात् । न च विष्णोरुत्पत्तिर्न कर्मकृता किन्तु स्वेच्छाधीनैवेति न सा मूलकारणत्वविरोधिनीति वाच्यम् । ब्रह्मशिवयोरपि तथात्वस्य वक्तुं शक्तयत्वात् । न 'चैको ह वै नारायण आसीन्न ब्रह्मा नेशान' इत्यादिना ब्रह्मेशानयोः सर्गाद्यसमये निषिद्धत्वेन न मूलकारणत्वमस्तीति वाच्यम् । 'प्रजापतिर्वा इदमेक आसीत्, शिव एव केवलः, नान्यः कश्चिन्मत्तो व्यतिरिक्त' इत्यादि श्रुतिभिर्विष्णोरपि सर्गाद्यसमये निषिद्धत्वेन मूलकारणत्वायोगस्य तौल्यात् । न च सामान्यनिषेधो विशिष्य विहितेतरपर इति शिव एव केवल इत्यादिकं न विष्णोर्मूलकारणत्वविरोधीत्युक्तम् । न ब्रह्मा नेशान इत्यादिनिषेधस्यापि विहितेतर-परत्वविरोधित्वाभावेन वैषम्याभावात् । सामान्यनिषेधस्याविशिष्यविहितेतरपरत्ववत् विहितस्यापि निषेधायोगस्य सकलतान्त्रिकसिद्धत्वात् । तस्मात्त्रयाणामपि सर्गाद्यसमये सत्वनिषेधोत्पत्त्यादीनां तत्तत् श्रुतिप्रतिपन्नत्वेन विष्णोरेव मूलकारणत्वमित्यत्र न विशेषनियामकमिति ।

अत्र ब्रूमः । विष्णुरेव जगत्कारणभूतं परं ब्रह्म न ब्रह्मेशानौ । 'न ब्रह्मा नेशान' इति तयोः सर्गाद्यसमये विशिष्य निषेधात् । ननु तयोः सर्गाद्यसमये विधानमपि दृश्यते इति चेत् । न । विरोधात् । न चात्र ग्रहणाग्रहणवद्विकल्पः । अनुष्ठेये तदभ्युपगमेऽपि वस्तुनि तदयोगात् । न च कल्पभेदेन अविरोधः । तथाविधयोः सर्वजगत्कारणत्वासिद्धेः । कल्पान्तरीयसृष्टेः तदकर्तृकत्वात् । न च विधिवाक्यगतानां शिवप्रजापत्यादिशब्दानां प्रसिद्धार्थपरत्वं निषेधवाक्यगतानां शिवप्रजापत्यादिशब्दानां लक्षणया जीवविशेषपरत्वमिति वाच्यम् । वैपरीत्यस्यापि सुवचत्वात् । तथा च विधिवाक्यगतानां शिवप्रजापत्यादिशब्दानां किं प्रसिद्धार्थपरत्वं निषेधवाक्यगतब्रह्मेशानादिशब्दानां तु लक्षणादिना तदतिरिक्तार्थपरत्वं किं वा निषेधवाक्यगतानामेव तेषां प्रसिद्धार्थपरत्वं विधिवाक्यगतानां तु लक्षणादिनार्थान्तरपरत्वमिति विमर्शे कल्पद्वितीयः एव युक्तः । अन्यथा त्रयाणामपि तुल्यवत्सर्वकारणत्वं स्यात् । 'तच्चैकमेवाद्वितीयं द्यावाभूमी जनयन्देव एकः, न तत्समश्चाभ्यधिकश्च दृश्यते' इत्यादि श्रुतिविरुद्धम् । न चोत्पत्तिरेव विष्णोर्मूलकारणत्वविरोधिनीति युक्तम् । 'अजायमानो बहुधा विजायते, पिता पुत्रेण पितृमान्योनियोनावि'त्यादिश्रुतौ मुमुक्षुज्ञेयस्य परब्रह्मणोऽप्युपपद्यते । सर्वसम्मतत्वात् । न च तत्र कारणीभूतपरब्रह्मणो नोत्पत्तिरावेद्यते । किन्त्वन्यस्यैवेति युक्तम् । 'तमेवं विद्वानमृत इह भवति, यो देवेभ्य आतपति । येन सूर्यस्तपति, न कर्मणा वर्धते नो कनीयान्' इत्यादि पूर्वोत्तरवाक्यानुसारेण तद्वाक्यस्यापि कारणीभूतब्रह्मोत्पत्तिपरत्वावश्यम्भावात् । न च 'न कर्मणा वर्धते नो कनीयान्' इति वाक्यशेषानुसारेण तदुत्पत्तिः स्वेच्छाधीनैव । 'न कर्मकृते'त्यविरोध इति वाच्यम् । 'एष सर्वभूतान्तरात्माऽपहतपाप्मा दिव्यो देव एको नारायणः' ।

परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम् ॥

'इच्छागृहीताभिमतोरुदेहः, संसाधिताऽशेषजगद्धितोऽसौ, जगतामुपकाराय न सा कर्मनिमित्तजे'-त्यादि श्रुतिस्मृतिभिर्विष्णूत्पत्तेरपि कर्माधीनत्वावगमात् । न च शिवाद्युत्पत्तिः कर्मानधीनेति युक्तम् । अनहतपाप्मावा अहमस्मिनाहितनामानामधेहि पाप्मनोऽपहत्यै आत्मतयोपहत्यै सदा पुनातीत्यादि श्रुतिस्मृतिभिः शिवस्य कर्मवश्यत्वावगमात् । न च अपहतपाप्मा अहमस्मीत्यादि शतपथश्रुतिर्न प्रसिद्धशिवपरा । अन्यथा 'अघोरा पापकाशिनी' इत्यादि शतरुद्रीय वचनविरोधात् इति वाच्यम् । रुद्रभवशर्वेशानपशुपतिभीमोग्रमहादेवादिनामाष्टकवत्त्वेन वाय्वादिमूर्त्यष्टकवत्त्वेन च तत्रोक्तस्य प्रसिद्धशिवपरत्वावश्यम्भावात् । न चैवं शतरुद्रीयवचनविरोधः । तत्र शिवतनोर्नामकरणानन्तरभाव्य-पापकारिप्रतिपादनपरत्वाभ्युपगमेनाविरोधात् ।

एतेन तद्वाक्यानुसारेण त्रयाणामपि कारणत्वावगमात् कारणस्य चैकत्वात् त्रयाणामप्यैक्यमेवेति निरस्तम् । सृष्टिवाक्यगतशिवप्रजापत्यादिशब्दानामुक्तरीत्या अन्यथा सिद्धत्वेन तावन्मात्रेण तदैक्या-सिद्धेः । अन्यथा 'आकाशादेव समुत्पद्यन्ते । आकाशो ह वै नाम नामरूपयोर्निर्वहिता, असद्वा इदमग्र आसीत् इत्यादि कारणवाक्यानुसारेण भूताकाशसच्छशविषाणादीनां कारणीभूतपरब्रह्मणोऽप्यैक्यं स्यादित्यास्तां तावत् । तस्मात् सृष्टिवाक्यान्तराणां च महातात्पर्येण विष्ण्वेकनिष्ठत्वं न त्वेकजगत्कर्तृपरत्वमिति युक्तं शास्त्रयोनिसिद्धान्तोपपादनम् ॥

अनल्पबोधदर्शिनि जयीन्द्रयोगिदर्शिताः ।
प्रमाणसूत्रनीतयो भवन्तु धीमतां मुदे ॥

## ॐ तत्तु समन्वयात् ॐ

अत्र शास्त्रयोनित्वेन कारणत्वस्य नातिव्याप्तिरिति पूर्वाधिकरणोक्तफलमाक्षिप्य समाधीयते । यदुक्तं कारणत्वस्य शास्त्रयोनितया नातिव्याप्तिरिति । तन्नोपपद्यते । कारणत्वस्य शास्त्रयोनित्वेऽपि अतिव्याप्तेरवारणात् । वेदव्याख्यानरूपशैवाद्यागमेनैव रुद्रादिकारणत्वे वेदतात्पर्यनिश्चयात् । व्याख्यानतो विशेषप्रतिपत्तेः सर्वसम्मतत्वात् । 'ज्ञात्वा शिवं शान्तिमत्यन्तमेति' इत्यादिशास्त्रं शिवस्य मोक्षदत्वादिपरमिति आगमेषु उक्तत्वात् । 'सर्वे वेदा यत्पदमामनन्ति' इत्यादिश्रुतेरपि शिवे वेदतात्पर्यमित्येवम्परतया आगमैरेव व्याख्यातत्वात् । शर्वप्रणीतागमापेक्षया उपक्रमादीनां दुर्बलतया आगमैरेव वेदतात्पर्यस्य निश्चेयत्वात् इति पूर्वपक्षे सिद्धान्तः ।

सम्यग्विचारितादुपक्रमादितात्पर्यलिङ्गरूपादन्वयाद्विष्णुरेव जगत्कर्तृतया वेदप्रतिपाद्यः । न शिवादिः । तत्रोपक्रमादेरभावात् । अनिश्चिततात्पर्यार्थस्य आगमस्य शास्त्रतात्पर्यनिश्चायकत्वाभावेन आगमेष्वपि उपक्रमाद्यनुसरणस्यावश्यकत्वात् । आपातप्रतीतिविषयेऽपि उपक्रमाद्यननुगुणे व्याख्यानेनापि तात्पर्यनिश्चयायोगात् । न चोपक्रमादिना विष्णोः शास्त्रतात्पर्यानिश्चयः, आगमादिना शिवादाविवेति युक्तम् । विरोधात् । वेदतात्पर्यविषयस्य एकत्वावश्यम्भावात् । 'सर्वे वेदा यत्रैकं भवन्ति' इति श्रुतेरिति । न चानेकार्थसहिष्णोः तव मते विरोधाभावः । मन्त्रादिष्वनेकार्थत्वस्य सर्वसम्प्रतिपन्नत्वात् । प्रमाणसत्त्वे एकस्य शब्दस्य एकार्थत्वनियमस्य त्यक्तव्यत्वात् । सृष्ट्यादिवाक्यानामनेकसृष्टृपरत्वे विरोधस्योक्तत्वात् । कर्मकाण्डादीनां विष्णुपरत्वस्य विरोधाभावेन प्रमाणबलेन च अभ्युपगन्तव्यत्वेन (अन्यत्र तदा) तत्र तथा आपादनायोगाच्चेति ।

एतेन यद्यपि उपक्रमादयः विष्णौ व्यवस्थिताः स्युः तथापि ते श्रुतीनां विष्णुपरत्वावगमनमेव कुर्युः । न शिवविरिञ्चिपरतानिवारणमपि । अनेकार्थसहिष्णोः तव मते विरोधाभावेन शिवविरिञ्चिपरत्वस्यापि सम्भवात् । नहि प्रबन्धं प्रबलमित्येव दुर्बलस्य बाधकम्, अपि तु सति विरोधे । यदि तु उपक्रमादयः विरोधाभावेऽपि स्वानीततात्पर्यादर्थान्तरं स्वभावादेव वारयेयुः तदा त्वन्मते कर्मकाण्डस्थपदानां ब्रह्मपरता न स्यात् । अभ्युपगतं च त्वया 'श्येनेनाभिचान् यजेते'त्यादि वाक्येषु श्येनादिपदानां 'यथा वै श्येनो निपत्यादत्ते एवमेव द्विषन्तं भ्रातृव्यं निपत्यादत्ते' इत्याद्युपसंहारप्राबल्यन्यायैः कर्मनामधेयत्वं प्रापितानामपि वसन्तादिवाक्येषु प्रदर्शिततया रीत्या ब्रह्मपरत्वमपीति निरस्तम् । विरोधस्योपपादितत्वात् ।

किञ्च 'सर्वे वेदा यत्पदमामनन्ति, सर्वे वेदा यत्रैकं भवन्ति, वेदैश्च सर्वैरहमेव वेद्यो, वचसां वाच्यमुत्तमम् नमामः सर्ववचसां प्रतिष्ठा यत्र शाश्वती, वेदाक्षराणि यावन्ति' इत्यादिश्रुतिस्मृतिभिः

विष्णोर्वाक्यविधया च सर्ववेदप्रतिपाद्यत्वावगमेन कर्मकाण्डस्थपदानामपि विष्णुपरत्वमुपेयते ।

ननु 'सर्वे वेदा यत्पदमामनन्ती'त्यादिकं सर्वेष्वपि वेदेषु ब्रह्मप्रतिपादकभागोऽस्ति इत्येवम्परं न तु कर्मकाण्डादीनामपि ब्रह्मप्रतिपादनपरमम् । अन्यथा 'त्रिभिर्वेदैर्विधीयते ऋग्वेदयजुर्वेदाभ्यां दर्शपूर्णमासौ यजुर्वेदेनाग्निहोत्रम्, सर्वैरग्निष्टोम' इत्याद्यापस्तम्बसूत्रानुसारेण ऋग्वेदयजुर्वेदयोः सामस्त्येन दर्शपूर्णमासविधायकत्वं सर्वस्यापि यजुर्वेदस्य अग्निहोत्रविधायकत्वं त्रयाणामपि वेदानां सामस्त्येनैव अग्निष्टोमविधायकत्वं न स्यात् विशेष हेत्वभावात् । न चेष्टापत्तिः । आग्नेयादिकाण्डव्यवस्थायाः सर्ववैदिकसम्मतत्वात् । तेषां कर्मान्तरविधायकत्वाभावप्रसङ्गाच्च ।

किञ्च वचसां वाच्यमुत्तममित्यनेन विष्णोर्न सर्वशब्दवाच्यत्वसिद्धिः । परमं ते पदं विदुरिति तदन्यस्यैव तथात्वोक्तेः । न च परमप्राप्यं तत्स्वरूपमिति तदर्थः । तथासति परमं त्वां पदं विदुरिति निर्देशापत्तेः । वियदादिकार्याणां यन्मूलकारणं प्रकृत्यादिपृथिव्यादिशब्दानां योगरूढिभ्यां यदुक्तमं वाच्यं पृथिव्यादिकर्माद्युपाधीनां यन्मुख्यं फलं स्वर्गादि नदात्मकतया विष्णुस्तुतिरित्युपपत्तेश्च । सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिवचसां मुख्यवाच्यमित्येवंपरत्वाच्च । नताः स्म सर्ववचसां प्रतिष्ठा यत्र शाश्वती इत्यत्र न वाच्यवाचकभावप्रतीतेः सर्ववचसां ब्रह्मण्यनाद्यवस्थितेरेव तत्र प्रतीतेः । नन्वेतदवस्थितित्वेन तद्वाचकत्वसिद्धिः । आकाशावस्थितानां घटादिपदानां तदवाचकत्वात् । न च नामानि सर्वाणि यमाविशन्ति इत्यादि श्रुतिबलेन तत्सिद्धिः । उदाहृतस्मृतेरिव तस्या अपि तत्र सामर्थ्यात् । न च वेदाक्षराणि यावन्ति इत्यादि स्मृत्यनुसारेण विष्णोः सर्वशब्दवाच्यत्वसिद्धिः तस्यां सर्वेषामपि वेदाक्षराणां नामसहस्रादिपठितभगवन्नामात्मकतया वेदाक्षराणां भगवन्नामत्वासिद्धेः । अन्यथा य एतन्मन्त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोऽग्निष्टोमेन यजते उक्थ्येन यजते स षोडशिना यजते स वाजपेयेन यजेते (आथर्वणीयनृसिंहपूर्वतापनीयोपनिषत्सु षष्ठोऽध्यायः । उपनिषत्सङ्ग्रहः पुटम् २२६) योऽथर्वसिरसं (य इदमथर्वशिरो ब्राह्मणोऽधीते इत्यादि अथर्वशिरउपनिषत् पुटम् १७४) ब्रह्मणोऽधीते तेनेतिहासपुराणानां द्रोणशतसहस्राणि जप्तानि भवन्ति गायत्र्याः शतसहस्रं जप्तं भवति इत्यादितापनीयाथर्वशिरोवाक्यानुसारेण आनुष्टुभमन्त्रस्याथर्वशिरसश्च अग्निष्टोमाद्यात्मकत्वमितिहासपुराणाद्यात्मकत्वं च सिध्येत् । न चेष्टापत्तिः । तद्भेदस्य सर्वसम्प्रतिपत्तेः। तस्माद्विष्णोः सर्वशब्दवाच्यत्वे न किञ्चित्प्रमाणमिति ।

उच्यते । द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च । तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्व(ण)वेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो (विचितिः) ज्योतिषमिति । अथ परा यया तदक्षरमधिगम्यते इति । (मुण्डकं प्रथमः खण्ड पुटम् १६) श्रुतिरेव विष्णोः सर्वशब्दवाच्यत्वे प्रमाणम् । न चात्र कर्मब्रह्मभेदविषयभेदेन विद्याद्वैविध्यप्रस्तुतिर्बोध्यते न तु विष्णोः कर्मकाण्डगत

पदवाच्यत्वमिति वाच्यम् । कर्मपराणां सतामेव ऋगादीनां ब्रह्माधिगमहेतुत्वेन परविद्यात्वोपपादनेन विष्णोः कर्मकाण्डगतपदवाच्यत्वसिद्धेः । न च अथ परेत्यत्र अपर विद्यात्वेनोक्तानां ऋदादीनां नोपादानं, किन्तूपनिषद्भागानामिति वाच्यम् । अपरविद्यायाः विशेषनिर्देशवत् उपनिषदां विशिष्य निर्देशाभावात् । न च स्पष्टत्वात्तत्रानिर्देशः । पूर्वत्रापि तथात्वेन अनिर्देशोपपत्तेः । 'ऋगाद्या अपरा विद्या यदा विष्णोर्न वाचकाः ॥' ता एव परमा विद्या यदा विष्णोस्तु वाचकाः । इत्यादि स्मृत्यनुसारेण श्रुत्यर्थस्य वर्णनीयतया विष्णोः कर्मकाण्डगतपदवाच्यत्वस्य दुर्वारत्वाच्च । एवं 'ता वा एताः सर्वा ऋचः सर्वे वेदाः सर्वे घोषाः एकैव व्याहृतिः प्राण एव प्राण ऋच इत्येव विद्यात् इत्यादि श्रुतिरपि विष्णोः सर्वशब्दवाच्यत्वे प्रमाणम् । सर्वा ऋच इत्यादिना असङ्कोचेनैव प्राणशब्दवाच्यपरप्राणे ऋगादिप्रतिपाद्यत्वावेदनात् । एवं 'ता एव तु परा विद्या यदा विष्णोस्तु वाचकाः' इति स्मृत्यनुसारेण पूर्वोदाहृतश्रुतिस्मृतयोऽपि विष्णोः सर्वशब्दवाच्यत्वप्रतिपादनपरा एवेति न कश्चिद्दोषः । तस्मादुपक्रमानुसारेण शास्त्रं विष्णावेव व्यवस्थितमिति सिद्धम् ॥

एतेन उपक्रमादीनां विष्णौ व्यवस्थितत्वमसिद्धम् । शैवादयोऽपि ह्युपक्रमादीनेवावलम्ब्य श्रुतीनां शिवादिपरत्वं वर्णयन्ति । उपपादयन्ति च तैत्तिरीयश्वेताश्वतराथर्वशिरः प्रमुखोपनिषत्सु उपक्रमादीनां तत्तद्गतपदशक्त्यादिप्रदर्शनेन शिवादिपरत्वमिति निरस्तम् । विष्णुशिवयोरुभयोरपि सर्ववेदप्रतिपाद्यत्वे विरोधस्योक्तत्वात् । विष्णोरेव जगत्कारणत्वं न शिवादेरित्यत्रापि विशेषहेतोरुक्तत्वाच्च । अत एव यथा भूमशब्दस्तव अशेषविशेषसहितब्रह्मानन्दवाचकोऽपि तदधिकारिणं प्रति योग्यतानुसारेण किञ्चिद् ब्रह्मानन्दमेव बोधयति तथा सृष्ट्यादिश्रुतितदुपक्रमादयश्च अनेककर्तृपरा अपि तत्तद्योग्यतानुसारेण एकैकमेव कर्तारं बोधयन्ति । श्रुतिवाक्येभ्यस्तेषां कर्त्रन्तरबोधानुदयात् श्रुतिवाक्यानां कर्त्रन्तरत्वा-भावाभिमानः इत्युपपत्तेरिति निरस्तम् । दत्तोत्तरत्वात् । किञ्च शैववैष्णववैरिञ्चपुराणागमेषु शिवादीनां परस्परसृज्यत्वसंहार्यत्वाराधकत्वादिना भूयसी निष्फलोक्तिर्दृश्यमाना सर्वेषां समानकक्ष्यतया जगत्कर्तृत्वेऽनुपपन्ना बलाबलविचारमन्तरेण न व्यवतिष्ठते । तद्विचारे च वैष्णवपुराणागमानां बलवत्त्वात् तदनुसारेणोपक्रमादिसहितानां सृष्टिश्रुत्यादीनां विष्णौ व्यवस्थितत्वं सिध्यति ॥

एतेन परस्परनिन्दावचनानां न हि निन्दान्यायेन तत्तद्देवताविषयनिश्चलभक्तिसिद्धिप्रयोजने स्तुति-विरचने द्वारमात्रत्वेनोपपन्नानि । अत एवापस्तम्बसूत्रे भारतादौ च तद्विरुद्धाचारोऽप्रमाणम् इत्यादिना भूयसी संन्यासाश्रमनिन्दा दृश्यते । एवं सत्यपि सन्यासाश्रमस्य ततो न काचन हानिस्तावदभिमता । प्रत्युत संन्यासस्य गार्हस्थ्यादुत्कर्ष एव 'कृत्स्नभावात्तु गृहिणोपसंहार' (अ.३.पा.४ अधि. ८)

इत्यधिकरणे त्वया समर्थितः। एवं परस्परनिष्कर्षवचनानामात्मन्यर्थोपपत्तेर्न तत्र बलाबलविचारापेक्षेति निरस्तम्।

तत्र बाधकबलेन न हि निन्दान्यायावतारेऽपि प्रकृते तन्न्यायाभ्युपगमे बाधकाभावेन (बाधक-भावेनेति पाठेन भाव्यमिति भाति) प्रत्युतानेकजगत्कर्त्रभ्युपगमे विरोधस्योक्ततया तन्न्यायानवतारात्।

एतेन यत्तु शिवतत्त्वविवेके 'क्वचिद् ब्रह्मा क्वचिद्विष्णुः क्वचिद्रुद्रः प्रशस्यते। नानेन तेषामाधिक्यं न्यूनत्वं वा कथञ्चन'। तत्तत्कल्पान्तवृत्तान्तमधिकृत्य महर्षिभिः। पुराणानि प्रणीतानि। 'विद्वांस्तत्र न मुह्यति' इत्यादिवचनान्युदाहृत्य पुराणेषु त्रयाणां परस्परोत्कर्षापकर्षवचनानि कल्पभेदेन व्यवस्थिता-र्थानि, प्रतीतार्थपराण्येवेत्युक्तम्। तद्वस्नुगतिमनुरुध्योक्तम्। इह तु परमते त्रयोऽप्यनादयो विश्वकर्तारः स्युरित्यापादननिर्वाहाय पुराणेषु परस्परं सृज्यत्ववचनान्यप्यर्थवादाः स्युरित्यापादितमित्यविरोधः। एतेन श्रुतिष्वपि त्रयाणां परस्परनिष्कर्षवचनानि दत्तोत्तराणीति'निरस्तम्।

ब्रह्मविष्णुरुद्राणां त्रयाणामत्यन्तं भेदपक्षवादे कल्पभेदेन सर्वजगत्कारणत्वनिर्वाहायोगात्। कारणैकत्वे तत्समाभ्यधिकराहित्याद्यावेदकश्रुतिविरोधतादवस्थ्याच्च।

त्रयाणामत्यन्ताभेदे च न किञ्चित्प्रमाणम्। आत्मैकत्वप्रतिपादकस्यैवासिद्धेः। तत्सिद्धौ ब्रह्मादी-नामिव जीवस्यापि जगत्कारणत्वाङ्गीकारे बाधकाभावेन प्रत्यधिकरणं जीवव्यावर्तनेन ब्रह्मप्रतिपादना-नुपपत्तेः। व्यावहारिकभेदसत्त्वेन तद्व्यावर्तनाङ्गीकारेण च कारणवाक्येषु ब्रह्मादिव्यावृतेरप्यवश्यम्भावेन त्वदुक्तव्यवस्थायोगादित्यन्यत्र विस्तरः। तस्मात्कारणवाक्यानामुपक्रमादिना विष्णुव्यवस्थित्वं सिध्यतीति न किञ्चिदनुपपन्नम्।

मध्वार्यसन्दर्शितनीतिशास्त्रसमन्वयन्यायनिरूपणेन।
मुरारिरास्तां मुदितान्तरात्मा विरिञ्चिशर्वादिसुरान्तरात्मा॥

॥ इति समन्वयाधिकरणम्॥

## ॥ ॐ ईक्षतेर्नाशब्दम् ॐ ॥

आद्यसूत्रे ब्रह्मशब्देन जीवादिव्यावर्तकगुणपूर्तिलक्षणत्वेन सूचयित्वा, द्वितीये तस्य गुणपूर्ति-वाचित्वसिद्धये जीवपरतानिरासाय कारणतां जिज्ञास्यब्रह्मणो लक्षणत्वेनोक्त्वा, तृतीये पूर्तिकारणतयोः अतिव्याप्तिपरिहाराय तत्र शास्त्रं प्रमाणीकृत्य, चतुर्थे तयोः विष्ण्वेकनिष्ठत्वाय शास्त्रस्यान्यपरतां निषिध्य सर्वशास्त्रस्थ सर्वशब्दप्रवृत्तिनिमित्तसर्वगुणपूर्तिसिद्धये वचनवृत्त्या सर्वशास्त्रतात्पर्यविषयतायां चोक्तायां सर्वशास्त्रार्थभूतं वाच्यत्वमिह कात्स्न्येनाक्षिप्य समाधीयते ।

यदुक्तं सर्वशब्दवाच्यं ब्रह्मेति तन्न घटते । 'यतो वाचो निवर्तन्त' इत्यादिश्रुतिभिस्तस्यावाच्यत्व-प्रतिपादनात् । न च 'सर्वे वेदा यत्पदमामनन्ती'ति, 'तस्मादुच्यते परं ब्रह्मे'ति 'वचसां वाच्यमुत्तमम्', इत्यादिश्रुतिस्मृत्यनुसारेण वाच्यत्वसिद्धिः तासां विशिष्टविषयताया शुद्धब्रह्मविषयत्वाभावात् । न च शुद्धस्य श्रुत्यवाच्यत्वे अप्रामाणिकत्वम् । लक्षणया श्रुतिभिरेव तत्सिद्ध्युपपत्तेरिति पूर्वपक्षे ।

सिद्धान्तः । वाच्यमेव परम्ब्रह्म ईक्षणीयत्वात् । ईक्षणीयत्वं च ब्रह्मणः 'पुरिशयं पुरुषमीक्षते' इत्यादिश्रुतिसिद्धम् । तच्च न शब्देतरेण, ब्रह्मण औपनिषदत्वात् । शब्देनेक्षणं च वाच्यत्वं विना न युक्तम् । न च लक्षणीयतयेक्षणीयत्वमुपपन्नम् । शब्दमात्रावाच्यस्य लक्षणीयत्वाभावात् । वाच्यसम्बन्धितया ज्ञातस्य हि लक्षणीयत्वम् । न चौपनिषदस्य मानान्तरेण ज्ञानं सम्भवति स्वतः (तस्य) सिद्धौ च शास्त्रवैयर्थ्यम् । लक्षकपदान्तरेण तज्ज्ञाने तत्रापि वाच्यसम्बन्धितया ज्ञानस्य अपेक्षा स्यात् । तदर्थं लक्षकान्तरप्रयोगे अनवस्था । न च वाचकसम्बन्धस्यापि गृहीतसम्बन्धस्यैव बोध-कत्वात् । सम्बन्धज्ञानस्य च सम्बन्धिज्ञानाधीनत्वात् सम्बन्धिनश्च ब्रह्मण औपनिषदत्वात् शब्दान्तरेण बोधे अनवस्थेति त्वत्पक्षेऽपि साम्यमिति वाच्यम् । यौगिकपदानां वाक्यतुल्यतया सङ्गतिग्रहणानपेक्षणेन वैषम्यात् । श्रुतिस्मृत्यादौ ब्रह्मणि वाच्यत्वस्य श्रुतत्वाच्च । न च तासां विशिष्टविषयत्वम् । विशिष्टस्य जडत्वेन ब्रह्मशब्दमुख्यार्थत्वानुपपत्तेः । न च यतो वाचो निवर्तन्ते इत्यादिश्रुतिविरोधः । अशेषविशेषप्रकारेण श्रुतयो ब्रह्म न प्रतिपादयितुमीशते इत्येवम्परत्वात् । तस्मात् परं ब्रह्म सर्वशब्दवाच्यमिति ।

ननु त्वन्मते परं ब्रह्म सर्वशब्दवाच्यमित्यनुपपन्नम् । तथाहि— त्वया 'तथान्यत्प्रतिषेधात्' इत्यधिकरणे ब्रह्मणोऽव्यक्तत्वमाक्षेपसमाधानाभ्यां स्थापितम् । तत्र ह्येवमुक्तम् । नित्याव्यक्तं ब्रह्मेति तदयुक्तम् उपासकानाम् हृदयेष्वाविर्भूय उपासनाकाले तस्य स्फुरणात् । न हि परमात्मनोऽन्य-दुपास्यम् । ब्रह्मणोनुपासनेन मुक्त्ययोगादिति पूर्वपक्षे सिद्धान्तः ।

यथा जीवानन्दादेरन्यद्ब्रह्म तथोपसनाकाले प्रतीतादपि 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतौ ब्रह्मण उपास्यत्वप्रनिषेधात् । जीवानन्दादिष्वल्पत्व-स्येवोपासनाकाले प्रतीतेऽपि व्यक्तत्वादेर्भेदहेतोः सत्त्वाच्च । तस्मादुपासकानां हृदयेषु ब्रह्मणः प्रतिबिम्ब-विशेष (विषय इति पाठान्तरम् ।) एव उपसनालम्बनम् । तदुपासनयैव च प्रतिमोपासनयेव तद्गतं ब्रह्म प्रसन्नं सदव्यक्तमप्यचिन्त्याद्भुतापरिमितशक्तिबलादपरोक्षी भवति । तथाच ब्रह्मतर्कवचनम्-

**पश्यन्ति परमं ब्रह्म चित्ते यत्प्रतिबिम्बितम् ।**<br>
**ब्रह्मैव प्रतिबिम्बे यदतस्तेषां फलप्रदम् ॥**<br>
**तदुपासनं च भवति प्रतिमोपासनं यथा ।**<br>
**दृश्यते त्वपरोक्षेण ज्ञानेनैव परं पदम् ॥ इति ॥**

तस्माद्युक्तं ब्रह्मणोऽव्यक्तत्वमिति । एवमनुपास्यं ब्रह्मेत्यङ्गीकुर्वता त्वयोपासनाविधिपरेषु उपास्य समर्पकाणां श्रुतिवचनानां तद्वाच्यं न भवतीत्यप्यङ्गीकरणीयम् । तद्वाच्यत्वाङ्गीकारे कथं तदनुपास्यमिति शङ्कया अनिवार्यत्वात् । न हि सम्भवति उपासनाविधिषु उपास्यसमर्पकैः पदैर्ब्रह्मोपास्यतया विधीयते । तदुपास्यं च न भवतीनि । एतच्छङ्कानिरसनायैव हि "यन्मनसा न मनुते" इति मन्त्रसन्निधावाम्नायमानम् । "यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते" इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति । तेन हि सर्वाङ्गविषयीभूतं ब्रह्म उपासनाविधिप्रकरणेषु 'सर्वं खल्विदं ब्रह्मे'त्यादि वाक्यश्रुतीनामुपास्यसमर्पकाणां ब्रह्मादि पदानां अप्यर्थो न भवतीति प्रदर्शनेन एषा शङ्का निरस्ता भवति । न च एतावतापि ध्येयसमर्पकाणां पदानां ब्रह्म प्रतिपाद्यं न भवतीत्यापन्नम् । अनुपास्यं त्वदीयं ब्रह्म सृष्ट्यादिवाक्यस्थ सद्ब्रह्मात्मनारायणादिपदानामपि वाच्यं न भवेदिति । त्वन्मते सृष्टिवाक्यानामप्युपास्यसमर्पकत्वात् । त्वया सर्वत्रापि ब्रह्मगुणवर्णनमुपासनार्थ-मेवेत्या'ध्यानाय प्रयोजनाभावात्' (३-३-८-सू.१५) इत्यधिकरणे ॥

**गुणाः सर्वेऽपि वेत्तव्या ध्यातव्याश्च न संशयः ।**<br>
**नान्यत् प्रयोजनं मुख्यं गुणानां कथने भवेत् ॥**

इति वचनमुदाहृत्य व्यवस्थापितत्वात् ।

न चैवं सति 'तदेव ब्रह्म त्वं विद्धी'त्यादिष्वपि ब्रह्मपदादीनां बिम्बभूतब्रह्मविषयत्वाभाव आपन्नः । प्रतिबिम्बवाचिनां तेषां लक्षणाया तत्र ब्रह्मविषयत्वोपपत्तेः । न च बिम्बविषयाणि ब्रह्मादिपदानि मुख्यानि प्रतिबिम्बविषयाणि तु लाक्षणिकानि इति वैपरीत्यं शङ्कनीयम् । प्रायः सर्वेषां

श्रुतिपुराणादीनाम् उपास्यगुणवर्णनपरतया प्रतिबिम्बविषयत्वावश्यम्भावेन तेषां भूयसां लक्षकत्व-कल्पनाया अयुक्तत्वात् । "यन्मनसा न मनुते, यतो वचो विवर्तन्ते, परात्परं पुरिशयं पुरुषमीक्षते", इत्यादीनां त्वदभिमतेक्षणीयबिम्बभूतब्रह्मविषयाणां कतिपयवचनानामेव लक्षणकत्वकल्पनस्यौ-चित्यात् । तस्मादित्थं तव मतं पर्यवस्येत् । वाङ्मनसाप्रतीतं नित्याव्यक्तम् उपासनानन्तरं मुच्यमानानां मुक्तानां च साक्ष्यात्कारस्यैव विषयीभूतं परं ब्रह्म 'तदेव ब्रह्म त्वं विद्धी'त्यादिभिः कैश्चिदेव वचनैर्लक्षणया प्रतिपाद्यम् । तस्य प्रतिबिम्बविशेषस्तु जीववदनादिः कर्तृत्वादिमान् । उपासकहृदयेषु उपास्यरूपेणाभिव्यक्तिशाली सृष्टिश्रुत्यादिभिः तदनुसारिपुराणादिभिश्च शक्त्या प्रतिपाद्य इति ।

अत्रोच्यते । यद्यप्युपासनाकालेषु उपासकहृदये प्रतीयमानात् प्रतिबिम्बरूपात् बिम्बभूतं ब्रह्मान्यदित्यभ्युपेयते । यद्यपि च सर्वाण्यपि च श्रुतिवाक्यानि उपासनापेक्षितब्रह्मगुणसमर्पकाणीत्यपि, तथापि बिम्बभूतस्य ब्रह्मणः सर्वशब्दवाच्यत्वानपायः । न च वाच्यत्वे तस्याप्युपास्यत्वं, न तु तद्भिन्नत्वमिति युक्तम् । वाच्यत्वेऽप्यनुपास्यत्वोपपत्तेः । न च सर्वत्र ब्रह्मगुणवर्णनमुपासनार्थमिति त्वदभ्युपगमविरोधः। तस्य प्रतिबिम्बविशेषविषयोपासनार्थत्वेनाप्युपपन्नत्वेन बिम्बोपास्यत्वान-पेक्षत्वात् । तत्र तद्वर्णनस्य ज्ञानार्थत्वोपपत्तेश्च । अत एव वक्तव्या ध्यातव्याश्चेति पृथगुक्तिः । न च बिम्बभूतब्रह्मगुणवर्णनस्य प्रतिबिम्बविशेषोपासनार्थत्वं कथमिति वाच्यम् । 'श्रवणदर्शनादिभिर्जात-मानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमि'त्यभ्युपगमेन परम्परया तद्वर्णनस्य ध्यानार्थत्वो-पपत्तेः । न च सर्वत्र गुणवर्णनस्य ध्यानार्थत्वप्रतिपादनं गुणानां साक्षाद्ध्याने विषयत्वेनैव निर्वाह्यम् । न तु परम्परयेति नियन्तुं शक्यम् । आपादकाभावात् । अस्मन्मतदूषणलोभेन त्वया तथापादनेऽति-प्रसङ्गात् । न हि जीवतः कवेरभिप्रायो वर्णनीयः इति न्यायेन अस्मदभिमतार्थस्यास्माभिरेव उपपादनीयत्वाच्च ।

एतेन अनुपास्यं ब्रह्मेत्यङ्गीकुर्वता त्वयोपासना विधिप्रकरणेषु उपास्यसमर्पकाणां श्रुतिवचनानां तद्वाच्यं न भवतीत्यङ्गीकार्यम् । तद्वाच्यत्वाङ्गीकारे कथं तदनुपास्यमिति शङ्कया अनिवार्यत्वात् । न हि सम्भवत्युपासनाविधिषु उपास्यसमर्पकैः पदैः ब्रह्मोपास्यतया विधीयते । उपास्यं च न भवतीति । एतच्छङ्कानिरासायैव हि यन्मनसा न मनुते इति मन्त्रसन्निधावाम्नायमानं 'यद्वाचाऽनभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति मन्त्रान्तरं ब्रह्मणो वाच्यत्वं प्रतिक्षिपति । तेन हि सर्ववागविषयीभूतं ब्रह्म उपासनाविधिप्रकरणेषु 'सर्वं खल्विदं ब्रह्मे'त्यादिवाक्यश्रुतीनामुपास्य-समर्पकाणां ब्रह्मादिपदानामप्यर्थो न भवति इति प्रदर्शनेनैव शङ्का निरस्ता भवतीति प्रत्यूढम् ।

उपासनाविधिवाक्यगतब्रह्मादिशब्दानां बिम्बप्रतिबिम्बोभयपरत्वाभ्युपगमात् । विधीयमानोपास्यत्वस्य प्रतिबिम्बमात्रावाचित्वोपगमाच्च । न च तेषां प्रतिबिम्बमात्रपरत्वमिति युक्तम् । बिम्बपरत्वेऽपि बाधकाभावात् । न चोपास्यतानन्वयो बाधकः । इन्द्रेऽन्वितत्वाद्वष्टृहन्तृत्वादेरन्तर्यामिण्यनन्वयेऽपि अस्मच्छब्दस्य इन्द्रान्तर्यामिपरत्वाभ्युपगमात् । न हि त्वन्मते क्वचिदर्थोयावतामेकवाक्यता तावतामर्थान्तरेऽप्येकवाक्यतेति नियमोऽस्तीति त्वयैव पूर्वाधिकरणे त्वन्मतस्यानूदितत्वाच्च । न च उपासनाविधिगतब्रह्मादिपदैस्तत्तद्गुणविशिष्टबिम्बोपस्थितेः प्रयोजनाभावः । वासनामयस्यैव प्रतिबिम्बविशेषस्योपास्यत्वाभ्युपगमेन तदनुकूलसंस्कारप्रचयार्थत्वात् । न च तद्विषयानुभवाहितसंस्कारस्य तद्विषयमात्र स्मृतिजनकत्वं, न तु वस्त्वन्तरोत्पादकत्वमिति युक्तम् । जाग्रत्पदार्थविषयानुभवाहितसंस्कारस्य स्वाप्नपदार्थोत्पादकत्वाभ्युपगमात् । न चोपासनाविधिगतब्रह्मादिपदानां प्रतिबिम्बपरत्वस्याप्यभ्युपगमेन तदनुभवाहितसंकारस्यैव तदुत्पादकत्वमस्तु न तु भिन्नविषयानुभवाहितसंस्कारस्येति युक्तम् । भिन्नविषयत्वेऽपि स्वप्नादाविव तस्य तदुत्पादकत्वोपपत्तेः ।

एतेन निदिध्यासनमङ्गि श्रवणमनने त्वङ्गमिति वदतस्तव मते श्रवणमननयोरपि प्रतिबिम्बविषयत्वं स्यात् न तु बिम्बमात्रविषयत्वमिति निरस्तम् । 'श्रवणजनितमानसवासनामयस्य वस्तुनो मनसावलोकनं ध्यानमि'त्यङ्गीकारेण बिम्बविषयश्रवणमननयोरपि परम्परया प्रतिबिम्बविशेषनिदिध्यासनार्थत्वोपपत्तेः । न हि समानविषयत्वेनैव तयोरुपासनार्थत्वं वक्तव्यमिति नियमोऽस्ति । तादर्थ्यस्योक्तरीत्याप्युपपत्तेः । बिम्बापरोक्षवत् बिम्बविषयश्रवणमननाभ्यां प्रतिबिम्बविषयनिदिध्यासनस्यापि निर्वाहोपपत्तेश्च । अस्तु वा श्रवणमननयोः बिम्बविषयत्ववत् प्रतिबिम्बविषयत्वमपि च । न चैवं सर्वेषां वेदान्तवाक्यानां बिम्बप्रतिबिम्बोभयपरत्वदोषापत्तिः । कर्मकाण्डस्य कर्मब्रह्मोभयपरत्ववत् उभयपरत्वस्याप्युपपत्तेः । न चैवं वेदान्तगतपदानामनेकार्थत्वप्रसङ्गः । बिम्बप्रतिबिम्बोभयानुगतैकधर्माभावादिति न युक्तम् । लक्षणया गौण्या वा तेषां प्रतिबिम्बप्रतिपादकत्वेन तत्प्रसङ्गाभावात् । न च वैपरीत्यं शङ्क्यम् । वासनामयस्य प्रतिबिम्बविशेषस्योत्पत्तिविनाशसमानशीलत्वेन जगत्कारणगुणपूर्त्यादिरूपप्रवृत्तिनिमित्ताभावेन तत्र गौणत्वस्यैव युक्तत्वात् । न च प्रतिबिम्बविशेषोऽप्यनादिरिति नोक्तदोषावसर इति वाच्यम् । ध्यानविषयस्यास्मन्मते वासनामयत्वोपगमेन तत्रानादित्वानङ्गीकारात् । जगत्स्रष्टुं सर्वं प्रभवति खलु ध्यानविषयः समस्तोऽयं मानोरथिक इति जीवस्तव मते ॥' इति जन्माद्यधिकरणदूषणावसरे अस्मन्मतस्थितेरेव त्वयाऽनूदितत्वाच्च ।

एतेन प्रतिबिम्बविशेषस्यैव अनादित्वे कारणत्वगुणपूर्त्यादिकमङ्गीकृत्य तस्यैव सर्वशब्दवाच्यत्वाङ्गीकारो युक्तो न तु बिम्बरूपस्य तस्य यतो वाच इत्यादि कतिपयवचनलक्ष्यणीयत्वोपपत्तेरिति

निरस्तम् । अस्मन्मतदूषणलोभिना आग्रहिणा त्वया एवमापादयितुं युक्तत्वात् । नहि जीवतः कवेरभिप्रायो वर्णनीय इति न्यायेन अस्मदभिमतार्थस्य अस्माभिरेवोपपादनीयत्वादित्युक्तम् । बिम्ब-स्योपास्यान्यान्यत्वे लौकिकवैदिकसकलशब्दवाच्यत्वोपपादनस्य सर्वत्र ब्रह्मगुणवर्णनस्योपासनार्थत्वो-पपादनस्य चास्मदुक्तरीत्यैव सामञ्जस्याच्च । न चैवं यद्वाचाऽनभ्युदितं, तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इत्युपास्यान्यस्यबिम्बभूतब्रह्मणः शब्दमात्रवाच्यत्वप्रतिपादनविरोध इत्युक्तम् । व्याघा-तेन तच्छ्रुतेः साकल्येन शब्दवाच्यत्वं नेत्येवम्परत्वात् । अन्यथा लक्षणापि न सिध्येत् । तत्र शब्दप्रतिपाद्यत्वस्यैव निषेधात् । यन्मनसा न मनुते इति पूर्ववाक्येऽपि अनवहितमनोगम्यत्वस्यैव निषेधाच्च । अन्यथा मनसैवानुद्रष्टव्यं तस्मादुच्यते परं ब्रह्मेत्यादिश्रुतिविरोध इत्युक्तम् । न चैवमेवोपा-स्यान्यत्वप्रतिपादनमपि यथाकथाञ्चिन्नेयमिति वाच्यम् । उपासनाकाले प्रतीयमानस्य ध्यानस्वभावेन वासनात्मकतया रूपेणैवोपास्यान्यत्वप्रतिपादनपरत्वावश्यम्भावात् । बिम्बस्याव्यक्ततया व्यक्तविषय-निदिध्यासनविषयत्वस्य व्याहतत्वाच्च । तस्मात् परब्रह्मणः सर्वशब्दवाच्यत्वे न किञ्चिद्बाधकम् ।

केचित्तु बिम्बभूतं ब्रह्मैव सर्वशब्दवाच्यम्, उपास्यं चेत्यङ्गीकर्तव्यम् । श्रवणमनननिदिध्यासन-साक्षात्काराणां समानविषयत्वावश्यम्भावात् । न चैवं तथान्यत् प्रतिषेधात् इत्यधिकरणविरोधः । तत्र परब्रह्मोपासनायां क्रियमाणायामेव सामग्रीबलोत्पन्नस्य वासनामयस्योपासकहृदये प्रकाशमानस्य प्रतिबिम्बविशेषस्य परब्रह्मान्यत्वप्रतिपादनात् । न च तादृशरूपविशेषस्य अप्रामाणिकत्वम् । उपासनाकालीनतत्प्रकाशस्यैव तत्साधकत्वात् । ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादावपूर्वस्येव तस्यान्यथानुपपत्तिकल्प्यत्वात् । ब्रह्मतर्कवचनमप्येवं नेयम् । न च परब्रह्मणोऽप्युपास्यत्वाव्यक्त-त्वव्याकोपः । तस्य दुर्दर्शत्वाभिप्रायात् । अन्यथा ध्यानानन्तरमपि तत्साक्षात्कारो न स्यादित्याहुः ।

तन्न । 'यन्मनसा न मनुते येनाहुर्मनो मतम् । तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासते' इति श्रुतौ स्वरसतो ब्रह्मण उपास्यत्वप्रतिषेधप्रतीतेः । 'तथान्यत् प्रतिषेधात्' इति सूत्रे यन्मनसा न मनुत इति श्रुत्या ध्यानगोचरस्य ब्रह्मत्वप्रतिषेधादिति व्याख्यानदर्शनाच्च । किञ्च ब्रह्मतर्कवचने तदुपासनं च भवति प्रतिमोपासनं यथेत्यनेन ननु कथं स्थितिमात्रेण तत्फलम्, अनुपासितत्वात् इति शङ्का निरस्ता । तदुपासनं प्रतिबिम्बोपासनमिति शेषः ब्रह्मैव तत्कुतो नेति शङ्का 'दृश्यते तु' इत्यादिना निरस्ता । तर्हि ज्ञानायैव प्रयतितव्यम्, किमुपासनयेति शङ्का तु 'उपासना त्वापरोक्ष्यं गमयेत्तत्प्रसादतः' इत्यादिना निरस्तेति तत्त्वप्रकाशिकायां ब्रह्मतर्कवचनगततत्तत्पदव्यावृत्तिप्रदर्शनेनानुपास्यतया सिद्धस्य ब्रह्मण उपास्यत्वाङ्गीकारो न युक्तः ।

किञ्च परब्रह्मणोऽपि ध्यानविषयत्वे यदि ध्यानं मानसी सृष्टिरिति मतम् अनुमतमेतत् । 'श्रवणदर्शनादिजनितमानसवासनामयस्य वस्तुनो मनसाऽवलोकनं ध्यानमि'त्यङ्गीकारादिति न्यायसुधोक्तिविरोधः । किञ्चैवं ध्यानस्य मानससाक्षात्काररूपत्वाभ्युपगमेन ब्रह्मणोऽव्यक्तत्वे उपासनमसङ्गतं स्यात् । किञ्च ध्यानकाल एव ब्रह्मणोव्यक्तत्वात् व्यक्त्यर्थं भक्तिर्न कार्या । 'ध्यानप्रतीतस्य ब्रह्मत्वे तस्य व्यक्तात् । तद्व्यक्त्यर्थं कर्तव्यैव तद्भक्तिरिति तत्त्वप्रकाशिकायां पूर्वपक्षसिद्धान्तोपसंहारदर्शनेन तद्व्यक्तिद्वैविध्यप्रदर्शनेन च ब्रह्मणो ध्यानविषयत्वं चाङ्गीकर्तुं युक्तम् । किञ्च श्रवणमनननिदिध्यासनभगवत्प्रसादाद्यभावे साक्षात्कर्तुमशक्यत्वमेव ब्रह्मणोऽव्यक्तत्वमित्ययमर्थः 'प्रकाशश्च कर्मण्यभ्यासात्' इत्यादिसूत्रेषु स्पष्टः । तस्मात् पूर्वोक्तरीत्यैव ब्रह्मणः सर्वशब्दवाच्यत्वमिति न किञ्चिदनुपपन्नम् ।

**ईक्ष्यत्यधिकृतिं वीक्ष्य विजयीन्द्रोपपादिताम् ।**
**परिष्कुर्वन्तु विद्वांसो गुणदोषविवेचकाः ॥**

## ॥ श्रीवेदव्यासाय नमः ॥

ॐ तत्तु समन्वयादिति विष्णोः शास्त्रगम्यत्वे हेतुत्वेनोपक्रमादितात्पर्य 'लिङ्गरूपः समन्वयः सिद्धवदुपन्यस्तः । न तु तत्रैवोपक्रमादिर्विष्णावेव स्थित इति न्यायैः स्थापितम् तद्यावत्तेषां वाक्यशेषानुदाहृत्य पूर्वोत्तरपक्षग्रथनेन समन्वयो न प्रपञ्च्यते तावदयमनुपन्यस्तप्राय एव । अन्यथा शैवादयोऽपि समन्वयादित्येव सिद्धवद्धेतुमुपन्यस्य शिवादीनां शास्त्रगम्यत्वं प्रसाधयेयुः । अतः समन्वयविभागेन तत्प्रपञ्चनार्थमध्यायशेष आरब्धः । यद्यपि तत्तदधिकरणवाक्येषूपक्रमोपसंहारगतानां विष्णुविषयश्रुतिलिङ्गानां निरवकाशत्वेन प्राबल्यम्, मुख्यतया योगेन प्रवृत्तिनिमित्ततादधीन्येन तत्तदन्तर्यामिगतत्वेन च विष्णौ सावकाशत्वेन दौर्बल्यम् । देवतान्तरविषयश्रुतीनां विद्वद्रूढ्यादिभिर्विष्णौ देवतान्तरविषयश्रुतीनां विद्वद्रूढ्यादिभिर्विष्णौ परममुख्यत्वेन प्राबल्यम् । प्रसिद्धार्थेष्वज्ञरूढ्या केवलयोगेन प्रवृत्तिनिमित्ताश्रयत्वेन च मुख्यमात्रतया दौर्बल्यं चोपपादितम् ।

तथापि प्रबलं प्रबलमित्येव दुर्बलस्य न बाधकम् । दुर्बलमात्रस्यानुज्जीवनप्रसङ्गात् । किन्तु सति विरोधे । न च त्वन्मते श्रुतिवाक्यानामनेकार्थत्वे विरोधोऽस्तीति चेत् न तेषामनेकार्थत्वे विरोधस्यो-क्तत्वात् । अपिच विद्वद्रूढ्यादयो विष्णौ तव कुतो व्यवस्थिताः सिद्धाः येन देवतान्तरविषय श्रुतिलिङ्गानां

विष्णौ सावकाशत्वेन प्रसिद्धेषु स्वस्वार्थेषु परममुख्यत्वाभावेन च दौर्बल्यं भवेत्। विष्णुरेव जगत्कर्तृ परं ब्रह्म इति सावधारणनिश्चयाधीनाहिध्यानादितद्वचवस्थितत्वसिद्धिः। अन्यथा विरिञ्च एव विद्वद्रूढ्यादिः इति वक्तारं को वारयेत्। तथाहि आनन्दमयोऽभ्यासादित्यधिकरणे जगत्कर्तृत्ववादिना प्रतिपादितोऽन्नमयादिः विष्णुरेवेति साध्ये ब्रह्मशब्दाभ्यासं हेतूकृत्य ब्रह्मशब्दस्य अन्यत्राज्ञरूढिसत्त्वेऽपि विष्णौ तदेव ब्रह्म परमं कवीनामिति श्रुत्युपदर्शिता विद्वद्रूढिः प्रबलेति सैव निर्णयहेतुरिति त्वयोक्तम्। तत्र तदेव ब्रह्मेति श्रुतिर्विष्णवेकपरेति कुतोऽवसेया ? यमन्तः समुद्रे कवयोऽवयन्ति इति प्रसिद्धलिङ्गात् इति चेत्। प्रजापतिश्चरति गर्भे अन्तः हिरण्यगर्भ इत्यष्टाविति प्रजापति हिरण्यगर्भश्रुतिभ्यां विरिञ्चैकपरा सा कुतो नावसेया कुतश्च हिरण्यगर्भ इत्यष्टानित्यनेन गृहीतात् य ईशे अस्य द्विपदश्चतुष्पद इति पशुपतित्वलिङ्गात् पुरुषस्य विद्म सहस्राक्षस्य महादेवस्य धीमहि इत्युपसंहारदर्शनाच्च सा शिवैकपरा कथं नावसेयेति चेन्न। तदेव ब्रह्मेत्यवधारणेन जगत्कारणभूतब्रह्मण एकत्वावश्यम्भावेन च सर्गाद्यसमये विशिष्य निषिद्धसत्त्वयोः कर्मकृतोत्पत्तिमतोः शिवविरिञ्चयोर्ब्रह्मत्वायोगेन सर्गाद्यसमये विशिष्य विहितस्य कर्मावश्यस्य विष्णोरेव परब्रह्मत्वमिति निर्णयोपपत्तेः। प्रजापतिहिरण्यगर्भशब्दयोरपि योगेन लक्षणया प्रवृत्तिनिमित्ततादधीन्येन मुख्यतया वा विष्णुपरत्वोपपत्तेः। य इशे अस्य द्विपदश्चतुष्पद इत्युक्तं पशुपतित्वलिङ्गमपि न शिवस्योपस्थापकम्। विष्णोरेव निरुपाधिकपशुपतित्वस्य वक्तव्यत्वात्। पतिं विश्वस्यात्मेश्वरं इत्यादिश्रुतेर्बाधकाभावेन निरुपाधिकस्यैव ग्राह्यत्वाच्च। न च शिवस्य पशुपतित्वं निरुपाधिकम्। परब्रह्मणः वरप्रदानलब्धत्वात्। अहमेव पशूनामधिपतिरसानीति, तस्माद्रुद्रः पशूनामधिपतिरिति श्रुत्यनुवाददर्शनात्। सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपादिति पुरुषसूक्तानुसारेण महादेवशब्दस्यापि विष्णुपरत्वावश्यम्भावाच्च। न च पुरुषशब्दोऽपि शिवपरः। यथा शङ्करशब्दोऽयं महादेवेऽवतिष्ठते। तथा पुरुषशब्दोऽयं वासुदेवेऽवतिष्ठते॥ इत्यादिना विष्णवसाधारणाभिधानत्वावगमात्। तस्मात्कारणवाक्यगतानां प्रजापतिहिरण्यगर्भादिशब्दानां शिवरुद्रमहादेवेशानादिशब्दानां च महायोगविद्वद्रूढिभ्यां विष्णुपरत्वं कारणवाक्यगतानां नारायणादिशब्दानां च देवतान्तरेषु योगाङ्गीकारे कारणत्वानुपपत्तेर्विद्वद्रूढौ प्रमाणाभावाच्च विष्णुरेव परं ब्रह्मेति निर्णये न काप्यनुपपत्तिः। किञ्च अस्ति ब्रह्मशब्दाभ्यासो विष्णौ व्यवस्थित एव न तु हिरण्यगर्भसाधारणः ते ये शतं प्रजापतेरानन्दाः स एको ब्रह्मण आनन्दः इति प्रजापतिशब्देन हिरण्यगर्भान्यस्यैव ब्रह्मत्वेन प्रतीतेः। असति बाधके भेदश्रवणस्यापि भेदसाधकत्वस्य बहुधोक्तत्वाच्चेति। एतेन अग्रिमाधिकरणानां विष्णावेव तत्तद्विषयवाक्यसमन्वय इत्यस्यार्थस्य व्यवस्थापकानां निराकरणसापेक्षः। तथाहि त्वया तावदाकाशस्तल्लिङ्गात् ज्योतिश्चरणाभिधानात्, छन्दोऽभिधानान्नेति चेत्, प्राणस्तथानुगमात्, इत्याद्यधिकरणेषु परोवरीय-

स्त्वादिकर्णाद्यपरिच्छेद्यवैभवत्वगानत्राणकर्तृत्वादि देवोपास्यत्वादिसाधारणब्रह्मलिङ्गैराकाशज्योतिर्गायत्रीप्राणादिशब्दानां विष्णुपरत्वं निर्णीतम् । तेषां तत्प्रवृत्तिनिमित्ततदधीनत्वादिना विष्णुवाचकत्वसम्भवेन सावकाशत्वमप्युपपादितम् । एवं द्वितीयपादाद्यधिकरणेष्वपि तत्तद्विषयवाक्यानां साधारणब्रह्मलिङ्गादिभिर्विष्णुपरत्वं निर्णीतम् । अन्यविषयश्रुतिलिङ्गादीनां विष्णौ साकाशत्वं चेत्यपि । अत्र सर्वत्रापि साधारणब्रह्मशब्दलिङ्गानां विष्णवेकविषयत्वम्, अन्यविषयश्रुतिलिङ्गानां प्रवृत्तिनिमित्ततदधीनत्वादिभिः विष्णावेव सावकाशत्वमित्येतदद्याप्यसिद्धम् शिवादिविषयत्वमपि सम्भवतीति शङ्काग्रस्तत्वात् । तन्निराकरणार्थमेव त्वया प्रथमाध्यायशेषस्य प्रारब्धव्यत्वात् । तथा चोपक्रान्तसाधनीयार्थविस्मरणेन सर्वत्र तस्यैव हेतूकरणमत्यन्तमयुक्तमिति स्पष्टमेवेति निरस्तम् ।

तथाहि परोवरीयस्त्वादिकं साधारणब्रह्मलिङ्गमिति कोऽर्थः ? किं तद्ब्रह्मासाधारणधर्मेनेति किंवा तदसाधारणधर्मत्वेऽपि विष्णुसाधारणधर्मो नेति ? नाद्यः । 'स एष परोवरीयानुद्गीथ' इत्यादिवाक्यशेषश्रुतपरोवरीयस्त्वादेः ब्रह्मणोऽन्यत्र क्वाप्यभावात् । न द्वितीयः । विष्णोरेव परब्रह्मत्वात् । न च विष्णुरेव परं ब्रह्मेति निर्णयोऽन्ततः समन्वयाविरोधाध्यायसाध्य इति पूर्वमेव तादृशनिर्णयमुपजीव्य तत्तद्विषयवाक्यगतान्यविषयश्रुतिलिङ्गादीनामन्यथोपपादनं कथमिति वाच्यम् । तत्तदधिकरणेष्वाहृत्याध्यायद्वयसाध्यतादृशनिर्णयमुपजीव्यान्यविषयश्रुतिलिङ्गादीनामनुपपादनात् । किञ्चित्किञ्चिन्न्यायसाध्यनिर्णयोपजीवनेनैव तेषामन्यथा सिद्धत्वोपपादनात् । पूर्वपूर्वाधिकरणाभ्यधिकशङ्कया तदाक्षेपेणोत्तराधिकरणप्रवृत्तिस्वीकाराच्च । नहि पूर्वपूर्वाधिकरणेषु तत्तन्न्यायैर्निर्णय एव न जात इति शक्यं वक्तुम् । न्यायविरोधात् । तस्य निर्णयैकफलकत्वात् तत्तन्निर्णयमात्रेण तत्तदधिकरणेष्वन्यविषयश्रुतिलिङ्गादीनामन्यथासिद्धत्वस्योपपादयितुं शक्यत्वाच्च । तस्मादाकाशाद्यधिकरणप्रवृत्तौ न काप्यनुपपत्तिः । किञ्च 'अन्तस्तद्धर्मोपदेशात्, अत एव प्राणः, शब्दादेव (हि) प्रमितः', इत्याद्यधिकरणेषु विष्णवसाधारणश्रुतिलिङ्गैरेव निर्णयः । 'अन्तःप्रविष्टं कर्तारमेतं, तद्वै त्वं प्राणो अभवः अङ्गुष्ठमात्रः पुरुषः' इत्यादिवाक्येषु अन्तःप्रविष्टप्राणाङ्गुष्ठमात्रशब्दानां विष्णुपरत्वे 'अन्तःसमुद्रे मनसा चरन्तं, यस्याण्डकोशं शुष्ममाहुः, श्रीश्चते लक्ष्मीश्च पत्न्यौ, मध्ये वामनमासीनमि'ति समुद्रशयित्वब्रह्माण्डवीर्यत्वलक्ष्मीपतित्वरूपलिङ्गवामनशब्दरूपतदसाधारणाभिधानश्रुतीनां तत्र सत्त्वात् ।

नन्वत्र समुद्रशायित्वादि विष्णुलिङ्गप्रतिद्वन्द्वि (समुद्रशायिरूपविष्णुलिङ्गप्रतिपक्षभूतं) 'अन्तश्चन्द्रमसि मनसा चरन्तम्, अन्तरादित्ये मनसा चरन्तम्' इत्यष्टमूर्तेः शिवस्यापि लिङ्गमस्तीति लक्ष्मीपतिविष्णुपरत्वलिङ्गपरिपन्थिनी 'प्रजापतिश्चरति गर्भे अन्तरि'ति प्रजापतिश्रुतिरस्तीति,

वामनश्रुतिप्रतिपक्षभूतेशानश्रुतिरस्तीति कुत उदाहृतश्रुतिलिङ्गैर्विष्णवेकपरत्वनिर्णयः । श्रुत्यर्थानैकान्त्यवादिनस्तव मते विष्णुपरत्वेन योजनायां शिवादिश्रुतिलिङ्गानामन्यथा नयनवत् शिवादिपरत्वेन योजनायां विष्णुश्रुतिलिङ्गानामप्यन्यथानयनसम्भवात् इति चेन्न । ''यश्चक्षुषि यो द्रष्टव्ये य आदित्ये योऽग्राणे यः प्राणे यो विज्ञाने य आनन्दे यो हृद्याकाशे य एतस्मिन् सर्वस्मिन्नन्तरे सञ्चरति यस्य पृथिवीशरीरं यः पृथिवीमन्तश्चरन् एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः' इत्यादि सौबलवाक्यैः सर्वान्तर्यामित्वेन प्रतिपन्नस्य नारायणगुणस्यैव 'अन्तरादित्ये मनसा चरन्तं अन्तश्चन्द्रमसि मनसा चरन्तं अन्तःप्रविष्टश्शास्ता जनानां (सर्वमेव) सर्वात्मे'त्यादि वाक्यप्रतिपाद्यत्वावश्यम्भावेन तैरष्टमूर्तेः । शिवस्यानुपस्थापनात् । प्रजापतिशब्दस्यापि पूर्वोक्तन्यायेन विष्णौ सावकाशत्वात् । अत एवेशानशब्दोऽपि व्याख्यातः । 'ईशानः प्राणदः प्राण' इति नामसहस्रे तस्यापि पाठात् । ईशानशब्दप्रवृत्ति निमित्तस्यासङ्कुचितसर्वैश्वर्यस्य 'नेशानः' इति सर्गाद्यसमये निषिद्धस्य शिवस्य असम्भवेन तस्य सर्वैश्वर्यशालिविष्णुपरताया एवोचितत्वाच्च । 'ईश्वरश्शर्व ईशानः' इत्याद्यभिधानन्तु 'इन्द्रो मरुत्वान् मघवा बिडौजाः पाकशासन' इत्यादिवत् उपपन्नम् । तस्याज्ञरूढिप्रदर्शनपरत्वात् । अन्यथा शचीपतेरपि इन्द्रशब्दप्रवृत्तिनिमित्तं सर्वैश्वर्यं स्यादित्यन्यत्र विस्तरः ।

किञ्च अत्र ईशानशब्दे न रूढ्युन्मेषोऽस्ति । भूतभव्यस्येति प्रतिसम्बन्धिनिर्देशात् । न चैवं सति वामनशब्दोऽपि प्राणापानमध्यस्थितत्वोक्त्या पूर्वापरमन्त्रेषु बहुधाङ्गुष्ठमात्रोक्त्या च ह्रस्वत्वपरो न तु विष्णौ रूढिमान् इति तस्यापि श्रुतित्वं न स्यात् इति वाच्यम् । प्राणापानमध्यस्थितत्वोक्त्येव तस्य ह्रस्वत्वद्धसिद्धा वामनशब्देन पुनस्तत्प्रतिपादने पौनरुक्त्यप्रसङ्गात् । सति गत्यन्तरे पौनरुक्त्याश्रयणायोगात् । प्राणापानमध्यस्थितत्वोक्त्या पूर्वापरमन्त्रगताङ्गुष्ठत्वामात्रोक्त्या च प्राप्तस्य परिच्छिन्नत्वस्य व्यावर्तनाय वामनशब्दस्य रूढ्या विष्णूपस्थापकत्वसम्भवेन तस्य सप्रयोजनत्वाच्च । अत एवायमाकाश इत्यादेः हृदये पुण्डरीकवेष्टनप्रयुक्तपरिच्छिन्नत्वव्यावर्तनाय प्रवृत्तिरिति त्वयोच्यते । समुद्रशायित्वादिकं च यथा विष्णुलिङ्गं तथोक्तमस्माभिर्न्यायमौक्तिकमालायाम् । विष्णोरेव सर्वशब्दवाच्यत्वे विनियोजकं च पूर्वमेवोक्तम् । तस्मात् प्रवृत्तिनिमित्ततादधीनन्यायादिभिस्सर्वशब्दानां विष्णौ परममुख्यत्वोपपादने न काप्यनुपपत्तिः ।

ननु 'यस्य शब्दस्य प्रवृत्तिनिमित्तं यदाश्रितं, तस्यैवार्थस्य स शब्दो वाचक' इति नियमेन सर्वेऽपि शब्दाः कथं विष्णुवाचका इति चेन्न । उच्यते यस्य शब्दस्य प्रवृत्तिनिमित्तं यदाश्रितं तस्यैवार्थस्य स शब्दो वाचक इति न नियमः । किन्तु 'यस्य शब्दस्य प्रवृत्तिनिमित्तम् आश्रितत्वेन यथेष्टविनियोज्यत्व-

रूपस्यातन्त्र्यविषयत्वेन वा यदधीनं तस्यार्थस्य स शब्दो वाचक' इति। अत एव 'भृत्यगतस्य जयस्य राजानाश्रितत्वेऽपि तदधीनत्वामात्रेण 'राजा जयी'तिव्यवहारः । न चैवं सति रिपुगतदुःखसम्बन्ध मरणादीनां राजाधीनत्वमात्रेण राजा दुःखी बद्धो मृत इति प्रयोगप्रसङ्गः । तत्प्रयोगप्रयोजकसत्त्वेऽपि राज्ञोऽपि दुःखादियोग्यतया राज्ञि सदेव दुःखादिकम्, उच्यत इति वा राज्ञि तदानीं दुःखाद्यभावनिश्चयेऽपि तस्मिन् दुःखादिकमसदेवारोप्य राजविरुद्धेनोच्यत इति वा संशयापादकत्वेन अमङ्गलतया स्वस्थादिशब्दवत्तद्प्रयोगोपपत्तेः ।

यद्वा स्यातन्त्र्यमात्रमत्र शब्दवृत्तौ न प्रयोजकम्, किन्तु स्वगतत्वयोग्यत्वविशिष्टदोषत्वरहितं प्रति स्वातन्त्र्यम् । एवं च जयस्य राजगतत्वयोग्यत्वेऽपि दोषत्वराहित्यात् तं प्रति राज्ञः स्वातन्त्र्यं जयिशब्दप्रवृत्तौ । न प्रयोजकम् । दुःखसम्बन्धादीनां राजगतत्वायोग्यत्वात् दोषरहितत्वाच्च । तानि प्रति तस्य स्वातन्त्र्यं दुःखिबद्धादिशब्दप्रवृत्तौ न प्रयोजकम् । तेषां विष्णुगतत्वायोग्यत्वात् । दोषत्वेऽपि तानि विष्ण्वपेक्षया स्वगतत्वायोग्यता विशिष्टदोषत्वरहितानि भवन्तीति तानि प्रति तस्य स्वातन्त्र्यं दुःखिबद्धादिशब्दप्रवृत्तौ प्रयाजेकमेव । आश्रयत्वमपि हि न तन्मात्र प्रयोजकम्, धनवोढरि भृत्ये धनसत्त्वेऽपि धनीत्यप्रयोगात् । एवंच जीवा एव तु दुःखिनः कार्यकारणबद्धौ तावित्यादिश्रुतिगत-दुःखिबद्धादिशब्दाः जीवगतदुःखबन्धादिस्वातन्त्र्यस्य विष्णोर्वाचकाः न तु लोके दुःखिबद्धादिशब्दाः रिपुगतदुःखबन्धादिस्वतन्त्रस्य राज्ञो वाचका इति व्यवस्था सङ्गच्छते इति ।

नन्विदमयुक्तम् । विविधकृष्णादिप्रतिमानिर्माणचतुरे शिल्पिनि तत्तत्प्रतिमासु कृष्णादिशब्दप्रवृत्ति-निमित्तं कृष्णाद्याकारं प्रति स्वातन्त्र्ये सत्यपि तस्मिन् कृष्णादिशब्दप्रयोगादर्शनात् । न च प्रतिमासु कृष्णादिशब्दाः कृष्णाद्याकारसादृश्येन गौणा एव न तु वाचका इति न तासु कृष्णाद्याकारः कृष्णादिशब्द प्रवृत्तिनिमित्तमिति वाच्यम् । इवे प्रतिकृतौ (पा. सू. ५-३-९६) इत्यधिकारे विहितस्य कन् प्रत्ययस्य 'जीविकार्थे चापण्ये' इति (पा. सू. ५-३-९९) लुपि सति निष्पन्नकृष्णादिशब्दानां कृष्णाद्याकार सदृशाकारप्रतिमावाचकत्वात् । न च प्रवृत्तिनिमित्ताश्रयत्वे सत्यपि धनवोढरि भृत्ये धनीति प्रयोगा-दर्शनात् तदपि शब्दप्रयोगे प्रयोजकं न स्यात् । प्रवृत्तिनिमित्तस्वातन्त्र्यस्यापि शब्दप्रयोगप्रयोजकत्वाभावे भृत्ये जयिनि राज्ञि जयिशब्दप्रयोगश्च न स्यात् इति वाच्यम् । यतस्तदस्यास्त्यस्मिन्निति इति मतुप् (पा.सू. ५-२-९४) इति विहिताः मत्वर्थीयाः प्रत्ययाः स्वभावात् केभ्यश्चित् प्रातिपादिकेभ्यो-ऽस्यास्तीति षष्ठ्यर्थ एव भवन्ति, केभ्यश्चित् अस्मिन्नस्तीति सप्तम्यर्थ । एव षष्ठ्यर्था अपि एकशतं सम्बन्धाः सन्तीति तेभ्यस्तेभ्यः प्रतिपादकेभ्यस्तत्तत्सम्बन्धविशेष एव केभ्यश्चित् षष्ठ्यर्थे सप्तम्यर्थे च

भवन्ति । इयं च व्यवस्था प्रयोगानुसारेण स्वयमेव लभ्यत इति लाघवार्थं तदस्यास्त्यस्मिन्निति सामान्येनोक्तम् । यथा "पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु (पा.सू. ३-१-१२९). इत्यादिसूत्रेषु हविस्सामिधेनी विशेषादिवाचकानामपि सान्नाय्यधाय्यादिशब्दानां सामान्येन हविराद्यर्थेषु विधानम् । एवंच धनप्रातिपदिकान्मत्वर्थीयप्रत्ययाः षष्ठ्यर्थ एव । तत्रापि स्वस्वामिभाव एव भवति इति न धनवोढरि धनीति प्रयोगप्रसङ्गः । जयप्रातिपादिकात्तु ते स्वस्वामिभावरूपे षष्ठ्यर्थे आश्रयत्वरूपे सप्तम्यर्थे च भवन्तीति न राज्ञिभृत्ये च जयिशब्दप्रयोगानुपपत्तिः । यद्वा भृत्यगतजयस्य तत्फल भाजि राज्ञि उपचारेण जयिशब्दप्रयोगोऽस्तु । अत एव माघकाव्ये दृश्यते 'विजयस्त्वयि सेनायाः साक्षिमात्रेऽपदिश्यताम् । फलभाजि समीक्ष्योक्ते बुद्धेर्भोग (भेद) इवात्मनि' ॥ इति (माघ सं. २-५९) । तस्मात् सर्वेषामपि रूढानां यौगिकानां च पदानां प्रवृत्तिनिमित्ताश्रयत्वं तत्स्वातन्त्र्यं चेत्युभयमपि वाचकताप्रयोजकमित्येतत्सकललौकिकपरीक्षकव्यवहारविरोधि तुच्छं वचः । नहि स्वस्थादिशब्दानामारोग्यादिमदित्यादिवाचकत्वे सत्यपि स्वर्गस्थत्वाद्यर्थान्तरप्रत्यायकत्वेन अमङ्गलत्वादेवाप्रयोग इतिवत् रिपूणां मारके राज्ञि मृतशब्दस्य वाचके सत्यपि अमङ्गलत्वादेवाप्रयोग इति कश्चिदपि सम्मन्यते ।

अत्रोच्यते । न तावत्स्वातन्त्र्यस्य शब्दशक्तिनियामकत्वे कृष्णाद्याकारनिर्माणचतुरे शिल्पिनि कृष्णादिशब्दप्रयोगापत्तिः । प्रतिमासु कृष्णादि शब्दानां कृष्णाद्याकारसादृश्येन गौणतया तद्वाचकत्वाभावात् । इमे प्रतिकृतावित्यादेरपि कृष्णादिशब्दानां प्रतिकृतिवाचकत्वे प्रमाणायोगात् । तत्र प्रतिकृतौ गम्यमानायामित्यर्थोपपत्तेः । अन्यथा कृष्णादिशब्दस्य नानार्थत्वप्रसङ्गात् । चित्रलिखितसिंहे सिंहादिशब्दो गौण इति सर्वसम्मतत्वाच्च । न चैवमनुशासनायोगः । तस्य साधुतामात्रप्रदर्शनपरत्वात् । न च वाचकत्वगर्भं साधुत्वम् । लक्षकपदमात्रासाधुत्वापत्तेः । किञ्च स्वातन्त्र्यस्य शब्दशक्तिनियामकत्वाभावे धनस्वामिनि धनीति प्रयोगो न स्यात् । प्रत्युत तद्वोढरि भृत्य एव तत्प्रयोगः स्यात् । न च मत्वर्थीय स्वभावपरिकल्पनया तथापादनस्याभावः । तथा परिकल्पनाया अपि प्रयोगानुसारित्वात् । अन्यथोक्तदोषापरिहारात् । निर्निमित्तस्य प्रयोगस्य चायोगात् । न च पूर्वपूर्वप्रयोगमूल एवोत्तरोत्तरप्रयोग इत्युक्तम् । सर्वत्रापि तथात्वे न प्रवृत्तिनिमित्तनिरूपणमात्रोच्छेदप्रसङ्गात् । किञ्चैवं वदता ब्रह्मणः शर्वशब्दवाच्यत्वमेव नेति विवक्षितं किं वा तत्सत्त्वेऽपि प्रकारान्तरेण तन्निर्वाहसम्भवे प्रवृत्तिनिमित्तताद‌धीन्यादिना तन्नोपपादनीयम् । न प्रथमः । ब्रह्मणः सर्वशब्दवाच्यत्वस्योपपादितत्वात् । न द्वितीयः । दुःखिबद्धादिशब्दवाच्यत्वस्य प्रकारान्तरेणोपपादयितुमशक्यत्वात् । अन्यथा तेषां नानार्थत्वप्रसङ्गात् । योगरूढिभ्यां सर्वशब्दवाच्यत्वस्योपपादनीयत्वाच्च ।

यत्तु जयिशब्दो राज्ञि गौण इति तन्न । जयस्यान्यसम्बन्धित्वेनाप्रतीयमानत्वेऽपि राजा जयीनि प्रतीतेः सर्वानुभवसिद्धत्वात् । मुख्यार्थव्यवहितवुद्धि (अत्र ग्रन्थपातः संलक्ष्यते ।) सत्व एव गौणीवृत्तेरङ्गीकार्यत्वात् । तस्मात् स्वगतत्व योग्यविशिष्टदोषत्वरहितं प्रति स्वातन्त्र्यमेव शक्तिनियामकमिति चतुर्थपादे प्रवृत्तिनिमित्ततादधीन्यात् विष्णोः सर्वशब्दवाच्यत्वोपपादनं युक्तमेवेति प्रथमाध्यायेन विष्णौ व्यवस्थिते समन्वये तस्मिन् सम्भावितयुक्त्याभासादि विरोधनिराकरणार्थं द्वितीयाध्यायारम्भः । तृतीयचतुर्थयोः साधनं फलं च निरूपितम् । तदुपपादनप्रकारश्च भाष्यादावेवावगन्तव्यः ।

एतेन इत्थं पञ्चाधिकरणीदूषणार्थं दर्शितयैव त्वन्मर्यादया आद्याध्यायगताधिकरणानां शैथिल्येन त्वदभिमतस्य विष्णौ व्यवस्थितसमन्वयस्यासिद्धौ तस्मिन् सम्भावितयुक्त्यादिविरोधनिराकरणार्थानि द्वितीयाध्यायगताधिकरणान्यभित्तिचित्रायमाणान्यचिन्त्याद्भुतमहिम्नि तर्कागोचरे परमेश्वरे युक्तिविरोधादिकं न परिपन्थीति वदतस्तव मते तान्यकाण्डताण्डवरूपाणि चेति । तेषां तदुभयोपजीवनेन प्रवृत्तानां साधनफलाध्यायगताधिकरणानां च शैथिल्यं स्पष्टमेव । यदि त्वेतानि त्वच्छास्त्रगतान्यधिकरणानि त्वद्भाष्ये तत्तदधिकरणेषु स्वनिर्णीतार्थसंवादकतयोदाहृतैः त्वदेकदृष्टैः कमठादिश्रुतिवाक्यैस्तादृशोपबृंहणैः पुराणैश्च समर्थयितव्यानि तर्हि तवालं न्यायचिन्तया, त्वन्मतानुसारेणैव परस्परं व्याहतया प्रत्यधिकरणं अनिर्व्यूढ्या च । नहि प्रत्यधिकरणं तव न्यायव्युत्पादव्यसनिता अस्ति सम्भृत्यधिकरणानां वचनमात्रावलम्बनानामपि त्वन्मते दर्शनात् । तस्माद्धूर्तकल्पितवचनैकावलम्बनं न्यायविधुरमिदं मध्वमतं सूक्ष्मदृशा नोपादेयमिति निरस्तम् ।

पञ्चाधिकरण्युक्तप्रकारेण विष्णौ समन्वयस्य व्यवस्थितत्वोपपादनात् श्रौतयुक्तीनामविरोधेऽपि युक्त्याभासादीनां विरुद्धतया तन्निराकरणस्यावश्यकत्वात् तदुपजीवनेन प्रवृत्तसाधनफला ध्यायगताधिकरणार्थानामपि प्रामाणिकत्वात्, स्मृत्युदाहरणानामपि तदुक्तन्यायप्रदर्शनपरत्वात्, कमठाद्यखिलश्रुतिवचनोदाहरणस्य अदोषत्वोपपादनात्, तदुदाहर्तुः परमाप्तत्वोपपादनाच्चानन्दतीर्थीयदर्शनमेव सर्ववैदिकैरवेक्षणीयम्, न त्वद्वैतिमतम्, तस्यात्यन्ताप्रामाणिकत्वादिति ।

**एवं सामान्यतः शास्त्रनिरूपणमचीकरत् ।**
**सर्वतन्त्रस्वतन्त्रोऽयं विजयीन्द्रयतीश्वरः ॥**

नन्वद्वैतिमतं नाप्रामाणिकम् । योऽसौ संसारदशायामावृतो जीवानन्दस्त्वयेष्यते तदेव विशुद्धसुखस्वरूपं परं ब्रह्मेति साधयितुं शक्यत्वात् । उपनिषत्सु जीवब्रह्माभेदोद्घोषदर्शनात् । तत्रैव

तर्काणामानुकूल्याच्च । तथाहि- ब्रह्मानन्दो देवदत्तजीवानन्दान्न भिद्यते तं प्रत्यनादिभावावृतत्वात् तद्भोग्यत्वाच्च देवदत्तजीवानन्दवत् । घटादीनां देवदत्तं प्रति कुड्यादिभावावृतत्वेऽपि ज्ञानप्रागभावरूपाना-द्यावृतत्वेऽपि अनादिभावावृतत्वं नास्तीति न तेषु व्यभिचारः । अनादिभावश्च अविद्यारूपः । संसारदशायां जीवानन्दस्य ब्रह्मानन्दस्य च तं प्रत्यावरकस्त्वयापि सम्मत अस्तीति प्रथमाधिकरणे दर्शितत्वान्न हेत्वसिद्धिः । न वा दृष्टान्ते साधनवैकल्यम् । जीवानन्दाद्ब्रह्मानन्दोऽपि मुक्तिदशायामभिव्यक्तो मुक्तानां भोग्य इति तदेतत् प्रेयः पुत्रात् (बृ. उप. १-४-८) इत्यादिश्रुतिं ब्रह्मविषयां वदतस्त्वयापि सम्मत इति न द्वितीयहेतोरसिद्धिः । अस्मन्मते यद्यपि संसारदशायां आवृतो जीवानन्द एव ब्रह्मानन्दस्तथापि तत्र साध्यनिश्चयाद्दृष्टान्तत्वमुचितम् । साध्यनिश्चयो हि दृष्टान्तत्वे तन्त्रम् न पक्षान्यत्वमपि ।

यद्वा ब्रह्मजीवानन्दयो बिम्बप्रतिबिम्बभावेन । व्यावहारिकभेदसत्वात् पक्षदृष्टान्तभावः । प्रतिबिम्बे चैतन्यांश एवानावृतः । आनन्दांशस्त्वावृत इत्यभ्युपगमान्न साधनवैकल्यमपि ।

नन्वत्र साध्यं जीवानन्दाभेदरूपं वा जीवानन्दाद् भेदप्रतिषेधरूपं वा । नाद्यः । मया जीवब्रह्मा-नन्दयोरसाधारणरूपाभ्यां भेदस्य आनन्दत्वादिसाधारणधर्मेण अभेदस्यापि स्वीकृतत्वेन सिद्धसाधन-तापत्तेः । न द्वितीयः । त्वयापि ब्रह्मजीवानन्दयोः बिम्बप्रतिबिम्बभूतयोः व्यावहारिकभेदस्याङ्गीकृतत्वेन तत्प्रतिषेधे बाधापत्तेरिति चेत् उच्यते । देवदत्तजीवानन्दगतासाधारणधर्मावच्छिन्नप्रतियोगिताक-स्तदभेदः साध्य इति नाभेदसाधनपक्षे सिद्धसाधनम् । नापि भेदप्रतिषेधसाध्यपक्षे बाधः । त्वया ब्रह्म जीवाद् भिद्यते सर्वज्ञत्वात् इत्याद्यनुमाने व्यावहारिकभेदेन सिद्धसाधनतापरिहाराय यद्विशेषणं निवेश्यते तद्विशिष्टभेदप्रतिषेधस्यात्र साध्यत्वाङ्गीकारात् । त्वया हि धर्मिसमसत्ताकत्वं धर्मिज्ञानाबाध्यत्वं वा विशेषणं निवेश्यते तद्विशिष्टभेदप्रतिषेधोऽत्र साध्यत इति न किञ्चिदनुपपन्नम् । एवमग्रिमानुमानेष्वभेद-शब्दार्थो वर्णनीय इति ।

अत्रोच्यते । न तावदनादिभावावृतत्वेन ब्रह्मानन्दस्य जीवानन्दाभेदादिसाधनं युक्तम् । घटपटा-दीनामन्धकारावृतत्वेऽपि अभेदाभाववत् जीवब्रह्मानन्दयोरनादिभावरूपाज्ञानावृतत्वेऽपि अभेदाभावेन अप्रयोजकत्वात् देवदत्तजीवानन्दादेरुपाधित्वाच्च । किञ्च ब्रह्मानन्दो जीवानन्दाद् भिद्यते आनन्दत्वात् । तदीयवैषयिकानन्दवत् इति सत्प्रतिपक्षता । अस्मन्मते अन्तःकरणवृत्तिरूपस्य वैषयिकानन्दस्या-भ्युपगमात् । त्वयापि तारतम्यानुभवबलेन स्वरूपसुखातिरिक्तस्य तस्याभ्युपगन्तव्यत्वाच्च । अत एव त्वन्मतेऽपि केषांचिद् वृत्तिरूपानन्दाभ्युपगमोऽपि दृश्यते । अत एव तद्भोग्यत्वहेतुरपि नाभेदसाधकः वैषयिकानन्दे व्यभिचारादेव । किञ्च किं तद्भोग्यत्वं तत्साक्षात्कारयोग्यत्वं वा निरुपाधिप्रेमास्पदत्वं वा।

नाद्यः । घटादिना व्यभिचारात् । न द्वितीयः सर्वान् प्रति ब्रह्मानन्दस्य निरुपाधिप्रेमास्पदत्वानङ्गीकारेणासिद्धेः । ब्रह्मानन्दे जीवानन्दत्वावच्छिन्नभेदाभावस्य त्वया साध्यमानत्वाच्च ।

एतेन ब्रह्म जीवाभिन्नं निर्दुःखत्वे सति सुखवत्त्वात्, निर्विकारत्वे सति ज्ञानवत्त्वात् जीववत् । मतद्वयेऽपि ब्रह्मजीवयोः स्वरूपसुखज्ञानयोः धर्म्यभेदेऽपि विशेषबलादविद्यावशाद्वा धर्मत्वमप्यस्तीति न पक्षदृष्टान्तयोर्विशेष्यासिद्धिः । नापि विशेषणासिद्धिः । मतद्वयेऽपि अन्तःकरणस्यैव दुःखादि सकलविकाराश्रयत्वात् इति द्वयमपि प्रत्यूढम् । जीवस्यापि प्रथमाधिकरणे दुःखादि सकलविकाराश्रयत्वोपपादनेनः दृष्टान्ते साधनवैकल्यात् । निर्दुःखत्वमपि दुःखानाश्रयत्वं वा दुःखसाक्षात्कारशून्यत्वं वा तत्प्रयुक्तनीचोच्चताराहित्यं वा । नाद्यः । असिद्धेः । ब्रह्मणः सर्वाश्रयत्वात् । न च जगदाधारताप्रयोजकसम्बन्धातिरिक्तसम्बन्धेन तदनाश्रयत्वं विवक्षितम् । दृष्टान्ते साधनवैकल्यात् । न द्वितीयः । ब्रह्मणः सर्वद्रष्टृत्वेन असिद्धेः । न तृतीयः । दृष्टान्ते साधनवैकल्यादेव । न च त्वन्मते ब्रह्मणो यन्निर्दुःखत्वं विवक्षितं तदेवात्र विवक्षितमिति वाच्यम् । दुःखिजीवभिन्नत्वमेव ब्रह्मणो निर्दुःखत्वमित्यस्माभिरभ्युपगमात् । न च तदेवास्तु इति युक्तम् । विरोधात् । किञ्च सविशेषस्य पक्षत्वे बाधः । अन्यथा तत्त्वमस्यादिवाक्ये तव लक्षणाङ्गीकारो निर्मूलः स्यात् । न द्वितीयः । असिद्ध्यादिदोषप्रसङ्गात् ॥

एतेनैव जीवाः ब्रह्माभिन्नाः तदिन्द्रियैर्भोक्त्राऽभिन्नत्वात् । आकाशादिप्रपञ्चस्रष्टृत्वात् ब्रह्मवत् । मुक्तहिरण्यगर्भादीनामिव सर्वेषां जीवानां ब्रह्मदेहगतैरिन्द्रियैर्भोक्तृत्वाभावेऽप्यस्मदादिदेहगतेन्द्रियाणां ब्रह्मकरणत्वाभ्युपगमेन न आद्यहेतोरसिद्धिः । ध्यानमनोराज्यविषयप्रपञ्चेषु जीवानां राज्यादिविषयप्रपञ्चस्रष्टृत्वस्य त्वयाङ्गीकृतत्वेन द्वितीयहेतोरपि नासिद्धिः अस्मन्मते पूर्ववत् हेतोरसिद्धिनिरास इति अनुमानद्वयमपि निरस्तम् । देवदत्तदेहेन्द्रियैर्भोक्तृग्रहस्य (पिशाचस्येत्यर्थः) देवदत्तभिन्नतया व्यभिचारात् । चक्षुरादीनां जीवकरणत्वस्याप्यभ्युपगमेन जीव ब्रह्मणोराकाशादिप्रपञ्चस्रष्टृत्वस्यात्यन्तविलक्षणत्वेन तावन्मात्रेण अभेदसाधनायोगाच्च ।

एतेन हिरण्यगर्भादिजीवाः ब्रह्माभिन्नाः तदीयदिव्यदेहेन्द्रियैर्भोक्त्रा अभिन्नत्वात् ब्रह्मवत् इति निरस्तम् । देवदत्तादिदेहेन्द्रियैर्भोक्तृग्रहादिरिव भेदेऽप्युपपन्नत्वेनाप्रयोजकत्वात् । अत एव ब्रह्म देवदत्तजीवाभिन्नं तत्कर्मफलभोक्त्रा अभिन्नत्वात्, देवदत्त जीवादिति निरस्तम् । सविशेषनिर्विशेषयोः पक्षत्वे दोषस्योक्तत्वात् एकः पापानि कुरुते फलं भुङ्क्ते महाजनः इत्याद्यनुसारेण, सुहृदः साधुकृत्यां द्विषन्तः पापकृत्यामित्यादिश्रुत्यनुसारेण च अन्यकर्मफलभोक्तृत्वस्यापि सिध्या अप्रयोजकत्वाच्च ।

एवमुक्तेष्वनुमानेषु प्रत्यक्षादिप्रमाणबाधोऽप्युद्भावनीयः । यथा च भेदश्रुतीनामेव प्राबल्यं, न तु अभेद श्रुतीनां तथोक्तमधस्तात् । तस्मात् सकलं प्रमाणविरुद्धमद्वैतमतं न प्रेक्षावदुपादेयम् । किन्तु सकलप्रमाणसिद्धं श्रीमदानन्दतीर्थीयमतमेवप्रेक्षावदुपादेयम् । इति सर्वं समञ्जसम् ।

**मध्वतन्त्रसुखभूषणं दृढन्यायरत्नघटनातिभासु(स्व)रम् ।**
**सर्वतन्त्रहृदयावलोकिना निर्मितं हि विजयीन्द्रभिक्षुणा ॥ १ ॥**

**स्वदर्शनोत्थदूषणं निराकरिष्णुरञ्जसा ।**
**यतीन्द्रयोगिरूपतोऽवतीर्ण एष पूर्णधीः ॥ २ ॥**

**मायिनापहृतां ब्रह्मगुणमौक्तिकमालिकाम् ।**
**प्रत्याहरदयं न्यायैर्विजयीन्द्रयतीश्वरः ॥ ३ ॥**

**आद्रियध्वमिह मध्वदर्शनं व्यध्वगं त्यजत बुद्धदर्शनम् ।**
**साङ्करं विहतवेदलम्बनं साधवः स इह साक्ष्युमाधवः ॥ ४ ॥**

इति श्रीमत्परमहंसपरिव्राजकाचार्याणां श्रीमत्सुरेन्द्रतीर्थपूज्यपादानां शिष्येण विजयीन्द्रभिक्षुणा कृतं मध्वतन्त्रमुखभूषणं समाप्तम् ॥

॥ श्रीकृष्णार्पणमस्तु ॥

